स्यात्। * यलोऽनुनासिकः। † यँय्यम्यते यंयम्यते ‡, हरि-भज हरिंभज। कम्पते § इति पूर्व्वेण नित्यम्। अरे किं—रंरम्यते।

## ५३। दान्ते मोऽसम्राजो हसे नुः।

(दान्ते ७।, मः ६।, असम्राजः ६।, हसे ७।, नुः १।)।

दान्ते स्थितस्य मस्य हसे परे नुः स्यात्, न तु सम्राजः। शिवंस्तौति। असम्राजः किं—सम्राडिति। ¶

## ५४। पुंसः सन् खय्यम्परेऽख्ये।

(पुंसः ६।, सन् ।१।, खयि ७।, अम्परे ७।, अख्ये ७।)।

---

* पृथक्योगात् अदान्ते इति नानुवर्त्तते, तेन दान्ते अदान्ते वायं विधिः। तथाच, दान्ते अदान्ते वा स्थितस्य अनुस्वारस्य यवले परे यवला वा स्युः; दान्ते स्थितस्य तु वर्गाक्षरे परे तद्वर्गान्तो वा स्यादित्यर्थः। दान्ते यवले परे यथा—त्वँय्यच्छ त्वंयच्छ, सँल्लृ-णोमि सल्लृणोमि, त्वँल्लुभ्यः त्वंलुभ्यः। अदान्ते यवले परे यथा—यँय्यम्यते यंयम्यते, वँव्वम्यते वंवम्यते, लँल्लम्यते लंलम्यते। रमधातोः रूपान्तरेण लमधातुसिद्धि, रनृफात् लनृफवत्। पाणिनिः ८।४।५९।

† यलोऽनुनासिक इति—अत्र जायमानो यलः अनुनासिकः अनुनासिकवानित्यर्थः, अर्शआदित्वादप्रत्ययः। यमोऽनुनासिक इति तु लिपिकरप्रमादपाठः, तथात्वे हरिंभज इत्यत्रापि अनुनासिकपूर्व्वक जमापत्तेः।

‡ यमधातो यङि—यं-यम्यते = यँय्यम्यते (वा) यंयम्यते।

§ कन्-पते (५०.५१) = कम्पते। एवं भवन्तौ, अशम्भिष्ट इत्यादि। अत्र अनुस्वारस्य अदान्ते स्थितत्वात् पूर्व्वसूत्रेणैव नित्यमादेशः।

¶ शिवम्-स्तौति = शिवंस्तौति। सम्-राज्-इति = सम्राडिति, इतिशब्देन सम्राज-शब्दो यस्मिन्नर्थे रूढस्तत्रैव वर्जनमिति बोध्यम्। रूढिस्तु—येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरोक्तिः। तेन सं शोभनं राजते इति संराट् चन्द्र इत्यत्र अनुस्वारः स्यादेव। पाणिनिः ८।३।२५।

पुंसो मस्य सन् स्यात्, अम्परे खपि परे, नतु ख्ये। * पुंस्कोकिलः। अम्परे किं—पुंचीरम्। अख्ये किं—पुंख्यातः। †

## ५५। नोऽप्रशामप्छते।

(नः ६।, अप्रशाम ७६।, छते ७।)।

दान्ते स्थितस्य नस्य सन् स्यात्, अम्परे छते परे, न तु प्रशामः। ‡ शार्ङ्गिंश्छिन्धि, चक्रिंस्त्राहि। अम्परे किं—सन्त्सरुः। अप्रशामः किं—प्रशान्तनोति। §

## ५६। कांस्कान् नॄंःपि वा।

(कांस्कान् ।१।, नॄंः ।१।, पि ७।, वा ।१।)।

कांस्कान् कान्कान्, नॄंःपाहि नॄन्पाहि। ¶

---

* अम् परो यस्मात् सोऽम्परस्तस्मिन्, खपीत्यस्य विशेषणम्। पूर्व्वस्मात् मकारः अनुवर्त्तते। सनो न इत् तेन (१७) मस्यान्ते भवति; सकारे अकार उच्चारणार्थः। पाणिनिः ८।३।६, वार्त्तिकञ्च।

† पुमांश्चासौ कोकिलश्चेति विग्रहे (१८३) पुम्-कोकिलः=(५०) पुंस्कोकिलः, लुप्तसकारस्यादिविधित्वात् (१५) मस्य विसर्गाभावः। एवं पुंस्कृतिः, पुंस्पानं, पुंस्पुत्रः, पुंश्चातक इत्यादि। पुंसः स्वत्वास्पदीभूतं चीरम्=पुंचीरम्। पुंभिः ख्यातः=पुंख्यातः।

‡ अम्परे, दान्ते, सन्, इत्येतेषाम् अनुवृत्तिः, सनो न इत् (१७) मस्यान्ते भवति; सकारे अकार उच्चारणार्थः। अत्र सन्धिजातेतरनकारो ग्राह्यः, तेन कृन्तन्त्र इत्यादौ न नस्य सन्। पाणिनि. ८।३।७।

§ शार्ङ्गिन्-छिन्धि=शार्ङ्गिन्-स-छिन्धि (५०,४६) शार्ङ्गिंश्छिन्धि। चक्रिन्-त्राहि=चक्रिन्-स-त्राहि (५०)=चक्रिंस्त्राहि। त्सरुः खड्गादिमुष्टौ स्यादित्यमरः। प्रशाम्-तनोति (१०२)=प्रशान्तनोति।

¶ कान् कान् इति पदद्वयस्य स्थाने कांस्कान् इति पदं निपात्यते वा, पकारे परे तु

## ५७ । न ण टन ङः श्वकन् श शस् स शसि वा।

(न ण टन ङः ६।, चकन् ।१।, श शस् स शसि ७।, वा ।१।) ।

दान्ते स्थितस्य नस्य चन् शे, णस्य टन् शसि, टनयोस्तन् से, ङस्य कन् शसि, स्याद्वा ।*। सञ्छम्भुः सञ्शम्भुः सञ्शम्भुः, सुगण्टषष्ठः सुगण्षष्ठः, षट्त्सन्तः षट्सन्तः, सन्त्सः सन्सः, प्राङ्क्षष्ठः प्राङ्षष्ठः ।†

## ५८ । चपोऽबे जब् । (चपः ६।, अबे ७।, जब् ।१।) ।

दान्ते स्थितस्य चपस्य जब् स्यात् अबे परे । वागीशः, चिद्रूपः ।‡

## ५९ । अमे अम् वा । (अमे ७।, अम् ।१।, वा ।१।) ।

---

[ इति पदस्य स्थाने नॄंः इति सानुस्वारविसर्गान्तं निपात्यते वा इत्यर्थः । कान्-कान् कांस्कान्, (वा) कान्कान् । नॄन् पाहि = नॄंःपाहि, (वा) नॄन्पाहि । पाणिनिः ३।१०।१२।३७ ।

* टश्च नश्च टनं, नश्च णश्च टनश्च ङश्चेति तस्य । चकात् न् चकन्, चक् प्रत्याहारः, च चन् टन् तन् कन् इति चत्वारि । दान्ते इत्यनुवर्त्तते । वा-ग्रहणं परत्र निवृत्त्यर्थम् । ादीनां न् इत्, तेन चन्तं भवन्ति (१७) । पाणिनिः ८।३।२८-३१ ।

† सन्-शम्भुः (५७.५०.५१,६१), चयो यत्रैकवर्गीया मध्यमस्तत्र लुप्यते इत्यनेन ोपे = सञ्छम्भुः । (पाणिनिमते सञ्च्छम्भुरित्यपि पदं स्यात्) । (६१) पक्षे न शस्य सञ्शम्भुः । चन अभावपक्षे (४६) सञ्शम्भुः । सुगण्-षष्ठः = सुगण्टषष्ठः (वा) ण्षष्ठः । षट्-सन्तः = षट्त्सन्तः (वा) षट्सन्तः । सन्-सः = सन्त्सः (वा) सन्सः । ङ् षष्ठः = प्राङ्क्षष्ठः (वा) प्राङ्षष्ठः ।

‡ दान्तं इत्यनुवर्त्तते । चपस्थाने जब् स्यात्, साम्यात् यथाक्रमं वा । वाक्-ईशः वागीशः । चित्-रूप. = चिद्रूपः । पाणिनिः ८।२।३९ ।

दान्ते स्थितस्य चपस्य अमे परे अम् वा स्यात्। एतन्मुकुन्दः एतद्मुकुन्दः। *

## ६०। त्ये। (७।)।

त्ये मे परे दान्ते स्थितस्य चपस्य अम् स्यान्नित्यम्। चिन्मयं, वाङ्मयम्। †

## ६१। शहोश्चपात् वांमि छझभौ।

(शहोः ६॥, चपात् ५।, वा ।१।, अमि ७।, छ-झभौ १॥)।

दान्ते स्थितात् चपात् परयोः श-हकारयोः क्रमेणामि परे छ-झभौ वा स्तः। ‡ तच्छिवः तच्शिवः, वाग्घरिः वाग्हरिः। अमि किं—वाक्श्चोतति। §

---

* चप इत्यनुवर्त्तते। एतत्-मुकुन्दः=एतन्मुकुन्दः,(वा) (५८) एतद्मुकुन्दः। पाणिनिः ८।४।४५।

† त्यः प्रत्ययः, त्ये ञ ण न ङ इत्येतेषामभावादाह मे इति। विकल्पद्वयमध्यवर्त्तित्वादस्य नित्यत्वम्। चित्-मयं=चिन्मयं—(४८६) चिदात्मकम्। वाक्-मयं=वाङ्मयं—वागात्मकमित्यर्थः। "तत प्रकृतवचने" इति पाणिनिसूत्रेण (५।४।२१) स्वार्थे चिन्मयमिति सिद्धम्। "एकाचो नित्यम्" इति सिद्धान्तकौमुदीमतेन विकारावयवयोरर्थयोः मयट्प्रत्ययेन, "तत् प्राचुर्य्येण प्रस्तुतमिति" गोयीचन्द्रव्याख्यानेन च वाङ्मयमिति सिद्धम्। पाणिनिः ८।४।४५ सूत्रस्य वार्त्तिकम्।

‡ शहोरिति स्थानिनिर्द्देशात् चपो निवृत्तिः, अतएव पुनश्चपो ग्रहणम्। दान्ते स्थितात् चपात् परस्य तालव्य-शकारस्य स्थाने छकारः स्यात्, एवं तादृश-चपात् हकारस्य झभ् स्यात्, अम्प्रत्याहारे परे। अत्र उत्तरसाम्यं ग्राह्यं, तेन चात् हस्य झ, टात् हस्य ढ, तात् हस्य ध, कात् हस्य घ, पात् हस्य भ। पाणिनिः ८।४।६२,६३,५५, वार्त्तिकञ्च।

§ तत्-शिवः (६१, ४६)=तच्छिवः, वा (४६)=तच्शिवः। वाक् हरिः (६१, ५८)=वाग्घरिः, वा (५८)=वाग्हरिः। वाक् श्चोततीत्यत्र तालव्यशकारात् परस्थितचकारस्य अम्त्वाभावात् न शस्य छः।

## ६२ । स्वात्ङणोऽचि द्विः ।

(स्वात् ५।, ङणः १।, अचि ७।, द्विः १।) ।

स्वात् परो दान्ते स्थितो ङणो द्विः स्यादचि परे । *
सुगण्णीशः, सन्नच्युतः, प्रत्यङ्ङात्मा । †

## ६३ । छोऽचः । (छः १। अचः ५।) ।

अचः परश्छकारो द्विः स्यात् । ‡

## ६४ । झप्झसोः खस्झषो चप्जबावन्ते च ।

(झप्झसोः ६॥, खस्झषोः ७॥, चप्जबौ १॥, अन्ते ७।, च ।१।) ।

झप्-झसयोः स्थाने खस्-झषयोः परयोः क्रमात् चप्-जबौ स्तः, विरामे च । शिवच्छाया, अच्छा । §

इति हस्-सन्धिपादः ।

---

* द्विरिति (४८५) सुजन्तमव्ययम् । अत्र (१८१) अणाणी इति, (९९३) णिनमान् घे इति, (६३२) सन्यङन्तो द्विरित्यादिज्ञापकात् समासे ङणो द्विर्न स्यादिति बोध्यं, तेन सनन्तः, सनन्तः, तिङन्तः, यङन्तः, उणादिः, त्वनादिः, इत्यादयः सिद्धाः । वस्तुतस्तु ज्ञापकज्ञापितविधेरनित्यत्वात् क्वचिदपि स्यादेव, यथा, "सल्लिङ्गशास्त्रैः सन्नादिकृत्तद्धित-समासजैः" इत्यमरः । स्वादिति किं, प्राङ् आस्ते = प्राङास्ते । दान्ते स्थित इति किम्, अनिनीत्यादौ न स्यात् । पाणिनिः ८।३।३२ ।

† सुगण्-ईशः = सुगण्णीशः, सन् अच्युतः = सन्नच्युतः, प्रत्यङ्-आत्मा = प्रत्यङ्ङात्मा ।

‡ अत्र, मा(ङ्), आ(ङ्)भिन्न दीर्घात् पदान्ताच्च विकल्पेनेति वक्तव्यम् । वार्त्तिकमते छन्दसि विश्वजनादेः परेऽपि विकल्पेन, यथा, विश्वजनच्छत्रं विश्वजनछत्रमित्यादि । पाणिनिः ६।१।७३-७६ ।

§ झपः खसि चपादेशो झसो झषि जबस्तथा । विरामे तौ तयोः स्यातामित्यर्थः सम्प्रकीर्तितः ॥ स्पष्टार्थ—वर्गादिचतुष्टयस्य स्थाने तद्वर्गस्य प्रथमवर्णः स्यात् खसे पर,

## ४र्थ पादः—वि-सन्धिः।

### ६५। वेः सोऽशसन्ते छते।

(वेः ६।, सः १।, अ-शसन्ते ७।, छते ७।)।

वेः सकारः स्यात् अ-शसन्ते छते परे। कृष्णश्चिन्त्यः, हरिष्टीकते, विष्णुस्त्राता। शसन्ते तु—कः त्सरुः।*

### ६६। से तु क-ख-प-फे वा।

(से ७।, तु ।१।, क-ख-प-फे ७।, वा ।१।)।

वेः सकारो वा स्यात् क-ख-प-फेषु परेषु, से सति। भास्करः भाःकरः, भास्खरः भाःखरः, भास्पतिः भाःपतिः, भास्फेरुः भाःफेरुः।†

---

झबे परे तु तद्वर्गस्य तृतीयवर्णः स्यात्, विरामे तु तद्वर्णद्वयं स्यात्। विरामः परवर्णाभावः। शसः स्थाने तु साम्यानुसारेण, यथा (२१३) दन्त्यसकारस्य दः। पाणिनिः ८।४।५३।५५-५६। "वाऽवसाने" (८।४।५६) इति पाणिनिसूत्रेण विरामे परे विकल्पः।

---

* छत—छ ठ थ च ट त। अशसन्त इति, छतो विशेषणम्। कृष्णः-चिन्त्यः (४६) = कृष्णश्चिन्त्यः। हरिः-टीकते (४७) = हरिष्टीकते—हरिर्गच्छतीत्यर्थः। विष्णुः-त्राता = विष्णुस्त्राता। कः-त्सरुः—तकारस्य सकारान्तत्वात् न वेः सः। पाणिनिः ८।३।३४-३५।

† तुकारात् परत्र समासानुवृत्तिर्नास्ति। अत्रापि अशसन्त इति विशेषणस्यानुवृत्तिः—तेन च भर्यं त्साम इत्यादौ न स्यात्। वाशब्दोऽत्र व्यवस्थावाची—तेन, कार काम कंस कुम्भ कशी (कुशा) कील कर्ण कर्णी कुत्सित काण्ड कुत. करोति कृत्य काम्यक, पति पात्र पाठ पाशेषु—परेषु नित्यं स्यात् प्रयोगतोऽन्यत्रापि, यथा अयस्कारः, पयस्कुम्भ इत्यादि। गीःकारः गीःकाम इत्यादिषु न स्यात्। भासं करोतीति भास्करः भासा खरस्तीक्ष्णः, भासां पतिः, भासा फेरुः शृगालविशेष इति क्रमेण वाक्यम्। पाणिनिः ८।३।३८-४८ (विशेषतः ८।३।४५); एषु सूत्रेषु क्वचिन्नित्यम्, क्वचिद्विकल्प।

### ६७। शसि शस्। (शसि ७।, शस् ।१।)।

वेः शस् वा स्यात् शसि परे। हरिश्शेते हरिःशेते, सन्तष्षट् सन्तःषट्, शिवस्सेव्यः शिवःसेव्यः।*

### ६८। कख-पफयोर्मून्यौ।

(कख-पफयोः ७॥, मून्यौ १॥)।

वेर्मून्यौ क्रमात् वा स्यातां कख-पफयोः परयोः।†
हरि×काम्यः हरिःकाम्यः, मणि×खनिः मणिःखनिः, कृष्णᳶपाता कृष्णःपाता, भक्तिᳶफलति भक्तिःफलति।

### ६९। अतोऽह्व्युः। (अतः ५।, अत्-ह्वि ७।, उः १।)।

अकारात् परस्य वेरुकारः स्यात् अकारे ह्वि च परे। शिवोऽर्च्यः, शिवोवन्द्यः।‡

### ७०। अ भो भगो अघोभ्योऽबे लुप्।

(अ भो भगो अघोभ्यः ५॥, अबे ७।, लुप् ।१।)।

---

* श-ष-सेषु परेषु विसर्गस्य क्रमेण श-ष-सा वा स्युरित्यर्थः। पाणिनिः ८।३।३६।

† मण्डूकप्लुतगत्या अत्र अशसन्त इत्यनुवर्त्तते, तेन कःक्षौम कःप्साति इत्यादौ न मून्यौ। व्याधातोः परेऽपि न स्त इति वक्तव्यं, तेन कःख्यातः। पाणिनिः ८।३।३७।

‡ अत्र अशसन्त इत्यस्य अनुवृत्तिर्नास्ति अनिष्टत्वात्, तेन रामोऽश्नातीत्यादौ स्यादेव। शिवोऽर्च्य इत्यादौ, प्रकृतेः पूर्व्वपूर्व्वं स्यादन्तरङ्गतरं तथेति न्यायेन विसर्गजातात् उकारतोऽन्तरङ्गस्य पूर्व्वाकारस्य सम्बन्धिनः सन्धेर्बलवत्त्वात् प्रथमतः न उकारस्य वकारः। शिवः-अर्च्यः (६९,२१,३८)=शिवोऽर्च्यः। शिवः-वन्द्यः (६९,२३)=शिवोवन्द्यः। अत्र अकारादप्लुतादिति अप्लुते अतीते च वक्तव्यम्। तेन सुस्रोत अत्र, पय अग्निदत्त इत्यादौ न स्यात्। पाणिनिः ६।१।११३-११४।

अवर्णात् भो भगो अघोभ्यश्च परस्य वेर्लुप् स्यात् श्रवे परे। वृद्धा नमस्याः, भो हरे, भगो रक्ष, अघो यज। *

## ७१। य वाचि। (य ।१।, वा ।१।, अचि ७।)।

अवर्णात् भो भगो अघोभ्यश्च परस्य वे र्यो वा स्यादचि परे। शिवयुग्रः शिवउग्रः, भोयच्युत भो अच्युत। †

## ७२। रिचोऽवे। (र ।१।, इचः ५।, अवे ७।)।

इचः परस्य वे रेफः स्यादवे परे। हरिरयं, चतुर्भुजः। ‡

## ७३। रोऽचः। (रः ६।, अचः ५।)।

अचः परस्य रेफस्य वे रेफः स्यादवे परे। प्रातरव, प्रातर्गच्छ। §

---

* अत्र भोः-भगोः-अघोः-पदानि भवत् भगवत् अघवत्शब्दानां सम्बोधनसाधितानि (२२६), सिद्धान्तकौमुदी-गोयीचन्द्रमते सान्ताव्ययानि च बोध्यानि। भोः हरे—हे हरे, भगोः-रक्ष—भगवन् रक्ष, अघोः-यज—अघवन् (पापिन्) यज—पूजय। अकारात् अवे परे यथा—शिव आगच्छति। पाणिनिः ८।३।१७,२२।

† भो अच्युत इत्यादौ (१५) लुपि न सन्धीति न सन्धिः। किन्तु मत्रा निर्दिष्टमनित्यमिति न्यायात्, सैष दाशरथी रामः सैष राजा युधिष्ठिरः, एषैष रथमारुह्य मथुरां याति माधव इत्यादि सिद्धिः (पा. ६।१।१३४)। पाणिनिः ८।३।१७,१८,२०।

‡ इचः इति स्पष्टार्थम्। सामान्यविशेषन्यायलभ्याच्छब्दोऽर्थः स्पष्टो भवति। हरिः-अयं=हरिरयं; चत्वारो भुजा यस्य स चतुः-भुजः=चतुर्भुजः। पाणिनिः ८।३।३४, ८।२।६६।

§ इचात् परस्य रेफजातविसर्गस्यासम्भवादेव सुतरामप्राप्तौ इच्निवृत्त्यर्थं पुनरचोग्रहणम्। प्रातर् (१०२)=प्रातः-अव=प्रातरव, एवं प्रातः-गच्छ=प्रातर्गच्छ। पाणिनिः ८।३।१५, ८।३।३४, ८।२।६६।

## ७४। खपि वा। (खपि ७।, वा ।१।)।

अचः परस्य रेफस्य वे रेफः स्याद्वा खपि परे। गीर्पतिः गीष्पतिः गीःपतिः। *

## ७५। नाह्नो रकत्रौ। (न ।१।, अह्नः ६।, रकत्रौ ७।)।

अह्नो रेफस्य वे रेफो न स्यात् रेफे के त्रौ च परे। †
अहोरात्रः, अहस्करः, अहोभिः। ‡

## ७६। हस्येतत्तदोऽनञकः सेर्लोपः।

(हसि ७।, एतद्-तदः ५।, अनञकः ५।, सेः ६।, लोपः १।)।

नञक्वर्जादेतदस्तदश्च परस्य सेर्वेर्लोपः स्यात् हसि परे। एष-

---

* पूर्व्वतः अचोऽनुवृत्तिः। मण्डूकप्लुतगत्या (६६) से तु कखपफे इत्यतः से इति चानुवर्त्तते। तेन इयं गीः पतिरसौ इत्यादौ न स्यात्। एवं गिर् धुर् अहन् एषामेव विसर्गस्य पतिशब्दे परे एव प्रायो बोध्यं, तेन गीःपाठः आशीःपतिरित्यादौ न स्यात्। क्वचित् प्रयोगानुसारात् नित्यमपि, तेन चतुर्थमिति (४५५) स्वयमुदाहरिष्यति। गीर् (१०२) गीः-पतिः = गीर्पतिः, (६६,१११) = गीष्पतिः, वा गीःपतिः। पाणिनिः ८।२।६९ सूत्रे "अहरादीनां पत्यादिषु वा रेफः" इति वार्त्तिकम्। अत्र "गीष्पतिरित्यसाधु" इति क्रमदीश्वरः। सिद्धान्तकौमुद्याञ्च "पत्यौ विसर्गोपध्मानीयौ" इत्युक्तत्वात् गीःपतिः गी$\varkappa$पतिः इत्येव पदद्वयं स्यात्। सुपद्मे तु गीष्पतिपदं दृश्यते। कातन्त्रे तु नास्ति। गीष्पतिर्धिषणो गुरुरित्यमरः।

† अत्र रेफे इति रात्रि-रूप-रथन्तर-शब्दानामेव, तेन अहा-रजन्यौ, अहा रवी, इत्यादौ रेफः स्यात्। एव क्विपदेन प्राप्तलोपकैरपि ग्रहणं, तेन दीर्घाह्नो निदाघ इत्यादौ (१४८) हसात् सिलोपेऽपि रेफनिषेधः। त्रौर्लुकि तु तत्र रेफः स्यादेव, तेन गताहर्मलमित्यादौ (१६८) सेर्लुकि रेफः स्यादिति। पाणिनिः ८।२।६९, वार्त्तिकञ्च।

‡ अहन् (२२७) = अहर्, (१०२) अहः-रात्रः (६९,२३) = अहोरात्रः। अहः-करः (६६) = अहस्करः। अहः-भिः (६९,२३) = अहोभिः।

कृष्णः, स-विष्णुः । अनञकः किम्—+असः शिवः, एषको रुद्रः ।*

७७ । ढ्रोर्ढ्रि घंश्चानुः ।

(ढ्रोः ६॥, ढ्रि ७, घंः १।, च ।१।, (अन् ऋ)=अनुः ६।) ।

ढकारस्य ढकारे परे, रेफस्य रेफे परे, लोपः स्यात्, पूर्व्वस्य च ऋवर्जस्य घंः । रूढ़ः, हरीरम्यः । अनुः किं—वृढ़ः ।†

इति वि-संधि-पादः ।

इति सन्ध्यध्यायः ।

---

* न विद्येते नञकौ यत्र सोऽनञकस्तस्मात् । सर्पवाचक-स-शब्दस्य इष-धातु-निष्पन्नस्य एष-शब्दस्य च वारणाय एतत्सदीर्ग्रहणम् । एषको रुद्रइति सूत्रनियमव्यतिक्रमोदाहरणदर्शनात् एतत्सूत्रा सह नञकोर्न क्रमः । पाणिनि: ६।१।१३२ । लोपे सत्येव चेत् पादः पूर्य्यते, तदा अचि परे सन्धिर्भवति, ७१ सूत्रस्य टीका द्रष्टव्या ।

† न ऋ, अन् तस्य अनुः । अत्र लोपविधिर्मुख्यत्वात् वृढ़ इत्यादौ ऋकारस्य दीर्घाभावेऽपि ढलोपः । यत्र तु लोपो न भवति तत्र दीर्घोऽपि न स्यात्, दीर्घविधेरानुषङ्गिकत्वात् । रुढ़् ढः=रूढ़ः । हरिः-रम्यः (७२)=हरिर्-रम्यः=हरीरम्यः । पाणिनि: ८।३।१३-१४, ६।३।१११ ।

# २यः। अजन्ताध्यायः।

## १म पादः—संज्ञा।

**७८। लेः—सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप्।**

(ले. ५।. सि—सुप् ।१॥)।

स्यादीन्येकविंशतिर्लेः पराणि प्रयुज्यन्ते। * ज श ट ङ पाः सि-ङस्योरिकारश्चेतः।†

**७९। त्रिशः प्री द्वी त्री ची पी षी स्त्रः।**

(त्रिशः ।१॥ प्री—स्त्रः १॥)।

स्यादीनि त्रीणि त्रीणि क्रमात् प्री द्वी त्री ची पी षी स्त्री-संज्ञानि स्युः। ‡

---

* सिप्रभृतयः एकविंशतिर्विभक्तयः लिङ्गात् रामादिप्रकृतिभ्यः परस्थिता एव प्रयुज्यन्ते विभक्तीनां न तु पृथक् प्रयोगः, रामादिप्रकृतीनामपि केवलानां न प्रयोगः, नापदं शास्त्रे प्रयुञ्जीतेति न्यायात्। पाणिनिः ४।१।२। सुस्थाने सिः, औट् स्थाने औ—इत्येव भेदः।

† विभक्तीनां ज श ट ङ पाः इतो भवन्ति, सि-ङस्योरिकारश्च इत् भवतीत्यर्थः ;—जसो ज इत्, शसः श इत्, टा इत्यस्य ट इत्, ङे ङसि ङस् ङि एषां ङ इत्, सुपः प इत्, सि ङसि एतयोः इकारश्च इत् भवतीति स्पष्टम्।

‡ सि, औ, जस्,—प्री ; अम्, औ, शस्,—द्वी ; टा, भ्याम्, भिस्,—त्री ; ङे, भ्याम्, भ्यस्,—ची ; ङसि, भ्याम्, भ्यस्,—पी ; ङस्, ओस्, आम्,—षी ; ङि,

## ८०। सम्बुद्धौ सिर्घिः।

(सम्बुद्धौ ७।, सिः १।, घिः १।)।

सम्बोधने विहितः सिः घि-संज्ञः स्यात्। *

## ८१। स्यमौजसं घिः।

(सि अम् औ जस्।१।॥, घिः १।)।

सि अम् औ जस् एते घि-संज्ञाः स्युः। †

## ८२। ग्निः क्लीवे। (ग्निः १।, क्लीवे ७।)।

नपुंसके ग्निरेव घि-संज्ञः स्यात्। ‡

## ८३। दान्तवत् सभि। (दान्तवत्।१।, सभि ७।)।

---

औस्, सुप्,—औ। प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमीनाम् एकदेशं गृहीत्वा नदादित्वादीपि एताः संज्ञाः कृताः। (१२) सूत्रेण स्यादीनां (त्रि) विभक्ति-संज्ञा कृता, (पाणिनिः १।४।१०४)। (१३) सूत्रेण च प्रत्येकम् एकवचन-द्विवचन-बहुवचनेषु एताः प्रयुज्यन्ते इति बोध्यम, (पाणिनिः १।४।१०३)।

* सम्बुद्धिः—सम्बोधनं, चेतनाचेतनयोराभिमुख्येऽभिधानं, तत्र विहितस्य सेः घि-संज्ञा इत्यर्थः। पाणिनिः २।३।४९।

† अत्र स्यमौ घिरिति कृते, सम्बोधने सेर्घिसंज्ञाविधानरूपविशेषेण प्रथमायाः घिसंज्ञारूपसामान्यविधिर्बाधितः स्यात्, तेन हे पन्थाः (१९७) इति पदं न सिध्यति। औ इत्यस्य अमजसोर्मध्ये पाठात् औकारद्वयस्य ग्रहणम्, अन्यथा व्युत्क्रमनिर्देशो व्यर्थः स्यात्। पाणिनौ सुट्प्रत्याहारस्यौकारेण न पृथक् संज्ञा कृता। (१।४।७) सूत्रस्य-घि-संज्ञायाः अर्थस्तु भिन्न एव।

‡ नपुंसके (१६२) जसशसोः स्थाने जातः ग्निरेव घि-संज्ञः स्यात्, न तु स्यादिरित्यर्थः। तेन वारिणी इत्यादौ नसबमहन्नेति (१६४) न दीर्घः। पाणिनिः (७।१।२०) सूत्रं द्रष्टव्यम्।

सभयोः परयोर्दान्तवत् कार्य्यं स्यात्। *

## ८४। भौ लिध्वोर्हसझसोरन्ते च।

(भौ ७, लिध्वोः ६॥, हसझसोः ७॥, अन्ते ७।, च ।१।)।

भौ परे यत् कार्य्यं वक्ष्यते तल्लेर्हसे धोर्झसे स्यात्, अन्ते च तयोः। †

## ८५। हसोऽन्तः फः। (हसः १।, अन्तः १।, फः १।)।

हसो विरामश्च फ-संज्ञः स्यात्। ‡

## ८६। सर्व्व विश्व उभ उभय भवत् त्वत् त्वैक सम सिम नेमाः, अन्यान्यतरेतर डतर डतमाः, त्यद् तद् यद् एतदिदमदः किम् द्युष्मद्

---

* से भे च परे वस्तुतोऽदान्तस्यापि दान्तवत् कार्य्यं स्यात्, यथा, सुहिन्सु इत्यादौ दान्तवत्त्वात् मोर्नुरित्यनेन (५०) न नस्यानुस्वारः। एवं पुम्भ्यां पुंभ्यामित्यादौ दान्तवत्त्वात् दान्ते म(५३) इत्यनेन मस्यानुस्वारे,वा त्वरयपे ५२) इत्यनेन अनुस्वारस्थाने मकारो वेति। अत्र सभीति स्यादेरेव. तेन विद्वान्स इत्यादो अदान्तत्वात् (५०)नस्यानुस्वारः, दम्भ इत्यादौ च नस्यानुस्वारः, अनुस्वारस्य न (५१) मकारः। अत्र दवत् सभीति नोक्ता दान्तवदिति कथनेन, दान्तत्वेन विहितं यत् कार्य्यं तदेव स्यात् नतु विरामविहितमिति, तेन लिट्सु इत्यादौ (६४) झपझसोरित्यनेन विराममाश्रित्य न जब्। पाणिनिः १।४।१६-१७।

† यत कार्य्यं भौ परे वक्ष्यते तत, लिङ्गस्य हसे परे, धातोर्झसे परे, एवम उभयोरेव विरामे परे स्यात्। हस इह स्यादेरेव. तेन दिशि भवं दिश्यमित्यादौ शच्छाजेत्यादिभिः (१५४) षत्वादि नं स्यात। पाणिनौ भि-संज्ञा न दृश्यते।

‡ (२०२) धोर्म्नोनः कम्वीत्यत्र नवयोः पृथग्ग्रहणस्वरसात् अत्र हसः स्यादेरेव, तेन हृष्टः हृष्टिरित्यादौ षोड़ः फे (१५५) इति न स्यात। विरामस्तु स्यादेस्त्यादेश्च। अन्तो विरामः, परवर्णाभाव इति यावत्। पाणिनौ फ-संज्ञा न दृश्यते।

**युष्मदः, पूर्व्व परावर दक्षिणोत्तरापराधरान्तरस्वाः, स्विः।**

(सर्व्व—नेमा: १॥, अन्य—डतमाः १॥, त्यद—युष्मदः १॥, पूर्व्व—स्वाः १॥, स्विः १।)।

दभेदो गणभेदार्थः। एते पञ्चत्रिंशत् शब्दाः स्विसंज्ञाः स्युः। *

समोऽतुल्ये, व्यवस्थायां पूर्व्वाद्योऽत्रान्तरोऽपुरि।
वहिर्योगोपसंव्याने, स्वस्त्वज्ञातिधनाभिधः॥ †

## ८७। न गौणाख्याचत्रीसासे।

(न।१।, गौणाख्याचत्रीसासे ७।)।

गौणत्वे, संज्ञायां, चे, 'त्र्याः से असे च, ते स्विसंज्ञा न स्युः। ‡

---

* सर्व्वादिगणः—सर्व्व विश्व उभ उभय भवत् त्वत् त्व एक सम सिम नेम इति। अन्यादिगणः—अन्य अन्यतर इतर डतर डतम इति। त्यदादिगणः—त्यद तद यद एतद इदम अदस् किम् द्वि अस्मद युष्मद् इति। पूर्व्वादिगणः—पूर्व्व पर अवर दक्षिण उत्तर अपर अधर अन्तर स्व इति। एषां (१६५, १३३, ११४ सूत्रेषु) विशेषकार्य्यार्थं गणभेदः। सर्व्वेषां बुद्धिस्थानां नाम=सर्व्वनाम, तदेकदेशग्रहणात् स्विरित्यादिः। उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्तः। भवत्शब्दो युष्मदर्थः। त्वत् त्व इति द्वौ अन्यार्थौ। एकशब्दो यदा सङ्ख्यावाची तदा एकवचनान्त एव, यदा मुख्यादिवाची तदा द्विवचनबहुवचनान्तोऽपि। विश्वः सिमः एतौ सर्व्वार्थौ, नेमः अन्यार्थः। नेम इत्यर्द्धे इति सिद्धान्तकौमुदी। डतर-डतमौ प्रत्ययौ (५१०), तेन तदन्तानां कतरकतमादीनां ग्रहणम्। डतरान्तत्वेऽपि अन्यतरग्रहणम् अन्यतमस्य स्विसंज्ञानिषेधार्थम्। त्यदशब्द-स्तदर्थः। पाणिनिः १।१।२७।

† अत्र समशब्दः अतुल्येऽर्थे स्विसंज्ञः, समः सर्व्वसमानयोरिति मेदिनी। पूर्व्वाद्याः व्यवस्थायां स्विसंज्ञः, व्यवस्था कथिता लोकैर्दिग्देशकालवाचिका। अन्तरः, अपुरि पुर्भिन्ने, वहिर्योगे वहिःस्थितपदार्थे वाच्ये, उपसंव्याने परिधानवस्त्रे वाच्ये च स्विसंज्ञः। स्वशब्दस्तु अज्ञातिधनाभिधः—ज्ञातिश्च धनञ्च ज्ञातिधने, ते अभिदधाति कथयतीति तादृशः, न ज्ञातिधनाभिधोऽज्ञातिधनाभिधः स्विसंज्ञः, ज्ञातिधनभिन्ने आत्मनि आत्मीये च वाच्ये स्विसंज्ञः, इत्यादित्यर्थः। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने इत्यमरः। पाणिनिः १।१।२४-३६, वार्त्तिकञ्च।

‡ गौणं अप्रधानं तस्य भावो गौणत्वम्। चः द्वन्द्वः। सः समासः। तस्य अस्य त्रासौ

**८८। चे जसि वा।** (चे ७।, जसि ७।, वा ।१।)।

चे ते स्विसंज्ञा वा स्युर्जसि परे। *

**८९। पूर्व्वाद्यल्प प्रथम चरम तयायार्द्ध कतिपय नेमाः।** (१।।।)।

एते सप्तदश शब्दाः स्विसंज्ञा वा स्युः जसि परे। †

**९०। तीयाङिति।** (तीयः १।, ङिति ७।)।

तीयान्तः शब्दः स्विसंज्ञः स्याद्वा ङिति परे। ‡

**९१। पूर्व्वोऽन्त्यादुङ्।** (पूर्व्वः १।, अन्त्यात् ५।, उङ् ।१।)।

अन्त्यात् वर्णात् पूर्व्वो वर्ण उङ्संज्ञः स्यात्। §

---

ज्ञाः सासौ चौसासौ; गौणश्च आख्या च चश्च चौसासौ चेति तस्मिन्। अप्राधान्ये, आख्यायां, द्वन्द्वसमासे, तृतीयासमासे, तृतीयासमासयोग्यवाक्ये च, ते सर्व्वादयः स्विसंज्ञाः न स्युरित्यर्थः। पाणिनिः १।१।२९-३१,३४।

* चे द्वन्द्वसमासे। ते सर्व्वादयः। पाणिनिः १।१।३१,३२।

† पूर्व्वादयो नव, अल्प प्रथम चरम तय अय अर्द्ध कतिपय नेम इत्यष्टौ च स्विसंज्ञा वा स्युः जसि परे। तयायौ प्रत्ययौ (४६०,४६१), तेन द्वितय त्रितय द्वय त्रय इत्यादि। पाणिनिः १।१।३३ ३४।

‡ तीयः प्रत्ययः (४५७), तेन द्वितीय-तृतीयौ ग्राह्यौ। तीय इति तन्मात्रप्रत्ययान्तस्य ग्रहणं, नतु (४८७) जातीयप्रत्ययान्तानामपि। तीयान्तस्य अल्पादीनाञ्च गौणत्वे न गौणाख्येति (८७) निषेधः, तेन अतिद्वितीयाय अनल्पाः इत्येव स्यात्, एवमेव औमराः। पाणिनिः १।१।३३ सूत्रस्य वार्त्तिकम्।

§ अन्ते भवः अन्त्यः। भिन्नविधित्वात अस्य नित्यत्वम्। पाणिनिः १।१।६५।

## ६२। अन्त्याजादिष्टिः। (अन्त्याजादिः १।, टिः १।)।

अन्त्यो यो ऽच् तदादिवर्णष्टि-संज्ञः स्यात्। *

## ६३। लुकि न तत्र। (लुकि ७।, न ।१।, तत्र ७।)।

लुक् इति लोपे कृते यो लुप्तस्तस्मिन् परे यत् कार्य्यं तन्न स्यात्। †

## ६४। स्वरादि-नि-चित्त्वं व्यम्।

(स्वरादि नि-चित्त्वं १।, व्यम् १।)।

स्वरादिर्गणो-नि-चकारेतस्त्याश्च व्य-संज्ञाः स्युः। ‡

---

* अन्त्यश्चासौ अजिति अन्त्याच्, अन्त्याच्च आदिश्च सूत्रत्वात् पुंस्त्वम्। आदिशब्देन लक्षणया अन्त्याजादिर्बोध्यः। तेन अजन्तशब्दानां अन्त्याच् टिसंज्ञः, हसन्तानान्तु अन्त्याजादिवर्णष्टिसंज्ञः स्यादित्यर्थः। इत्तौ तदादिवर्णं इत्यत्र चकारः लिपिकरप्रमादपतितः पाणिनिः १।१।६४।

† लुचधातोः क्विपि लुक्। सर्व्वत्र लुप्करणेन इष्टसिद्धिर्न भवति, यतः, पय इत्यत्र (१६८) स्यमोर्लुगिति सेर्लुपि, (१५) आदिविधित्वात् सस्य विसर्गानुपपत्तिः आदिभिन्नत्वात् (१८५) अत्वसोरिति अकारदीर्घापत्तिश्च स्यात्। पाणिनिः १।१।६३।

‡ स्वरादिर्गणः—स्वर्, अन्तर् प्रातर्, पुनर्, उच्चैस्, नीचैस् शनैस्, विना, ऋते युगपत्, अर्वाक्, आरात्, अस्तम्, पृथक्, ह्यस्, श्वस्, दिवा, नक्तम्, सायम्, चिरम् चिरेण, चिराय, चिरात्, चिरस्य, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, समया निकषा, अन्तरा, अन्तरेण, सहसा, सपदि, स्वयम्, वृथा, अद्धा, सामि, साचि, साक्षात् वत्, तिरस्, आविस्, प्रादुस्, नाना, शम्, अलम्, कृतम्, अस्ति, उपांशु, दोषा मृषा, सुधा, मिथ्या, सत्यम्, मङ्क्षु, संवत्, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, अभीक्ष्णम् अनिशम्, सदा, झटिति, अञ्जसा, अन्वक्, साकम्, सार्द्धम्, समम्, सह, सना, कामम् परम्, नमस्, धिक्, भूर्, भुवर्, स्थाने, वरम्, इत्यादि आकृतिगणोऽयम्। नि निपाताः —(१६) चादिर्गणो निश्च, निरिति (१०) निसंज्ञापठितशब्दाः। चित्‌भिन्नाः (१०२) अकारेतः प्रत्ययाः—च्वि (३४६) च्वि (४६५) चुत् (४४०) असात् (४६६) अशस् (४८) अकृत्वस् (४८४) सुच् (४८५) अतरां (४६५) अतमां (४६५) थाच् (५१३) धाच् (४५) डाच् (५०१) नाच्(५००) क्वाच् (११६५) अतुम (११६४) अणम (११८३) एते षोड़श स्वरादिपठितानां वाचकत्वं, चादीनां द्योतकत्वम्, अतः स्वरादि-चाद्यो, पृथक् ग्रहणम् पाणिनिः १।१।३७।

## ९५। ह्रसोऽनन्तर: स्य:।

(ह्रस: ११, अनन्तर: ११, स्य: ११)।

अचानन्तरितो ह्रस: स्य-संज्ञ: स्यात्। *

## ९६। यूत् स्त्र्येव दी।

(यूत् ।१।, स्त्री ।१।, एव ।१।, दी ।१।)।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ दी-संज्ञ: स्यात्। †

## ९७। नास्त्रीयुव:। (न ।१।, अस्त्री ।१।, इयुव: ६।)।

इयुवस्थानावीदूतौ दीसंज्ञौ न स्त:, न तु स्त्री। ‡

## ९८। वामि। (वा ।१।, आमि ७।)।

इयुव ईदूच्च दीसंज्ञो वा स्यादामि परे, न तु स्त्री। §

## ९९। स्त्री युच्च ङिति।

(स्त्री ।१।, युत् ।१।, च ।१।, ङिति ७।)।

---

* नास्ति अन्तरं व्यवधानं यस्य स: अनन्तर:। अचा अव्यवहितौ ह्रस्वर्णः (स्य:) संयोगसंज्ञ: स्यात्। पाणिनि: १।१।७।

† ईश्च ऊश्च यू, ताभ्यां त् यूत्। दी—नदी। स्त्री एवेति एवशब्देन नित्यस्त्रीलिङ्गौ नियम्यति। यस्मिन्नर्थे यद्रूपेण स्त्रीलिङ्गशब्द: तस्मिन्नर्थे तद्रूपेण यदि लिङ्गान्तरं न भवति तदा नित्यस्त्रीलिङ्ग:। यथा, नदी गौरी इत्यादि। पाणिनि: १।४।३।

‡ इयुवस्थानौ—इयुवप्राप्तियोग्यौ नित्यस्त्रीलिङ्गौ ईकारान्तोकारान्तौ नदीसंज्ञौ न भवत:, स्त्रीशब्दस्तु नदीसंज्ञ:। पाणिनि: १।४।४।

§ नित्यस्त्रीलिङ्गौ इयुवस्थानौ स्त्रीशब्दभिन्नौ ईदूदन्तौ दीसंज्ञौ वा स्याताम् आमि परे। पाणिनि: १।४।५।

स्त्रीलिङ्ग इदुदन्तौ नित्यस्त्रीलिङ्ग इयुव ईदूच दीसंज्ञः स्याद्वा ङिति परे, न तु स्त्री । *

१०० । अध्यच्ताच्येप् पिः ।

(अध्यच्ताच्येप् ।१।, पिः १।)।

घिवर्ज-स्यादेरच् तसंज्ञावच्यकारावीप् च एते पि-संज्ञाः स्युः ।†

१०१ । सङ्ख्यावत् डत्यतुबहुगणा नेपि ।

(संख्यावत् ।१।, डति अतु बहु गणाः १।॥, न ।१।, ईपि ७।) ।

डत्यतु बहु गणानां संख्यावत् कार्य्यं स्यात्, न त्वीपि । ‡

इति संज्ञापादः ।

---

* सामान्यस्त्रीलिङ्गौ ऋस्वेकारान्तोकारान्तशब्दौ, चकारात् नित्यस्त्रीलिङ्गौ इयुवस्थानौ स्त्रीशब्दभिन्नौ ईदूदन्तौ च दीसंज्ञौ वा स्यातां ङिति परे । पाणिनिः १।४।६ ।

† न घि: अघि: अघेरच् अध्यच्, अच्च यश्च अच्यौ, तस्य तद्धितस्य अच्यौ ताच्यौ, अध्यच्च ताच्यौ च ईप् च तेषां समाहारः अध्यच्ताच्येप् । भिन्नविषयत्वादस्य नित्यत्वम् । पाणिनिः १।४।१८ ।

‡ डति अतु प्रत्ययौ, तेन तदन्तानां कति यति तति यावत् तावत् एतावत् कियत् इयत् शब्दानां, बहु गण शब्दयोश्च संख्यावाचकशब्दवत् कार्य्यं स्यात्, न तु ईपि विषये, यत्र ईप् कर्त्तव्यं तत्र न संख्यावदित्यर्थः । पाणिनिः १।१।२३,२५ ।

## २य पादः—अजन्त पुंलिङ्ग शब्दः ।

राम-स् इति स्थिते *—

### १०२ । स्रो विः फे । (स्रोः ६॥, विः १।, फे ७।) ।

सकार-रेफयो विः स्यात् फे परे । † रामः ।

औ-जसोः सन्धिः । रामौ रामाः । ‡

### १०३ । स्वदीभ्यां ध्यमशसादे र्लोपः ।

(स्व-दीभ्यां ५॥, धि-अम्-शसादेः ६।, लोपः १।) ।

स्वात् दीसंज्ञकाच्च परस्य धेरम्शसादेश्च लोपः स्यात् ।

हे राम, रामं रामौ । §

---

* रामशब्दात् (७८) स् इति स्थिते लक्षणमाह ।

† दान्तादान्तसाधारणयोः सकार-रेफयोः विसर्गः स्यात्, स्वादीय-हसे विरामे च परे । दान्तस्य—विरामे राम इत्यादि, हसे पयोभ्यामित्यादि । अदान्तस्य—हसि परे गीस्तः धूस्त इत्यादि । पयस्वान् भास्वान् इत्यादौ स्वादीयहस्परत्वाभावात् न विसर्गः । पाणिनिः ८।३।१५, ८।२।६६ ।

‡ औ परे जसि परे च सन्धिर्भवतीत्यनेन प्रकरणान्तरेऽपि सूत्राणुवृत्तिर्भवतीति सूचितम् । राम-औ = (२३) रामौ । राम-जस् (७८) = राम-अस् = (२२,१०२) रामाः ।

§ अम् च शस् च अम्शसौ तयोरादिः, धिश्च अम्शसादिश्च समाहारे तस्य । अत्र दीग्रहणम् अम्शसोरादिलोपार्थमेव, हे लक्ष्मि, हे वधु इत्यादौ (१५३) ह्रस्वे कृते ह्रस्वादेव धिलोपसिद्धेः । अत्र धिग्रहणं तोर्लोप इति यत्र कृतं तत्, अजर कुलमित्यत्र (१६६) संरमि कृते तस्यापि अकारलोपार्थम् । हे सम्बोधने, राम-सि (८०,१०३) राम । राम-अम् = रामं 'मो विन्दुरवसाने वा' इति औणादिकसूत्रम् । राम-औ (२३) = रामौ । पाणिनिः ६।१।६९,१०७ ।

## १०४ । शस्नामि धः । (शस्-नामि ७।, धः १।) ।

शसि नामि च परे स्वस्य धः स्यात् । *

## १०५ । पुंसि तु शस् न ।

(पुंसि ७।, तु ।१।, शस् ।१।, न ।१।) ।

स्वात् परः शस् न स्यात् पुंलिङ्गे । रामान् । †

## १०६ । टा भिस् ङे ङसि ङसोसा-मिनैस-यात् स्य योसो ऽतः ।

(टा—ओसाम् ६।।।, इन—योसः १।।।, अतः ५।) ।

अकारात् परेषामेषां स्थाने एते क्रमात् स्युः । ‡

---

* नामीति नुम्सम्बन्धिनकारेण सहिते आमि, तेन शानिनामित्यादौ न प्रसङ्गः । आमो ग्रहणेनैवेष्टसिद्धौ नामीति कृतम् आगमादेशयोर्मध्ये बलीयानागमो विधिरिति न्यायस्वीकारार्थं, तेन क्रोष्टूनामित्यत्र आदौ (११०) नुमि ढ्नादेशो (१४०) न स्यात्, एवं प्रकृते रामाङ् इत्यादौ दीर्घस्य स्थानिवत्त्वेन ह्रस्वपरत्वात् यथा शसि नकारविधानं तथा (११०) नुमागमो न स्यादिति सूचनार्थञ्च । पाणिनिः ६।१।१०२, ६।४।३ ।

† तु-ग्रहणं पुंसीत्यस्य परत्रानुवृत्तिनिवारणार्थम् । पुंस्त्वमिह अभिधानादिनिरूपित-विशेषधर्म्मवत्त्वं, न तु स्तनादिमत्त्वं, दारादि-दृश्यादिष्वव्याप्तेः, तथाच प्राहुः—शब्दसंस्कार-सिद्धार्थमुपायाः परिकल्पिताः, सर्व्ववस्तुगता धर्म्माः शास्त्रे पुंस्त्वादयस्त्रयः । ये तु योन्यादि-सम्भवाः प्राणिजातीयगोचराः, न तेऽभ्युपायाः सिध्यन्ति कलत्रादि-तटादिषु इति । राम-शस्—(१०४,१०५) रामान् । पाणिनिः ६।१।१०३ ।

‡ अकारात् परेषां टा, भिस्, ङे, ङसि, ङस्, ओस् एषां स्थाने क्रमेण—
इन, ऐस्, अय, आत्, स्य, योस् एते भवन्ति ।
एस् अत् न कृत्वा ऐस् आत् करणं निर्जरसैः निर्जरसात् (११५) सिद्ध्यर्थम् । पाणिनिः ७।१।९,१२,१३ । ७।३।१०४ ।

**१०७। षृॠणोऽदान्ते नोऽव्कुप्वन्तरेऽप्यतद्धात्त्व-पक्वयुवाह्नः ससेप्स्यादे नैकाच्कोस्तु वा।** *

(षृॠः ५।, णः १।, अदान्ते ७।, नः ६।, अव्कुप्वन्तरे ७।, अपि ।१।, अतद्धात् ५।, तु ।१।, अपक्वयुवाह्नः ६।, ससेप्स्यादेः ६।, नैकाच्कोः ६।, तु ।१।, वा ।१।)।

षकारात् रेफात् ऋवर्णाच्च परस्य अदान्ते स्थितस्य नस्य णः स्यात्, अव्-कवर्ग-पवर्ग-व्यवधानेऽपि। †

यत्र दे न-स्ततोऽन्यत्र गतात्तु निमित्तात् परस्य, साहित्य-तेनेपा स्यादिना च सहितस्य, पक्वादिवर्जितस्य, स्यात्, तस्यैवै-काचः सकवर्गाच्चान्यस्य, वा स्यात्। रामेण। ‡

---

* ष च र च ऋश्च तस्मात् षृॠः। अव् च कुश्च पुश्च तैरन्तरं व्यवधानं तस्मिन्। तत्र तत् दधेति तद्धं, न तद्धम्=अतद्धं तस्मात्, अतद्धपदेनात्र लक्षणया अतद्धस्थिताः षकाररेफ-ऋवर्णा उच्यन्ते, अतएवाह यत्र दे नस्ततोऽन्यत्र गतादिति। पक्वश्च युवा च अहश्च पक्व-युवाहानि, न विद्यन्ते पक्वयुवाहानि यस्मिन् सः अपक्वयुवाहस्तस्य। ईप् च स्यादिश्च ईप्स्यादी, सात् ईप्स्यादी सेप्स्यादी ताभ्यां सह वर्त्तते योऽसौ ससेप्स्यादिस्तस्य। एकः अच् यस्य स एकाच्, कुः कवर्गवान्, एकाच्च कुश्च एकाच्कुः—एकाच्कवर्गवच्छब्द-सम्बन्धी, न एकाच्कुः नैकाच्कुस्तस्य।

† अव् इह प्रथमवकारान्तः। अपिशब्दादव्यवधानेऽपि, यथा पुष्णां चतुर्णां नृणां मृणानित्यादि।

‡ नकारवत्पदपूर्व्ववर्त्तिपदस्थितात् षकार-रेफ-ऋवर्णात् परस्य, समासोत्तरविहितयो-रीप्स्याद्योरेकतरेण युक्तस्य, पक्व युवन् अहन् सम्बन्धि नकारभिन्नस्य, नस्य णः स्यात्, तस्यैव—तादृशस्यैव नकारस्य, एकाचशब्दसम्बन्धि कवर्गयुक्तशब्दसम्बन्धि भिन्नस्य णो वा स्यात्, एतेन एकाचसम्बन्धिनः सकवर्गसम्बन्धिनश्च नकारस्य नित्यं णः स्यात्, तद्भिन्नस्य वा स्यादित्यर्थः। स्यादिना सहितः—स्यादिगतः स्यादियुक्तो वा। पक्वादेरुभयत्रापि निषेधः, एवम् अव्कुप्वन्तरेऽपीति उभयत्रापि बोध्यम्। एकाचको यथा, व्रत्रहणो, रम्यविणा; श्रीकामिणो, श्रीकामेण। एकाचकुभिन्नस्य यथा, हरिभाविणौ हरिभाविनौ, श्रीभावेण श्रीभावेन; हरिभाविणा, हरिभाविना। समासोत्तरविहितपोग्रहणात् हरिभाविनी

हरिभाविनी इत्यादौ न स्यात्। पक्वादेस्तु गुरुपक्वेन, चारुयूना, दीर्घाह्ना इत्यादि। पाणिनिः ८।४।१,२,११-१३।

धातुना सह प्रादेः समासे नेयं व्यवस्था, धातुप्रकरणे (५४९), कृत्प्रकरणे च (९९८) तस्य पृथक् णत्वविधानात्। एवं—नुमो पूर्व्वेण सम्बद्धौ मून्वौ तु परगामिणौ। चत्वारो योगवाहाख्या णत्वकर्म्मण्यचो मताः—इति नियमेन एषां व्यवधानेऽपि णत्वं स्यात्, यथा बृंहणम, उरःकायेण, उर≈पेण इत्यादि। कुर्वन्ति रञ्जयतीत्यादौ झसपरत्वात् (५०) नस्यानुस्वारे, पुनः (५१) अनुस्वारस्य ञकारे, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न्यायात् णत्वं न स्यात्। चिन्वः वृन्वः समर्न्वः इत्यादौ तु नकारे परे अनुस्वाराभावात् पूर्व्वनकारस्य णत्वे, (४७) ष्टुभिरित्यनेन परनकारस्यापि णत्वं, किन्तु निर्भिन्नः प्रभिन्न इत्यादौ पूर्व्वपदस्थनिमित्तत्वात् ससेप्स्यादिभिन्नत्वेन णत्वं न स्यात्।

राम-टा = (१०९, २३, १०७) रामेण।

अत्र वाशब्दस्य व्यवस्थया, केषाञ्चित् णत्वविधिहेतौ सति असति वा नित्यं णत्वं स्यात् (१), केषाञ्चित् वा स्यात् (२), केषाञ्चित् णत्वविधिहेतावपि न स्यात् (३), तद्यथा—

१। पूर्व्वपदस्थनिमित्तात् परस्य नो णः स्यात्, संज्ञायाम् अवकुप्वन्तरेऽपि, यथा—सूर्पणखा, द्रुणसः, खरणसः, वार्ध्रीणसः, खरणादः, नारायणः, परायणं, पारायणम्, उत्तरायणं, रामायणं, चान्द्रायणम्, अग्रणीः, ग्रामणीः, अक्षौहिणी। संज्ञायां किं, शुष्कनखः, ताम्रनखः। अवकुप्वन्तरे किं, त्रिलोचनः। पाणिनिः ८।४।३। वार्त्तिकञ्च।

रेफादियुक्त-वहनीय-वस्तुवाचक-शब्दात् वाहनशब्दस्य नित्यं णत्वं स्यात्, दर्भवाहणमित्यादि। अवकुप्वन्तरे किं, राजवाहनम्। पाणिनिः ८।४।८।

त्रिचतुर्भ्यां वयसि हायनस्य। यथा, त्रिहायणः, चतुर्हायणः। वयसीति किं—त्रिहायना शाला, त्रैहायनं गृहम्। वयः प्राणिधर्म्मः इति गोयीचन्द्रः।

प्रपूर्व्वापरप्रभृतिभ्यः अह्नशब्दस्य नित्यं णत्वं स्यात्। प्राह्ण इत्यादि। विरह्नः इत्यादौ तु न भवति। पाणिनिः ८।४।७।

प्र निर् दुर् परिभ्यो नसः। यथा, प्रणस इत्यादि। "नसश्च", इति सुपद्मे, "प्रादौ नसः" इति संक्षिप्तसारे।

अग्रे कोटरा सिध्रका मिश्रका सारिका पुरगा शराम्र कार्ष्य पीयूक्षा खदिर प्र निरन्तरिचु प्रसेभ्यो वनस्य नस्य नित्यं णत्वं स्यात्, यथा—अग्रेवणं कोटरावणमित्यादि। एभ्यः किं, इन्द्रवनम्। पाणिनिः ८।४।४,५।

२। द्विव्यक्षरवृक्षवाचकात् द्विव्यक्षरौषधिवाचकाच्च परस्थितस्य वनस्य नस्य णत्वं स्याद्वा, अवकुप्वन्तरेऽपि, न तु इरिकादेः परस्य। यथा, लोध्रवणं लोध्रवनं, मन्दारवणं मन्दारवनं,

## १०८। आ त्रि-मभवि।

(अ।१।, आ।१।, त्रि मभवि ७।)।

**अकार आकारः स्यात् त्रौ म-भ-वेषु परेषु।***

ीहिवणं व्रीहिवनं, दूर्व्वावणं दूर्व्वावनं, हरिद्रावणं हरिद्रावनमित्यादि। द्वित्रचः
कें, देवदारुवनम्। अवक्रपूर्व्वेऽपीति किं, पर्कटीवनम्। इरिकादेस्तु इरिकावनं
ेमिरवनम्, इत्यादि। वृक्षौषधिभ्यां किं, विदारीवनम्। पाणिनिः ८।४।६।
ार्त्तिकञ्चात्र।

पूर्व्वपदस्थित-निमित्तात् पानशब्दस्य भावकरणयोः प्रयुक्तस्य णत्वं वा स्यात्। यथा,—
ोरपाणं क्षीरपानमित्यादि। पाणिनिः ८।४।१०।

गिरिणदी स्वर्णदी चक्रणदी गिरिणितम्ब चक्रणितम्ब गिरिणख गिरिणद्ध तूर्य्यमाण
ाषीण आर्गयण शब्दानां णत्व वा स्यात्। पक्षे गिरिनदीत्यादि। ८।४।१० सूत्रस्य
ार्त्तिकम्।

२। त थ द ध प भ युक्तस्य नस्य णत्वं न स्यात्, यथा, क्रन्दति ग्रन्थनं द्वन्द्वः क्रन्धन्ति
प्नोति क्षुभ्नाति इत्यादि। पाणिनिः ८।४।२९,३९।

पूर्व्वपदान्तस्थषकारात् परपदस्थनकारस्य णत्वं न स्यात्, यथा, हविष्पानम्, आयुष्का-
न इत्यादि। पाणिनिः ८।४।३५।

भगिनी कामिनी भामिनी यामिनीनां णत्वं न स्यात्।

स्वभावतो मूर्द्धन्यणवन्तः शब्दाः—

> बाणो तूणीर वेणी फणि मणि लवणं कोण कल्याण वाणाः,
> गौणी घोणो कणाणु घुण विपणि पणं स्थाणु पुण्यं विषाणम्।
> माणिक्यं शोण प्राणो गुण गण गणिका वेणु सिंहाण वीणा
> निर्व्वाणो निक्वणेण क्वण किण वणिजः कङ्कणं पाणि तूणौ॥
> पिण्याकमपि चाणक्यमित्याद्याः स्युः स्वभावत इति।

* अत्र मकार-वकारौ त्यादेरेव, स्यादावसम्भवात्। एवञ्च विभक्तेरादवयव-मकारे
े एवायं विधिः, तेन रामम् इत्यादौ न आकारः। अतएव च 'त्वां मा' इत्यादि साध-
ाय ङेप्योर्मइति (२१६) मकारे कृतेऽपि, सम्मौष्वाङ् (२१७) इति आकारविधानं
तम्। अत्र मकारभकारव्वामकार, उच्चारणार्थः। पाणिनौ 'यञि' इति कथनात्
ममभि' इत्येव स्यात्। अत्र तु स्यादिभकारस्य त्यादिमकारवकारयोर्मध्यपाते
ारणं सुधीभिर्विभावनीयम्। पाणिनिः ७।३।१०१,१०२।

रामाभ्यां रामैः, रामाय रामाभ्याम् । *

## १०९ । ब्वे सभ्यः ।

(ब्वे ७।, सभि ७।, ए: १।) ।

अकार एकारः स्यात् क्तौ ब्वे स-भयोः परयोः । †

रामेभ्यः, रामात् रामाभ्यां रामेभ्यः, रामस्य रामयोः । ‡

## ११० । नुमामः स्वद्यापसङ्ख्यार्ष्णः ।

(नुम ।१।, आमः ६। स्वद्याप्-सङ्ख्यार्ष्णः ५।) ।

स्वात् द्या आपो रषनान्तसङ्ख्यायाश्च परस्याम आदौ नुम् स्यात् ।

र्ष-णत्वे । § रामाणाम् । रामे रामयोः । ¶

## १११ । क्विलात् क्ततोऽसात् सः षोऽदान्ते नुव्यन्तरेऽपि शास वस घस साद्वाञ्च ।

(क्-इलात् ५।, क्ततः १।, असात् ।१।, सः १।, षः १।, अदान्ते ७।, नु-वि-अन्तरे ७।, अपि ।१।, शास वस घस षाद्वां ६॥, च ।१।) ।

---

* राम भ्याम (१०८)=रामाभ्याम । राम भिस् (१०६,२३)=रामैः । राम ङे (१०६,२२)=रामाय ।

† अद अकारः अनुवर्त्तते । अकारात परयोस्त्यादेर्बहुवचनीय-सभयोरसम्भवात् स्यादेरेव सभयोर्ग्रहणम् । पाणिनिः ७।३।१०३ ।

‡ राम-भ्यस् (१०९,१०२)=रामेभ्यः । राम-ङसि (१०६,२२)=रामात् । राम ङस् (१०६)=रामस्य । राम-ओस् (१०६,१०२)=रामयोः ।

§ र च ष च न च र्षाः, सङ्ख्या चासौ र्ष्णा चेति सङ्ख्यार्ष्णा, स्वश्च दीश्च आप् च सङ्ख्यार्ष्णा च तत् तस्मात । नुमः उमावितौ, उकारः प्राचीनानुवादार्थः, मिदादौ (१७) । येन विधिस्तदन्तस्येति न्यायादाह रषनान्त इति । रान्तषान्तनान्तानां सङ्ख्यानामेव ग्रहणं, तेन प्रियचतुरां प्रियषषामित्यादौ न स्यात् । र्षस्य णत्वञ्च न भवत इति शेषः, एतत्कथनं (१०४,१०७) सूत्रद्वयस्य स्मरणार्थम् । पाणिनि. ७।१।५४,५५, १।१।२४ ।

¶ राम आम् (११०,१७, १०४, १०७)=रामाणाम् । राम ङि [(७८)ङ इत्](२३)=रामे । राम-ओस् (१०६,१०२)=रामयोः ।

कवर्गादिलाच्च परः कृतः सादर्शो दमध्यगः सकारः शासादेश्च षः स्यात्, नु-वि-व्यवधानेऽपि ।* एत्व-षत्वे। रामेषु। †

एवं मुकुन्दानन्दगोविन्दादयः। ‡

---

* इण्. प्रत्याहारः (३)। नुश्च विश्च नुवौ, ताभ्यामन्तरं व्यवधानं तस्मिन्। नुरिह नुमयमादौ (१६२) इत्यादिना विहितो नुमेव न त्वनुस्वारः, तेन हवींषि धनूंषि इत्यादौ षत्वं, न तु पुंसु इत्यादिषु। सर्पिःषु इत्यादौ अन्तःकृत्वादादौ रङो विसर्गे (१८७) पश्चात् षत्वं, न तु रेफात्, तथात्वे अहःसु इत्यादौ षत्वापत्तिः। सादिति घसात्प्रत्ययः (४९९); यथा अग्निसात् हरिसादित्यादि। कृत इति प्रत्ययादेशागमानामेकतमसम्बन्धीत्यर्थः, तेन स्वाभाविकसकारवतां धातूनां सस्य षत्वं न स्यात्, यथा सिसीर्षत इत्यादि। शास वस घसाम् अविकृतधातूनां पृथग्ग्रहणात् अकृतोऽपि सकारः किलात् परः षः स्यात्, यथा शिष्टः उषितः जक्षतुरित्यादि। साढस्तु सहधातोः (१०२८) क्तिण्प्रत्ययेन निष्पन्नस्य ढकारान्तस्य ग्रहणात् किलापेक्षा नास्ति, तेन तुराषाट् इत्यादौ षत्वं, न तु तुरासाह-मित्यादिषु। अत्र, सूत्रे अदान्ते इत्युक्त्वा वृत्तौ दमध्यग इति व्याख्यानं, समासे दान्त-स्थितस्यापि क्वचित् दमध्यगत्वेन षत्वं स्यादिति सूचनार्थं, तेन गोष्पतिः निष्कुष इत्यादि सिद्धम्। इण उदाहरणानि यथा, अग्निषु वायुषु पितृषु रामेषु गोषु नौषु अन्ययषु वृत्तवषु वार्षु हल्षु। कोः—वाक्षु प्राङ्क्षु। पाणिनिः ८।३।५५-६०।

† एत्व षत्वे इति (१०९,१११) सूत्रद्वय-प्रयोगप्रदर्शनार्थम्। राम-सुप् [(७८)प इत्] (१०९, १११)=रामेषु।

‡ विशेषविधानबहिर्भूताः यावन्तोऽकारान्तपुंलिङ्गशब्दाः एवं ज्ञेयाः।

एतद्ग्रन्थोक्तनियमातिरिक्त-षत्वविधानानि।—

अग्नेः स्तुतः, अङ्गुलेः सङ्गस्य, भीरोः स्थानस्य सस्य षः समासे। यथा, अग्निष्टुत्, अङ्गुलिषङ्गः, भीरुष्ठानम्। पाणिनिः ८।३।८०-८२।

दीर्घान्तादग्नेः सोमस्य सस्य षः समासे। यथा, अग्नीषोमौ। पाणिनिः ८।३।८२।

ज्योतिरायुरग्निभ्यः स्तोमस्य समासे। यथा, ज्योतिष्टोमः, आयुष्टोमः, अग्निष्टोमः। पाणिनिः ८।३।८२-८३।

गवियुधिभ्यां स्थिरस्य समासे। यथा, गविष्ठिरः, युधिष्ठिरः। पाणिनिः ८।३।९५।

मातुः पितुश्च स्वसुः सः षः समासे, अलुक्समासे तु वा। यथा, मातृष्वसा, पितृष्वसा। अलुक्समासे तु—मातुःष्वसा मातुःस्वसा, पितुःष्वसा पितुःस्वसा। पाणिनिः ८।३।८४-८५।

नि-नदीभ्यां स्नातेः कौशले। यथा, निष्णः, निष्णातः, नदीष्णः। पाणिनिः ८।३।८९।

## ११२। स्वे जस् ङे ङसि ङीना-मि स्मै स्मात् स्मिनोऽतः।

(स्वे: ५।, जस् ङे ङसि ङीनां ६।।।, इ स्मै स्मात् स्मिन: १।।।, अत: ५।)।

---

प्रादग्ने स्थस्य। यथा, प्रष्ठ:। पाणिनि: ८।३।९२।

वे: स्कणातेर्दीप्तासनयो:। यथा, विष्टर:। पाणिनि: ८।३।९३।

विकुपरिशमिभ्य: स्थलस्य। यथा, विष्ठलं, कुष्ठलं, परिष्ठलं, शमिष्ठलम्। कपिष्ठल: (तन्नामा ऋषि:) निपात्यते। पाणिनि: ८।३।९१।९६।

अम्ब गो भूमि द्वि त्रि कङ्कु मञ्जि पुञ्जि दिव्यग्नि वर्हिर्भ्य: स्थस्य। यथा, अम्बष्ठ:, गोष्ठ:, भूमिष्ठ:, द्विष्ठ:, त्रिष्ठ:, कुष्ठ:, कङ्कुष्ठ:, मञ्जिष्ठ:, पुञ्जिष्ठ, दिविष्ठ:, अग्निष्ठ:, वर्हिष्ठ:। एभ्य: किं, भूस्थ:। स्थस्य किं, गोस्थितिः। परमेष्ठी सव्येष्ठा—निपात्यौ, पाणिनि: ८।३।९७।

इलात् स: ष: संज्ञायामेकारे भात् वा। यथा, सुषेण:, हरिषेण:, वायुषेण:। नक्षत्रात् भरणिषेण, भरणिसेन:। इलात् किं, विश्वक्सेन:। एकारे किं, त्रिस्रोता:। संज्ञायां किं, पृथुसेन:। पाणिनि: ८।३।९९,१००।

सुविनिर्दुर्भ्य: समसूत्यो:। यथा, सुषमं, विषमं, नि:षमं, दु:षमं, सुषूति:, विषूति:, नि:षूति:, दु:षूति:। पाणिनि: ८।३।८८।

निर्दुर्वहिराविःप्रादुश्चतुरां स: (नतु प्रत्ययस्य) ष: कखपफेषु। यथा, निष्पन्न:, दुष्कार:, वहिष्कार:, आविष्कार:, प्रादुष्कृतं, चतुष्पथमित्यादि। पाणिनि: ८।३।४१।

निसस्तपतावनभ्यावृत्तौ। यथा, निष्टपति स्वर्णं पाचक:। आवृत्तौ तु निस्तपति स्वर्णं स्वर्णकार:, पुन: पुनरग्निं स्पर्शयतीत्यर्थ:। पाणिनि: ८।३।१०२।

नि:सुदुर्भ्य: साम-सेध सन्धिनां ष:। यथा, नि:षामा, सुषामा, दु:षामा, नि:षेध:, नि:षन्धि:, सुष्ठु, दुष्ठु इत्यादि। पाणिनि: ८।३।८८।

स्थेरवादाश्रयनिकटयो:। यथा, यष्टिमवष्टभ्य आस्ते, तामाश्रित्य तिष्ठतीत्यर्थ:; अवष्टब्धा गौ: निकटे निबद्धा आस्ते इत्यर्थ:। अन्यत्र शीतेनावस्तब्ध:। पाणिनि: ८।३।६८।

परिस्थितादेर्न स: ष:। यथा, परिस्थित:, सुस्थित:, दु:स्थित:, क्रसर:, धूसर: इत्यादि। "दु:स्थादेश्च" इति क्रमदीश्वर:।

स्वभावतो मूर्द्धन्यषकारवन्त: शब्दा:—

मञ्जूषेर्षा प्रदोषो वृष वृषभ वृषाषाढ़ राष्ट्रोष्ट्र कष्टं,
शीर्षोष्म श्लेष्म भीष्मा विषय विष विषाणानि कुष्माण्ड पण्डौ।
कल्माषं माष मेषामिष मिष महिषा वेष पाषाणि योषित्-
पौषाभिषाम्बुषारोष्ट्र कलुष पुरीषाम्बरीषा: करीषम्॥

अकारान्तात् स्नेः परेषामेषां स्थाने एते क्रमात् स्युः । *
सर्व्वे सर्व्वस्मै सर्व्वस्मात् सर्व्वस्मिन् । †

११३ । आत् सुमामः । (आत् ५।, सुम् ।१।, आमः ६।)

अवर्णान्तात् स्नेः परस्य आम आदौ सुम् स्यात् । एत्वषत्वे । ‡
सर्व्वेषाम् । शेषं रामवत् । § एवं विश्वादयोऽकारान्ताः ।
उभशब्दो द्वान्तः । उभौ उभौ उभाभ्याम् उभाभ्याम् उभाभ्याम्
उभयोः उभयोः । ¶

---

पीयूषं त्रिपुषा हृषीक चषकावीषत् पृषत् किल्बिषं,
प्रत्यूषपु कषा कषाय कलुषं यूषं भिषक् सर्षपौ ।
पुष्पं पुष्कर वाष्प शष्प शुषिरं दुष्खं तुरुष्कौषधि
मुष्कं गोष्पद पौरुषे परुषमित्येते तथा चापरे ॥

* अकारान्त सर्व्वनाम-शब्दात् परेषां जस् ङे ङसि ङीनां स्थाने क्रमात्——
ई स्मै स्मात् स्मिन् एते स्युः ।
अत्र, अमङितामु इ स्मे स्मात् स्म स्मिन् इति कृते, अतिसर्व्वाय इत्यत्र सर्व्वनामत्वाभावात्
यथा स्मै न स्यात् तथा अतिसर्व्वस्य इत्यत्रापि ङसः स्थाने स्यादेशस्याप्रसङ्गः स्यात्,
टाभिस् (१०६) इत्यनेनापि न भवितुमर्हति, अनेनैव विशेषेण निषेधात् । पाणिनिः
७।१।१४,१५,१७ ।

† सर्व्व-जस् (११२, २३) = सर्व्वे । सर्व्व-ङे = सर्व्वस्मै । सर्व्व-ङसि = सर्व्वस्मात् ।
सर्व्व ङि = सर्व्वस्मिन् ।

‡ स्नेरित्यनुवर्त्तते, आत् अवर्णात् तेन सर्व्वासामित्यादि । सुम उमावितौ,
उकारश्चिह्नार्थः, मिच्छ्वादादौ । आमः स्थाने सुम्विधानं विभक्तिसम्बन्धित्वार्थम्, अत-
आह एत्वषत्वे इति, एत्वञ्च षत्वञ्च ते । सुमः स्यादीयसकारत्वात् (१०९) ब्बेसभ्येः
इत्यनेन एकारः, पश्चात् षत्वं भविष्यतीत्यर्थः । स्यादिस्थाने सर्व्वावयवादेशे तु तस्मिन्
परे न एकारः, यथा परस्मादित्यादि । पाणिनिः ७।१।५२ ।

§ सर्व्व आम (११३, १७, १०९, १११) = सर्व्वेषाम् । शेषम् उक्तादन्यत् रामवत्
ज्ञाप्यमित्यर्थः, पुंनपुंसकयोः शेषमित्यमरः ।

¶ उभशब्दो द्वान्त इति मुख्याभिप्रायेणोक्तं, तेन अधिगतौ उभौ येन स अधुभः

जसि—नेमे नेमाः। * शेषं सर्व्ववत्।

## ११४। पूर्व्वादेः स्मात्-स्मिनौ वा।

(पूर्व्वादेः ५।, स्मात्-स्मिनौ १॥, वा ।१।)।

तौ। पूर्व्वस्मात् पूर्व्वात्, पूर्व्वस्मिन् पूर्व्वे। † शेषं नेमवत्। एवं परादयः।

समोऽतुल्ये इत्याद्युक्तिः—

नमः समस्मात् पूर्व्वस्मै अन्तरस्मै अमेधसाम्।
सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे॥ ‡

---

इत्यादि। उभशब्दादवयवार्थेऽयट्प्रत्ययेन साधितात् उभयशब्दात् द्विवचनं न प्रयुज्यते इति सम्प्रदायः। एकत्वसङ्ख्यावाचकादेकशब्दात् एकवचनमेव।

* नेम-जस् (८९, ११२, २३)=नेमे, वा (२२, १०२) नेमाः।

† तौ इति वृत्तिः। पूर्व्वविहितौ (११२) स्मात् स्मिनौ पूर्व्वादेर्वा स्याताम्। अतएव ङसि ङ्योः स्थाने, अतश्चेति वक्तव्यं, पूर्व्वाद्यल्पेति (८९) सूत्रेण जसि परे वा सिसंज्ञामकृत्वा, अत्र, पूर्व्वादेरि स्मात्-स्मिनौ वा इति यन्न कृतं तत्, पूर्व्वाशब्दात् जसः स्थाने (५११) तसि कृते, पुंवत् सेरिति (३२०) पुंवद्भावे, पूर्व्वतः, (वा सिसंज्ञायां ८९) पूर्व्वातः इति पदद्वयासिद्ध्यर्थम्। पूर्व्व-ङसि=पूर्व्वस्मात्, वा (१०६, २२) पूर्व्वात्। पूर्व्व-ङि=पूर्व्वस्मिन्, वा (२३) पूर्व्वे। पाणिनिः ७।१।१६।

‡ समोऽतुल्ये (८६) इत्यादेरुदाहरणान्याह नमः इति—स्वयम्भुवे ब्रह्मणे नमः, कीदृशाय, समस्मात् सकलात् पूर्व्वस्मै पूर्व्वकालीनाय पूर्व्वकालवर्त्तिने इत्यर्थः, अत्र समशब्दस्य अतुल्यार्थत्वेन पूर्व्वशब्दस्य च कालार्थतया व्यवस्थावाचित्वेन सिसंज्ञा। पुनः कीदृशाय, अमेधसां निर्बुद्धीनाम् अन्तरस्मै बहिःस्थिताय, सुमेधसां सुबुद्धीनाम् अन्तरस्मै सदा संसर्गात् परिधानवस्त्रस्वरूपाय, सतां साधूनां स्वस्मै आत्मीयाय; अत्र अन्तरशब्दस्य बहिर्योगवाचित्वेन उपसंव्यानवाचित्वेन च सिसंज्ञा, स्वशब्दस्य च ज्ञातिधनभिन्नार्थत्वेन सिसंज्ञा।

समायैषु परायैषां मुक्तयेऽर्थान्तराय च।
यदुस्वाय नमः स्वाय मल्लैर्जुष्टाय शार्ङ्गिणे॥ *
अतिसर्व्वाय सर्व्वाय साध्वन्यानां सखिद्विषे॥
कालावराय कालेन पूर्व्वाय जगतो नमः॥ †

जसि—साध्वन्ये साध्वन्याः। जसि—अल्पे अल्पाः। शेषं रामवत्। एवं प्रथमादयः। द्वितीयस्मै द्वितीयाय, द्वितीयस्मात् द्वितीयात्, द्वितीयस्मिन् द्वितीये। एवं तृतीयः। निर्जरः। ‡

---

* प्रत्युदाहरणान्याह समायेति—शार्ङ्गिणे विष्णवे नमः। कीदृशाय एषु जगत्सु समाय तुल्याय जगन्मयत्वादित्यर्थः, अत्र समशब्दस्य तुल्यार्थत्वेन न स्मिसंज्ञा। पुनः कीदृशाय एषां जगतां मध्ये पराय श्रेष्ठाय नित्यत्वादित्यर्थः, अत्र परशब्दस्य व्यवस्थावाचित्वाभावात् न स्मिसंज्ञा। किमर्थं नम इत्याह मुक्तये मोक्षाय, अर्थान्तराय प्रयोजनान्तराय धर्म्मार्थकामार्थमित्यर्थं, अत्र अन्तरशब्दस्य बहिर्योगादिभिन्नार्थत्वेन न स्मिसंज्ञा। पुनः कीदृशाय यदुस्वाय यदूनां ज्ञातये, स्वाय धनाय यदूनामिति समस्तपदेन सम्बन्धः, समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरितिन्यायात्, अत्र स्वशब्दस्य ज्ञातिधनवाचित्वात् न स्मिसंज्ञा। पुनः कीदृशाय मल्लै वीरैः जुष्टाय सेविताय इति पद्यपूरणार्थम्।

† न गौणाख्येत्यस्य (८७) उदाहरणान्याह अतिसर्व्वायेति, सर्व्वाय शिवाय नमः, अत्र सर्व्वशब्दस्य "सर्व्वः शिवः स्थाणुरिति" सहस्रनाममध्ये पाठेन संज्ञावाचित्वात् न स्मिसंज्ञा। कीदृशाय अतिसर्व्वाय सर्व्वमतिक्रान्ताय, अत्र गौणत्वात् न स्मिसंज्ञा। पुनः कीदृशाय साध्वन्यानां सखिद्विषे, साधवश्च अन्ये च साध्वन्यास्तेषां, सखा च द्विट् च तस्मै, क्रमात् साधूनां सख्ये, असाधूनां द्विषे शत्रवे इत्यर्थः, अत्र साध्वन्यानामिति द्वन्द्वसमासस्थितत्वात् न स्मिसंज्ञा, समासान्तविधेरनित्यत्वात् सखिद्विषे इत्यत्र (३२३) चैक्यादित्यनेन न अप्रत्ययः। पुनः कीदृशाय जगतः कालावराय कालेन कनिष्ठाय अत्र कालावरायेति तृतीयातत्पुरुषसमासस्थितत्वात् न स्मिसंज्ञा। पुनः कीदृशाय जगतः कालेन पूर्व्वाय, अत्र तृतीयातत्पुरुषसमासयोग्यवाक्यस्थितत्वात् न स्मिसंज्ञा।

‡ साध्वन्यशब्दस्य जसि तु (८८) थे जसि वेत्यनेन विकल्पेन स्मिसंज्ञायां साध्वन्ये साध्वन्याः इति पदद्वयम्। अल्पे अल्पाः इति (८९) पूर्व्वाद्यल्पेत्यनेन जसि परे वा स्मिसंज्ञा। एवं प्रथमे प्रथमाः, चरमे चरमाः, द्वितये द्वितयाः, त्रितये त्रितयाः, द्वये द्वयाः, त्रये त्रयाः, अर्द्धे अर्द्धाः, कतिपये कतिपयाः, नेमे नेमाः। माघकाव्ये तु द्वयेषामिति

## ११५। जरस् जराचि तु।

(जरस् ।१।, जरा ।१।, अचि ७।, तु ।१।)।

जराशब्दो जरस् वा स्यादचि परे।

निर्जरसौ निर्जरसः, निर्जरसं निर्जरसौ निर्जरसः, निर्जरसा।
केचिदादाविनाताविच्छन्ति. निर्जरसिन, निर्जरसैः, निर्जरसे,
निर्जरसः, निर्जरसादित्यादि। पक्षे ह्रसे च रामवत्। *

## ११६। पाद दन्त यूष निशा पृतना मासासन सानु नासिकोदक हृदयासृक् यकृत् शकृत् शीर्ष दोषः—पद्दद् यूषन्निश् पृन्मासासन् सु नसुदन् हृदसन् यकन् शकन् शीर्षन् दोषणः शसादि-पौ।

(पाद—दोषः १॥, पद—दोषणः १॥, शसादि पौ ७।)।

---

प्रयोगो दृश्यते, तत महाकविलिखितत्वात् साध्वम्, हृयमिच्छन्तीति क्विपि हृयेष्शब्देन वा। लोमशास्तु उभयशब्दमपि अयान्तं मत्वा उभये उभयाः इति वदन्ति। द्वितीय-ङे=(९०, ११२) द्वितीयस्मै, वा स्मिन्सञ्ज्ञायां (१०६, २२) द्वितीयाय इत्यादि तृतीयशब्दोऽप्येवम्। निर्जर-सि (१०२)=निर्जरः। निर्गतास्ति जरा यस्येति बहुव्रीहिसमासः।

* पुंलिङ्गे सूत्रकरणात् विकृतस्यापि जराशब्दस्य ग्रहणं, एकदेशविकृतमनन्यवत् भवतीति न्यायात् तेन जरा जर इत्युभयस्यापि जरस् वा स्यादचि परे। प्रकरणबलात् अचीति स्यादेरेव, तेन निर्जरस्यार्चा निर्जरार्चा इत्यादौ न प्रसङ्गः। अत्र तु-शब्दो व्यवस्थापकः, व्यवस्था च केचिदादाविनाताविच्छन्तीति। वहिरङ्गविधिभ्यः स्यादन्तरङ्ग-विधिर्बलीति न्यायादादौ जरसादेशे अम आदिलोपः शसो नकारश्च न स्यात्, एवं टा ङे ङसीनाम् इनायातोऽपि न स्युः। किञ्च सर्व्वावयवादेशेन ह्रस्वपरत्वाभावात् आमो नुमागमोऽपि न स्यात् तेन निर्जरसामिति, एवं पदां दतामित्यादयोऽपि। केचित् पण्डिताः सावकाशविधिभ्यः स्याद्बली निरवकाशक इति न्यायेन, जरसादेशकरणात् आदौ टा-ङस्योः स्थाने इनातौ इच्छन्ति, तन्मते (टा, १०६) निर्जरसिन, (ङसि, १०६) निर्जरसादिति। पक्षे जरसादेशाभावपक्षे, ह्रसे परे भ्याम् भिस् भ्यस् सुप् एषु परेषु चेत्यर्थः। पाणिनिः ७।२।१०१।

एषां स्थाने एते क्रमात् स्नु वा शसादौ पौ च परे । *
पदः पदा पद्भ्यामित्यादि । दतः दता दद्भ्यामित्यादि ।

## ११७ । सदानोऽल्लोपोऽम्वस्थात् पौ वा त्वीङ्योः ।

(सदा ।१।, अन ६।, अत्-लोपः १।, अ-म्व-स्थात् ५।, पौ ७।, वा ।१।, तु ।१।, ईङ्यो. ७।) ।

अनोऽकारस्य नित्यं लोपः स्यात् पौ परे, ईङ्योस्तु वा, न तु मस्थात् वस्थाच्च परस्य । †

---

* एतेषां स्थाने एते आदेशाः क्रमात् भवन्ति, यथा—

| पाद | दन्त | यूष | निशा | पृतना | मास | आसन | सानु |
|---|---|---|---|---|---|---|---|
| पद् | दत् | यूषन् | निश् | पृत् | मास् | आसन् | स्नु |
| नासिका | उदक | हृदय | असृज् | यकृत् | शकृत् | शीर्ष | दोष |
| नस् | उदन् | हृद् | असन् | यकन् | शकन् | शीर्षन् | दोषन् |

अत्र शसादिग्रहणेन पूर्व्वविभक्तिनिरासात् क्लीवे औकारस्य पित्वेऽपि तत्र न स्यात् । अत्र आसनशब्दस्थाने आसन् इति पदं साधयता वोपदेवेन काशिकामतमेव प्रामाणिकत्वेन गृहीतम् ; सिद्धान्तकौमुदीकारेण तु आस्यशब्दस्थाने आसन् इति वदता तन्मतं प्रामादिकमिति सिद्धान्तितम् । वाशब्दस्य व्यवस्थया क्वचिद्वा स्यात् (१), क्वचिन्नित्यं (२), क्वचिन्न स्यात् (३), प्रयोगत इति । यथा, (१) शसादौ विकल्पः स्वयमुदाहृतः, एवं सुदतौ सुदन्तौ इत्यादौ च । (२) केशार्थे शीर्षण्यः, पूरयितव्यार्थे उदकुम्भ इत्यादि । (३) पादप्रक्षालनजलार्थे पाद्यमित्यादि । पाणिनिः ६।१।६३ ।

† सदेति पूर्व्व-वाधिकारनिवृत्त्यर्थम् । अथवा सदेति सप्तम्यन्तं मुख्यत्वे गौणत्वे चेत्यर्थः, तेन पूजितपूष्णः पीतयूष्णः इत्यादि सिद्धम् । म्व वस्थेति म्वः (मवान्तः) म्वस्थासौ स्थश्चेति म्वस्थः, न म्वस्थः अम्वस्थस्तस्मात्, मवसंयोगात् यथा—कर्म्मणः यज्वनः इत्यादि । ईङ्योरिति ङि-साहचर्य्यात् ई इति विभक्तिसम्बन्धीयमेव ग्राह्यम्, तेन अह्नी अहनी इत्यादि ; ईपि तु नित्यं राज्ञी विदाम्नीत्यादि । वार्त्तघ्न. पौष्णः धार्त्तराज्ञः एषाम् अनेनैव सिद्धौ (४३५) इन् अण् इति सूत्रमेवं ज्ञापयति—तद्धितस्य अचि ये च न सर्व्वत्र अनोऽल्लोपः, तेन राजन्यः मूर्द्धन्य इत्यादि सिद्धम् । पाणिनिः ६।४।१३४,१३६,१३७ ।

यूष्णः यूष्णा । *

## ११८ । नो लुप् फेऽधौ ।

(नः ६।, लुप् ।१।, फे ७।, अधौ ७।) ।

नस्य लुप् स्यात् अधौ फे परे । † यूषभ्यामित्यादि ।
ङौ—यूष्णि यूषणि यूषे । मासः मासा माभ्यामित्यादि । ‡
पद्मे धौ च रामवत् । पदादयः पृथक्शब्दा इत्येके । §

## ११९ । सङ्ख्या-वि-सायाद्वाह्नोऽह्नन् ङौ ।

(सङ्ख्या-वि-सायात् ५।, वा ।१।, अह्नः १।, अह्नन् ।१।, ङौ ७।) ।

सङ्ख्या-वि-सायेभ्यः परस्याह्न इत्यस्य अह्नन् वा स्यात् ङौ । ¶

---

* यूष शस् (११६)=यूषन्-शस् (११७, १०७)=यूष्णः । एवं यूष टा=यूष्णा ।

† लिङ्गान्तस्थस्य अकृत-नकारस्य लुप् स्यात् स्यादीय-हसे विरामे च न तु धौ । धिवर्जनादेव लिङ्गान्तनकारस्य प्राप्तिः, तेन (हनधातो र्घ्यां दिपि) अहन् इत्यादौ न प्रसङ्गः । प्रशान् भवान् इत्यादौ कृतत्वात् न नस्य लोपः । पाणिनिः ८।२।७,८ ।

‡ यूष-ङि (११६, ११७, १०७)=यूष्णि, वा यूषणि, वा यूषे । मास-शस्=मासः । मास-टा=मासा । मास-भ्याम् (११६, १०२, ७०)=माभ्यां ।

§ एके—केचित् पण्डिताः पद्प्रभृतयः पृथक् शब्दाः सन्तीति वदन्ति । एतत् वोपदेवस्यापि मतम्, अतएव कारके (२८१) आवसतात् स इम इति द्वितीयैकवचने स्वयमुदाहृतम् ।

¶ सङ्ख्यावाचकशब्द विशब्द सायशब्देभ्यः परस्य अह्न इत्यकारान्तशब्दस्य अह्नन् वा स्यात् ङौ परे । द्वयोरह्नोर्भवः द्व्यह्नः, विगतम् अहः व्यह्नः, अह्नः सायः सायाह्नः । सङ्ख्यादेराश्च इति (२५३) षप्रत्यये, सर्व्वैकदेश इति (२५४) अह्नादेशे एषामदन्तत्वम् । पाणिनिः ६।३।११० ।

द्व्यह्नि द्व्यहनि द्व्यह्ने, व्यह्नि व्यहनि व्यह्ने, सायाह्नि सायाहनि सायाह्ने। *

विश्वपाः विश्वपौ विश्वपाः, विश्वपां विश्वपौ। †

## १२०। धोरालोपोऽच्यघौ।

(धोः ६।, आ-लोपः १।, अचि ७।, अघौ ७।)।

धोराकारस्य लोपः स्यात् अघावचि परे।

विश्वपः, विश्वपा विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। ‡

धोः किं—हाहाः हाहा हाहाभ्यामित्यादि। §

शेषं विश्वपावत्।

हरिः।

## १२१। युङ्गा-मौ यू। (युङ्गाम् ५॥, औ।१।, यू २॥)।

---

* द्व्यह्न ङि=द्व्यहन्-इ (११७)=द्व्यह्नि, वा द्व्यहनि, वा द्व्यह्ने इत्यादि।(इत्यदन्ताः )

† विश्वं पाति रक्षति यः स विश्वपाः विष्णुः। विश्वपा-सि (१०२)=विश्वपाः। विश्वपा-औ (२३)=विश्वपौ। विश्वपा-अम् (२२)=विश्वपाम्।

‡ धात्ववयवीभूताकारस्य लोपः स्यात् घिभिन्न-स्वादीयाचि परे। तद्धिताच-यकारयोः परयोः ययोर्लोप (२५८) इत्यनेन आकारलोपस्यावश्यकत्वे धोरालोपः पौ इति यन्न कृतं तत् गोमायुः स्नायुः पायुरित्यादौ (४४७) आकारस्थित्यर्थम्। विश्वपा शस् =विश्वपः इत्यादि। शङ्खं धमतीति शङ्खध्माः। एवं पुण्यं तायते इति पुण्यताः, आज्यपाः शुभंया इत्यादि। पाणिनिः ६।४।१४०।

§ हा इति कुत्सितं शब्दं जहातीति औणादिक-डाप्रत्ययेन, उश्चेचीति (६१०) आकारलोपे हाहा इति आकारस्य धात्ववयवत्वाभावात् न आकारलोपः। क्विप्प्रत्यये तु धात्ववयवत्वेन आकारलोप एव—हाहः। हाहा गन्धर्व्वः। "आतोऽनाप इति वक्तव्यम्" इति वार्त्तिकम्—आबन्तभिन्नानामाकारलोप इत्यर्थः। अत्र "धातोः किं हाहान्" इति सिद्धान्तकौमुदी। "हाहास्तु वा, हाहाः हाहः हाहान् वा" इति सौपद्मे। "हाहः" इति क्रमदीश्वरः। "अव्युत्पन्नोऽपि गन्धर्व्ववाचको हाहाशब्दोऽस्ति तस्य हाहान् हाहे इत्यादि भवति" इति गोयीचन्द्रः। (इत्यादन्ताः)।

इकारोकाराभ्यां पर औ क्रमादिकारोकारौ प्राप्नोति। हरी।*

### १२२। णुर्धिजस्ङित्सु। (णुः १।, धि-जस्-ङित्सु ७।।।)।

इदुतोर्णुः स्यात् धौ जसि ङिति च परे। हरयः।†
त्यलोपे त्यलक्षणं—हे हरे। हरिं हरी हरीन्।‡

### १२३। टादसश्चास्त्रियान्तु ना।

(टा।१। अदसः ५।, च।१।, अस्त्रियां ७।, तु।१।, ना।१।)।

इदुद्भ्यामदसश्च परष्टा ना स्यात्, न तु स्त्रियाम्।§

---

* इश्च उश्च यू, पश्चात् तकारानुबन्धेन युतौ ताभ्यां। क्रमश्च इकारात् औ इ, उकारात् औ उ। हरि-औ=(१२१,२२) हरी। पाणिनि: ६।१।१०२।

† अत्र, इदुद्भ्यां विहिते एव धौ परे बोध्यं, तेन हे नदि हे सुभ्रु इत्यादौ सुभ्रूदीति (१५२) ह्रस्वे पश्चात् न गुणः। ङिति च साक्षात् परे बोध्यं, अन्यथा मत्यै इत्यत्र वा ङितामिति (१५६) अमि कृतेऽपि अनेन गुणापत्तिः स्यात्। हरि-जस्=(१२२, ३५) हरयः। पाणिनि: ७।३।१०८, १०९, १११।

‡ प्रत्ययस्य लोपे सति प्रत्ययस्य लक्षणं चिह्नं स्वीक्रियते इत्यर्थः, येन केनापि शब्देन प्रत्ययलोपे तत्प्रत्ययसम्बन्धि कार्य्यं स्यादिति यावत्। (पाणिनि: १।१।६२)। यथा, राजा इत्यादौ (१४८) सेर्लोपे (१६४) दीर्घः। वाचामीशः वागीशः इत्यादौ (३१९) विभक्तिलुकि विभक्त्यन्तविहिता पदसंज्ञा सिद्धा। हे हरे इत्यत्र आदौ गुणे कृते, स्थानिवत्त्वेनैव धिलोपे सिद्धे, त्यलोपे त्यलक्षणमिति न्यायस्वीकारः स्थानिवदादेश इति न्यायस्य व्यभिचारसूचनार्थः। हे—हरि सि (८०, १०३, १२२)=हरे। हरि-अम (१०३)=हरिम्। हरि-शस् (१०४,१०५)=हरीन्।

§ मात् स्वघाविति (२३५) उत्वे उदन्तत्वादेव ना-आदेशे सिद्धे अदसो ग्रहणं वैभक्तिक-सकलकार्य्यानन्तरमेव उर्भवतीति ज्ञापनार्थं, तेन अमुष्मै इत्यादौ आदौ स्मै कृते (११२) पश्चादुत्वे (२३५) षत्वे च (१११) पदसिद्धिः। पाणिनि: ७।३।१२०।

हरिणा हरिभ्यां हरिभिः, हरये हरिभ्यां हरिभ्यः। *

## १२४। ङसेङो लोपः।

(ङस ६।, एङः ५।, लोपः १।)।

एङः परस्य ङसिङसो ङस्य लोपः स्यात्। †

हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्। ‡

## १२५। युङ्गां ङे-ङौः। (युङ्गां ५॥, ङेः ६।, ङौः १।)।

इदुङ्गां परस्य ङेर्डौः स्यात्, ड इत्। §

## १२६। टे-र्लोपो डिति, विंशते-स्तेस्त्वङौ।

(टेः ६।, लोपः १।, डिति ७।, विंशतेः ६।, तेः ६।, तु ।१।, अङौ ७।)।

डिति परे पूर्व्वस्य टेर्लोपः स्यात्, विंशते-स्तेस्त्वङौ। ¶

---

* हरि-टा (११३, १०७)=हरिणा। हरि ङे (१२२, ३५)=हरये।

† ङः परः अः ङः तस्य ङस्य, स च ङसिङसोरेव सम्भवति, अत आह ङसिङसो-ङस्येति। एङ इति प्रकृतेर्विकृतेरपि, तेन गोः द्योरित्यादि। पाणिनिः ६।१।११०।

‡ हरि-ङसि (१२२, १२४, १०२)=हरेः। एवं ङस्=हरेः। हरि ओस् (३५)=हर्य्योः। हरि-आम् (११०, १०४, १०७)=हरीणाम्।

§ यद्यपि, युङ्गां ङेरौ इति इदुङ्गां सह ङेरौ विधाने कृते परसूत्रे अङाविति वक्तव्यं न स्यात्, तथापि डौ-करणं परसूत्रे स्याद्यध्यायप्रकरणीय-डिति परे एव विंशते-स्ते-र्लोपार्थं, तेन विंशतिमाचष्टे विंशतयति इत्यत्र (८५५) णिप्रत्ययस्य (४६७) डित्त्वेऽपि टेरेव लोपः न तु तेः। पाणिनिः ७।३।११८-११९। एतन्मते ओत्।

¶ डिति परे तत्पूर्व्वशब्दस्य टेर्लोपः स्यात्, विंशतिशब्दस्य तु ति-भागस्य लोपः स्यात्, अङौ ङिसम्बन्धिभिन्ने डिति परे, ङिसम्बन्धि डिति परे तु विंशतिशब्दस्य टे-र्लोप एवेत्यर्थः। यथा, विंशतेः पूरणः इत्यर्थे विंशतिशब्दात् (४५०) डटि कृते ति-भागलोपे विंशः, ङौ तु विंशतौ। पाणिनिः ६।४।१४२ १४३।

हरौ हर्य्यौः हरिषु। * एवं श्रीपत्यग्निरव्यादयः। †

## १२७। सख्यृद्भ्यां सेर्डाधेः।

(सख्यृद्भ्यां ५॥, सेः ६।, डा ।१।, अधेः ६।)।

सखि-शब्दात् ऋकारान्ताच्च परस्य से र्डा स्यान्न तु धेः।
सखा। अधेः किं, हे सखे। ‡

## १२८। घौ त्रिः। (घौ ७।, त्रिः १।)।

सख्यु ऋकारस्य च त्रिः स्यात् अधौ घौ परे। §
सखायौ सखायः, सखायं सखायौ सखीन्। ¶

## १२९। सख्युष्टाङिता-माएउसुसौ।

(सख्युः ५।, टा-ङिताम् ६॥, आ ए उस् उस् औ ।१॥)।

---

* हरि-ङि (१२५, १२६)=हरौ। हरि-सुप् (१११)=हरिषु।

† श्रीपतिश्च अग्निश्च रविश्च ते आदयो येषां ते। आदिपदात् शिशुप्रभिन्न-यावतीय-पुंलिङ्ग-ह्रस्वेकारान्तशब्दाः एवमित्यर्थः।

‡ सखा च ऋच्च ताभ्यां, सख्यृद्भ्याम्। सखि-सि=सखि-डा[ड-इत] (११६)=सखा। हे सखि-सि (धि)=(१०३, १२२) सखे। पाणिनौ सखिपतिशब्दसाधनप्रकारः सम्यक् विभिन्न एव। ७।१।९२,९३, ७।२।११५, ६।१।१११, ७।३।११८।

§ अर्थवशात् विभक्तेर्विपरिणाम इति न्यायात् सख्यृद्भ्यां पदं षष्ठ्यन्तं भूत्वा अधेरिति पदञ्च सप्तम्यन्तं भूत्वा इहानुवर्त्तते। सखिशब्दस्य ऋकारान्तशब्दस्य च अन्त्याचः त्रिः स्यात् अधौ घौ परे। पाणिनिः ७।२।११५।

¶ सखि-औ=सखै-औ (३५)=सखायौ। एवं जस् अम् औ परे। सखि-शस् (१०४, १०५)=सखीन्।

सख्युः परेषां टाङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युः।*

सख्या सख्ये सख्युः सख्युः सख्यौ। † शेषं हरिवत्।

## १३०। पत्युरसे। (पत्युः ५।, असे ७।)।

पतिशब्दात् परेषां टाङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युर्न तु से। पत्या पत्ये पत्युः पत्युः पत्यौ। असे किं, श्रीपतिना इत्यादि। शेषं हरिवत्। ‡

कतिशब्दो ब्वान्तः। §

---

* आ ए उसुसौ इत्यत्र सूत्रत्वात् न सन्धिः। टा ङे ङसि ङस् ङि स्थाने क्रमेण आ ए उस् उस् औ भवन्ति। टादिस्थाने आ आदि करणं ना-आदिनिषेधार्थम्। किन्तु. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति अथवा आतिदेशिकं कार्य्यमनित्यमिति न्यायात् सखिना वानरेन्द्रेण इत्यादि सिद्धम्। सख्याङ्गामिति घौ त्रिरिति सख्याष्टाङितामिति एतेषु सखिशब्दस्य मुख्यस्यैव ग्रहणम्। गौणस्यापि ग्रहणमिति भाष्यकारः, तन्मते जितसखा, जितसखायौ, जितसख्या इत्यादि, एवमतिशयितः सखा अतिसखा इत्यादि च। किञ्च, पुंलिङ्ग एव ग्रहणं, स्त्रियान्तु नित्यमीबन्तत्वात् (२७४) सखी गौरीवत्, क्लीबे चास्य न प्रयोगः। पाणिनिः १।४।७, ६।२।११२, ७।३।११८।

† सखि-टा = सखि-आ (३५) = सख्या। एवं ङे ङसि ङस् ङि योगे।

‡ अत्रापि पूर्व्वसूत्रवत् क्रमान्वयः, न्यायस्वीकारश्च, तेन पतिना नीयमानायाः इति, नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ इति, सीतायाः पतये नमः इत्यादि च सिद्धं, छान्दसमिति केचित्। पति-टा = पति आ (३५) = पत्या। एवं ङे ङसि ङस् ङि परे। श्रीपति टा (१२३) = श्रीपतिना, श्रियाः पतिः श्रीपतिरिति विग्रहः। शेषं पतिशब्दस्येत्यर्थः। पाणिनिः १।४।८।

§ कतिशब्दः कियत्परिमितवाचकः, अतएव अनिश्चितबहुत्वार्थत्वेन बहुवचनान्त एव भवति।

## १३१ । डतिसङ्ख्याष्णो जस्शसो लुक् ।

(डति सङ्ख्या ष्-ण: ५, जस्-शसो: ६॥, लुक् ।१।) ।

डत्यन्तात् षान्त नान्त सङ्ख्यायाश्च परयो र्जस्शसो र्लुक् स्यात्।* कति कति कतिभि: कतिभ्य: कतिभ्य: कतीनां कतिषु । एवं यति तति ।

डति-व्य-ष्णान्तसङ्ख्यास्मद्-युष्मद: सदृशास्त्रिषु ।†

चरादय: सङ्ख्याशब्दा: ब्वान्ता: । ‡

## १३२ । त्रेरयङ् नाभि । (त्रे: ६।, अयङ् ।१।, नाभि ७।) ।

त्रिशब्दस्य अयङ् स्यात् नामि परे, ङित्वादन्त्यस्य स्थाने । §

---

* ष च न च ष्ण, सङ्ख्या चासौ ष्णचेति ष्णसङ्ख्या, डतिश्च सङ्ख्याष्ण चेति तस्मात्। डति: प्रत्यय:, तेन डत्यन्ता: कति यति-तति इति त्रय: । एषां मुख्यानामेव ग्रहणं, तेन प्रियकतय: अतिषष: अतिपञ्चान: इत्यादौ न लुक् । लुक्करणात् कति इत्यादौ (१२२) सुधीर्भ्यादिना न गुण:, पञ्च इत्यादौ नान्तत्वात् (१६४) न दीर्घ:, (८३) लुकि न तच्चेति निषेधात् । पाणिनि: १।१।२४ २५, ७।१।२२ ।

† ष च न च ष्णौ, ष्णौ अन्तौ यस्या: सा ष्णान्ता, ष्णान्ता चासौ सङ्ख्या चेति ष्णान्त-सङ्ख्या, डतिश्च व्यश्च ष्णान्तसङ्ख्या च अस्मच्च युष्मच्च ते । डतिप्रत्ययान्त-अव्यय सङ्ख्या-वाचक षान्तनान्त अस्मद्-युष्मद्-शब्दा: त्रिषु लिङ्गेषु सदृशास्तुल्या एव भवन्ति इति नियमात् एषां लिङ्गविहितविशेषकार्य्यं न भवतीत्यर्थ: । एषां मुख्यानामेव ग्रहणं, युष्मद-स्मदोस्तु गौणत्वे मुख्यत्वे च । अस्मद्युष्मत्संख्यास्त्रिषु सरूपा: इति सिद्धान्तकौमुदी ।

‡ आदिशब्दस्य व्यवस्थावाचकत्वात् अष्टादशपर्य्यन्ता एव, ऊनविंशत्यादीनान्तु एक-वचनान्तत्वमेव, 'विंशत्याद्या: सदैकत्वे सर्व्वा: सङ्ख्येयसङ्ख्ययो'रित्यमरात् ।

§ त्रिशब्दस्य मुख्यस्यैव ग्रहणं, तेन प्रियत्रीणामित्यादौ न स्यात् । परमाश्च ते त्रयश्चेति तेषां परमत्रयाणामित्यादौ मुख्यत्वात् स्यादेव । नाम्ययङ् त्रेरिति तु श्रुति-दु:खावहत्वान्न कृतं; क्वचिन्न स्यादित्यर्थमिति केचित्, तेन त्रीणामिव समुद्राणामिति सिद्धम् । पाणिनि: ७।१।५३ ।

त्रयाणां त्रिषु । * द्विशब्दो दान्तः । †

## १३३ । त्यदां टेरः क्षौ । (त्यदां ६॥, टेः ६।, अः १।, क्षौ ७।) ।

त्यदादीनां टेरकारः स्यात् क्षौ परे । ‡

द्वौ द्वौ, द्वाभ्यां द्वाभ्यां द्वाभ्यां, द्वयोः द्वयोः । §

वातप्रमीः वातप्रम्यौ वातप्रम्यः । ¶

## १३४ । यूतोऽमशसो-र्नावदीधोः ।

(यूतः ५।, अम्-शसोः ६॥, नौ १॥, अदीधोः ५।) ।

दीधुवर्जादीदूदन्तात् परयोरम्शसोः स्थाने क्रमात् मनौ स्तः ।

---

* त्रि-आम् (११०, ११२, १०४, १०७) = त्रयाणाम् । त्रि-सुप् (१११) = त्रिषु ।

† द्विशब्दो सुखो एव द्विवचनान्तः, तेन प्रियद्विः पुरुष इति । येषां शब्दानामा-कृतेरन्यथात्वं न जायते ते एवादौ वक्तव्याः, अतएव इकारान्तशब्दानामुदाहरणे आदौ त्रिशब्दमुक्ता पश्चात् द्विशब्दः कथितः ।

‡ अनुकरणशब्दस्य सिसंज्ञाभावेन टेरत्वाभावे त्यदामिति पदं सिद्धम् । बहुवचनं गणार्थम् । सिसंज्ञानामेव त्यदादीनां टेरकारः स्यात्, तेन अतितद् अतितदौ अतितदः, अतितन्दि कुलानि, इत्यादौ गौणे न स्यात् ; युष्मदस्मदोस्तु गौणेऽपि, एवं द्वियुष्मदस्मदां न तसीति वक्तव्यम् ; तेन अतियुष्मान् अत्यस्मान् अतित्वान् अतिमान् इत्यादि ; तसि तु द्वितः युष्मत्तः अस्मत्तः त्वत्तः मत्तः अतियुष्मत्तः इत्यादि । लिङ्गात् विभक्तेरावश्यकत्वेऽपि क्षिग्रहणं साक्षात् क्षौ परे एव ज्ञेयं, तेन सः एषः इत्यादौ हसादुत्तरे आदौ न सेर्लोपः । त्यदां उङ् क्षौ इति यन्न कृतं तत् प्रक्रियालाघवार्थमेवेति । पाणिनिः ७।२।१०२ ।

§ द्वि-औ = द्व-औ (२३) = द्वौ । द्वि-भ्याम् (१०८) = द्वाभ्याम् । द्वि ओस् (१०६) = द्वयोः । इति इदन्ताः ।

¶ वातं प्रमिमीते प्रमाति वेति वातप्रमीः औणादिकः ई(कित्)प्रत्ययः । मृगविशेष इत्यर्थः । वातप्रमी-औ (३५) = वातप्रम्यौ । जस् (३५) = वातप्रम्यः । सम्बुद्धौ हे वात-प्रमीः । क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः—वातप्रम्यम्, वातप्रम्यः, वातप्रम्यि ।

वातप्रमीं वातप्रम्यौ वातप्रमीन्, वातप्रम्या वातप्रमीभ्या-मित्यादि। एवम् अतिलक्ष्म्यादयः।*

सुधीः।†

## १३५। धोरियुवचि। (धोः ६।, इय्-उव् ।१।, अचि ७।)।

धोरीदूतोः स्थाने क्रमादियुवौ स्तोऽचि परे।‡

सुधियौ सुधियः इत्यादि। एवं सुश्रीयवक्र्यादयः।§ प्रधीः।¶

## १३६। कव्याद्यनेकाचोऽस्यादहनपुनर्वर्षा-काराद्यन्यभूसुधियोर्यवौ।

(कव्याद्यनेकाचः ६।, अस्यात् ५।, अहन्—सुधियोः ६॥, यवौ १॥)।

कादेर्व्यादेरनेकाचश्च धोरीदूतोरस्यात् परयोः क्रमात् यवौ

---

* नदीसंज्ञक-धातु-भिन्नात् ईदूदन्तात् शब्दात् परस्य अम्स्थाने म शस्स्थाने न स्यात्। वातप्रमी-अम्=वातप्रमीम्। वातप्रमी-औ (३५)=वातप्रम्यौ इत्यादि। अतिलक्ष्म्यादयः इति आदिपदेन अतितन्त्री बहुप्रेयसी अतिवधू अतिचमू इह प्रभृतयः। पाणिनिः ६।१।१०७।१०२।

† सु शोभना धीर्यस्येति सुधीः। ध्यैधातोः क्विपप्रत्यये धीः (१०३७)।

‡ विभक्तिं विपरिणमय्य ईदूतोरनुवृत्तिः। धात्ववयवीभूतयोः ईदूतोः स्थाने क्रमात् इयुवौ स्तः अचि परे। प्रायेण विच्क्विप्प्रत्ययान्तशब्दानामेव ईदूतोर्धात्ववयवत्वं सम्भवति, तथाच—"विच्क्विबन्ता हि धातुत्वं न त्यजन्ति कदाचन। क्वचित् त्यजन्ति धातुत्वं सुधीनीति-प्रदर्शनादिति॥" अचीति स्यादेरेव, क्वचित् तद्धितस्यापि, तेन धाम स्वायम्भुवं ययुरिति सिद्धम्। विशेषविधित्वात् (२२) सह यौं घं इत्यस्यापि बाधकोऽयं तेन ङौ सुधियि इत्येव। पाणिनिः ६।४।७७।

§ सुधी-औ=सुधियौ इत्यादि। श्रयत्वेनां श्रीः (१०३५), सुष्ठु श्रीर्यस्य सः सुश्रीः यवेन क्रीणातीति यवक्रीः। आदिशब्दात् शुद्धधी नी सुभू कटप्रू स्वयम्भू प्रभृतयः।

¶ प्रकृष्टा धीर्यस्य सः प्रधीः।

स्तः अचि परे, न तु दृन्भू-पुनर्भू-वर्षाभू-काराभूभ्योऽन्यस्य भू-शब्दस्य सुधियश्च । *

प्रध्यौ प्रध्यः इत्यादि । एवं दीध्यादयः । †

कथ्याद्यनेकाचः किं, शुद्धधियौ । असात् किं, यवक्रियौ । नीः नियौ । ‡

---

* कश्च व्यश्च कव्ये, ते आदी यस्य स कव्यादिः, स च अनेकाश्च कव्याद्यनेकाच् तस्य । दृन् च पुनर् च वर्षाश्च कारा च ता आदयो येषां ते दृन्पुनर्वर्षाकारादयः, तेभ्योऽन्यः दृन्पुनर्वर्षाकाराद्यन्यः, स चासौ भूश्चेति दृन्पुनर्वर्षाकाराद्यन्यभूः, स च सुधीश्च तौ दृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ, न तौ अदृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ तयोः ।

यवौ इति द्विवचनान्तेन क्रमनिर्वाहार्थं पूर्वतः यूतोरिति द्विवचनान्तं भूत्वा अनुवर्त्तते । ततश्च—कारकादेरव्ययादेरनेकाचश्च धातोरीदूतौ यद्यसंयोगात् परौ भवतस्तदा तयोः क्रमात् यवौ स्तातामचि परे, दृन्भ्वादिभिन्नभूशब्दस्य सुधियश्च न स्तादित्यर्थः । इयुवोर्निषेधे (३५) यलाययवायेत्यनेन सिद्धावपि यवविधानं (२२) दीर्घबाधनार्थं, तेन ङौ प्रध्यि । अत्र दृन्पुनर्वर्षाकारादि-भूशब्दस्य व-विधाने तद्भिन्नभूवर्जनस्य कष्टगम्यतया स्पष्टार्थमेव तद्भिन्नभूवर्जनं कृतम । अचापि अचीति स्यादेरेव, तेन प्रधीश्वर इत्यादौ न प्रसङ्गः । दृन् इति हिंसार्थमव्ययं तस्मै भवतीति दृन्भूः पन्नगवज्रयोः, पुनर्भूः स्यात् द्विरूढायां, पुनर्नवायां वर्षाभूः स्त्रियां किञ्चलुके भवे, काराभूर्निगड़स्थाने इति कोषः ।

अत्र चायं विशेषः—स्याद्युत्पत्तेः पूर्व्वं कारकाव्ययाभ्यां कृतसमासस्यैव धातोरीदूतोर्यवौ स्तः न तु स्याद्यन्तस्य समासे, तेन भयम् भीरिति क्विपि, ईषत् भीर्येषां ते ईषद्भियः, दुःस्थिता धीर्येषामिति दुर्धियः इत्यादि । तथाच वृश्चिकभिया पलायमानस्य आशीविषमुखे विनिपात इति भाष्यम् । अत्र वृश्चिकस्य भीरिति (वृश्चिकसम्बन्धिनी भीः) कारकादित्वाभावादिति केचित् । परन्तु सुष्ठु धीः प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ स्त्रीलक्ष्मीवदिति (१५८) कथनात् स्वमते नेयं व्यवस्था । पाणिनिः ६।४।८२-८५ । गतिकारकपूर्व्वस्यैवेष्यते यणादेशः इति वार्त्तिकम् ।

† दीधीङ् चलु देवने दीधी इति धातोः क्विपि दीधीरिति अनेकाच्, आदिपदात् अग्रणी सुती लूनी सुखी प्रभृतयः ।

‡ शुद्धा धीर्यस्य सः शुद्धधीः । शुद्धधी-औ (१३५)—शुद्धधियौ । एवं यवक्रियौ, नियौ ।

## १३७। न्यापदीभ्यो ङेराम्।

(नी-आप्-दीभ्य: ५।॥, ङे: ६।, आम् ।१।)।

नीशब्दादापो याश्च परस्य ङे-राम् स्यात्। नियाम्। शेषं सुधीवत्। अग्रणी: अग्रण्यौ। ङौ—अग्रण्याम्। शेषं प्रधीवत्। *

## १३८। त-तज-खादीयों ङसोवो:।

(त-तज-खात् ५।, ईय. ५।, ङ: १।, वा ।१।, उ: १।)।

तात् तस्थानजाद्वर्णात् खाच्च परादीकारजात् यकारात् परो ङसिङसो ङ उ: स्याद्वा। सुत्यु: सुत्य:। लून्यु: लून्य:। सुख्यु: सुख्य:। †

शम्भु र्हरिवत् साध्य:। ‡

शम्भु: शम्भू शम्भव:, शम्भुं शम्भू शम्भून्, शम्भुना शम्भुभ्यां शम्भुभि:, शम्भवे शम्भुभ्यां शम्भुभ्य:, शम्भो: शम्भुभ्यां शम्भुभ्य:, शम्भो: शम्भ्वो:

---

* अत्र केवलनीशब्दस्य तदन्तशब्दस्य च ग्रहणं, तेन नियाम् अग्रण्यां ग्रामण्यामित्यादि। क्लीवे तु अन्तरङ्गत्वादादौ ह्रस्वे णुमि अतिनिनि कुले, पुंवद्भावपक्षे अतिनियामिति। नी ङि = नी-आम् (१३५) = नियाम। अग्रे नयतीति क्विपि अग्रणी: नायक:। अग्रणी-औ, कारकादित्वात् (१२६) = अग्रण्यौ इत्यादि। पाणिनि: ७।३।११६।

† तकारस्य स्थाने जात: तज:, तश्च तजश्च खश्च ततजखं तस्मात्, ईकारस्य स्थाने य: ईयस्तस्मात्। एतेन तकार तकारजातवर्ण-खकारेभ्य: परस्थितात् कत्याद्यनेकाच इत्यनेन जातयकारात् ङसिङसोरकार उ: स्याद्वा इत्यर्थ:। सुतमिच्छति सुतमिवाचरति वा इत्यादि वाक्ये सुतीयतीति सुतीयधातो: क्विपि (७७५,६४२) सुती शब्द:। एवं लूनमिच्छतीति लूनी:, सुखमिच्छतीति सुखीरित्यादि। सुती-ङसि (१२६,१३८) = सुत्यु:, वा सुत्य:। एवं लून्यु: लून्य:, सुख्यु: सुख्य इत्यादि। पाणिनि: ६।१।११२। इति ईदन्ता।

‡ हरिशब्दे इकारस्य कार्य्यम् अत्र तु उकारस्येति विशेष:,साधनसूत्राणि तुल्यानीति।

शम्भूनां, शम्भौ शम्भ्वोः शम्भुषु। हे शम्भो। एवं विष्णु-वायु-भान्वादयः।

## १३९। क्रोष्टोस्तुनस्तृन्नघौ घौ स्त्रियाञ्च।

(क्रोष्टोः ६।, तुनः ६।, तृन् ।१।, अघौ ७।, घौ ७।, स्त्रियां ७।, च ।१।)।

क्रोष्टुशब्दस्य तुनः स्थाने तृन् स्यात् अघौ घौ परे स्त्रियाञ्च। न इत्। *

(१२७) सख्युङ्शामिति। क्रोष्टा, हे क्रोष्टो।

(१२८) घौ त्रिरिति, क्रोष्टारौ क्रोष्टारः क्रोष्टारं, क्रोष्टारौ क्रोष्टून्। †

## १४०। वाच्यघौ। (वा ।१।, अचि ७।, अघौ ७।)।

क्रोष्टोस्तुनस्तृन् वा स्यात् अघावचि परे। क्रोष्ट्रा। ‡

---

* क्रोशतीति क्रुशधातोरौणादिक-तुन्प्रत्यये क्रोष्टु इति लिङ्गं (शृगालवाचकं), तस्य तुनः स्थाने तृन् आदेशः स्यात्। तृन् इत्यस्य नकारः (१४३) णावस्मृतणीति गुणनिषेधकतया सार्थकः, न तु निस्वादन्ते, तथा सति तुनो ग्रहणं निरर्थकं स्यात्। गौणस्यापि ग्रहणं तेन बहुक्रोष्टा देशः। स्त्रियाञ्चेति स्त्रीलिङ्गवर्त्तित्वे सति निमित्तान्तरस्य नापेक्षा, तेन क्रोष्ट्री बहुक्रोष्ट्री इत्यत्र तृणि (२५७) ऋदन्तत्वादीप्। स्त्रियां नित्यमिति क्रमदीश्वरः। क्लीवे तु आगमविधेर्बलवत्त्वादादौ नुणि बहुक्रोष्टूनि वनानि इत्यादि। पाणिनिः ७।१।९५।

† क्रोष्टु-सि = क्रोष्टृ डा (१२६) = क्रोष्टा। हे क्रोष्टु-सि (घि) (१०३,१२२) = क्रोष्टो। क्रोष्टु शस् (१०४,१०५) = क्रोष्टून्।

‡ पूर्व्वसूत्रे घिग्रहणादेव अत्र घिभिन्नप्राप्तौ पुनर्घिग्रहणं कदाचिदपि यस्य घित्वं सम्भवति तन्निषेधार्थम्, अतएव शस्विभक्तौ न तृन्, यतः क्लीवे शौ (१६२) कृते शसो (८२) घित्वसम्भवात्। टाद्यचीति पाणिनिक्रमदीश्वरप्रभृतय। अत्र अचीति स्यादेरेव, तेन क्रोष्टुरिदं (ष्ण-प्रत्यये) क्रौष्टवमिति। क्रोष्टु-टा = क्रोष्टृ-आ (३५) = क्रोष्ट्रा। पाणिनिः ७।१।९७।

## १४१ । ऋतो ङो डुः । (ऋतः ५।, ङः १।, डुः १।) ।

ऋकारात् परो ङसिङसी ङौ डुः स्यात्, ड इत् ।

क्रोष्टुः क्रोष्टुः क्रोष्ट्रोः क्रोष्टूनाम् । *

## १४२ । णुङिध्योः । (णुः १।, ङि-ध्योः ७॥) ।

ऋकारस्य णुः स्यात् ङौ धौ च परे । क्रोष्टरि † क्रोष्ट्रोः ।

पक्षे ह्रसे च शम्भुवत् । ‡

हूहूः हूह्वौ हूह्वः इत्यादि, वातप्रमीवत् । एवमतिचम्वादयः ।

सुभ्रूः सुभ्रुवौ सुभ्रुवः इत्यादि, सुधीवत् । एवं कटप्रूस्वयम्भ्वादयः ।

सुलूः सुल्वौ सुल्वः इत्यादि, प्रधीवत् । एवं दृन्भूखलप्वादयः । §

धाता, तृनन्तक्रोष्टुवत् । धौ हे धातः । एवं नप्तृहोतृपोत्रा-दयः । ¶ पिता, हे पितः ।

---

* क्रोष्टु-ङसि = क्रोष्टृ-उस् (१२६, १०२) = क्रोष्टुः, एवं ङस् परे । क्रोष्टु-ओस् (१४०, ३५, १०२) = क्रोष्ट्रोः । क्रोष्टु-आम् (११०, १०४) = क्रोष्टूनाम् । आगमादेशयो-र्मध्ये बलीयानागमो विधिरिति न्यायादादौ नुमागमे ऋचपरत्वाभावात् न तृन् । पाणिनिः ६।१।१११ ।

† क्रोष्टु-ङि (१४०, १४२) = क्रोष्टरि । पाणिनिः ७।३।११० ।

‡ पक्षे तृणोऽभावपक्षे, ह्रसे भिसादौ परे शम्भुशब्दवत् । इति उदन्ताः ।

§ हूहूशब्दस्य अमि शसि च (१३४) यूत इत्यनेन हूहूं हूहून् । सुभ्रू-औ (१३५) = सुभ्रुवौ इत्यादि । सुलू-औ (१३६) = सुल्वौ इत्यादि । हाहा हूहूश्चैवमाद्या गन्धर्वा-स्त्रिदशौकसामिति, खलपूः स्याद्बहुकरः (खलं चत्वरं पुनाति मार्जयति) इति चामरः । कटप्रूः पुंसि राक्षसे, विद्याधरे महादेवे तथा स्याद्दधदेवने इति मेदिनी । इति ऊदन्ताः ।

¶ धातृ-सि (१२७, १२६) = धाता । निरवकाशत्वादादौ सेर्डा टिलोपश्च, अतएव (१४३) गुणस्याप्रसङ्गः । धौ हे धातृ-सि (१०३, १४२, १०२) = धातः । धातृशब्द-साम्यात् नप्त्रादयः (६६०) तृनन्ता एव । तथाच — नप्ता च होता गदितोऽथ पोता, भ्राता च

पिता माता ननान्दा ना सव्येष्ठृभ्रातृयातरः ।
जामाता दुहिता देवा न तृनन्ता इमे दश ॥ *

## १४३ । घावस्वसृतृणोः । (घौ ७, अ स्वसृतृणोः ६॥) ।

घौ परे ऋकारस्य णः स्यात् नतु स्वसृतृणोः ।† पितरौ पितरः, पितरं पितरौ । शेषं धातृवत् । एवं जामातृभ्रात्रादयः ।

## १४४ । नुर्वा नामि घः । 
(नुः ६।, वा ।१।, नामि ७, घः १।) ।

नृशब्दस्य नामि परतो घः स्यात् वा । नॄणां नृणाम् । ‡ शेषं पितृवत् । §

---

नेष्टा तदनु प्रशास्ता । शास्ताथ शंस्ता च तृनन्ततुल्याः, अष्टेति शब्दाः खलु वृद्धिभाजः ॥ एते अष्टशब्दाः पौत्रादिषु रूढाः, नम हु पू चद निश् प्र-शास शास शंस, एतेभ्यो धातुभ्यः तृन्प्रत्ययेन सूत्रतो निपातनाच्च सिद्धाः । एवं यावतीयतृनन्ताः धातृशब्दवत् ज्ञेयाः । पाणिनिः ६।४।११ ।

* मातृशब्दो जननीवाचकः, परिमाणवाचकत्वे तृनन्त एव, तेन धान्यस्य मातारौ पुरुषौ । सव्येष्ठृशब्दः रथवामपार्श्वस्थितवीरे रूढः टवर्गद्वितीयवान् । यातृशब्दः स्वामिभ्रातृस्त्रीवाचकः, अन्यत्र तृनन्तः, तेन तीर्थस्य यातारौ पुरुषौ । ननान्दृ सव्येष्ठृ नृ देवृशब्दाः न तृनन्तवत् प्रतीयमानाः किन्तु तृनन्तत्वेन निपातनात् सिद्धाः । अत एते दश शब्दा वस्तुतः तृनन्ता अपि न तृनन्ताः, तृनन्तकार्य्यं (१२८) घौ त्रिरित्यनेन वृद्धिं न भजन्ते इत्यर्थः, (१४३) घावस्वसृ इत्यनेन गुणं लभन्ते इति यावत् ।

† पाणिनिः ७।३।११० ।

‡ नामीति मुख्यगौणसाधारणार्थं, तेन अतिनॄणाम् अतिनृणामिति । नृ आम्— (११०,१०७) नॄणां, वा नृणाम् । पाणिनिः ६।४।६ । इति ऋदन्ताः ।

§ ॠदन्तस्य, लृदन्तस्य, ॡदन्तस्य, एदन्तस्य च रूपं वोपदेवेन विरलप्रचारत्वात् न प्रदर्शितम् । सिद्धान्तकौमुद्यान्तु कॄ गमॢ से इति शब्दत्रयस्य रूपं लिखितम् ।

## १४५। ओरौ घौ। (ओ: ६।, औ ।१।, घौ ७।)।

ओकारस्य औकारः स्यात् घौ परे। गौः गावौ गावः। *

## १४६। आ अमशसोः। (आ ।१।, अम्-शसोः ७।)।

ओकारस्य आकारः स्यात् अमि असि च परे। †
गां गावौ गाः, गवा गोभ्याम् इत्यादि।
(१२४) ङस्येङो लोप इति, गोः गोः। ‡

## १४७। रै रा सभि। (रै ।१।, रा ।१।, सभि ७।)।

रैशब्दो रा स्यात् से भे च परे। §
राः रायौ रायः, राभ्यामित्यादि। ¶
ग्लौः ग्लावौ ग्लावः इत्यादि। ‖

इति अजन्त पुंलिङ्ग पादः।

---

* पाणिनिः ७।१।९०।

† अत्र आ इत्र, ओकारस्य आ स्यात् द्वितीयाया अकारे परे इति यन्न कृतं तत् स्पष्टार्थम्। पाणिनिः ६।१।९३।

‡ इति ओदन्ताः।

§ गौणत्वेऽपि, तेन क्लीवेऽपि सुराभ्यां सुरासु इति। (१६७) क्लीबे स्वः इति ह्रस्वेऽपि एकदेशविकृतमनन्यवत् भवतीति न्यायात् रा आदेशः। पाणिनिः ७।२।८५।

¶ इति ऐदन्ताः।

‖ इति औदन्ताः।

## १४८। आबीङ्भसात् सेर्लोपः।

(आप्-ईप्-ङसात् ५।, सेः ६।, लोपः १।)।

आप ईपो ङसाच्च परस्य सेर्लोपः स्यात्। उमा।*

## १४९। औरापः। (ई।१।, औः १।, आपः ५।)।

आपः पर औरी स्यात्। उमे उमाः।†

## १५०। घिटौस्सेः। (घि-टा-ओसि ७।, एः १।)।

आप एः स्यात् घौ टौसोश्च परतः। हे उमे।
उमाम् उमे उमाः, उमया उमाभ्याम् उमाभिः।‡

## १५१। ङितां यम्। (ङितां ६।।।, यम् ।१।)।

आपः परेषां ङितां यम् स्यात्, म इत्। उमायै उमाभ्याम् उमाभ्यः, उमायाः उमाभ्याम् उमाभ्यः, उमायाः उमयोः उमा-

---

* आप् च ईप् च ङम् च तस्मात्, सूत्रत्वाददन्तत्वम्। (१९३) स्यान्तस्योरादित्यनेन ङसात् सेर्लोपे सिद्धे अत्र ङसो ग्रहणं सिलोपानन्तरं तत्पूर्व्वकार्य्यनिर्व्वाहार्थं, स्यान्त-स्योरादित्यनेन लुपि तु (१५) लुपि न सन्धीत्यनेन पूर्व्वकार्य्यनिषेधापत्तिः स्यादिति। उं शिवं मीयते जपतीति माङ् लि शब्दे इति मा-धातोर्डप्रत्यये (९९७) उम इति शब्दात् स्त्रियाम् आपि उमा इति रूपम्। पाणिनिः ६।१।६८।

† औस्थाने दीर्घ-ईकारकरणं गरमी इति सिद्ध्यर्थम्। आपो ग्रहणात् ईप्-ङसो-र्निवृत्तिः। उमा-औ = उमा-ई (२३) = उमे। उमा-जस् (२२) = उमाः। पाणिनिः ७।१।१८।

‡ विभक्तिविपरिणामेन आप इति षष्ठ्यन्तमनुवर्त्तते। घौ टौसोश्च इत्युभयोः विशेषणाय हलौ परश्च इति पदं (५११) तसन्तत्वेनोक्तम्। हे उमा-सि (घि) (१४८,१५०)

नाम्। (१३७) न्यापदीर्भ्यो ङेरामिति। उमायाम्, उमयोः उमासु। एवं दुर्गामायाम्बिकादयः। *

१५२। स्वेः स्यम् स्वश्च। (स्वेः ५।, स्यम् ।१।, स्वः १।, च ।१।)।

स्वेरावन्तात् परेषां ङितां स्यम् स्यात्, पूर्व्वस्य च स्वः। †
सर्व्वस्यै सर्व्वस्याः सर्व्वस्याः सर्व्वस्याम्। आमि—सर्व्वासाम्।
शेषम् उमावत्। एवं विश्वादय आवन्ताः। ‡
अपुरीत्युक्तेः—अन्तरायै नगर्य्यै। §
द्वितीयस्यै द्वितीयायै, द्वितीयस्याः द्वितीयायाः, द्वितीयस्यां द्वितीयायाम्। शेषमुमावत्। एवं तृतीया। ¶

---

=उमे। उमा-अम् (२२)=उमाम्। उमा-औ (१४८,२१)=उमे। उमा-अस् (२२) =उमाः। उमा-टा (१५०,३५)=उमया। पाणिनि: ७।३।१०५-१०६।

* आप इति पञ्चम्यन्तमनुवर्त्तनम्। आबन्तशब्दात् परेषां ङे-ङसि-ङस्-ङि एषां स्थाने यम् स्यात्, मित्त्वादादौ। य इति अकारान्तः। ङिति य इति करणे (१०६) टाभिसित्यादिना अयाद्यादेशापत्तिः स्यादिति। उमा-ङे=उमा-य-ए (२३) =उमायै। एवं ङसिङसोः उमा य-अस् (२२)=उमायाः। उमा-ओस् (१५०,३५) =उमयोः। उमा-आम् (११०)=उमानाम्। उमा-ङि (१३७, १५१, २२)=उमायाम्। विशेषविधिवहिर्भूताः दुर्गा माया अम्बिकादयः सर्व्वे आबन्तशब्दा एवमित्यर्थः। पाणिनि: ७।३।११३।

† आबन्तसर्व्वनामशब्दात् परेषां ङितां स्थाने स्यम् स्यात्, मित्त्वादादौ, स्यमः पूर्व्वस्थितस्य दीर्घस्य ह्रस्वश्च। यद्यपि ङस्यम् इति कृते स्वश्चेति न वक्तव्यं स्यात्, तथापि अस्यै इत्यादि साधने सकारपरत्वाभावे (२०६) मध्य इत्यस्याप्रवृत्तिः स्यात्। पाणिनि: ७।३।११४।

‡ सर्व्वा-ङे=सर्व्व-स्य-ए (२३)=सर्व्वस्यै। सर्व्वा-ङसि (२२)=सर्व्वस्याः, एवं ङस् परे। सर्व्वा-ङि (१३७) सर्व्व-स्य-आम् (२२)=सर्व्वस्याम्। सर्व्वा-आम (११३) =सर्व्वासाम्। एवं विश्वा, आदिपदेन यावतीयावन्ताः सर्व्वनामशब्दाश्च एवं ज्ञेयाः।

§ (८६) समीऽतुल्ये इत्यत्र पुरभिन्ने वहिर्योगे अर्थे अन्तरशब्दस्य स्विसंज्ञाविधानात्—अन्तरायै (वहिःस्थितायै नगर्य्यै पुर्य्यै इत्यर्थः) इत्यत्र न स्विसंज्ञा, अतएव उमाशब्दवत्।

¶ द्वितीया-ङे (९०) वा स्विसंज्ञायां—द्वितीयस्यै द्वितीयायै इत्यादि। पाणिनि ७।३।११५।

## १५३। सुभ्रू दी द्व्यजम्बार्थानां धौ स्वः।

(सुभ्रू दी द्वि अच् अम्बार्थानां ६।।।, धौ ७।, स्वः १।)।

सुभ्रुवो दा द्व्यजम्बार्थानाञ्च स्वः स्यात् धौ परे। हे सुभ्रु। शेषमुभावत्। एवमक्काल्लादयः।

द्व्यचः किं, हे अम्बाले, हे अम्बिके।*

जरा। (११५) जरस् जराचि तु। जरसौ। केचिदादावीत्वमिच्छन्ति। जरसी जरे।† जरसः जराः इत्यादि।

(११६) पाद्दन्तेति, नासिका-पृतना-निशानां नस्-पृत्-निशः। नसः नसा नोभ्यामित्यादि। पृतः पृता पृद्भ्यामित्यादि। निशः निशा।

## १५४। श छ्राज भ्राज यज व्रज सृज मृज व्रश्च भ्रस्जां षड् भौ।

(श—भ्रस्जां ६।।।, षड् ।१।, भौ ७।)।

शान्तानां छान्तानां राजादेश्च षड् स्यात् भौ परे।‡

---

* द्वौ अचौ येषां ते द्व्यचः, अम्बा जननी अर्थों येषां ते अम्बार्थाः, द्व्यचश्च ते अम्बार्थाश्चेति द्व्यजम्बार्थाः, सुभ्रूश्च दी च द्व्यजम्बार्थाश्च ते तेषाम्। व्यादिशाद्देवर्षात् सुभ्रू-शब्दः स्त्रीलिङ्ग एव, पुंसि तु हे सुभ्रूर्देवदत्त इति क्रमदीश्वरः। क्लीबे तु (१६७, १२१) हे सुभ्रो सुख इति। सुभ्रूशब्दस्य नदीसंज्ञकशब्दस्य द्विस्वरयुक्तमातृवाचकशब्दस्य च धौ परे स्वः स्यात्। मातृवाचकस्तु मुख्यएव ग्राह्यः, तेन हे गौरि, हे अम्बे इत्यादि। एवम् अक्का, अल्ला, आदिशब्दात् अत्ता अप्पा प्रभृतयः। हे अम्बाला सि (धि) (१४८, १५०)—अम्बाले इत्यादि। पाणिनिः ७।३ १०७। हे सुभ्रूः इति सिद्धान्तकौमुदी कातन्त्राश्च। हे सुभ्रु इति सौपद्मा जौमराश्च।

† जरा-औ (१४६, ११५)=जरसौ, वा जरा औ (१४९,२३)=जरे।

‡ श्च छ च राज च इत्यादि द्वन्द्वे तेषाम्। एषां दशानां षड् स्यात् भौ (८४) परे—लिङ्गप्रकरणे हसविरामयोः, धातुप्रकरणे झसविरामयोरित्यर्थः। पाणिनिः ८।२।३६।

**१५५ । षो डः फे ।** (षः ६।, डः १।, फे ७।) ।

षस्य डः स्यात् फे परे। निड्भ्याम् इत्यादि। पक्षे घौ च उमावत् । *

गोपा, विश्वपावत् । †

मतिर्हरिवत्, स्त्रीत्वात् न शस् न, न टा ना । मतीः मत्या । ‡

**१५६ । द्या ङितामम् ।** (द्याः ५।, ङितां ६।।, अम् ।१।) ।

द्याः परेषां ङिताम् अम् स्यात्, म इत् । मत्यै मतये, मत्याः मतेः, मत्यां मतौ । एवं श्रुति-स्मृति-बुद्ध्यादयः । §

**१५७ । स्त्रियां त्रिचतुरोस्तिसृचतसृ ऋवत् क्षौ ।** (स्त्रियां ७।, त्रिचतुरोः ६।।, तिसृ-चतसृ ।१।, ऋवत् ।१।, क्षौ ७।) ।

---

* फे इति (८५) स्यादीय-हसे विरामे च बोध्यम् । (६४) झपभसोरित्यनेन षस्थाने साम्यात् डे भवत्यपि, निशाशब्द-सुपि निट्सु इत्याद्यर्थमेतत्सूत्रकरणम् । निशा-भ्याम (११६)=निश्-भ्याम् (१५५)=निड्भ्याम् । निश् आदेशस्य विकल्पपक्षे, घौ परे च निशाशब्दः उमाशब्दवत् । पाणिनिः ८।४।५३।

† गां पृथिवीं पातीति क्विपि (१०२२) गोपाशब्दः विश्वपाशब्दवत् । इत्यादन्ताः ।

‡ मतिर्बुद्धिः, हरिशब्दवत्, किन्तु स्त्रीलिङ्गस्य विशेषविधिनिषेधौ भवत एव । (१०५, ११२) एतत् सूत्रकार्यद्वयं [शस्स्थाने न, टास्थाने ना च] न स्यादित्यर्थः । मति-शस् (१०३, १०४)=मतीः । मति-टा (३५)=मत्या ।

§ ङितां स्थाने विधानात् अम. विभक्तिसम्बन्धित्वम्, अतएव स्त्रियै इत्यादौ स्यादीयाचि परे (१३५) धोरियुवचीति इयादेशः । मति-ङे=(९९, नदीसंज्ञायां) मति-अ-ए (३५, २२)=मत्यै । नदीसंज्ञाया विकल्पे मति-ए (१२२, ३५)=मतये । मति-ङसि (वा ङस्)=मति-अ-अस् (३५,२२,१०२)=मत्याः, वा नदीसंज्ञायां (१२१,१२४,१०२) =मतेः । मति-ङि (१३७, ३५)=मत्यां, वा नदीसंज्ञायां (१२५, १२६)=मतौ । यावतीर्यान्तप्रत्ययान्ताः (११४७) अन्ये च इकारान्तस्त्रीलिङ्गशब्दाः एवं ज्ञेयाः । पाणिनिः ७।३।११२, १।४।६।

त्रिचतुरोः स्त्रीलिङ्गे क्रमात् तिसृचतसृौ स्तः श्नौ परे । तौ च ऋवत्, तेन न णृत्रिघीः । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः तिसृणां तिसृषु । *

टेरत्वे सत्याप् । द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः । †

गौरी गौर्य्यौ गौर्य्यः, हे गौरि, गौरीं गौर्य्यौ गौरीः, गौर्य्या गौरीभ्यां गौरीभिः ।

(१५६) याङितामम् । गौर्य्यै गौरीभ्यां गौरीभ्यः, गौर्य्याः

---

* तिसृचतसृ इति समाहारः । स्त्रीलिङ्गे वर्त्तिनः त्रिशब्दस्य तिसृ स्यात्, चतुर्-शब्दस्य चतसृ स्यात् श्नौ परे । तौ आदेशौ दीर्घऋदन्ततुल्यौ, दीर्घतुल्यकथनात् ह्रस्व-स्थाने जायमानाः णृत्रिघीः [(१४३) घावस्त्वस्त्रत्णोरिति गुणः, (१२८) घौ त्रिरिति वृद्धिः, (१०४) शस्नामि घं इति दीर्घः] न स्युः, अन्यत्तु स्यादेव, तेन तिसृणामिति ह्रस्वात् नुम् । (१०३) शसोऽकारलोपाभावस्तु—णश्च त्रिश्च घंश्च अश्च इति विग्रहे णृत्रिघीः इत्यनेन अकारकार्य्यस्यापि निषेधात् ज्ञेय इति ।

अत्र प्रकरणबलात् स्त्रियां प्राप्तौ स्त्रियामिति ग्रहणं, यत्र त्रिचतुरोर्न स्त्रियां वृत्तिः ततः कृतसमासे स्त्रियां वृत्तावपि तत्र न तिसृचतसृौ भवतः इत्यभिप्रायार्थं, तेन प्रियास्त्रयो यस्याः सा प्रियत्रिरिति मतिवत् । प्राक् स्त्रियां वृत्तौ पश्चात् कृतसमासे सर्व्वलिङ्ग-वर्त्तिनोरपि तयोः तिसृचतसृौ भवत एव, तेन प्रियास्तिस्रो यस्य सः (१२७) प्रियतिसा, तथा क्लीवेऽपि प्रियतिसृ कुलमित्यादि, सिद्धान्तकौमुद्यान्तु प्रियत्रि प्रियतिसृ इति पद-द्वयं लिखितम् । प्रियत्रीणामिति कातन्त्रम् सौपद्मञ्च, प्रियत्रयाणामिति तु क्रमदीश्वरः । "आमि प्रियत्रयाणामिति विशेषः" इति भट्टोजिदीक्षितः । विभक्तिलुकि तु न आदेशः, तेन तिसृभिः कृतं त्रिकृतम् । किन्तु घावस्त्वस्य इति सूत्रविहितभिन्नो गुणः स्यादेव, तेन हे प्रियतिसर्देवदत्त, (१४२) प्रियतिसरि देवदत्ते इति । नान्तत्वात् प्राप्तदीर्घोऽपि (१६४) न निवार्य्यः, तेन प्रियतिसृणि कुलानि । ङसिङसोः प्रियतिसः इत्यत्र अकारकार्य्यत्वात् (१४१) डुरपि न स्यादिति । तिस्र इत्यादौ, दन्त्यादेशकरणात् न षत्वम् । पाणिनिः ७।२।९९,१००। ६।४।४ ।

† (१३३) त्यदां टेरः श्नौ इति टेरकारे द्व इति अकारान्तात् (१४९) स्त्रियामत इति आप् भवति, ततः द्वा इति शब्दस्य उमाशब्दवत् रूपम् । द्वा-औ (१४९,२३)=द्वे । द्वा-ओस् (१५०, ३५)=द्वयोः । इति इदन्ताः ।

गौरीभ्यां गौरीभ्यः, गौर्य्याः गौर्य्योः गौरीणां, गौर्य्यां गौर्य्योः गौरीषु । एवं वाणी-काली-नद्यादयः । *

लक्ष्मीः । अनीबन्तत्वात् न सिलोपः । शेषं गौरीवत् । एवं अवी-तन्त्र्यादयः । † स्त्री, हे स्त्रि । ‡

## १५८ । स्त्री भ्रुधः । (स्त्री ।१।, भ्रुः ।१।, धः ।१।) ।

स्त्रीशब्दो भ्रूशब्दश्च धुसंज्ञः स्यात् । §
(१२५) धारियुवचि । स्त्रियौ स्त्रियः ।

## १५९ । स्त्री वामशसोः । (स्त्री ।१।, वा ।१।, अम् शसोः ७॥) ।

स्त्रीशब्दो धुसंज्ञो वा स्यात् अमि शसि च परे । ¶
स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः, स्त्रिया स्त्रीभ्यां स्त्रीभिः, स्त्रियै

---

* गौरी-सि(१४८)=गौरी । गौरी-औ(२५)=गौर्य्यौ इत्यादि । हे गौरी-सि (धि) (९६) यूत् स्त्र्येवदीति नदीसंज्ञायां (१४८,१५२)=गौरि । गौरी अम (१०२)=गौरीम् । एवं शसविभक्तौ गौरीः । आदिना विशेषभिन्ना यावतीया ईबन्तशब्दाः एवं ज्ञेयाः ।

† लक्ष्मीरिति पदं लक्ष दर्शने इति धातोः औणादिक-मीप्रत्ययेन सिद्धं, नत्वीबन्तम् । अतएव (१४८) न सिलोपः । एवं, अव तन्त्र तॄ धातुभ्यः औणादिक ई प्रत्ययेन अवीः तन्त्री, तरीरिति तन्त्रीस्तकारमध्यः, आदिपदेन श्री ह्री धी भी प्रभृतीनां क्विबन्तानामपि ग्रहणम् । तथाच—अवी तन्त्री तरी लक्ष्मी श्री ह्री धी भ्यादि शब्दतः, अनीबन्ततया सेर्न लोपो गौर्य्य न कस्यता इति । औमरास्तु प्रियपपीः बहुयज्वोरित्युभयत्वात्र पठन्ति ।

‡ स्त्री-सि(१४८)=स्त्री । हे स्त्री सि(धि)(१४८,[(९६) नदीसंज्ञायां]१५२)=स्त्रि

§ स्त्री भ्रू शब्दयोरीदूतो-र्धात्ववयवत्वाभावात्, (१२५) इयुवार्थं धुसंज्ञाविधानम् पाणिनिः ६।४।७९ ।

¶ स्त्रीग्रहणं भ्रूनिवृत्त्यर्थम् ।

स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रियोः स्त्रीणां, स्त्रियां स्त्रियोः स्त्रीषु । *

श्रीः श्रियौ श्रियः । हे श्रीः । ङित्यामि च भेदः । श्रियै श्रिये, श्रियाः श्रियः, श्रियाः श्रियः, श्रीणां श्रियां, श्रियां श्रियि श्रीषु । †

सुध्यादयः पुंवत् । सुष्ठु धीः, प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवत् । ‡

धेनुर्मतिवत् साध्यः । धेनुः धेनू धेनवः इत्यादि । §

---

* स्त्रीशब्दात् अमि शसि च स्त्रियं स्त्रियः इति, अनेन सूत्रेण धातुसंज्ञायाम् आदौ (१२५) इयादेशे पश्चादीबन्तत्वाभावात् (१०१) अमृशसोरादिर्लोपो न स्यात् ; घुसंज्ञाविकल्पपक्षे तु (१०१) स्त्रीं स्त्रीरिति । ङे ङसि ङस् ङि विभक्तिषु स्त्रियै स्त्रियाः स्त्रियाः स्त्रियाम् एतेषु (९९) स्त्रीयुश्च ङितीत्यत्र स्त्रीशब्दवर्जनात् (९६) नित्यनदीसंज्ञायाम् आदौ (१५६) याडिसामम्, (१२७) ङेराम च, पश्चात् इयादेशः । आम्विभक्तौ स्त्रीणामित्यत्र (९८) वामीति सूत्रे स्त्रीशब्दवर्जनात् (९६) नित्यनदीसंज्ञायाम्, आगमविधेर्बलवत्त्वादादौ (११०) नुम्, अतएव अच्परत्वाभावात् न इयादेशः । "स्त्रियमतिक्रान्तः अतिस्त्रिः । हे अतिस्त्रे ।" इति सिद्धान्तकौमुदी । पाणिनिः ६।४।८० ।

† हे श्रीरिति (९७) नास्त्रीयुव इति नदीसंज्ञानिषेधात् (१५२) न ह्रस्वः । ङिति आमि च भेदः स्त्रीशब्दात् विशेष इत्यर्थः, (९९) स्त्रीयुश्च ङितीति (९८) वामीति सूत्राभ्यां नदीसंज्ञाविकल्पनात् रूपद्वयमिति यावत् । श्री-ङे (९९, १५६, १२५, '२२) = श्रियै, वा (१२५) श्रिये । श्री आम (९८, ११०, १०७) = श्रीणां, वा (१२५) श्रियाम् । श्री-ङि (९९, १२७, १२५) = श्रियां, वा (१२५) श्रियि ।

‡ सु शोभना धीर्यस्याः यस्य वा इति बहुव्रीहौ सुधीशब्दस्य स्त्रीलिङ्गपुंलिङ्गयोरेकरूपतया नित्यस्त्रीत्वाभावेन नदीसंज्ञाभावात् स्त्रीलिङ्गविहितकार्य्याभावे पुंवदित्यर्थः, आदिशब्दात् सुश्री-यवक्री प्रध्यादयः । शोभना चासौ धीश्चेति सुधीः, प्रकृष्टा चासौ धीश्चेति प्रधीरिति कर्म्मधारयसमासे तु नित्यस्त्रीत्वान्नदीसंज्ञायां सुधी-प्रध्यौ क्रमात् श्री-लक्ष्मीवत् । सुधीशब्दः इयस्थानित्वेन ङिति आमि च (९९, ९८) वा नदीसंज्ञायां श्रीशब्दवत्, प्रधीशब्दस्तु नित्यस्त्रीत्वेन (९६) नित्यं नदीसंज्ञायां लक्ष्मीशब्दवदित्यर्थः । ईतीदन्ता. ।

§ इति उदन्ताः ।

वधू गौरीवत्। वधूः वध्वौ वध्वः इत्यादि। एवं चमूतन्वादयः।*

भ्रूः श्रीवत्। भ्रूः भ्रुवौ भ्रुवः इत्यादि। सुभ्रूः हे सुभ्रु।†

पुनर्भूः सुलूवत्।‡ सुभूः पुंवत्।§

स्वसा धातृवत्। माता पितृवत्।¶

द्यौ-र्गौवत्।‖

सुराः पुंवत्।**

नौः ग्लौवत्।††

इति अजन्त स्त्रीलिङ्ग पादः।

---

* तनूशब्दः (२७९) ऊङन्तपक्षे वधूवत्, अनूङन्तपक्षे धेनुवदित्यर्थः।

† भ्रू-औ (१५८, १३५)=भ्रुवौ इत्यादि। हे सुभ्रू-धि (१५३, १०३)=सुभ्रु। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न्यायेन धिसन्निपातजनितो ह्रस्वविधि-र्धिलोपनिमित्तं न भवतीत्यतः सुभ्रु-इति पदं विसर्गान्तमिति केचित्। हे सुभ्रू-इति तु पाणिनीयाः (१५३ सूत्रस्य टीका द्रष्टव्या)।

‡ पुनर्भूशब्दस्य (१३६) कव्यादीति वकारप्राप्त्या सुलूशब्देन साम्यं न तु सर्व्वरूपैः, तेनास्य नित्यस्त्रीत्वात् दीसंज्ञायां सर्व्वत्र वधूशब्दवदेव। एवं दृन्भू वर्षाभू काराभूणां रूपम्।

§ सुभूशब्दस्य नित्यस्त्रीत्वाभावेन दीसंज्ञाभावादित्यर्थः। इति ऊदन्ताः।

¶ धातृवदिति (१२८) वृद्धिप्राप्त्या, पितृवदिति (१४३) गुणप्राप्त्या, साम्यं, न तु सर्व्वरूपैः, तेन शसि स्वसॄः मातॄरिति च। इति ऋदन्ताः।

‖ इति ओदन्ताः।

** सु शोभनो राः धनं यस्या इति विग्रहे सुरैशब्दो रैशब्दवदित्यर्थ.। इति ऐदन्ताः।

†† इति औदन्ताः।

## ४र्थ पादः—अजन्त क्लीवलिङ्ग शब्दः ।

### १६० । क्लीवात् स्यमोऽधेमोऽतः ।

(क्लीवात् ५।, सि अमः ६।, अधेः ६।, मः १।, अतः ५।) ।

अकारान्तात् नपुंसकात् परस्याधेः सेरमश्च मः स्यात् । *
ज्ञानं, हे ज्ञान ।

### १६१ । क्लीवादृयौः ।

(क्लीवात् ५।, ई ।१।, औः १।) ।

क्लीवात् पर औरी स्यात् । ज्ञाने । †

### १६२ । जस्शसोः शिः ।

(जस्शसोः ६।।, शिः १।) ।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत् । ‡

### १६३ । नुण्यमादौ झसन्तरलादौ तु वा ।

(नुण् ।१।, अयमादौ ७।, झसन्तरलादौ ७।, तु ।१।, वा ।१।) ।

---

* (१०३) स्वदीर्भ्यामित्यनेन अम आदिलोपे कृते सिद्धेऽपि अमः स्थाने मविधानं (१६८) स्यमोर्लुगित्यनेन स्वदीर्भ्यामित्यस्य बाधितत्वात् लुगापत्तिवारणार्थम् । ज्ञानमित्यत्र मकारस्य विभक्त्याद्यवयवभिन्नत्वात् (१०८) ना ञिमभत्रौत्यनेन न ना । पाणिनिः ७।१।२४ ।

† अत्र पुनः क्लीवादित्युपादानं सामान्यार्थम्, तेन सर्व्वस्मात् क्लीवात् औकार ई स्यादित्यर्थः । ज्ञान-औ = ज्ञान-ई (२३) = ज्ञाने । पाणिनिः ७।१।१९ ।

‡ शित्करणं विशेषज्ञापनार्थम्, इ इति कृते सप्तम्येकवचनभ्रमो जायते, (१८८) अधौ सौ शौ घं इत्यादिषु विशेषकरणं कष्टकरञ्च स्यात् । कति पञ्च अष्ट फलानि इत्यादिषु (१३१) लिङ्गविहितकार्य्यनिषेधात् न शिः । गौणे तु अतिकतीनि अतिपञ्चानि इत्यादौ स्यादेव । पाणिनिः ७।१।२० ।

क्लीबस्य शौ परे नुण् स्यात्, न तु यमादौ, झसन्तरलयोरादौ तु वा स्यात् । *

## १६४ । नसब्महन्नोऽधो घौऽधौ घौ ।

(नस्-अप्-महत्-नः ६।, अधोः ६।, घं: १।, अधौ ७।, घौ ७।) ।

नसन्तस्य आपो महतो नान्तस्य च धुवर्जस्य घं: स्यात् अधौ घौ परे । ज्ञानानि । ही शीवत् । शेषं रामवत् । एवं वन-धन-फलादयः । †

## १६५ । तोऽन्यादेर्मोऽनेकतरात् ।

(तः १।, अन्यादेः ५।, मः ६।, अनेकतरात् ५।) ।

अन्यादेः परस्य स्यमोर्मस्य तः स्यात् न त्वेकतरात् परस्य ।

---

* यम् प्रत्याहारः, यमस्यादिः यमादिः, न यमादि-रयमादिस्तस्मिन् । झस् अन्ते ययोस्तौ झसन्तौ, झसन्तौ च तौ रलौ चेति झसन्तरलौ तयोरादिस्तस्मिन् । नुणो ण इत् अन्त्याच्च परः (१७) । उकारेत् चिह्नार्थः, न तु [नु] विन्दुमात्रमिति वक्ष्यति (२४२) । नुणः प्रकृतिभाजित्वात् ज्ञानानि इत्यादौ नान्तत्वात (१६४) दीर्घः । चत्वारि, प्रशामि इत्यादौ यमादौ कर्त्तव्यत्वेन न नुण् । अत्र नुस्यमः इति यमन्तस्यैव निषेधे कृते स्वभ् शब्दस्य जसि स्वम्भि जलानि इत्यादौ यमन्तत्वात् नुणोऽप्रसङ्गः स्यात् । पाणिनिः १।१।४२, ७।१।७२ ।

† नस् च अप् च महांश्च न च समाहारे तस्य । नस्भागान्तस्य अप्शब्दस्य महत्-शब्दस्य नान्तस्य च अन्त्यस्वरस्य दीर्घो भवति धिभिन्ने घौ परे, न तु धातोः नस्-भागान्तस्य नान्तस्य च इत्यर्थः । यथा—विद्वान् आपः महान् । न इति नान्तलिङ्गस्य ग्रहणं, यथा राजा इत्यादि । ज्ञानानीत्यादौ नुणो लिङ्गभाजित्वात् नान्तत्वम् । पचन् इत्यादौ तु नकारस्य लिङ्गभाजित्वेऽपि लिङ्गमध्यविहितत्वात् न नान्तत्वम् । अधौ किं, हे विद्वन् इत्यादि । पूर्व्वतः शेरनुवृत्तावपि घौ-कथनं सर्व्वलिङ्गेषु दीर्घार्थम् । ज्ञान जस् (१६२,१६३,१६४)=ज्ञानानि । द्वितीया प्रथमावत् । शेषं प्रथमाद्वितीया-भिन्नं रामशब्दवत् । यावतीय-क्लीवलिङ्ग-अकारान्तशब्दा एवमित्यर्थः । पाणिनिः ६।४।८,१०,११ ।

अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। *
एवमन्यतरादयः। अनेकतरात् किम्—एकतरम्।

## १६६। जरातोऽम वा। (जरातः ५।, अम् ।१।, वा ।१।)।

जराशब्दात् परस्य स्वमोर्मस्य अम् स्यात् वा।
अजरसम् अजरम्, अजरसी अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत्। †

(११६) पाद्दन्तेति शीर्षहृदयोदकासनानां शीर्षन्हृदुद्-नासनः। शीर्षाणि शीर्ष्णा शीर्षभ्यामित्यादि। ‡ हृन्दि हृदा हृद्भ्यामित्यादि। उदानि उद्ना उदभ्यामित्यादि। आसानि आस्ना आसभ्यामित्यादि। पक्षे शेषं च रामवत्।

---

* प्रकरणबलात् स्वमोः स्थाने जातस्य मकारस्य तकारो भवतीति, तेन पुंलिङ्गे अमि अन्यमिति। अन्यतमस्य अन्यादित्वाभावात् अन्यतममित्येव। अन्य-सि (१६०, १६५)=अन्यत्। पाणिनिः ७।१।२५। एकतरात् प्रतिषेधो वक्तव्य इति वार्त्तिकम्।

† क्लीबेऽपि जराग्रहणात् शब्दान्तरेण प्राप्तसमासात् जराशब्दादित्यर्थः। नास्ति जरा यस्य तत् अजरम्। अजर-सि (१६०, १६६, ११५)=अजरसम्। जरसादेशाभावपक्षे (१०३) ह्रस्वदीर्घाभ्यामित्यनेन अम आदिलोपे अजरम्। अमोऽभावपक्षे च अजरमिति। अत्र अमो नित्यत्वेऽपीष्टसिद्धौ वाग्रहणं व्यवस्थार्थं, व्यवस्था च—द्वितीयैकवचने अमि अन्तरङ्गत्वाद्-बलवतोऽपि जरसादेशात् पूर्व्वम् अमः स्थाने (१६०) मकारः स्यात्, पश्चादनेन अमि अमः स्थितिरिति; अन्यथा आदौ जरसादेशे (१६८) स्वमोर्लुगिति अमो-लुगापत्तिः स्यादिति। अजर-औ (१६१, ११५)=अजरसी, पक्षे (२३)=अजरे। अजर-जस् (१६२, ११५, १६३, १६४, ५०)=अजरांसि, पक्षे अजराणि। पाणिनिमते सन्निपातपरिभाषया न जरस्, अजरम्; परत्वात् जरसि कृते सन्निपातपरिभाषया न (अमो) लुक्, अजरसम्।

‡ शीर्ष-शस् (१६२, ११६, १६४, १०७)=शीर्षाणि। शीर्ष-टा (११६, ११७, १००) =शीर्ष्णा, शीर्ष-भ्याम् (११६, ११८)=शीर्षभ्यां। इत्यदन्ताः।

## १६७। क्लीबे ह्रस्वः। (क्लीबे ७।, ह्रस्वः १।)।

क्लीबे धस्य ह्रस्वः स्यात्। श्रीपं, ग्रामवत्।*

## १६८। स्यमोर्लुक्। (सि-अमोः ६॥, लुक् ।१।)।

क्लीवात् परयोः स्यमोर्लुक् स्यात्।† वारि।

## १६९। नुमिकोऽच्यनामि।

(नुम् ।१।, इकः ६।, अचि ७, अनामि ७।)।

इगन्तस्य क्लीवस्य नुम् स्यात् अचि परे, न त्वामि। वारिणी वारीणि।‡

## १७०। गुर्धौ वा। (गुः १।, धौ ७।, वा ।१।)।

इगन्तस्य क्लीवस्य गुर्वा स्यात् धौ परे। हे वारे हे वारि।§

---

* येन विधिस्तदन्तस्येति न्यायात् क्लीवलिङ्गशब्दस्य अन्तदीर्घस्य ह्रस्वः स्यात्, निमित्तान्तरापेक्षा नास्तीत्यर्थः। श्रियं पातीति श्रीपा, क्लीवलिङ्गवर्त्तित्वात् ह्रस्वे श्रीपमिति। पाणिनिः १।२।४७। इत्यादन्ताः।

† (१६०) अकारान्तक्लीवात् स्यमो मं-विधानेन अत्र अकारान्तभिन्नात् क्लीवादिति बोध्यम्। लुक्करणेन (८३) लुकि न तन्नेति निषेधात् तस्मिन् परे तत् किम् इत्यादौ न (१३१) टेरः। विरामविहितन्तु स्यादेव, यथा पयः हविः इत्यादि। पाणिनिः ७।१।२३।

‡ अत्र येन केनापि प्रकारेण इगन्तस्यापि ग्रहणं, तेन प्रद्युनी सुनुनी सुरिणी इत्यादि सिद्धम्। नुमो मित्त्वात् (१७) अन्त्याच्चः परः। स्थाने जातस्य प्रकृतिभागित्वात् वारीणि इत्यादौ नान्तत्वात् (१६४) दीर्घः। अनामीति आम्भिन्ने स्यादौ अचि परे इत्यर्थः, तेन वारीणामित्यादौ न स्यात्। वारि-औ (१६१, १६९, १०७)= वारिणी। वारि-जस् (१६२, १६९, १६४, १०७)=वारीणि। पाणिनिः ७।१।७३।

§ हे वारे इत्यादौ स्यमोर्लुगिति सिर्लुकि (८३) लुकि न तन्नेति निषेधात् (१२२) गुर्धिङसित्यस्याप्राप्तौ अनेन पुनर्विकल्पेन गुणविधानम्। इहापि येन केनापि इगन्तस्य ग्रहणं, तेन हे प्रद्यो हे प्रद्यु इत्यादि।

वारिणी वारीभिः, वारिणा वारिणि वारिभ्यः वारिणः वारिणोः वारीणाम्। *

वारिणि वारिणोः। इसे इरिवत्।

## १७१। पुंवद्वार्थोक्तपुंस्कं टाद्यचि।

(पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७।)।

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवत् वा स्यात् टाद्यचि। अनादये अनादिने इत्यादि। शेषं वारिवत्। अर्थेन किं, पीलुने फलाय। †

## १७२। दध्यस्थिसक्थ्यक्ष्णोऽनङ्।

(दधि अस्थि-सक्थि-अक्ष्णः ६।, अनङ् ।१।)।

एषामनङ् स्यात् टाद्यचि, अङावितौ।

(११७) अनोऽल्लोपः। दध्ना दध्ने दध्नः दध्नः दध्नोः दध्नां दध्नि दधनि दध्नोः। शेषं वारिवत्। एवम् अस्थि सक्थि अक्षि। ‡

---

* वारि-आम (११०,१०४, १०७) = वारीणाम्।

† पुमानिव पुंवत्। अर्थेन एकार्थेन उक्तः पुमान् येन तत् अर्थोक्तपुंस्कम्। तदुक्तम्— एक एव हि यः शब्दः पुंसि क्लीवे च वर्त्तते। एकमेवार्थमाख्याति उक्तपुंस्कः स उच्यते॥ यथा, नास्ति आदिर्यस्य तत् अनादि कुलम् आदिरहितमित्यर्थः, एवं अनादिः पुरुषः आदिरहित इत्यर्थः, अतएव अनादिशब्दः एकार्थोक्तपुंस्कः। एकार्थेन किं पीलुने फलाय, पीलुशब्दः फलवाचित्वे क्लीवलिङ्गः, वृक्षवाचित्वे पुंलिङ्गः इति न एकार्थेन उभयलिङ्गता। अनादि ङे (पुंवद्भावे, १२१,३५) = अनादये। पुंवद्भावविकल्पपक्षे (१६८) = अनादिने। एवं कटवे कटुने इत्यादि। पाणिनिः ७।१।७४।

‡ दधि च अस्थि च सक्थि च अक्षि च समाहारे तस्य। (१७) ङित्त्वादन्त्यस्य स्थाने। गौणेऽप्ययमादेशः, तेन पीतदध्ना पुरुषेण, छिन्नास्थ्ना श्विना, पीतदध्ने स्त्रियै इत्यादि। अत्र दध्यादीनां रूढ़ानामेव ग्रहणं, तेन दधातीति (१११९) दधिः, अस्य दधये दधिने ब्राह्मणाय इत्यत्र अनङ् न स्यात्। दधि-टा = दधन्-आ (११७) = दध्ना इत्यादि। दध्नामित्यत्र अन्तरङ्गत्वादनङ्, न आमः स्थाने नुम्। पाणिनिः ७।१।७५। इति इदन्ताः।

सुधि सुधिनी सुधीनि। हे सुधे हे सुधि। द्वी प्रीवत्।
सुधिया सुधिना इत्यादि। एवं प्रध्यादयः। *

मधु मधुनी मधूनि। हे मधो हे मधु। द्वी प्रीवत्।
मधुना मधुभ्यामित्यादि। एवम् अम्बु-सान्वादयः। (११६)
पाददन्तेति स्नु वा। स्नूनि सानूनि इत्यादि भेदः। †

धातृ धातृणी धातॄणि। श्री—हे धातः हे धातृ। द्वी
प्रीवत्। धात्रा धातृणा इत्यादि। एवं ज्ञातृ-कर्त्रादयः। ‡

## १७३। एचो युत् स्वम्। (एचः १।३, युत् १।१, स्वं २।१)। §

प्रद्यु प्रद्युनी प्रद्यूनि। हे प्रद्यो हे प्रद्यु। द्वी प्रीवत्। प्रद्यवा
प्रद्युना इत्यादि। ¶ सुरि सुरिणी सुरीणि। हे सुरे हे सुरि।
सुराया सुरिणा सुराभ्यामित्यादि। ‖ सुनु सुनुनी सुनूनि।
हे सुनो हे सुनु। सुनावा सुनुना इत्यादि। **

इति क्लीवलिङ्ग पादः।

### इति अजन्ताध्यायः।

---

* सु शोभना धीर्यस्येति सुधि कुलम् इत्यादीनामप्येकार्थेन उक्तपुंस्कत्वम्। एवं प्रध्यादयः। इति ईदन्ताः।

† इति उदन्ताः।

‡ दधातीति धातृ कुलम् अस्याप्येकार्थेन उक्तपुंस्कत्वम्। एवं जानातीति ज्ञातृ कुलम्, करोतीति कर्तृ कुलमित्यादि। सुधि, मधु, धातृ—औ (१६१,१६९)—सुधिनी, मधुनी, धातृणी। सुधि, मधु, धातृ—जस (१६२, १६९, १६४)—सुधीनि, मधूनि, धातॄणि। सम्बोधने (१७०) वा गुणः। टाप्रभृतिविभक्तौ पुंवद्भावविकल्पः। इति ऋदन्ताः।

§ (१६७) क्लीवे स्व इत्यादिभिः स्वं प्राप्नुवन्त एचो युदेव (इत, उत) भवन्तीत्यर्थः। एकारस्य ह्रस्वः कण्ठत्वेन साम्यात् अकार एव जायते, अतः एतत्सूत्रकरणम्। पाणिनिः १।१।४८।

¶ प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् प्रद्यु पुण्यम्। अस्य पुंवद्भावे गोशब्दवत्। इति ओदन्ताः।

‖ शोभनो राः धनं यस्य तत् सुरि कुलम्। अस्य पुंवद्भावे रैशब्दवत्। इति ऐदन्ताः।

** शोभना नौर्यस्य तत् सुनु जलम्। अस्य पुंवद्भावे नौशब्दवत्। इति औदन्ताः।

# ३यः । हसन्ताध्यायः ।

## १म पादः—हसन्त पुंलिङ्ग शब्दः ।

### १७४ । द्विरुक्तजक्षादी द्विः ।

(द्विरुक्त-जक्षादी १॥, द्विः १।) ।

कृतद्वित्वशब्दो जक्षादिश्च द्विसंज्ञः स्यात् । *

### १७५ । हो ढो भौ । (हः ६।, ढः १।, भौ ७।) ।

हस्य ढः स्यात् भौ परे । †

(१४८)शावीबभसात् सेर्लोपः । (६४)झप्झसोरिति चप्जबौ वा। लिट् लिड् लिहौ लिहः, लिहं लिहौ लिहः, लिहा लिड्भ्यामित्यादि ।

### १७६ । दादेर्घः । (दादेः ६।, घः १।) ।

दकारादेर्हस्य घः स्यात् भौ परे । ‡

---

* पूर्व्वं प्रयोजनाभावादनुक्तां संज्ञामाह द्विरुक्तेति । द्विः (४८५) उक्तं यस्य स द्विरुक्तः, सच जक्षादिश्च तौ द्विरुक्तजक्षादी । जक्षादिश्च—जक्षतिश्च दरिद्राति-चकास्तिः शास्तिरेव च । दीधी वेवी च जागर्त्ति-जक्षादिः सप्तधातुभिः ॥ द्विसंज्ञाफलन्तु (१६१, २४३,५६३,६९७) एतेषु सूत्रेषु द्रष्टव्यम् । पाणिनिः ६।१।५,६ ।

† लिङ्गस्य धातोश्च हस्य ढः स्यात् भौ परे इत्यर्थः । पाणिनिः ८।२।३१ ।

‡ द आदिर्यस्य स दादिस्तस्य । दादेरिति शब्दस्य धातोर्वा विशेषणं, यस्यैव शब्दस्य धातोर्वा अन्तस्थितो हकारः तस्यैव आदिस्थितो दकार इत्यभिप्रायः, तेन धुक् धुग्, भाक् भाग् इत्यादौ स्यात्, दधिलिट् इत्यादौ न स्यादित्यर्थः । पाणिनिः ८।२।३२ ।

## १७७। झभान्तस्यादिजबां झभाः फे, धोस्तु सध्वेऽन्ते च।

(झभान्तस्य ६।, आदिजबां ६।।।, झभाः १।।।, फे ७।, धोः ६।, तु ।१।, सध्वे ७।, अन्ते ७।, च ।१।)।

झभन्तस्यादौ स्थितानां जबानां झभाः स्युः फे परे, धोस्तु सध्वे अन्ते च।

धुक् धुग् दुहौ दुहः, दुहं दुहौ दुहः, दुहा धुग्भ्यामित्यादि। *

## १७८। मुहां घङ् वा भौ।

(मुहां ६।।।, घङ् ।१।, वा ।१।, भौ ७।)।

मुहादीनां घङ् वा स्यात् भौ परे।

मुक् मुग् मुट् मुड् मुहौ मुहः, मुहं मुहौ मुहः, मुहा मुग्भ्यां मुड्भ्यामित्यादि।

एवं द्रुह-स्नुह-नश-स्निहः। †

---

* झभः अन्ते यस्य स झभान्तः तस्य आदौ स्थिताः जबः तेषाम्। तदयमर्थः—यस्य शब्दस्य धातोर्वा अन्ते झभ्, तस्यैव आदिस्थितानां ज ड द ग ब इत्येतेषां स्थाने क्रमेण———————————— झ ढ ध घ भ इत्येते भवन्ति, शब्दस्य—फे (८५, हषि विरामे च) परे, धातोस्तु—सध्वे विरामे च परे इत्यर्थः। अत्र विशेषः—आदौ जब् अन्ते झभ् मध्ये हस्-वर्णस्य एकस्वरस्य च व्यवधानेऽपि भविष्यति न तु बहुस्वरव्यवधाने, तेन गर्द्दभमाचष्टे इति ञौ क्विपि गर्द्दभ् इत्यादौ न स्यात्। व्यध्यौ ताडे इति धातोर्दन्त्यवकारत्वात् मृगावित् इत्यादावपि न प्रसङ्गः। जकारस्य झकारो न स्यादिति औमराः, तेन जभशब्दस्य जप्, जेह् शब्दस्य जेट् इति पदं भविष्यति (संक्षिप्तसारे सुबन्तपादस्य १५९ सूत्रं द्रष्टव्यम्)। दुह-सि (१४८, १७६, १७७, ६४)=धुक् धुग् इत्यादि। पाणिनि. ८।२।३७।

† मुहामिति बहुवचनं गणार्थम्। गणश्च मुह द्रुह स्नुह नश स्निह इति। द्रुहशब्दस्य मुहादिपाठबलात् पचे हो ढो भावित्यनेन ढः, न तु दादेर्घ इत्यनेन घः, तेन ध्रुक् ध्रुग् ध्रुट् ध्रुड् इति। मुह-सि (१४८, १७८, ६४)=मुक् मुग्। पचे (१७५, ६४)=मुट मुड्। पाणिनि: ८।२।३३,६१।

## १७९। वाहो वौ पौ श्वेतात्तु वा।

(वाहः ६।, वा ।१।, औ ।१।, पौ ७।, श्वेतात् ५।, तु ।१।, वा ।१।)।

वाहो वा-शब्दस्य औः स्यात् पौ परे, श्वेतवाहस्तु वा। विश्वौहः विश्वौहा इत्यादि। शेषं लिड्वत्। *

## १८०। अनादूः। (अनात् ५।, ऊः १।)।

अनवर्णात् परो वाहो वा ऊः स्यात् पौ परे। भूहः भूहा इत्यादि। †

## १८१। अनडुच्चतुरोऽणाणौ धिघ्योः।

(अनडुह्-चतुरः ६।, अण्-आणौ १॥, धिघ्योः ७॥)।

अनडुह्-चतुरश्च धौ परे अण् घौ परे आण् स्यात्, ण इत्। ‡

## १८२। हो नः सौ। (हः ६।, नः ११, सौ ७।)।

अनडुहो हस्य नः स्यात् सौ परे। अनड्वान्। हे अनड्वन्।

---

* वाह् इति वहधातोः (१०२८) विण्प्रत्ययेन सिद्धम्। औ-करणेऽपि सिद्धे औ-करणं हसात् परस्यापि प्राप्त्यर्थं, तेन वार्वाह् शब्दस्य शसादौ वारौहः इत्यादि। विश्व-वाह्-शस् = विश्व-औह्-शस् (२३) = विश्वौहः इत्यादि। पाणिनिः ६।४।१३२,६।१।८९।

† अः अवर्णः, न अः अनस्तस्मात् अनात्। यादृग्जातीयस्य विप्रतिषेधो विधि-रपि तादृग्जातीयस्येति न्यायात् अवर्णसजातीयोऽजेव ग्राह्यः, न तु हस्। ततश्च— पूर्व्वसूत्रम् अवर्णविषयं हस्विषयञ्च, एतत् सूत्रम् इवर्णाद्यच्-विषयमिति। भूवाह्-शस् = भू-ऊह्-शस् (२२) = भूहः। एवं शालिवाह्-शस् (१८०, ३५) = शाल्यूहः इत्यादि। अकारान्तोपपद एव वाहः साधुरिति कैयटादयः, तेन तन्मते भूवाट् शालिवाट् इत्यादि पदानि असाधूनि। पाणिनिः ६।४।१३२।

‡ अनडुश्चतुरः इति एकवचनं क्रमनिरासार्थम्। अणाणौ धिघ्योरित्युभयत्र द्विव-चनान्तत्वात् क्रमोऽस्त्येव। (१७) णित्त्वादन्त्याचः परौ भवतः। पाणिनि ७।१।९८,९९।

अनड्वाहौ अनड्वाहः। अनडुहः अनडुहा।*

१८३। स्रसुध्वसवस्वनडुहां दङ् फे।

(स्रस्-ध्वस्-वसु-अनडुहां ६।।।, दङ् ।१।, फे ७।)।

एषां दङ् स्यात् फे परे, ङकावितौ। अनडुद्भ्यामित्यादि।†

१८४। श्वेतवाहवयाजुक्थशासपुरोडाशां डसङ्।

(श्वेतवाह—पुरोडाशां ६।।।, डसङ् ।१।)।

एषामन्तस्य डसङ् स्यात् फे परे, डङावितौ।‡

१८५। अत्वसोऽधोः सौ घोऽधौ।

(अतु-असः ६।, अधोः ६।, सौ ७।, घः १।, अधौ ७।)।

अत्वन्तस्यासन्तस्य च घः स्यात् अधौ सौ परे, न तु धोः। श्वेतवाः।§

---

* उभयोरनुवृत्तावपि चतुरो हकाराभावात् अनडुह एवेत्यर्थः। अनडुह्-सि (१४८, १८१)=अनडु-आ-ह(२५,१८२)=.अनड्वान्। धौ अनड्वन् इत्यादि। पाणिनिः ७।१।८२।

† स्रन्स ध्वन्स धातुभ्यां क्विप्प्रत्यये स्रस् ध्वस् शब्दौ, वसुरिति (१०९६)क्वसु-प्रत्ययान्तः विद्वस् प्रभृतिः। (१७) दङो ङित्त्वादन्त्यस्य स्थाने। झपझसोरित्यनेन (६४) सस्य दे सिद्धेऽपि, सोर्विः फे (१०२) इत्यस्य बलवत्त्वेन बाधितत्वादनेन दङ्विधानम्। सुवः इत्यत्र सुपूर्व्वक वस धातोः क्विपि वसुप्रत्ययान्तत्वाभावान्न दङ्। पाणिनि ८।२।७२।

‡ ङित्त्वादन्त्यस्य स्थाने, (१२६) डित्त्वात् टिलोपः, अस् इत्यस्य स्थितिः। श्वेतवाह् अवयाज् उक्थशास् पुरोडाश् एतेभ्यो डसविधानेन सिद्धावपि, एतेषां स्थाने डसङ्-करणं डसङो लिङ्गभाजित्वार्थं, तेन श्वेतवाहादीनामसन्तत्वात् अत्वसोऽधोरिति दीर्घः स्यात्। अत्वसोऽधोरित्यत्र असन्तलिङ्गस्यैव ग्रहणं, तेन दन्त्यशासौ सर्पेति दन्त्यस् इत्यत्र न दीर्घः। पाणिनिः ३।२।७१,७२।

§ अतुश्च अस् च तस्य। अतुप्रत्ययेन अत्भागान्तस्य (४४१,४४२) धात्ववयवभिन्नास्-भागान्तस्य च (३४२,३४३,४६६,१०२२,१०९६,११०३) दीर्घः स्यात् धिभिन्ने सौ परे

## १८६। ढसडो धौ वा। (ढसडः ६।, धौ ७।, वा ।१।)।

ढसडो धौ परे वौं वा स्यात्। हे श्वेतवाः हे श्वेतवः। श्वेतवाहौ श्वेतवाहः, श्वेतवाहं श्वेतवाहौ श्वेतौहः श्वेतवाहः, श्वेतौहा श्वेतवाहा श्वेतवोभ्यामित्यादि। *

(१११) क्विलादिति षः। तुराषाट् तुराषाड् तुरासाहौ तुरासाहः, तुरासाहं तुरासाहौ तुरासाहः, तुरासाहा तुराषाड्भ्यामित्यादि। †

चत्वारः चतुरः, ‡ चतुर्भिः चतुर्भ्यः चतुर्भ्यः। (११०) नुमाम-इति चतुर्णाम्।

## १८७। रङो विः सुपि। (रङः ६।, विः ११, सुपि ७।)।

रङो विः स्यात् सुपि परे, न त्वन्य-रेफस्य। चतुर्षु। §

---

इत्यर्थः। अत्वन्तस्य यथा श्रीमान् मघवान् युष्मदर्थे भवान् इत्यादि। अत्वन्तस्य किं, भवन् कुर्वन् इत्यादौ (११००) अनन्तस्य न स्यात्। अधोः किं, सुवः इति। श्वेतवाह्-सि (१४८,१८४,१८५,१०२)=श्वेतवाः (इन्द्रः)। पाणिनिः ६।४।१४।

* (१८४) श्वेतवाहेत्यनेन क्वतडसडोऽकारस्य दीर्घः स्याद्वा धौ परे इत्यर्थः। हे श्वेतवाह-सि [धि] १८४)=श्वेतवस्, अनेन दीर्घे, (१०२)=श्वेतवाः, वा श्वेतवः। श्वेतवाह्-अस् (१७९, २३)=श्वेतौहः, वा श्वेतवाहः इत्यादि। श्वेतवाह्-भ्याम् (१८४; १०२, ६९)=श्वेतवोभ्याम्। पाणिनिः ८।२।६७।

† तुरां वेगं सहते इति (१०२८) तुरासाह्-सि (१४८, १७५, १११, ६४)=तुराषाट् तुराषाड् (इन्द्रः) इत्यादि। "तुरं सहते इत्यर्थे छन्दसि सहः इति (३।२।६३) ण्विः। लोके तु साहयतेः क्विप्" इति सिद्धान्तकौमुदी। इति हकारान्ताः।

‡ चतुर्-जस् (१८१,२५,१०२)=चत्वारः, शसि चतुरः।

§ (१०२) सोरित्यनेन विसर्गसिद्धावपि अयमारम्भो नियमाय, तेन सुपि परे रेफस्य विसर्गो भवन् (२२७) रङ एव स्यात् न त्वन्यरेफस्य। अतः चतुर्-सु (१११)=चतुर्षु इत्यादौ न (१०२) विसर्गः, पिपठीःषु, सजूःषु, अहःसु इत्यादौ स्यादिति। पाणिनिः ८।३।१६।

प्रियचत्वाः, हे प्रियचत्वः, प्रियचत्वारौ प्रियचत्वारः, प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः, प्रियचतुरा प्रियचतुर्भ्यामित्यादि। *

(१६४) नसबम्महन्न इति घत्वे, (११८) नो लुप्। राजा, हे राजन्, राजानौ राजानः, राजानं राजानौ। (११७) अनोऽल्लोपः। राज्ञः, राज्ञा राजभ्यामित्यादि। ङौ—राज्ञि राजनि। †

(११७) अम्वस्यादित्युक्तेः ब्रह्मणः यज्वनः इत्यादि। शेषं राजवत्।

## १८८। हन्पूषार्य्यम्नोऽधौ सौ शौ घः।

(हन्—इनः ६।, अधौ ७।, सौ ७।, शौ ७।, घः १।)।

एषां घः स्यात् अधौ सौ परे, शौ च।

वृत्रहा, हे वृत्रहन्, वृत्रहणौ वृत्रहणः, वृत्रहणं वृत्रहणौ। ‡

## १८९। हनो ङ्को घ्नो न णः।

(हनः ६।, ङ्कः ६।, घ्नः १।, न ।१।, णः १।)।

---

* प्रियचत्वा इति प्रियाश्चत्वारो यस्य सः इति गौण्ये सर्व्वलिङ्गभाजित्वम्। प्रियचतुर्-सि (१४८, १८१, १०२)=प्रियचत्वाः इत्यादि। इति रकारान्ताः।

† राजा इत्यत्र आदौ नस्य लुपि (१५) तदाद्यविधिर्निषेधात् दीर्घो न स्यादत आह नसबम्महन्न इति घत्वे नो लुप् इति। प्रकृतेः पूर्व्वपूर्व्वं स्यादन्तरङ्गतरं तथेति न्यायात् अन्तरङ्गत्वादादौ अकार-दीर्घ इत्यभिप्रायः। सिलोपस्तु सर्व्वादावेव, सर्व्वविधिभ्यो लोपविधिर्बलवानिति न्यायादिति भावः। राजन्-सि (१४८, घत्वे नो लुप्)=राजा।

‡ हनधातुनिष्पन्न-हन् इत्यस्य, पूषन् अर्य्यमन् इति शब्दद्वयस्य, इन्भागान्तस्य च दीर्घः स्यादित्यर्थः। नान्तत्वात् (१६४) प्राप्तदीर्घस्य नियमोऽयं, तेन एषां सौ शौ च परे एव दीर्घो नान्यस्मिन् धौ परे इति। प्लीहन् दीर्घाहन् फल्याहन् इत्यादीनां हनधातु-निष्पन्नत्वाभावात् नसबम्महन्न इत्यनेनैव दीर्घः। वृत्रं हतवान् इति वृत्रहा इन्द्रः। पाणिनि. ६।४।१२,१३।

हनस्थाने जातस्य ह्नस्य घ्नः स्यात्, तस्य च नस्य णो न स्यात्।
वृत्रघ्नः वृत्रघ्ना वृत्रहभ्यामित्यादि।
एवं पूषन् अर्य्यमन् शार्ङ्गिन् यशस्विन् प्रभृतयः। *

१९०। पूष्णो ङिर्ङिर्वा।

(पूषः ५।, ङिः १।, ङिः १।, वा ।१।)।

पूषि पूष्णि पूषणि। †

१९१। मघोनस्तुङ् वा क्षिप्योः।

(मघोनः ६।, तुङ् ।१।, वा ।१।, क्षि-प्योः ७॥)।

मघवन् शब्दस्य तुङ् वा स्यात् क्षौ पौ च परं, उङावितौ। ‡

१९२। त्रिदचोऽह्रे र्नुण् धौ।

(उ-ऋ-इत्-अच: ६।, अहेः ६।, नुण् ।१।, धौ ७।)।

उकारेत ऋकारेतोऽचश्च नुण् स्यात् धौ परे, न तु ह्रेः। §

---

* हन इति हनधातुसम्बन्धिनो ह्नस्यैवेत्यर्थः, तेन हाधातुनिष्पन्ने अह्नि पूर्व्वाह्ण इत्यादौ घ्नादेशो न स्यात्। णत्वनिषेधस्तु सति सम्भवे। वृत्रहन्-अस् (११७=वृत्रह्नः, अनेन घ्ने)=वृत्रघ्नः इत्यादि। पूषा अर्य्यमा च सूर्य्यः। पाणिनिः ७।३।५४, ८।४।२२।

† पूषन्शब्दात् परो ङि-ङिः स्याद्वा। ङित्वात् (१२६) टिलोपे पूषि, एतत् पदं पाणिनीयादिभिर्न मन्यते; सारस्वतानुसारेणात्र लिखितम्। पक्षे (११७) अनोऽल्लोपो वा इति पूष्णि पूषणि।

‡ तुङः उकारेत् (१९२) नुणर्थं, ङकारेत् (१७) अन्त्यवर्ण-स्थाने आगमनार्थम्। पौ परे यथा, माघवतं माघवत्यं माघवती। मघवङ्क्तिरिति पदं (९३) लुकि न तवेत्यत्र नञा निर्द्दिष्टमनित्यमिति न्यायात् सिद्धमिति केचित्। मघशब्दात् वतुप्रत्ययेन सिद्धो मघवच्छब्दोऽप्यस्ति, तुङ्करणन्तु प्राचीनानुवादार्थम्। अनुवृत्तावपि वा-ग्रहणं परत्र निवृत्त्यर्थम्। पाणिनिः ६।४।१२८।

§ उश्च ऋश्च ॠ, ॠ इत् यस्य स ॠित्, ॠिच्च अच्च तस्य। अच् इति क्विबन्त-गत्यर्थाञ्चो ग्रहणं, तेन बहवोऽचः (स्वराः) यस्मिन् स बह्वच् इत्यादौ न स्यात्। अथ, 'अहेरिति

## १९३। स्यान्तस्याराल्लुप् फे।

(स्यान्तस्य ६।, अरात् ५।, लुप् ।१।, फे ७।) ।

स्यस्यान्तस्य लुप् स्यात् फे परे, न तु रात् परस्य। *

मघवान् मघवा, हे मघवन्, मघवन्तौ मघवानौ, मघवन्तः मघवानः, मघवन्तं मघवानं, मघवन्तौ मघवानौ। †

## १९४। श्वयुवमघोनामुवौऽते पौ।

(श्व-युव-मघोनाम् ६।।।, उः १।, वः ६।, अते ७।, पौ ७।) ।

एषां वशब्दस्य उः स्यात् पौ परे, न तु ते। ‡

---

निषेधोऽयं धातुरेव न चान्यत' इति विद्यानिवासः, तेन क्वसुप्रत्यये जगन्वान् पेचिवान् इत्यादौ स्यादेव। . चिकीर्षन् इत्यादौ तु सनन्तादीनां (६३१) पृथक् धातुसंज्ञाविधानात् द्विरुक्तनिबन्धनो नुम्निषेधो न स्यादिति। यङ्लुगन्तस्य तु न पृथक् धातुसंज्ञा कृता (६३१ सूत्रस्य टीकायां अदादिगणे यङ्लुगन्तस्य वर्जनात्)। अतएव पापचदित्युदाहरता क्रमदीश्वरेण यङ्लुगन्तान्न नुम् इत्युक्तम्। तेन परिलेलिहदित्येव। पाणिनिः ७।१।७०।

* स्यस्य अन्तः स्यान्तस्तस्य। सन्धिजातभिन्न-संयोगान्तस्य लुप् स्यात् फे परे, पूर्ववर्त्ति-रेफसंयोगस्य न स्यात्। लुप्करणात् (१५) आद्यविधिर्न स्यात्, सन्ध्यव्यायविहित-कार्यन्तु स्यादेव. तेन पिपच्शब्दस्य अनेन अन्त्यलुपि, (६४) झप्झमीरित्यनेन चप् जब् करणे पिपक् पिपग् इति। अरादिति किं—ऊर्क्, अमार्ट् इत्यादौ न संयोगान्तस्य लोपः। पाणिनिः ८।२।२३,२४।

† मघवन्-सि (१४८,१९१,१९२,१९३,१८५) = मघवान् इन्द्रः। तृङो विकल्पपक्षे (१६४,११८) = मघवा। हे मघवन्-सि [धि] (१४८,१९१,१९२.१९३) = मघवन्, तृङो विकल्पपक्षेऽपि मघवन् इति। मघवन्-औ (१९१) = मघवन्तौ, तृङो विकल्पपक्षे (१६४) = मघवानौ, इत्यादि।

‡ श्वन् च युवन् च मघवन् च ते तेषाम्। मघोनामिति निर्द्देशात् नान्तपक्षे एवायं विधिः, तेन मघवतः इत्यादौ न स्यात्। अते तद्धितभिन्ने पौ परे। तद्धिते तु शौवनं यौवनं माघवनमिति। गौणेऽप्ययं विधिः, तेन धृतशुनः बहुयूनः हृष्टमघोनः इति। पाणिनिः ६।४।१३३।

मघवतः मघोनः, मघवता मघोना, मघवद्भ्यां मघवभ्यामित्यादि । *

शुनः शुना । यूनः यूना इत्यादि ।

## १९५ । अर्व्वणोऽनञस्तुङ् त्योऽसौ तु ।

(अर्व्वणः ६।, अनञः ६।, तुङ् ।१।, त्ये ७।, असौ ७।, तु ।१।) ।

नञ्वर्जस्यार्व्वणो नस्य तुङ् स्यात् असौ त्ये परे । †

अर्व्वन्तौ अर्व्वन्तः, अर्व्वन्तम् अर्व्वन्तौ अर्व्वतः, अर्व्वता अर्व्वद्भ्याम् इत्यादि । अनञः किम् अनर्व्वा, हे अनर्व्वन्, अनर्व्वाणौ अनर्व्वाणः, इत्यादि । शेषं यज्ववत् । ‡

## १९६ । पथिमथ्यृभुक्षां थितो नमौ घौ ।

(पथि-मथि-ऋभुक्षां ६।।।, थ-इतोः ६।।, नमौ १।।, घौ ७।) ।

पथिन् मथिन् ऋभुक्षिन् एषां थस्य नम् स्यात् इकारस्य चाकारः घौ परे । §

---

* मघवन् शस्(१९१) = मघवतः । तुङो विकल्पे—(१९४,२३) = मघोनः इत्यादि ।

† नास्ति नञ् यत्र सोऽनञ् तस्य । सिभिन्नेषु सर्व्वेषु प्रत्ययेषु अर्व्वणस्तुङ् स्यात् । उकारित् (१९२) नुमर्थं, ङित्वादन्त्यस्य (१७) स्थाने । गौणेऽप्ययं विधिः, तेन अत्यर्व्वन्तौ इत्यादि । अर्व्वतां कुलम् अर्व्वत्कुलम् इत्यादौ (३१९) लुक्यपि, नञा निर्द्दिष्टमनित्यमिति न्यायात् (९३) लुकि न तन्नेत्यनेन न निषेधः । अर्व्वत इदम् आर्व्वतम् इत्यादौ प्रत्यये परे भवति । पाणिनिः ६।४।१२७ ।

‡ अर्व्वन्-औ = अर्व्वत्-औ (१९२) = अर्व्वन्तौ इत्यादि । अर्व्वा घोटकः । नञ्रहितदशायां विवर्जनात् नञ्युक्तदशायां सौ परे स्यादित्याशङ्क्याह अनर्व्वा इति, अत्रापि न स्यादित्यभिप्रायः ।

§ पन्थाश्च मन्थाश्च ऋभुक्षाश्च ते तेषाम् । थ च इश्च थितौ तयोः । नम् च आश्च नमौ । थस्य नम् इति सम्भवतः पथिमथोरेव, इकारस्य आकार इति सर्व्वेषामेव । (१७) मित्त्वादादौ । पाणिनौ ७।१।८६ इति सूत्रेण इतः अत् ; ७।१।८७ सूत्रेण तु थस्य न्यादेशः अतो न आत्करणम् । संक्षिप्तसारे प्रक्रियालाघवात् आनिति कृतम् ।

## १९७। टेरा सौ। (टे: ६।, आ ।१।, सौ ७।)।

पथ्यादीनां टेरा स्यात् सौ परे। पन्थाः पन्थानौ पन्थानः, पन्थानं पन्थानौ। *

## १९८। लोपोऽच्यघौ। (लोप: १।, अचि ७।, अघौ ७।)।

पथ्यादीनां टेर्लोप: स्यात् अघावचि परे।

पथ: पथा पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः। †

(१३१) षतिसञ्ज्ञाणा इति। पञ्च पञ्च पञ्चभि: पञ्चभ्य: पञ्चभ्य:।

## १९९। न्नो नामि घं:। (न: ६।, नामि ७।, घं: १।)।

नान्तस्य नामि परे घं: स्यात्। पञ्चानां, पञ्चसु। ‡

---

* सौ परे पूर्व्वसूत्रेण थस्य नमि इकारस्य च आकारे पन्थान् इति स्थिते राजा इतिवत् आदौ सिलोपे (१४८) पश्चान्नलोपे (११८) पन्था इति निर्व्विसर्गमेव रूपं स्यात्, एवं सम्बोधने नलोपाभावे हे पन्थान् इत्यनिष्टमपि स्यात्, अतः एतत्सूत्रकरणम्। इदानीन्तु आदौ टेराकारे हसपरत्वाभावात् सेर्लोपाभावे सस्य विसर्गे पन्था:, हे पन्था: इति। गौणेऽप्ययं विधि:, तेन अपन्था: इति। पथिन्-औ (१९६)=पन्थानौ इत्यादि। पाणिनि: ७।१।८५।

† लोपोऽचीति कृते पथिमथ्यृभुक्षामिति विशेषविधिना बाधितत्वादघेरच एव प्राप्तौ अघाविति पुन: कथनं यादृग्जातीयस्येति न्यायेन स्यादेरचएव प्राप्त्यर्थं, तेन पथोऽन्त पथ्यन्त इत्यादौ न प्रसङ्ग:। लोप: घौ इति कृतेऽपि स्त्रियां नान्तत्वाद्ङीपि अतिमथिनी अत्यृभुक्षिणी इत्यादौ टिलोपानिष्टापत्ति: स्यात्। क्लीबे तु अतिमथी अत्यृभुक्षी कुले इत्यादौ टिलोप: स्यादेव, जसशसोस्तु अतिमन्थानि अत्यृभुक्षाणि कुलानि। मन्था: मन्थन दण्ड:, ऋभुक्षा: इन्द्र:। भट्टोजिदीक्षितस्तु—"स्त्रियान्नान्तलक्षणे ङीपि भत्वाट्टिलोप: सुपथी नगरी, अतृभुक्षी सेना" इति लिखितवान्। एवमेव कौमरा:। पाणिनि ७।१।८८।

‡ नुम्सम्बन्धि-नकारेण सहित आम्=नाम् तस्मिन् नामि, तेन यज्वनां दक्षिणाः इत्यादौ न प्रसङ्ग:। पञ्चानामिति आमो (११०) नुमागमे अन्तरङ्गत्वादनेन दीर्घे (११८ नो लुप् फेऽधाविति नस्य लुप्। मुख्ये एवायं विधि:, गौणत्वे तु प्रियपञ्चामिति पाणिनि: ६।४।७।

## २००। वाष्टनो जस्शसोर्डौः।

(वा ।१।, अष्टनः ५।, जस्शसोः ६॥, डौः १।)।

अष्टनः परयो जस्शसो र्डौः स्यात् वा, ड इत्। अष्टौ अष्ट, अष्टौ अष्ट। *

## २०१। ङा क्नौ वा। (ङा ।१।, क्नौ ७।, वा ।१।)।

अष्टनो ङा स्यात् वा क्नौ परे, ङ इत्। अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम्, अष्टासु अष्टसु।†

## २०२। धोर्मोनः फम्वि।

(धोः ६।, मः ६।, नः १।, फम्वि ७।)।

धोर्मस्य नः स्यात् फे मे वे च परे। प्रशान् प्रशामौ प्रशामः, प्रशामं प्रशामौ, प्रशान्भ्यामित्यादि। ‡

---

* मुख्ये एवायं विधिः, तेन प्रियाष्टानः इत्यादौ न स्यात्। डौ इत्यस्य विकल्पपक्षे अष्ट इत्यत्र बलवत्त्वादादौ (१३१) जस्शसोर्लुकि (९३) लुकि न तन्नेति निषेधात् (२०१) न ङा। पाणिनिः ७।१।२१।

† ङ इत् (१७) अन्त्यस्य स्थाने। अनुवृत्तावपि वा-ग्रहणं परत्र निवृत्त्यर्थम्। अष्टानामिति आदौ (११०) नुमागमे पश्चात् अनेन ङादेशः, विकल्पपक्षे (११०) नुमागमे, (१९९) दीर्घे, (११८) नकारलुप्, एकाकृति पदद्वयम्। पाणिनिः ७।२।८४। इति नकारान्ताः।

‡ स्वादीय-हसस्यैव भसंज्ञकत्वे वमयोरप्राप्तौ पृथग्वचनम्। ततश्च धात्ववयवीभूत-मकारस्य फे परे न स्यात्, तिङन्तकृदन्तयो र्मकारस्य च वमयोः परयोः न स्यादित्यर्थः। प्र-शमधातोः क्विपि (१०३८) प्रशाम् शब्दः, प्रशाम्-सि (१४८) अनेन मस्य नः=प्रशान्। प्रशाम् भ्याम्, अनेन मस्य नः=प्रशान्भ्यां, (८३) दान्तवत्त्वात् न नस्य (५०) अनुस्वारः। तथा स्थानिवत्त्वात् नस्य न लुप् (११८)। वमयोः परयोः यथा, जङ्गन्मि जङ्गन्वः जङ्गन्मः, जगन्वान् इत्यादि। पाणिनि. ८।२।६४।

## २०३। इदमोऽयमियं पुंस्त्रियोः सौ।

(इदमः ६।, अयम्-इयम् ।१॥, पुंस्त्रियोः ७॥, सौ ७।)।

इदमः पुंलिङ्ग-स्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौ परे। अयम्। *

## २०४। टोमोऽदसश्च क्तौ।

(टः ६।, मः १।, अदसः ६।, च ।१।, क्तौ ७।)।

इदमोऽदसश्च दस्य मः स्यात् क्तौ परे। इमौ इमे, इमम् इमौ इमान्। †

## २०५। टौसोरिदमोऽनकोऽनः।

(टा-ओसि ७।, इदमः ६।, अनकः ६।, अनः १।)।

अनक इदमः टौसोः परयोरनः स्यात्। अनेन। ‡

## २०६। सभ्यः। (सभि ७।, अः १)।

अनक इदमः अः स्यात् से भे च परे। §

---

* अयमियम् इति लुप्तप्रथमाद्विवचनान्तं पुंस्त्रियोरित्यनेन यथासङ्ख्यार्थम्। इदन्तु मुख्यत्वे एव, गौणे तु अतीदम् अतीदमौ इत्यादि। पाणिनिः ७।२।१०८,१११।

† साक्षात् क्तौ परे इत्यर्थः। अस्य पुत्रः—इदम्पुत्रः, अमुष्य कन्या—अदःकन्या, अमीभिः कृतम्—अदःकृतम्, इत्यादौ सोर्लुकि न दस्य मः। इदम्-औ (१३३, २०४, २३)=इमौ। इदम्-जस् (१३३,२०४,११२,२३)=इमे इत्यादि। पाणिनिः ७।२।१०९।

‡ नास्ति अक् यस्य सोऽनक् तस्य। इदमो ग्रहणम् अदसो निवृत्त्यर्थम्। इदम्-टा =अन-टा (१०६,२३)=अनेन। पाणिनिः ७।२।११२ (इद स्थाने अन)।

§ स च भ च तस्मिन् सभि। अनक इदम इत्यनुवर्त्तते। विभक्त्यवयव-सभयोः परयोरित्यर्थः। तेन अस्य सिद्धिः इदंसिद्धिरित्यादौ न प्रसङ्गः। यत्तु मनूक्तौ—इमकस्मै धनं देहि, अथ अस्मै भूमिं देहि, इमकाभ्यां वेदोऽधीतः अथ आभ्यां शास्त्रमधीतम्, इति

(१०८) आ क्तिमभवि । आभ्याम् ।

## २०७ । भिस् भिसोऽदसश्च ।

(भिस् ।१।, भिस ६।, अदस: ५।, च ।१।) ।

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यात्, न स्वैस् । *
(१०६) ब्वेस्भ्येः । एभिः । (१३३) टेरत्वे, (२०४) दस्य मत्वे, (११२) ङे स्मै, पश्चात् (२०६) अः । अस्मै आभ्याम् एभ्यः, अस्मात् आभ्याम् एभ्यः, अस्य अनयोः एषाम्,† अस्मिन् अनयोः एषु ।

अनकः किम्—

## २०८ । त्यादिव्यासभोस्क्तिस्त्विस्वे वाक् प्राक् टे र्व्यक दश्च ।

(त्यादि—स्तेः ६।, वा ।१।, अक ।१।, प्राक् ।१।, टेः ५।, व्यक ।१।, दः १।, च ।१।) ।

त्याद्यन्तस्य व्यस्य स-भ-ओस्-वर्ज क्त्यन्त-स्तेः स्वेश्च टेः पूर्व्वोऽक् स्याद्वा, व्यकस्य दश्च । ‡

प्रयोगः—तत् नत्रा निर्द्दिष्टमनित्यमिति न्यायात् समाधानीयम् । अत्र सूत्रे इदम् इत्यत्र "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यैव ग्रहणम्" इति न्यायात् आमव्यवधानेऽपि स्यादिति वक्तव्यम् (हसन्तस्त्रीलिङ्गपादो द्रष्टव्यः) । पाणिनि ७।२।११३, १।१।२१ ।

* अत्र अनक इति विशेषणम् अदसोऽपि, अनकभ्याम् इदमदोभ्यां परस्य भिसो भिस् एव स्यात् तद्रूपेणैव स्थितिरित्यर्थः । तेन अमुकैरिति सिद्धम् । नैसदसश्चेति कृते सिद्धेऽपि गौरवं कदाचिदैसप्राप्त्यर्थं, तेन इमैर्गुणैरित्यादि सिद्धम् । क्रमदीश्वरेण तु "इमैर्विपक्वमिति तु इदमर्थेमशब्दस्य रूपम्" इति लिखितम् । पाणिनिः ७।१।११ ।

† इदम्-आम् (१३३,२०४,११३,२०६,१०६,१११)=एषाम् ।

‡ ति आदिर्यस्य स त्यादिः । सच भश्च ओस् च ते सभोसः, न विद्यन्ते सभोसो यत्र सा असभोस्, असभोस् क्तिर्यस्मात् सोऽसभोस्क्तिः, स चासौ स्तिश्चेति असभोस्क्तिस्तिः । त्यादिश्च व्यश्च असभोस्क्तिस्तिश्च स्तिर्यत्र तस्य ।

इमकेन इमकाभ्याम् इमकैरित्यादि । *

## २०९ । द्वीटौसीदेतयोरेनोऽनूक्तौ ।

(द्वी-टा ओसि ७।, इद-एतयोः ६॥, एनः १।, अनूक्तौ ७।) ।

द्वयां टौसोश्च परत इदमेतदोरिदेतयोरेनः स्यात् उक्तस्य पश्चादुक्तौ । †

इमं विद्धि हरेर्भक्तं विद्ध्यथैनं शिवार्च्चकम् ।
इमाविमान् वित्त शैवान् एनावेनांस्तु वैष्णवान् ॥
अनेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्च्चितः ।
अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः ॥ ‡

---

त्याद्यन्तस्य भवति पचतीत्यादि, व्यस्य प्र परा धिक् इत्यादिः, रु-भ-ओस्-भिन्न-विभक्त्यन्त-सर्व्वनामशब्दस्य केवलसर्व्वनामशब्दस्य च टेः (९२) पूर्व्वम् अक् स्यात् वा, अकि कृति अव्ययान्त-कस्य दश्च स्यादित्यर्थः ।

यथा—भवतकि भवतक इत्यादि । प्रक परका उच्चकैः धकित् इत्यादि । साभि इत्यव्ययस्य टेः पूर्व्वम् अक् न स्यादिति वक्तव्यम् । पूर्व्वणक युष्माककमित्यादि । सभोस्-त्यन्तस्येत् असे आसाम् आभ्याम् अनयोरित्यादिषु न स्यात, असकौ युष्मकत् इत्यादिषु सभयोरभावे स्यादेव । केवलस्य सर्व्वकेण सर्व्वकत्र इत्यादि । विभक्त्युत्पत्तेः पूर्व्वमकि कृते पुनर्व्विभक्त्यन्तस्य अक् न स्यात, तेन सर्व्वकेणक इत्यादयः प्रयोगा न स्युः । पाणिनिः ५।३।७१,७२ ।

* इमकेन इत्यादिषु विभक्त्युत्पत्तेः प्राक् अकि कृते (२०५, अन) (२०६, अ) (२०७, भिस्) एते आदेशा न स्युरिति ।

† द्वी च टा च ओस् च तस्मिन् । इतश्च एतश्च तौ तयोरिदेतयोः । अनु पश्चात् उक्तिः अनूक्तिस्तस्याम् । अनूक्तिरिह यमुद्दिश्य पूर्व्वमुक्तिः तमुद्दिश्य यदि पश्चादुक्तिः स्यादिति बोध्यं, तेन इमं भोजय, इमं प्रेरय, इत्यत्र एकस्य भोजनमपरस्य प्रेरणमतो न स्यात् । इदेतयोरिति निर्द्देशात् मकारदकारौ हित्वा भवतीति, तेन क्लीबे एनदिति (२४२) स्वयं वक्ष्यति । एन इति प्रकृत्यन्तरमप्यस्ति । पाणिनिः २।४।३४ ।

‡ हे साधो, इमं जनं हरेर्भक्तं विद्धि जानीहि इति उक्तिः, अथ, एनं (तमेव) शिवार्च्चकं विद्धि इति पश्चादुक्तिः । एवं सर्व्वत्र । हे साधवः, इमौ इमान् शैवान् वित्त, एनौ

(१३३) त्यदां टेरः क्वौ। कः कौ के इत्यादि।*

(१७७) झभान्तस्येति बस्य भः। भुत् भुद् बुधौ बुधः, बुधा भुद्भ्यामित्यादि।†

२१०। युजिरोऽसे नुण् घौ।

(युजिरः ६।, असे ७।, नुण् ।१।, घौ ७)।

युजिरो युज्शब्दस्य नुण् स्यात् घौ परे, नतु से।‡

२११। चुङ् क्रुङ् युङ् सृग् दिगसृगृत्विक् दधृक् दृक् स्पृक् स्रगुष्णिहां कुङ् भौ।

(चुङ्—उष्णिहां ६।।। कुङ् ।१।, भौ ७।)।

चवर्गान्तानामञ्चादीनाञ्च कुङ् स्यात् भौ परे।§

---

एनान् वैष्णवान् वित्त, यूयमिति शेष.। अत्र इमौ इमान् इत्युभयोर्विशेषणं शैवान् इति, तथा एनौ एनान् इत्युभयोर्विशेषणं वैष्णवानिति उक्तवता आचार्य्येण नानालिङ्गानां नानावचनान्तानां विशेष्याणाम् एकं विशेषणं परस्यैव लिङ्गसङ्ख्याञ्च भजतीति सूचितम्। अनेन कृष्णः पूजितः, अथ एनेन (तेनैव) गिरिशोऽर्चितः। अनयोः स्वामी केशवः, अथ एनयोः स्वामी शिवः इत्यर्थः। अत्र द्वितीयाया एकद्विबहुषु वचनेषु टा-ओस्-विभक्त्योश्च यथाक्रममुदाहृतमिति।

* कः इति किम् सि, लोपस्वरादेशयोस्तु स्वरादेशविधिर्बलीति न्यायात् आदौ (१३३) टेरत्वे, से विसर्गः। किम्-जस् (१३३, ११२, २३)=के इत्यादि। इति मकारान्ताः।

† बुध्यते इति बुधधातोः क्विपि, बुध्-सि (१४८,१७७,६४)=भुत् भुद् इत्यादि। इति धकारान्ताः।

‡ युजिर इति कथनात् "युजिर् योगे" इति धातोः क्विबन्तस्य युज्शब्दस्येत्यर्थः, नतु युज् समाधावित्यस्य। पाणिनिः ७।१।७१।

§ चुश्च अन्च् च क्रुन्च् च युनज् च सृज् च दिश् च असृज् च ऋत्विज् च दधृष् च दृश् च स्पृश् च सृश् च उष्णिह् च ते तेषाम्। चुश्चवर्गः, स च धात्ववयव एव बोध्यः, तेन बह्वच् बहुव्रज् इत्यादौ न स्यात्। युनग् इति युज्शब्दस्य (२१०) नुणि कृते रूपम्। अन्च

(५०) म्नोर्नुर्भस्यदान्ते। (५१) जपे अम् नोः। (१९३) स्वान्त-स्थारात् लुप् फे। युङ् युञ्जौ युञ्जः, युञ्जं युञ्जौ युजः, युजा युग्भ्यामित्यादि। *

असे किं—सुयुक् सुयुजौ सुयुजः इत्यादि। युजिरः किं—युक् समाधिमान्। अन्च क्रुन्च युजामेव प्राक् कुङ् पृथक्-ग्रहणात्, तेन खन् खञ्जौ खञ्जः इत्यादि। †

(१५४) भ्रक्राजेति षङ्। (१५५) षोड़ः फे। राट् राड् राजौ राजः। एवं विभ्राट् देवेट् परिव्राट् विश्वसृट् परिमृट्। ‡

---

क्रुन्च युन्ज एषां चवर्गान्तत्वेनैव प्राप्तौ पृथक्ग्रहणं नियमार्थं, नियमश्च एषां त्रयाणामेव (१९३) संयोगान्तलोपात् पूर्व्वं कुङ् स्यात्, अन्यथा संयुक्तचवर्गान्तानान्तु आदौ संयोगान्तलुप्। सज् असृज् ऋत्विज् एषां चवर्गान्तत्वेऽपि, (१५४) भ्रक्राजेति षङ्-बाधनार्थं ग्रहणम्। ऊर्द्ध्वं स्निह्यतीति क्विपि उष्णिह्, अस्य (१७८) मुहादिविहितघडौ विकल्पपक्षे (१७५) होढोभावित्यस्य बाधनार्थं ग्रहणम्। कुङ् इति कुः कवर्गः, ङ इत्। चवर्गमध्ये छकारस्य (१५४)भ्रक्राजेति बाधितत्वेन, धात्ववयव ञकारासम्भवेन च च ज झ इत्येषां स्थाने क्रमेण क ग घ इत्येते स्युरित्यर्थः। चवर्गसाहचर्य्यात् अन्येषामपि अत्र गृहीतशब्दानां क ग घ एषामेकतम एव स्यात्. पश्चात् झपभमोरित्यनेन यथायोग्यं कगौ स्यातामित्यर्थः। रुज भुज धातुभ्यां क्तप्रत्यये रुग्णः भुग्नः इत्यादौ अन्तरङ्गत्वादादौ अनेन जस्य गकारे पश्चात् तकारस्य नकारः। रामानन्द-काशीश्वरौ तु अत्र कुङ् कृत्वा, रुग्ण-भुग्नादिसाधनाय सूत्रान्तरं कल्पयतः। भौ परे इति चवर्गान्तार्थमेव तेन चवर्गान्तधातूना-मपि स्यात्, अन्यथा केवलशब्दानामेव ग्रहणात् हसे विरामे चेत्यर्थः। विश्वसृज् शब्दस्य सिद्धान्तकौमुदीमते विश्वसृट् इति, क्रमदीश्वरमते तु विश्वसृक् इति रूपम्। पाणिनिः ३।२।५९, ८।२।३०,६२।

* युज-सि (१४८,२१०,२११,५०,५१,१९३)=युङ्। युज्-औ (२१०,५०,५१) =युञ्जौ। इत्यादि।

† खजि पाङ्गुल्ये इति खन्ज धातोः क्विप्प्रत्यये, खन्ज-सि (१४८,१९३)=खन्।

‡ राजते इति राजधातोः क्विपि राट् राड्। एवं विभ्राजते इति विभ्राट्। देवान् यजतीति देवेज् शब्दः। परिव्रजतीति, विश्वं सृजतीति, परिमृजतीति—परिव्राट् भिक्षुः, विश्वसृट् (वा विश्वसृक्) विधिः, परिमृट् मार्जकः।

## २१२। विश्वराजोऽदा। (विश्वराजः ६।, अत् ।१।, आ ।१।)।

विश्वराजोऽकारस्य आ स्यात् भौ परे।

विश्वाराट् विश्वाराड् विश्वराजौ विश्वराजः। *

## २१३। स्यादेः सो लोपः कोऽषढन्यरचः।

(स्यादेः ६।, सः ६।, लोपः १।, कः ६।, अषढन्यरचः ६।)।

स्यादौ स्थितस्य सस्य लोपः स्यात् भौ परे, कस्य च—न तु षढाभ्यामन्यस्य स्थाने जातस्य रचश्च। †

भ्रट् भ्रड्। (६४) झपझसोरिति सस्य दः, (४६) सुश्चुभिश्चुश्चादिति, भ्रज्जौ भ्रज्जः इत्यादि। ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः इत्यादि। ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः इत्यादि। अवयाः हे अवयाः हे अवयः अवयाजौ अवयाजः, अवयोभ्यामित्यादि। ‡

---

* विश्वराजशब्दस्य विश्वस्यैव अकारः सम्भवति अतस्तस्यैव आत्वं, तेनास्य धातुत्वासम्भवात् भा इत्यस्यानुवृत्तावपि तदन्तःपाति-फ परे एव बोध्यम्। विश्वराज्-सि (१४८,१५४,१५५,६४,२१२)=विश्वाराट् विश्वाराड्। पाणिनि. ६।३।१२८।

† स्यः संयोगः, स्यस्यादिः स्यादिस्तस्य। षश्च ढश्च षढौ ताभ्यामन्य षढन्यः, ततः (४३३) इदमर्थे णप्रत्यये षढन्यः षढन्यजात इत्यर्थः। रच इति उपचारात् रचधातु-सम्बन्धीत्यर्थः, षढन्यश्च रच च इति समाहारे षढन्यरच, न षढन्यरच अषढन्यरच तस्य, कः इत्यस्य विशेषणम्। संयोगादेः सस्य लोपः स्यात, एवं षढजातभिन्नककारं रचधातुककारञ्च वर्जयित्वा अन्य ककारस्य लोपः स्यात्, ततश्च जातककारमध्ये षढजातककारस्य रचभिन्नधातु-ककारस्य च (संयोगादिस्थितस्य) लोपः स्यात भौ परे इत्यर्थः। तेन, विविट् लिलिट् भाक्षीत् इत्यादौ स्यात्, नतु पिपक् गोरक् इत्यादौ। कस्नाता इत्यादौ संयोगस्यादान्तत्वान्न स्यात्। पाणिनिः ८।२।२९।

‡ भ्रस्ज-धातोः क्विपि, (६६१) भ्रस्ज्-सि (१४८,२१३,१५४,१५५,६४)=भ्रट् भ्रड्। ऊर्जधातोः क्विपि, ऊर्ज्-सि (१४८,२११,६४)=ऊर्क् ऊर्ग्। ऋतौ यजतीति ऋतु-यजधातोः क्विपि ऋत्विक् पुरोहितः। अवयजतीति निपातनात् विणि अवयाज्-सि (१४८,१८४,१८५,१०२)=अवयाः। सम्बोधने (१८६)=अवयाः अवयः। अवयाज्-भ्याम् (१८४, १०२,६९,२३)=अवयोभ्याम्। इति जकारान्ताः।

## २१४। त्यदां तदोः सः सौ।

(त्यदां ६।।।, तदोः ६।।, सः १।, सौ ७।)।

त्यदादीनां तदयोः सः स्यात् सौ परे। स्यः त्यौ त्ये इत्यादि सर्व्ववत्। एवं तद्। एषः एतौ एते इत्यादि। *

(२०८) ह्रीटौसोदैतयोरेनोऽनक्काविति प्रयोगस्तु इदम्वत्। †

## २१५। युष्मदस्मदो-स्त्वाहौ युवावौ यूयवयौ त्वन्मदौ तुभ्यमह्यौ तवममौ सि-द्व-जस्-क्त-ङे-ङसु।

(युष्मद् अस्मदोः ६।।, त्व-अहौ १।।, युव-आवौ १।।, यूय वयौ १।।, त्वद्-मदौ १।।, तुभ्य-मह्यौ १।।, तव-ममौ १।।, सि-द्व-जस्-क्त-ङे-ङसु ७।।।)।

अनयोः क्रमादेते आदेशाः एषु परेषु क्रमात् स्युः। ‡

## २१६। ङेभ्योर्मः। (ङे भ्योः ६।।, मः १।)।

---

* त्यदामिति बहुवचनं गणार्थं त्यदादीनामित्यर्थः। सौ परे त्यदादीनां (१३३) टेरकारे अवशिष्टौ यौ तकारदकारौ तयोः स्थाने सः स्यादित्यर्थः। तेन त्यद्-तद्-एतदां तकारस्य अदसो दकारस्येति यावत्। अत्र सिसंज्ञकानां त्यदादीनां ग्रहणात् अतित्यदादीनां न स्यात्। पाणिनिः ७।२।१०६।

† इदम्वदिति——एतं विद्धि हरेर्भक्तं विद्यार्थैनं शिवार्च्चकमित्यादि।

‡ त्वश्च अहश्च त्वाहौ इत्यादि द्वन्द्वः। सिश्च द्वश्च जस् च क्तश्च ङेश्च ङस् च ते तेषु। द्वं द्विवचनं, क्तम् एकवचनम्। मुख्यत्वे गौणत्वे चायं विधिः, यथा त्वम् अहम्, अतित्वम् अत्यहम्।

| क्रमश्च—— | औ परे | द्विवचने | जसि परे | एकवचने | ङे परे | ङसि परे |
| --- | --- | --- | --- | --- | --- | --- |
| युष्मदः स्थाने | त्व | युव | यूय | त्वद् | तुभ्य | तव |
| अस्मदः स्थाने | अह | आव | वय | मद् | मह्य | मम |

पाणिनिः ७।२।९४,९२,९३,९७,९५,९६।

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य ये च मः स्यात् । त्वं अहं । *

## २१७ । सभमौष्वाङ् । (स-भ-अम्-औषु ७॥, आङ् ।१) ।

युष्मदस्मदोराङ् स्यात् से भे अमि औकारे च परे ।
युवां आवां, यूयं वयं, त्वां मां, युवां आवां । †

## २१८ । शस्-भ्यस्-ङसि-भ्यस्-ङस्-सामां न-ङभ्यम्-त-त-डाकमः । (शस्—सामां ६॥, न—आकमः १॥) ।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न-ङभ्यम्-त-त-ड-आकम् एते क्रमात् स्युः, ड इत् । युष्मान् अस्मान् । ‡

---

* एतदादिषु चतुर्षु सूत्रेषु विधानं मुख्यगौणसाधारणम् आचार्य्यसम्मतम् । युष्मद्, अस्मद्-सि (२१५,२१६)=त्वं अहं । पाणिनिः ७।१।२८ ।

† आङो ङ इत् अन्त्यवर्णस्थाने । भे परे आङ्करणं भिस्स्थाने ऐस्वारणार्थम् । से भे मात्रादेव, तेन त्वं युष्मत् इत्यादौ न आङ् । युष्मद्, अस्मद्-औ (२१५,२१७,२१६) =युवां, आवां । युष्मद्, अस्मद्-अम् (२१५,२१७,२१६)=त्वां मां । पाणिनिः ७।२।८८ ।

‡ स्वसम्बन्धि-सकारेण सहित आम्=साम्, शस् च भ्यस् च इत्यादिद्वन्द्वे तेषाम् । न च ङभ्यम् च इत्यादिद्वन्द्वे ते । अत्र नकारे तकारद्वये च अकार उच्चारणार्थः । (१३१) ङतिव्यष्णान्तेत्यादिना लिङ्गविहित-कार्य्यनिषेधात् (१०५) पुंसि तु शस् न इत्यस्य अप्राप्तौ त्रिषु लिङ्गेषु शसो न-विधानम् । भ्यसो भ्यम् न कृत्वा ङभ्यम्करणम् (२१७) आङ्निवारणार्थम् । ङसौ ङकरणं (१०६) स्यवारणार्थम् । आमः सुम् (११३) मुख्ये एव भवति, अत्र च साम आकम्विधानात् गौणे आमः (२१९) एङ् एव ।

क्रमश्च——

| शस् | ४ भ्यस् | ङसि | ५ भ्यस् | ङस् | साम् | एषां | स्थाने— |
|---|---|---|---|---|---|---|---|
| न् | ङभ्यम् | त | त् | ड | आकम् | एते | क्रमात् स्युः । |

युष्मद्, अस्मद्-शस् (१२३,२१८,१०४)=युष्मान्, अस्मान् । पाणिनिः ७।१।२९.३०,३२, ३१,२७,३३ ।

## २१९। एङ् टाङ्यामि। (एङ् ।१।, टा-ङि-आमि ७।)।

युष्मदस्मदोरेङ् स्यात् टाङ्योः परयोरामि च, ङ इत्। *

त्वया मया युवाभ्यां आवाभ्यां युष्माभिः अस्माभिः, तुभ्यं मह्यं युवाभ्यां आवाभ्यां युष्मभ्यं अस्मभ्यं, त्वत् मत् युवाभ्यां आवाभ्यां युष्मत् अस्मत्, तव मम युवयोः आवयोः युष्माकं अस्माकं। †

अतित्वयां अतिमयां अतियुवयां अत्यावयां अतियुष्मयां अत्यस्मयां। ‡

(२१५) क-द्वयोरर्थस्यापि ग्रहणात्। एवं सर्व्वत्र। §

---

* एङो ङ इत् अन्त्यस्य स्थाने। मुख्यत्वे (२१८) आम आकमविधानात् अत्र आमीति गौणार्थमेव। पाणिनि. ७।२।८९।

† युष्मद, अस्मद्-टा (२१५, १३३, २१९, ३५) =त्वया, मया। युष्मद, अस्मद भ्याम् (२१५,२१७) =युवाभ्यां, आवाभ्यां। युष्मद् अस्मद् भिस (२१७)=युष्माभिः, अस्माभिः। युष्मद्, अस्मद् ङे (२१५,२१६) =तुभ्यं, मह्यं। युष्मद, अस्मद्-४ भ्यस् (२१८,१२६) =युष्मभ्यं, अस्मभ्यं। युष्मद्, अस्मद्-ङसि (२१५,२१८) =त्वत्, मत्। युष्मद, अस्मद्-५ भ्यस (१३३,२१८)= युष्मत अस्मत। युष्मद्, अस्मद्-ङस् (२१५, २१८ १२६)= तव, मम। युष्मद्, अस्मद्-ओस् (२१५,१०६,१०२)=युवयोः, आवयोः। युष्मद्, अस्मद्-आम् (१३३, ११२, २१८)=युष्माकं, अस्माकं।

‡ त्वामतिक्रान्तानामिति वाक्ये अतियुष्मद्शब्दस्य आम्विभक्तौ, व्यासवाक्यान्तर्गतत्वामिति एकवचनस्य अर्थं गृहीत्वा (२१५) त्वद् आदेशे, (१३३,२१९,३५) अतित्वयामिति, एवं मामतिक्रान्तानाम् अतिमयां। युवामतिक्रान्तानामिति वाक्ये युवामिति द्विवचनस्य अर्थं गृहीत्वा युव आदेशे अतियुवया, एवम् आवामतिक्रान्तानाम् अत्यावयां। युष्मान् अतिक्रान्तानामिति वाक्ये बहुत्वे आदेशाभावात् अतियुष्मद्शब्दस्य आम्विभक्तौ (१३३,२१९,३५) अतियुष्मया, एवम् अत्यस्मयामिति।

§ अतित्वयामित्यादौ बहुवचने त्वदाद्यादेशाः कथमित्याशङ्क्याह क-द्वयोरिति। तत्रायमर्थः—युष्मदस्मदो र्मुख्यत्वे गौणत्वे च, (२१५) सि-जस्-ङे-ङसां स्वरूपेण ग्रहणात् तेषु परेषु त्व अह यूय वय तुभ्य मह्य तव मम एते आदेशाः स्युरेव। सिजसादिरन्यत्र युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वमदौ, द्विवचने परे युवावौ, बहुवचने

त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु। *

## २२०। ङीचीषीणां क्तैङ्त्वैं स्ते-मे वां-नौ वस्-नसौ वाऽपादवाक्यादा-वचवाहाहैवाद्दगद्दश्यथैं-स्त्वा-मा त्वमा।

(ङी-ची-षीणा ६॥, क्तै. ३॥ ङैः ३॥, त्वै. ३॥, ते मे ।१॥, वां-नौ ।२॥, वस्-नसौ १॥, वा ।१।, अपादवाक्यादौ ७।, अं च वा ह अह एव अद्दगद्दश्यथैः ३॥, त्वा मा ।२॥, तु ।१।, अमा ३।)।

---

परे स्वरूपेणावस्थानम्। गौणत्वे तु परविभक्तिमनादृत्य केवलयुष्मदस्मदार्थकत्वे त्वमदौ, द्वित्वे युवावौ, बहुत्वे स्वरूपेणावस्थानमिति उदाहरणं यथा—त्वामतिक्रान्तः त्वामतिक्रान्तौ त्वामतिक्रान्ताः इत्यादि वाक्येषु—अतित्वं अतित्वां अतियूयं, अतित्वां अतित्वां अतित्वान्, अतित्वया अतित्वाभ्यां अतित्वाभिः, अतितुभ्यं अतित्वाभ्यां अतित्वभ्यं, अतित्वत् अतित्वाभ्यां अतित्वत्, अतितव अतित्वयोः अतित्वयां, अतित्वयि अतित्वयोः अतित्वासु। युवामतिक्रान्तः युवामतिक्रान्तौ युवामतिक्रान्ताः इत्यादि वाक्येषु—अतित्वं अतियुवां अतियूयं, अतियुवां अतियुवां अतियुवान्, अतियुवया अतियुवाभ्यां अतियुवाभिः, अतितुभ्यं अतियुवाभ्यां अतियुवभ्यं, अतियुवत् अतियुवाभ्यां अतियुवत्, अतितव अतियुवयोः अतियुवयां, अतियुवयि अतियुवयोः अतियुवासु। युष्मानतिक्रान्तः युष्मानतिक्रान्तौ युष्मानतिक्रान्ताः इत्यादि वाक्येषु—अतित्वं अतियुष्मां अतियूयं, अतियुष्मां अतियुष्मां अतियुष्मान्, अतियुष्मया अतियुष्माभ्यां अतियुष्माभिः, अतितुभ्यं अतियुष्माभ्यां अतियुष्मभ्यं, अतियुष्मत् अतियुष्माभ्यां अतियुष्मत्, अतितव अतियुष्मयोः अतियुष्मयां, अतियुष्मयि अतियुष्मयोः अतियुष्मासु। एवं मामतिक्रान्तः इत्यादिषु आवामतिक्रान्तः इत्यादिषु अस्मानतिक्रान्तः इत्यादिषु च युष्मद्वत् प्रयोगः। त्वया कृतं त्वत्कृतम्, मम धनं मद्धनम्, त्वामिच्छति त्वद्यति, त्वामाचष्टे त्वदयति, त्वदीषदूनं त्वत्कल्पं इत्यादि विभक्तिलुकि अपि एकवचनस्य अर्थं गृहीत्वा त्वमदादेशः स्यादेव।

द्विवचनस्यार्थे क्वचिदादेशा न स्युरिति वक्तव्यं यथा, युवयोरयं युष्मदीयं, युवयोर्धनं युष्मद्धनम्, आवयोर्गुरुः अस्मद्गुरुः, आवाभ्यां कृतं अस्मत्कृतम्। युवामिच्छति युवामिवाचरति वा युष्मद्यति, युवामाचष्टे युष्मयति, इत्यादावपि द्विवचनार्थे आदेशो न स्यात्।

* युष्मद्, अस्मद्-ङि (२१५, १३३, २१८, ३५)=त्वयि, मयि। युष्मद्, अस्मद्-सुप् (२१७)=युष्मासु, अस्मासु। अत्र "णिङक्तिवन्तयोश्च त्वमादावस्मादौ" इत्यादिभिः क्रमदीश्वरसूत्रैः णिच्क्तिवन्तयोः युष्मदस्मदोरुदाहरणानि तेन प्रदर्शितानि। यथा, युष्मान् युष्माभिः युष्मभ्यं (युष्मभ्यमिति कातन्त्रम्), युष्मत् युष्माकम् (युष्मानिति कातन्त्रम्), युष्मासु।

युष्मदस्मदोः ङीचीषीणां ङ्कैः सहितयो स्ते-मे, ङ्है वां-नौ, ङ्वै वस्-नसौ, क्रमाद्वा स्याताम्, अमा-युक्तयोस्तु त्वा-मा, न तु पादस्य वाक्यस्य चादौ स्थितयोः, न चवाद्ये-रदर्शनार्थदृश्यर्थ-श्रुभिश्च योगे । *

दामोदरस्त्वावतु मापि मित्र,
ददातु ते मेऽपि मुदं मुकुन्दः ।
निहन्तु ते विष्णुरघानि मेऽपि,
रक्षत्वसौ वामपि नौ मुरारिः ॥
ददातु वां नावपि शर्म्म कृष्णः,
करोतु वां श्रीदयितो दयां नौ ।

---

* पादश्च वाक्यञ्च पादवाक्ये, तयोरादिः पादवाक्यादिः, न पादवाक्यादिरपाद-वाक्यादिस्तस्मिन् । पादः पद्यचतुर्भागैकभागः, "पादशब्देनात्र ऋक्पादः श्लोकपादश्च गृह्यते" इति पाणिनिटीका । वाक्य परस्परमाकाङ्क्षपदसमूहः । "साख्यातं साव्ययं सकारकं सविशेषणं वाक्यमिहाभिप्रेतम्, न तु लौकिकपदसङ्घातः सम्बन्धार्थो वाक्य मिति" इति क्रमदीश्वरः । दृक् दर्शनम्, न दृक् अदृक्, दृशिर्दर्शनसमर्थो येषां ते दृश्यर्थाः, अदृशि अदर्शने दृश्यर्था: अदृग्दृश्यर्थाः ; च च वा च ह च अह च एव च अदृग्दृश्यर्थाश्च ते चवाहाहैवादृग्दृश्यर्थाः, पश्चात् नञ्योगे तैः ।

द्वितीया-चतुर्थी-षष्ठीनाम् एकवचनैः सह युष्मदस्मदो स्ते-मे, द्विवचनैः सह वां-नौ, बहुवचनैः सह वस्-नसौ, अमा सहितयोस्तु त्वा-मा, क्रमात् वा स्याताम् । अमा सहितयो स्त्वा-मा इति विशेषाभिधानेन चतुर्थीषष्ठ्योरेकवचनेन ते-मे, द्वितीयैकवचनेन त्वा-मा इति निष्कर्षः । पादस्य वाक्यस्य वा आदौ स्थितयोः युष्मदस्मदोरेते आदेशा न स्युः । च वा ह अह एव इति पञ्चभिरव्ययैर्योगेऽपि एते आदेशा न स्युः । अत्र ह अह स्थाने हा ह इति व्याख्यानमयुक्तं पाणिनि-सर्व्ववर्म्म-चन्द्र-पद्मनाभ-क्रमदीश्वरादि-मतविरोधात् । एवं स्वभावात् दर्शनार्था ये धातवस्ते यदि धातूनामनेकार्थत्वात् दर्शनभिन्ने अर्थे वर्त्तन्ते, तदा तैर्योगेऽपि एते आदेशा न स्युरित्यर्थः । पाणिनिः ८।१।२२,२०,२१,१८,२४,२५,२२ ।

पुष्णातु वो नोऽपि हरिर्धनं वो
ददातु नो. हन्त्वशुभानि वो न: ॥ *

अपादवाक्यादौ किं—

युष्मानवत्वविरतं कृष्णोऽस्मान् पातु शङ्कर: । †

अ-चादियोगे‡ किं—

तुभ्यं मह्यञ्च दद्यात् स्वं गोविन्दो मह्यमेव शम् ।
श्रीकण्ठो मामपेच्य त्वा-मालोकयति पूजकम् ॥ §

---

* हे मित्र, दामोदर: श्रीकृष्ण: त्वा (त्वां) मा (मां) अपि अवतु रक्षतु । मुकुन्द: ते (तुभ्य) मे (मह्य) अपि मुदं हर्षं ददातु । विष्णु: ते (तव) मे (मम) अपि अघानि पापानि निहन्तु । असौ मुरारि: वां (युवां) नौ (आवां) अपि रक्षतु । कृष्ण: वां (युवाभ्यां) नौ (आवाभ्यां) अपि शम्म सुखं ददातु । श्रीदयित: श्रीपति: वां (युवयो:) नौ (आवयो:) दयां करोतु । हरि: व: (युष्मान्) न: (अस्मान्) अपि पुष्णातु । व: (युष्मभ्य) न: (अस्मभ्यं) धनं ददातु । व. (युष्माकं) न: (अस्माकं) अशुभानि हन्तु ।

हीचाषीर्णामित्यस्य एतानि यथाक्रममुदाहरणानि ।

† प्रत्युदाहरणनु—

कृष्ण: अविरतं निरन्तरं युष्मान् अवतु, इत्यत्र युष्मान् इति पादादिस्थितत्वात् न व इति आदेश: । अस्मान् शङ्कर: पातु इति वाक्यादिस्थितत्वात न न इति आदेश: ।

‡ योगे इति कथनात साक्षाद्योगेऽयं निषेध:, परम्परासम्बन्धे तु आदेश: स्यादेव ; यथा हरौ हरिश्च मे स्वामी । इति सिद्धान्तकौमुदी । अत्र चादिभि र्न युष्मदस्मदोर्योग: अपि तु अर्थान्तरस्य, तथापि त्वादय: स्यु: । इति क्रमदीश्वर: ।

§ गोविन्द: तुभ्यं मह्यञ्च स्व धनं दद्यात्, शं कल्याणं मह्यमेव दद्यादिति शेष: । अत्र तुभ्यमिति पादादिस्थितत्वात्, मह्यञ्चेति मह्यमेवेति च चादियोगात् न आदेश: । अत्र युष्मदस्मद्भ्यामेव चादियोगे निषेध:, तेन रामो धनमेव दद्यात ते इत्यादौ स्यादेव । श्रीकण्ठ: मामपेक्ष्य त्यक्त्वा त्वां पूजकम् आलोकयति विचारयतीत्यर्थ:, अत्र ईक्षधातु: लोकधातुश्च दर्शनार्थोऽपि इह पुनस्त्यागार्थो विचारार्थश्च प्रयुक्त:, अतोऽदर्शनार्थ-ह्स्त्वर्थधातुयोगे न आदेश इति ।—ते मे इत्यादिकम् अव्ययमप्यस्ति, तेन श्रीशे सास्वामित्यादि प्रयोग: । प्रथमातृतीययोरप्यादेशा इति वामन:, तेन "गेये केन विनीतौ वां," वां युवामिति प्रथमायुक्तस्यादेश: । एव "कारितास्ते यतोऽतस्त्वां," अत्र ते त्वया इति तृतीयायुक्तस्यादेश इति ।

## २२१ । सदान्वक्ते ऽसादिप्रथात् ।

(सदा ।१।, अन्वक्ते ७।, असादिप्रथात् ५।) ।

अनयोरेते अन्वादेशे नित्यं स्युः, न तु सपूर्व्वात् प्रथान्तात् परयोः ।

यूयं वयं विनीतास्तत् पातु वो नो महेश्वरः ।
यूयं वयं हितास्तेन, सोऽस्मान् पातु स वः शिवः ॥*

## २२२ । नाविशेष्यान्याद्यामन्त्रात् ।

(न ।१।, अविशेष्यान्याद्यामन्त्रात् ५।) ।

विशेष्यपूर्व्वमनामन्त्रपूर्व्वञ्च हित्वा अन्यस्मादामन्त्रादेते आदेशा न स्युः ।†

शम्भोऽस्मान् रक्ष, लक्ष्मीश सेव्य नोऽवाव सर्व्व नः ।‡

---

* अनु पश्चादुक्तम् अन्वक्तं तस्मिन् । आदिना पूर्व्वस्थपदान्तरेण सह वर्त्तते या सा सादि, सादिश्चासौ प्रथा चेति सादिप्रथा, पश्चान्नञ्योगे तस्याः । अन्वादेशे उक्तस्य पश्चादुक्तौ युष्मदस्मदोः स्थाने एते आदेशा नित्यं स्युः किन्तु पूर्व्वस्थितपदान्तरेण सहितात् प्रथमान्तपदात् परयो र्युष्मदस्मदो-रन्वक्तावपि एते आदेशा नित्यं न स्युः, पूर्व्वसूत्रेणैव विभाषया स्युरित्यर्थः । यूयं वयं विनीता इति उक्तिः, तस्मात् महेश्वरः वो युष्मान् नोऽस्मान् पातु इति पश्चादुक्तौ नित्यमादेशः । सपूर्व्वात् प्रथमान्तात्, यूयं वयं हिताः, तेन स शिवः अस्मान् पातु, स वो युष्मान् पातु इति शेषः । अत्र विकल्पेनादेशः । पाणिनि. ८।१।२६ ।

† विशेष्यञ्च अन्यच्च ते विशेष्यान्ये, अन्यदिति आमन्त्रभिन्नपदमित्यर्थः । ते आदौ यस्य तत् विशेष्यान्यादि, तच्च तत् आमन्त्रञ्चेति विशेष्यान्याद्यामन्त्रं, पश्चात् नञ्योगे तस्मात् । आमन्त्रं सम्बोधनविहित-प्रथमान्तपदम् । विशेष्यामन्त्रपूर्व्वं यदामन्त्रं आमन्त्रभिन्नपदपूर्व्वञ्च यदामन्त्रम् एतदुभयभिन्नादामन्त्रात् परयो र्युष्मदस्मदोरेते आदेशा न स्युः, ततश्च पूर्व्वपदरहितात् विशेषणपूर्व्वाच्च आमन्त्रात् परयो र्न स्युरिति निष्कर्षः । पाणिनिः ८।१।७२,७३ ।

‡ शम्भोऽस्मान् रक्ष इति उदाहृत्य, प्रत्युदाहरति हे लक्ष्मीश सेव्य नोऽस्मान् अव, हे सर्व्व नोऽस्मान् अव, लक्ष्मीशेति विशेष्यपूर्व्वात् सेव्य इत्यामन्त्रात् परतया

सुपात् सुपादौ सुपादः, सुपादं सुपादौ। *

## २२३। पात् पत् पौ। (पात् ।१।, पत् ।१।, पौ ।७।)।

पादः पत् स्यात् पौ परे। सुपदः सुपदा सुपाद्भ्यामित्यादि। †

(२११) चुडिति कुङ्। (५०) नंस्य नुः। (५१) नोर्ङः। (१९३) स्यान्तस्य लुप्। प्राङ् प्राञ्चौ प्राञ्चः, प्राञ्चं प्राञ्चौ। एवं क्रुञ्चतिर्य्यञ्चोदञ्चादयः। ‡

## २२४। अचोऽल्लोपो घंश्च।

(अचः ।६।, अल्लोपः ।१।, घंः ।१।, च ।१।)।

अचोऽकारस्य लोपः स्यात् पौ परे, पूर्व्वस्य च घंः। प्रतीचः प्रतीचा प्रत्यग्भ्यामित्यादि। §

---

निषेधो नाभूत्, एवम् अव इत्यनामन्त्र्यपूर्व्वात् सर्व्वं इत्यामन्त्र्यात् परतया निषेधो नाभूदिति।

* सु शोभनौ पादौ यस्येति विग्रहे (३४७) पादस्थाने पाद्-आदेशः। सुपात् सुपाद इति च सिद्धान्तकौमुदी।

† (३४७) पादस्थाने आदिष्टपादशब्दस्य पद् स्यात् पौ परे इत्यर्थः। स्त्रियां सुपदी, त्रिपदीत्यादि। क्लीबे त्रिपदी वस्तुनी इति। योगविभागात् द्विपदा इत्यपि। पाणिनिः ६।४।१३०। इति दकारान्ताः।

‡ अनु गतिपूजनयोरित्यस्य क्विपि (५६८) पूजार्थत्वान्नलोपाभावे प्रान्च् इति लिङ्गम्; गत्यर्थस्य तु नलोपे प्राच् इति लिङ्गम् तथापि (१९२) त्रिदचइति नुणि कृते प्राङ् प्राञ्चौ प्राञ्च इति, स्यादिपञ्चके उभयोरेव समानं रूपं, शसादौ तु पूजार्थस्य— प्राञ्चः प्राञ्चा प्राङ्भ्यां प्राङ्क्षु, गत्यर्थस्य च प्राचः प्राचा प्राग्भ्यां प्राक्षु इति भेदः। क्रुञ्चतीति क्रुङ्, तिरः वक्रम् अञ्चतीति तिर्य्यङ्, उत् ऊर्द्ध्वम् अञ्चतीति उदङ्, सर्व्वत्र क्विपि रूपम्।

§ अच् इति गत्यर्थाञ्चधातोः क्विपि ग्रहणम्। घंश्चेति सम्भवपरो विधिः, तेन स्वभावदीर्घादपि अल्लोपः स्यात्, यथा नदीचः गोचः इत्यादि। गोच इत्यत्र पूर्व्वं

## २२५। तिर्य्यगमुमुयगदमुयगुदचां तिरश्चामुमुईचादमुईचोदीचः।

(तिर्य्यक्—उदचां ६।।।, तिरश्च—उदीचः १।।।)।

एषामेते क्रमात् स्युः पौ परे।

तिरश्चः तिरश्चा तिर्य्यग्भ्यामित्यादि।

अमुमुईचः अमुमुईचा अमुमुयग्भ्यामित्यादि। एवमदमुयङ्।

उदीचः उदीचा उदग्भ्यामित्यादि। शेषं पूर्व्ववत्। *

(१५४) शश्चेति चस्य षत्वे, तन्निमित्तस्य शस्य सत्वे, (२१३) स्यादेः सो लोपः। सुव्रट् सुव्रड् सुव्रश्चौ सुव्रश्चः इत्यादि।†

(१६४) नसव्महन्न इति घः। (१९३) स्यान्तस्य लोपः। महान् महान्तौ महान्तः, महान्तं महान्तौ महतः, महता महद्भ्यामित्यादि।

---

ह्रस्वाभावान्न दीर्घः, अल्लोपस्य विशेषात् (३९) गोर्व्वेत्यस्य च न विषयः। दिवं अञ्चतीति दिवच्शब्दस्य शसि अनेन अल्लोपे (२४०) वस्य उत्वे, अनेन दीर्घे द्यूच इत्यादि। अत्र अल्लोपो घंश्चेति कृतेऽपीष्टसिद्धौ अचो ग्रहणं पूर्व्वं पदान्तरस्थितेरावश्यकत्वं ज्ञापयति, तेन केवलस्य अचः—अचः, अचा इत्यादौ न प्रसङ्गः। प्रति अञ्चतीति प्रत्यच् इति लिङ्गम्। पाणिनिः ६।४।१३८, ६।३।१३८।

* तिर्य्यच अमुमुयच् अदमुयच् उदच् इत्येषां स्थाने तिरश्च अमुमुईच अदमुईच उदीच् इत्येते आदेशाः क्रमात् स्युः। अमुमुईच अदमुईच इति सन्ध्यभावनिर्द्देशात् न सन्धिः। तिरः अञ्चतीति तिर्य्यङ्। अमुमञ्चतीति अमुमुयङ्, अदमुयङ्। उत् अञ्चतीति उदङ्। सर्व्वत्र अन्चधातोः क्विप्। शेषं पूर्व्ववत् प्रान्च-शब्दवदित्यर्थः। पाणिनिः ६।४।१३९, ६।३।९४, ८।२।८०।

† सुव्रट् इति, व्रस्च् श छेदे इति व्रस्च धातुर्दन्त्यमध्यः, पश्चात् चकारयोगात् (४६) तालव्यमध्यः। नकारजावनुस्वारपञ्चमौ झलिधातोः। सकारजः शकारश्च षाड्वर्गात्तवर्गजः॥ सुव्रश्चतीति क्विपि (१६१) सुव्रश् इति रूपं, सुव्रश्-सि (१४८, १५४, चस्याने ष, ततः निमित्तस्यापाये नैमित्तिकस्याप्यपाय इति न्यायात् शस्थाने स, ततः २१३, १५५, ६४)—सुव्रट् सुव्रड्। इति चकारान्ताः।

भवन् भवन्तौ भवन्तः, भवन्तं भवन्तौ भवतः, भवता भवद्भ्या-मित्यादि । शेषं महद्वत् ।

(१८५) अत्वसोऽधोरिति—श्रीमान्, शेषं भवद्वत्, एवं यशस्व-दादयः । *

## २२६ । भगवदघवद्भवतां भगोऽघोभो वा धौ ।

(भगवत्-अघवत्-भवतां ६।॥, भगो-अघो-भो ।१।॥, वा ।१।, धौ ७।) ।

एषामेते क्रमात् स्युर्वा धौ परे । हे भगोः हे भगवन्, हे अघोः हे अघवन्, हे भोः हे भवन् । शेषं श्रीमद्वत् । †

(१९२) अद्वेरित्युक्ते-र्न नुण्—ददत् ददतौ ददतः इत्यादि । एवं जक्षत्-जाग्रदादयः । ‡

---

* महानिति, मह त् क पूजे इति धातोरौणादिकोऽत्प्रत्ययः । अत्वन्तस्यापि (१६४) नसन्महन्न इत्यत्र महतो ग्रहणात् स्यादिपञ्चके दीर्घः । भवन्निति भूधातोः शतृप्रत्यये भवत इति रूपं, ऋदित्त्वात् (१९२) त्रिदच इति नुण्, (१९३) स्यान्तस्य लुप् । सर्व्वनाम्नस्तु भवत्-शब्दस्य भाधातोर्डवतुप्रत्ययेन रूपम्, तत्र सि-विभक्तौ अत्वन्तत्वेन (१८५) दीर्घः । श्रीर्विद्यतेऽस्य श्रीमान्, एवं यशो विद्यतेऽस्य यशस्वानित्यादयः।

† भगवदघवतोर्वत्वन्तयोः भवतश्च डवत्वन्तस्य ग्रहणम् । भगवदघवद्भवतो वत उस् इति कृते उसन्तत्वात् रङ् भवितुमर्हति, तथा धति विसर्गस्य रेफजातत्वात् भोः पते इत्यादौ (७४) खपि वेत्यस्य विषयः स्यात् । एषां टेर्डोस् इत्यकरणन्तु स्पष्टार्थम् । हे भगोः इत्यादौ हसात् सिलोपस्य प्राथमिकत्वेऽपि सर्व्वावयवादेशस्य बलवत्त्वात् प्रागेवा-देशे हसपरत्वाभावात् सिलोपाभावे विसर्गः । शेषं श्रीमद्वदिति—(१८५) अत्वसो-ऽधोरित्यनेन दीर्घो भविष्यतीत्यर्थः । सिद्धान्तकौमुदीमते भगोस् अघोस् भोस् एते सकारान्ता निपाताः । वृत्तिकार-भाष्यकृन्मते तु भोः शब्द एवाव्ययम् ।

‡ ददिति दाधातोः शतृप्रत्ययेन रूपं, द्विरुक्तत्वात् न नुण् । एवं जक्षत् जाग्रत् शासत् चकासत् बिभ्यत् जह्वत् प्रभृतयः । पाणिनिः ७।१।७८,६।१।६ । इति तकारान्ताः ।

(१५४) शक्राजेति षङ्—विट् विड् विशौ विशः, विशं विशौ विशः, विशा विड्भ्यामित्यादि ।

(१७८) मुहां घङ्इति—नक् नग् नट् नड् नशौ नशः, नशं नशौ नशः, नशा नग्भ्यां नड्भ्यामित्यादि ।

(१८४) श्वेतवाहेति डसङ्—पुरोडाः, हे पुरोडाः हे पुरोडः, पुरोडाशौ पुरोडाशः, पुरोडोभ्यामित्यादि ।

(२११) चुङिति कुङ्—स्रक् स्रग् स्रशौ स्रशः, स्रशा स्रग्भ्यामित्यादि । *

दधृक् दधृग् दधृषौ दधृषः, दधृग्भ्यामित्यादि ।

षट् षड्, षड्भिः षड्भ्यः षण्णां षट्सु । †

## २२७ । सषेसुससजुषह्नां रङ् फेऽन्तः ।

(सष इस् उस् सजुष् अह्नां ६।।।, रङ् ।१।, फे ७।, अन्तः ६।) ।

सस्य स्थाने जातस्य षस्य इसुसः सजुषोऽह्नश्च रङ् स्यात् फे परे, न तु चान्तस्य । ‡

---

* विश नश स्पृश धातोः क्विपि क्रमेण विश् नश् स्पृश् शब्दाः । पाणिनिः ८।२।६३,३।२।५८ । (१०२९) पुरः अग्रे दाश्यतेऽसौ पुरोडाः हविः, दाशधातोः विण्प्रत्ययेन निपातनात् सिद्धः । सम्बोधने (१८६) डसङो धौ वेति विकल्पः । पाणिनिः ३।२।७१ । इति शकारान्ताः ।

† धृषधातोः क्विपि निपातनात् दधृष्शब्दः सिद्धः । षण्णामिति (४८) निपातनात् सिद्धम् ।

‡ दन्त्यसस्य स्थाने जातो मूर्द्धन्य-षः सषः, सषश्च इस् च उस् च सजुष् च अहन् च तेषाम् । पिपठिष् चिकीर्ष् बुभूर्षादीनां क्विपः प्राक् षत्वे सस्थाने जात-षः । (१०३२) इसुसौ दन्त्यान्तौ, यथा पिस्ट गत्यां (पिस गतौ इति सिद्धान्तकौमुदी) सुपीः,

## २२८। व्यंनचतयीको धोर्घोऽकुर्कुरोऽखेः।

(विं ७।, अनचतयि ७।, इकः ६।, धोः ६।, घंः १।, अकुर्कुरः ६।, अखेः ६।)।

धोरिको घंः स्यात् वि रेफे च, न तु कुर्कुरोः, न च खेः, नाचि तये च। *

पिपठीः पिपठिषौ पिपठिषः, पिपठीर्भ्यां पिपठीःषु। एवं चिकीर्षादयः। †

---

तुस ध्वाने (तुस खण्डने इति सिद्धान्तकौमुदी) सुतूः, एवम् हविः धनुरित्यादि। सजुषो मूर्द्धन्यान्तत्वादप्राप्तौ पृथगुक्तिः, जुषी प्रीतिसेवनयोः, जोषणं जुट्, सह जुषा वर्त्तते या सा सजूः। चान्तस्य तु, लिहौ ञ ल स्वादे लिलिक्षतीति क्विपि लिलिट्, अत्र (१७५) हस्य ढत्वे (६०२) षढोः कः से इति ढस्य कत्वे, (१११) क्विलादित्यनेन सनः सस्य षत्वेऽपि चान्तत्वात् न रङ्। पिपठीस्तवः, आशीर्वादः, अहर्निशम् इत्यादौ विभक्तेर्लुकि विरामे रङ् स्यादेव। पाणिनिः ८।२।६६,६८ (रुः)।

* र ष व ष वं तस्मिन् विं, रेफसाहचर्य्यात् वकारोऽत्र दन्त्यः तेन उव्जतीत्यत्र न दीर्घः। तस्तद्धितः, तश्चासौ य चेति तय, अच्च तय च अच्तयौ, न विद्येते अच्तयौ यस्मात् सोऽनच्तय तस्मिन्, अनच्तयीति विं इत्यस्य विशेषणम्। कुर्च कुर्च कुर्कुर, न कुर्कुर अकुर्कुर तस्य। (५३८) न खिरखिस्तस्य। धातुसम्बन्धीयस्य कुर्कुर-भिन्नस्य इको घंः स्यात्, नास्ति अच् तयश्च यस्मात् तादृशे रेफे वकारे च परे, न तु खेरित्यर्थः। अत्र सूत्रे विं इति आदौ रेफस्य पश्चात् वकारस्य ग्रहणम्, वृत्तौ तु वि रेफे इति वैपरीत्यं अनच्तयीत्यनेन क्रमान्वयनिरासार्थम्। उदाहरणम् यथा, रेफे परे—गीः धूः पिपठीरित्यादि। वकारे परे—दीव्यति सीव्यतीत्यादि। अनच्तयीति किं—गिरौ दिवौ, धुर्य्यः दिव्यमित्यादि। तयसाहचर्य्यादत्र अच् प्रत्ययस्यैव, तेन गीरर्थः आशीरारम्भः इत्यादौ दीर्घः स्यादेव। धोः किं—हविः धनुरित्यादि। अकुर्कुरः किं—कुर्य्यात् कुर्य्यादित्यादि। अखेः किं—रीधातोः ठौ-विभक्तौ रिर्य्यैं, व्रीडधातोः विव्रीड, व्येधातोः संविव्युतुः इत्यादि। अनेन दीर्घे कृतेऽपि (५५९) भभखयहघेत्यनेन पुनर्ह्रस्वेनैवेष्टसिद्धौ अत्र कथं खिवर्जनमिति चेत्—अस्य विशेषविधित्वात् भभखघेत्यनेन पुनर्ह्रस्वासम्भवात्। पाणिनिः ८।२।७६—७९, वार्त्तिकद्वयञ्च।

† पठधातोः सनि पिपठिष इति धातोः क्विपि (७७५) हसाल्लोप इति अकारलोपे पिपठिष् इति लिङ्गम्। पिपठिष्-सि (१४८,२२७,२२८,१०२)= पिपठीः। एवं

दोः दोषौ दोषः। (११६) पाददन्तेति दोषन् वा। दोष्णः दोषः, दोष्णा दोषा दोषभ्यां दोर्भ्यामित्यादि।

(२१३) स्यादेः सौ लोपः। विविट् विविड् विविचौ विविचः, विविड्भ्यामित्यादि।

पिपक् पिपग् पिपचौ पिपचः, पिपग्भ्यामित्यादि। एवं गोरक्दिधचादयः। *

सुपीः सुपिसौ सुपिसः, सुपीर्भ्यां सुपीःषु। एवं सुतूः। विद्वान्, हे विद्वन्, विद्वांसौ विद्वांसः, विद्वांसं विद्वांसौ। †

## २२९। वंसो वः सेमप्युर्मतुप्योः।

(वंसोः ६।, वः १।, सेम् ।१।, अपि ।१।, उः १।, मतुप्योः ७॥)।

वसो वंशब्दः इमसहितोऽपि उः स्यात् मतौ पौ च परे। विदुषः विदुषा।(१८३)स्रसंध्वसवस्विति दङ्, विद्वद्भ्यामित्यादि।

---

चिकीर्षादय इति, एवमिति रङ्प्राप्त्यर्थं, न तु सर्व्वरूपसाम्यार्थं, तेन चिकीर्ष्शब्दस्य सुपि, षस्य रङि, (१९३) स्यान्तस्यारादित्यत्र स्यान्तस्येति भिन्नपदज्ञापकात् रादपि रङो लोपे. (१८७) रङो विः सुपीति नियमात् रेफस्य विसर्गाभावे (१११) किलादिति षत्वे चिकीर्षु इति पदम्। एवं वुवूर्ष्प्रभृति-शब्दस्यापि।

* दोरिति दमेर्डोसिरित्यौणादिकसूत्रेण दोष् इति लिङ्गं बाहुवाचकम्। दोष्-शस् (११६,११७,१११,१०२)=दोष्णः। विविट् इति विशधातोः सनि क्विपि च विविच इति लिङ्गम्, विविच्-सि (१४८,२१३,१५४,१५५,६४)=विविट् विविड्। पचधातोः सनि क्विपि च पिपच्शब्दस्य चकारजात-ककारस्य (२१३) लोपाभावे, (१९३) स्यान्तस्य लुपि पिपक् पिपग् इति। गां रक्षतीति गोरक्ष्शब्दस्य (२१३) रक्षवर्जनात् ककार-लोपाभावः। दहधातोः सनि क्विपि च दिधक् दिधग् इत्यादि। इति षकारान्ताः।

† सुपीरिति सुतूरिति च सुपूर्व्वकात् पिसधातोः तुसधातोश्च क्विपि, इसन्तत्वात् उसन्तत्वाच्च रङ्। विद्वानिति विदधातोः शतृप्रत्यये (११०३) शतुः क्वस्वादेशे, विद्वस्-सि (१४८,१९२,१६४,१९३)=विद्वान्। पाणिनिः ६।४।१३१, वार्त्तिकञ्च।

पेचिवान् पेचिवांसौ पेचिवांसः, पेचिवांसं पेचिवांसौ पेचुषः, पेचुषा पेचिवद्भ्यामित्यादि । जगन्वान् जगन्वांसौ जगन्वांसः, जगन्वांसं जगन्वांसौ । वस्योत्वे तन्निमित्तस्य नस्य मत्वे—*

**२३० । हनगमजनखनघसामुङ्लोपोऽङेऽच्युणौ ।**

(हन गम जन-खन घसां ६॥, उङ्-लोपः १।, अङे ७।, अचि ७।, अणौ ७।) ।

एषामुङ्लोपः स्यादणावचि, न तु ङे ।

जग्मुषः जग्मुषा जगन्वद्भ्यामित्यादि । एवं जग्मिवान् । †

(१६४) अधोरित्युक्तेः, सुहिन् सुहिंसौ सुहिंसः, सुहिन्भ्याम् । ध्वत् ध्वसौ ध्वसः, ध्वद्भ्याम् । एवं स्रत् ।

उक्थशाः, हे उक्थशाः हे उक्थशः, उक्थशासौ उक्थशासः, उक्थशोभ्यामित्यादि । ‡

---

* सूत्रे वइति अदन्तग्रहणात् अकारसहितस्यैव उः, इमसहितोऽपीति सति सम्भवे । वस्वन्तात् (४४२) मतोः प्रसङ्गाभावेऽपि, मतौ परे वसोर्वस्य उविधानं ज्ञापयति "वस्वन्तात् (४४१) मतुरेव भविष्यतीति", विद्वस्शब्दात् मतौ विदुष्मान् । पेचिवान् इति पचधातोः वसुः पेचिवस्-सि (१४८,१९२,१६४,१९३)=पेचिवान् । पेचिवस् औ (१९२ १६४,५०)=पेचिवांसौ । गमधातोः क्वसौ, वकारे परे (२०२) मस्य नकारे जगन्वस् इति लिङ्गम् । वस्योत्वे इति—शसि परे जगन्वस्शब्दस्य वस्य उत्वे, सएव वकारो निमित्तं यस्य स तन्निमित्तस्तादृशस्य नस्य, निमित्तस्याभावे नैमित्तिकस्याप्यभाव इति न्यायात्, मत्वे, जगमुष् इति स्थिते इत्यर्थः । पाणिनिः "वसोः सम्प्रसारणम्" इति (६।४।१३१) । अत्र अन्तरङ्गोऽपि इडागमः सम्प्रसारणविषये न प्रवर्त्तते, "अकृतव्यूहाः पाणिनीयाः" इति परिभाषया ।

† यस्मिन् परे गुणो निषिद्धस्तादृशे अचि परे (५६५) ङ भिन्ने, एतेषां पञ्चानां धातूनां उङोऽकारस्य लोपः स्यादित्यर्थः, अयमच् आख्यातकृतोरेव सम्भवति । अल्लोप इति कृते सिद्धेऽपि उङ्लोपकरणं (१११९) हिंसादुङ्लोपिन इति सूत्रे एषां ग्रहणार्थम् । जगम्-उष् इति गम् इत्यस्य अनेन उङ्लोपे जग्मुष इति । गमधातोः क्वसौ (१०९८) जग्मिवान् इति च । पाणिनिः ६।४।९८ ।

‡ (१६४) नमव्मइत्र इत्यत्र धात्ववयवत्वर्जनात्, सु हिनस्तीति क्विपि सुहिन्म्

## २३१ । पुंसोऽसुङ् घौ । (पुंस: ६।, असुङ् ।१।, घौ ७।) ।

पुंसोऽसुङ् स्यात् घौ परे, उङावितौ ।

पुमान् पुमांसौ पुमांसः, पुम्भ्यां पुंभ्यामित्यादि । *

## २३२ । से र्डौशनसपुरुदंशोऽनेहसोऽधेः ।

(से: ६।, डा ।१।, उशनस-पुरुदंशस्-अनेहस: ५।, अधे: ६।) ।

एभ्यः परस्य सेर्डा स्यात्, न तु घेः । उशना । †

## २३३ । घेर्डङनौ वोशनसः ।

(घे: ६।, ड-ङनौ १॥, वा ।१।, उशनस: ५।) ।

उशनसः परस्य घे र्ड-ङनौ वा स्तः, ड इत् । हे उशन हे उशनन् हे उशनः, उशनसौ उशनोभ्याम् । ‡

---

इत्यस्य न दीर्घः, (१९३) स्यान्तस्य लुप् सुहिन् इति । ध्वन्स धातोः क्विपि, ध्वस्-सि (१८३) ध्वत् इति । उक्थानि सामाङ्गानि शंसतीति (१०२९) विणि निपातनात्, उक्थशास्-सि (१४८,१८५,१०२) = उक्थशाः । ८।२।६७ पाणिनिसूत्रे चकारादुक्थशाः ।

* असुङ उदित्वात् (१९२) नुण्, ङित्वादन्त्यस्य स्थाने । पुम्स्-सि, असुङ् = पुमस् सि (१४८,१९२,१६४,१९३) = पुमान् । पुमस्-भ्याम् (१९३,५३,५२) = पुम्भ्यां, वा पुंभ्यां । पाणिनिः ७।१।८९ ।

† उशना दैत्यगुरुः । पुरुदंशा इन्द्रः, अयं शब्दः उकारवद्रेफवान् । अनेहा कालः । अनेन सेर्डा कृते (१२६) टेर्लोप इति टिलोपः । पाणिनिः ७।१।९४ ।

‡ ड-ङनौ र्ड इत, अ अन् स्थितिः । उशनसः सम्बोधने रूपत्रयम्—अदन्तं नान्तं सान्तञ्च । सान्तपक्षे (१८५) धिवर्जनान्न दीर्घः । "वशेः कनसिः" इत्यौणादिकसूत्रेण सम्प्रसारणाच्च उशनस्-घि (२३३,१२६) = उशन इत्यादि । "अस्य सम्बुद्धौ वानङ् नलोपश्च वा वाच्यः" इति वार्त्तिकम् । काशिकावृत्तौ च "सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्" इत्युक्तम् ।

अनेहा, हे अनेहः, अनेहसौ अनेहसः, एवं पुरुदंशा।
वेधाः, हे वेधः, वेधसौ वेधसः इत्यादि।
(१८५) अधोरित्युक्तेः, सुवः सुवसौ। *

**२३४। अदसः सेरौः।** (अदसः ५।, सेः ६।, औः १।)।

अदसः परस्य से-रौः स्यात्। असौ। †

**२३५। मात् स्वर्णावुऊ।** (मात् ५।, स्वर्णौ १॥, उ-ऊ।१॥)।

अदसो मात् परौ स्वर्णावुदूतावाप्नुतः। अमू। ‡

---

* अनेहस्-सि (२३२,१२६)=अनेहा कालः, "नञि हन एह च" इति औणादिकसूत्रेण असिः। "विधाञो वेध च" इत्यौणादिकसूत्रेण असिः, यद्वा विधधातोः असप्रत्यये वेधस्-सि (१४८,१८५,१०२)=वेधाः विधाता। सुपूर्व्वक-वसधातोः क्विप्-प्रत्यये सुवस् इत्यत्र अकारस्य धात्ववयवत्वात् (१८५) न दीर्घः।

† अत्र, पूर्व्वतः वाशब्दः केवलं व्यवस्थावाची भूत्वा अनुवर्त्तते। व्यवस्था च—अकयुक्तादद्सः से-रौर्व्वा, अनकस्तु नित्यमिति ; तेन असकौ अमुकः पुमान्, असकौ असुका स्त्री। अमुकः अमुका इत्याकाराणि पदानि त्वपाणिनीयानि "सौ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वञ्च" इति वार्त्तिकात् ; "अमुक इत्यागमिकम्" इति क्रमदीश्वरः। सुपद्मे तु "असकौ असुकौ वा, असुकश्चेत्येके" इति। क्लीवे तु सेर्लुकि कृते, (९३) लुकि न तत्रेति निषेधात् (२१४) त्यदां तदौरित्यस्य (२०४) दौमोऽदसश्चेत्यस्य च अप्राप्तौ अदक. कुलमिति। अदस्-सि (२३४,१३३,२१४)=असौ। पाणिनिः ७।२।१०७, वार्त्तिकञ्च।

‡ अदसशब्दस्य मकारात् परस्थितस्य ह्रस्वस्वरस्य स्थाने उ, दीर्घस्वरस्य स्थाने ऊ भवत इत्यर्थः। मात् किं, अमुष्य शिष्यः अदःशिष्यः, अमुष्य स्त्री अदःस्त्री इत्यादौ विभक्तिलुकि (९३) लुकि न तत्रेति निषेधात् (२०४) दस्य मकाराभावे मपरत्वाभावात् न उ। अत्र उ-ग्रहणेनैव उवर्णप्राप्तौ उ ऊ इत्युभयग्रहणं प्रत्ययादेशयोः इद्रहितेनाका सवर्णौ न गृह्यते (७) इति ज्ञापनार्थम्। अदस्-औ (१३३,२०४,१३,२३५)=अमू। पाणिनिः ८।२।८०।

## २३६। एरी ब्वे। (एः १।, ई ।१।, ब्वे ७।)।

अदसो मात् परो ब्वे निष्पन्न एकार ई स्यात्। अमी। अमुं अमू अमून्। (१२३) टादसस्त्रास्त्रियान्तु ना। अमुना अमूभ्यां अमीभिः, अमुष्मै अमूभ्यां अमीभ्यः, अमुष्मात् अमूभ्यां अमीभ्यः, अमुष्य अमुयोः अमीषां, अमुष्मिन् अमुयोः अमीषु। *

इति हसन्त पुंलिङ्ग पादः।

---

### २य पादः—हसन्त स्त्रीलिङ्ग शब्दः।

## २३७। नहो धङ् भौ। (नहः ६।, धङ् ।१।, भौ ७।)।

नहो हस्य धङ् स्यात् भौ परे।

उपानत् उपानद् उपानहौ उपानहः, उपानद्भ्यां। †

(२११) चुङिति कुङ्। उष्णिक् उष्णिहौ, उष्णिग्भ्यामित्यादि। ‡

---

* पूर्व्वतो मादित्यनुवर्त्तते। बहुवचनस्थानजात एकार ई स्यादित्यनेन अमू स्त्रियौ, अमू फले इत्यादौ न स्यात्। अदस्-जस् (१३३,२०४,११२,२३,२३६)=अमी। अदस्-अम् (१३३,२०४,१०३,२३५)=अमुं। अम-शस् (१०५,१०४,२३५)=अमून्। अम भ्याम् (१०८,२३५)=अमूभ्यां। अम भिस् (१०९,२३६,१०२)=अमीभिः। अमुष्मै इत्यादौ (१३३,२०४,११२,२३५,१११) एवं पदसिद्धिः। ङस् ओस् स्थाने (१०६) स्य योस् भवतः, आम्स्थाने (११३) साम् भवति। पाणिनिः ८।२।८१। इति सकारान्ताः।

---

† ङित्त्वादन्त्यस्य स्थाने, अतो व्याख्यायां हस्य धङ् इत्युक्तम्। भौ (८४) इति कथनात् लिङ्गस्य धातोश्च ग्रहणम्। उपानह्यतेऽनयेति क्विपि उपानत्, पादुकेत्यर्थः। धोत्तु अनात्सीत् अनद्ध इत्यादि। पाणिनिः ८।२।३४।

‡ ऊर्द्धं स्निह्यतीति (उद्-स्निह-क्विप्) उष्णिक्, छन्दोविशेषः वेदे प्रसिद्धः।

**२३८। दिव औङ् सौ ।** (दिवः ६।, औङ् ।१।, सौ ७।)।

दिव औङ् स्यात् सौ परे। द्यौः दिवौ दिवः। *

**२३९। वाम्याङ् ।** (वा ।१।, अमि ७।, आङ् ।१।)।

दिव आङ् स्यात् वा अमि परे। द्यां दिवं दिवौ दिवः, दिवा। †

**२४०। उहस्युङ् ।** (उहसि ७।, उङ् ।१।)।

दिव उङ् स्यात् उवर्णे हसि च परे। द्युभ्यां। ‡ गीः गिरौ गिरः। एवं पूः। §

---

* द्यौरिति स्वरादेशत्वादादौ वस्य औकारे सेर्विसर्गः। गौणत्वे चायं विधिः, तेन अतिद्यौरित्यपि। द्यौः स्वर्गः, आकाशश्च। "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः। पाणिनिः ७।१।८४।

† अयमपि मुख्यत्वे गौणत्वे च, दिव्शब्दस्य अमि द्यां दिवं, अतिदिव्शब्दस्य अतिद्यां अतिदिवं। ननु द्योशब्दस्य द्यामिति, दिव्शब्दस्य दिवमिति उभयपदसिद्धौ वाम्याङिति व्यर्थमिति चेन्न, (१४६) आ अम्शसोरित्यत्र मुख्यस्यैव ग्रहणेन अतिद्या-मित्यस्यानुपपत्तेः। पाणिनीयाः (पाणिनिपद्मनाभक्रमदीश्वरादयः) दिव्शब्दात् द्यामिति पदं न मन्यन्ते। कातन्त्रे तु "वाम्बा" इति सूत्रेण पदद्वयं स्यादेव।

‡ अत्र वेति नानुवर्त्तते अनिष्टत्वात्। इच्छया हि व्यवहितमप्यनुवर्त्तते अव्यव-हितमपि नानुवर्त्तते इति तान्त्रिकाः। स्यादिमध्ये सभाभ्यां विना अन्यहसोऽसम्भवात् सभि इति न कृत्वा हसि-ग्रहणं सामान्यहसप्राप्त्यर्थं, तेन दिवः पतिः द्युपतिरित्यादि। अत्र दिवो वकारः दान्ते स्थितो वक्तव्यः, तेन दिवमिच्छति दिव्यति, दिवि भवो दिव्य-इत्यादौ न स्यात्। (१६८) स्यमोर्लुक्यपि भवतीति च वक्तव्यं, तेन सुद्यु कुलमित्यादि। पाणिनिः ६।१।१३१। इति वकारान्ताः।

§ गिरतीति गॄधातोः क्विपि, गिर्-सि (१४८,२२८,१०२) = गीः, वाक्यम्। गिरौ इत्यादिषु रेफस्य अच्परत्वात् न दीर्घः।

(१५७) स्त्रियां त्रिचतुर इति चतसृ। चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणां चतसृषु। *

(१३३,२४८) टेरत्वे सत्याप्। का के काः इत्यादि, सर्व्वा-वत्। एवं यद्। †

(२०३) इदमोऽयमितीयं। इयं इमे इमाः, इमां इमे इमाः, अनया आभ्यां आभिः, अस्यै आभ्यां आभ्यः, अस्याः आभ्यां आभ्यः, अस्याः अनयोः आसां, अस्यां अनयोः आसु। ‡

स्रक् स्रजौ स्रजः, स्रग्भ्यां। §

(१३३,२४८) टेरत्वे आप्। स्या त्ये त्याः इत्यादि सर्व्वा-वत्। एवं तद् एतद्। ¶

वाक् वाचौ वाचः, वाग्भ्यां। ‖

अप्शब्दो ब्वान्तः। (१६४)नसबमहन्नइति घं। आपः,अपः।**

## २४१। भ्यपो दङ्। (भि ७, अपः ६।, दङ् ।१)।

अपो दङ् स्यात् भि परे। अद्भिः, अद्भ्यः अद्भ्यः, अपां अप्सु।††

---

* चतुर्शब्द. स्त्रीलिङ्ग त्रिशब्दवत्। इति रकारान्ताः।

† किम्-सि (१३३ २४८ १४८)=का इत्यादि।

‡ इदम्-औ (१३३,२०४,२४८,१४८,२३)=इमे। इमा-टा (२०५.१५०,३५)=अनया। इमा-भ्यां (२०६)=आभ्यां, इत्यादि सर्व्वावत् साध्यम। इति मकारान्ताः।

§ सृज्यते इति सृजधातोः क्विपि, स्रज् सि (२११,१४८)=स्रक् माला। इति जकारान्ताः।

¶ त्यद्-सि=त्या सि (२१४)=स्या। इति दकारान्ताः।

‖ उच्यतेऽसाविति वचधातोः क्विपि, वाच्-सि (२११ १४८)=वाक् वाक्यम्। इति चकारान्ताः।

** ब्वान्त इति शब्दशक्तिस्वभावादुक्तम्। आपो जलानीत्यर्थः।

†† अत्र याशब्दस्य नानुवृत्तिः। अत्र प्रकरणबलात् भ इति स्यादेरेव, तेन अब्भय-मित्यादौ न प्रसङ्गः। गौणेऽप्ययं, तेन स्वद्भ्यामित्यादि। पाणिनिः ७।४।४८। इति पकारान्ताः।

दिक् दिशौ दिशः, दिग्भ्यामित्यादि । एवं दृक् । *

त्विट् त्विषौ त्विषः, त्विड्भ्यामित्यादि । †

सजूः सजुषौ सजुषः, सजूर्भ्यां सजूःषु । एवं आशीः । ‡

(२३४) अदसः सेरौः । असौ अमू अमूः, अमूं अमू अमूः, अमुया अमूभ्यां अमूभिः, अमुष्मै अमूभ्यां अमूभ्यः, अमुष्याः अमूभ्यां अमूभ्यः, अमुष्याः अमुयोः अमूषां, अमुष्यां अमुयोः अमूषु । §

इति हसन्त स्त्रीलिङ्ग पादः ।

---

## ३य पादः—हसन्त क्लीवलिङ्ग शब्दः ।

(१६८) स्वमोर्लुगिति । (१८३) स्रस् ध्वस् वस्विति दङ् । स्वनडुत् स्वनडुही । (१८१) अनडुच्चतुरोऽणाणाविति । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । ¶

चत्वारि । ‖  ब्रह्म ।

---

* इति शकारान्ताः ।

† दिश् दृश् त्विष् धातुभ्यः क्विपि दिक् दृक् त्विट् इति पदानि ।

‡ जुषधातोः क्विपि जुट् प्रीतिः, सह जुषा वर्त्तते इति सजुष्-सि (१४८,२१७,२२८, १०३)—सजूः । आ-शास धातोः क्विपि आशीरिति. इसन्तत्वात् रङ्, विसौ च वेधा स्त्री त्वाशीर्हितायंशाहिदद्वयोरित्यमरसिंहेन दन्त्यान्तमध्ये पठितत्वात् । इति षकारान्ताः ।

§ असौ अमू अमू इत्यादिषु अदस्शब्दस्य सि-आदि-विभक्तिषु—(१३३,२४६,२१४, २३४.२०४,१४६,१५०,१५२.१३७,११३,२३५) इत्यादीनि सूत्राणि यथायथं प्रवर्त्तन्ते । इति सकारान्ताः ।

---

¶ शोभनोऽनड्वान् यस्मिन् गोष्ठे तत् स्वनडुत् । स्वनडुह्-औ (१६१)=स्वनडुही । स्वनडुह्-जस् (१६२,१६३,१८१,३५,५०)=स्वनड्वांहि । इति हकारान्ताः ।

‖ चतुर्-जस् (१६२,१८१,३५)—चत्वारि । इति रकारान्ताः ।

## २४२ । क्लीवे नो लुब्वा धौ ।

(क्लीवे ७।, नः ६।, लुप् ।१।, वा ।१।, धौ ७।) ।

नपुंसके नस्य लुप् स्यात् वा धौ परे । हे ब्रह्म हे ब्रह्मन्, ब्रह्मणी ब्रह्माणि । अहः अह्नी अहनी अहानि, अहोभ्यां । *

किं के कानि । इदं इमे इमानि । †

असृक् असृजी असृञ्जि, असानि असृञ्जि, अस्ना असृजा असभ्यां असृग्भ्यामित्यादि । ‡

ऊर्क् ऊर्ज्जी ऊर्न्जि ऊर्जि ।

सुवल् सुवल्गी सुवन्ल्गि सुवल्गि ।

(१६३) नुमयमेत्यत्र झसन्तरलयोरादौ तु वा नुण् । उकारेतो नुर्विन्दुमात्रस्य नाख्या । §

---

* (११८) नो लुप् फेऽधाविति धौ निषेधादप्राप्ते विभाषेयम् । लुप्करणात् तदादिविधेर्निषेधे हे धनि इत्यादौ (१७०) स्वधौ वेति गुणो न स्यात् । "सम्बुद्धौ नपुंसकानां न वा वाच्यः" इति वार्तिकम् । अहन्-सि (१४८,२२७,१०१) = अहः । अहन्-औ (१६१ ११७) = अह्नी, वा अहनी । अहन्-जस् (१६२,१६४) = अहानि । अहन् भ्याम् (२२७,१०२,६६) = अहोभ्यां । इति नकारान्ताः ।

† किम्-सि (१६८) = किम् । किम्-औ (१३३,१६१,२३) = के । किम्-जस् (१३३,१६२.१६३,१६४) = कानि । इदम्शब्दः किम्-शब्दवत्, (२०४) दौ म इति विशेषः । इति मकारान्ताः ।

‡ असृज्-सि (१६८,२११) = असृक् [रक्तम्] । असृज्-शस् (११६,१६२,१६४) = असानि, यमादौ निषेधात् (१६३) न नुण् । वा असनादेशे असृज्-शस् (१६२,१६३ ५०,५१) = असृञ्जि । अस्ना (११७) । असभ्यां (११८) ।

§ ऊर्जधातोः सु-वल्गधातोश्च क्विपि ऊर्ज-सुवल्ग-शब्दौ । ऊर्ज्ज सि (१६८,२११) = ऊर्क् । ऊर्ज्ज औ (१६१) = ऊर्ज्जी । ऊर्ज-शस् (१६२,१६३) = ऊर्न्जि, वा ऊर्जि इति जकारान्ताः । सुवल्ग-सि (१६८,१९३) = सुवल् । यंयम्यते इत्यादौ (८१७) अम जपश्रभेत्यादिना यथा नुरित्यनुस्वारागमः क्रियते, (१६३) नुमयमेत्यत्र न तथा, अः उकारेतो नु र्नकारः न तु विन्दुमात्रस्य अनुस्वारस्य संज्ञार्थः । अनुस्वारागमभ्रमनिवारणाय इदमुक्तम् । इति गकारान्ताः ।

त्यत् त्ये त्यानि। एवं यत् तत् एतत्।(२०९) अन्वादेशे तु एनत्। गवाक् गोची गवाञ्चि। तिर्य्यक् तिरश्ची तिर्य्यञ्चि। एवं परे। यकृत् यकृती यकृन्ति, यकानि यकृन्ति, यकभ्यां यकृद्भ्यामित्यादि। एवं शकृत्। ददत् ददती।*

## २४३। इः शतुर्नुण् शौ।

(इः ५।, शतुः ६।, नुण् ।१।, शौ ७।)।

इः परस्य शतुर्नुण् स्यात् वा शौ परे।

ददन्ति ददति। एवं यच्छत्-जाग्रदादयः। तुदत्।†

## २४४। आदीपोः। (आत् ५।, ई-ईपोः ७॥)।

अवर्णात् परस्य शतुर्नुण् स्याद्वा ईकारे ईपि च परे।

तुदन्ती तुदती तुदन्ति। भात् भान्ती भाती भान्ति।‡

पचत्।

---

* एनदिति (१६८) अमो लुकि कृते, (९३) लुकि न तन्नेति निषेधेऽपि (२०९) इदेतयोरेनादेशविधानसाफल्यार्थम् एतभागस्य एनादेशः स्यादेव, (१३३) टेरत्वाभावे दकारस्थितिः। ("एनदिति नपुंसकैकवचने" इति वार्त्तिकम्)। इति दकारान्ताः। गामञ्चतीति क्विपि गवाक्। गवाच्-औ (१६१,२२४)=गोची। सिद्धान्तकौमुद्याम् अन्चधातोः गतिपूजनार्थभेदेन विविधानि पदानि प्रदर्शितानि, यथा—गवाक् गवाग्, गोअक् गोअग्, गोक् गोग्; गवाङ् गोअङ् गोङ्; गोची, गवाञ्ची गोअञ्ची गोञ्ची; गवाञ्चि गोअञ्चि गोञ्चि इत्यादि। तिरः अञ्चतीति तिर्य्यक्। तिर्य्यच्-औ (१६१,२२५)=तिरश्ची। एवं परे, अदद्र्यगादय इत्यर्थः। इति चकारान्ताः। यकृत् रोगविशेषः, शकृत् तालव्यादिः विष्ठावाचकः, उभयत्र (११६) पाद्दन्तेति यकन् शकन् आदेशः। ददिति दाधातोः शतृप्रत्यये रूपम्।

† (१९२) त्रिदच इति वेर्निषेधादप्राप्ते विभाषेयम्। ददत्-जस् (१६२,२४३)= ददन्ति, वा ददति। तुदधातोः शतरि तुदत्। पाणिनिः ७।१।७९।

‡ ईपः पृथक्ग्रहणात् ई इति (१६१) क्लीवाद्यौ इत्यनेन आदिष्टस्य ईकारस्य ग्रहणं,

## २४५। अप्यनो नित्यं। (अप्-यन: ५।, नित्यं १।)।

अपो यनश्च परस्य शतुर्नित्यं नुण् स्यात् ई ईपो: परयो:। पचन्ती पचन्ति। दीव्यत् दीव्यन्ती दीव्यन्ति। *

स्वप् स्वपी। (१६४) नसवमहनोऽधो घं:। स्वाम्पि, स्वपा। (२४१) भ्यपो दङ्। स्वद्भि:। †

(२२७) सषेति रङ्। धनु: धनुषी धनूंषि। एवं हवि:। पय: पयसी पयांसि, पयसा पयोभ्यां। अद: अमू अमूनि। द्वी प्रीवत्। ‡

इति हसन्त क्लीवलिङ्ग पाद:।

---

तेन तुदत इदं तुदतीयमित्यादौ न प्रसङ्ग:। औ विभक्तौ तुदन्ती तुदती इति अनेन वा नुण्। जसि पूर्व्वेण (१६३) नित्यम्। भाधातो. शतप्रत्यये भात्। एवं या, वा, स्ना, श्रा, द्रा, पा, रा, ला. ख्या, मा, प्सा. धातुभ्य: शतप्रत्यये रूपम्। क्र्यादेराकारलोपेऽपि स्थानिवत्त्वात् क्रीणन्ती क्रीणती इत्यादि। लुनतीत्यत्र तु प्रथममाकारलुकि कृते नुम् न भवति इति गोयीचन्द्र.। अत्र स्यतप्रत्ययस्यापि वा नुण् वक्तव्यं, तेन यास्यन्ती यास्यती भविष्यन्ती भविष्यती इत्यादि। पाणिनि: ७।१।८०।

* धातोर्विहितात् अप: यनश्च परस्येत्यर्थ:, गच्छन्ती गमयन्ती पुत्रकाम्यन्ती ज्ञानीयन्ती इत्यादय:। मालेवाचरन्ती मालान्ती, वीणेवाचरन्ती वीणान्ती इत्यपि दुर्गसिंह:। विच्छधातो: (६३७) विच्छास्तुतिपणी वाय इति आयपक्षे अपि विच्छायन्ती इति नित्यं, विकल्पपक्षे तुदादित्वात् श्रे (२४४) विच्छन्ती विच्छती इति। कुर्व्वन्तीति धातुपारायणे, तद्बहुनामसम्मतमिति गोयीचन्द्र.। पाणिनि: ७।१।८१. इति तकारान्ता:।

† शोभना आपो यत्र सरसि तत् स्वप्, (४०४) नाच्चायां स्वतेरित्यादिना समासान्तनिषेध:। स्वप्-जस् (१६२,१६३ १६४,५०,५१) = स्वाम्पि। इति पकारान्ता:।

‡ धनधातोरुस् धनु:। हुधातोरिस् हवि:। पय इति (१६८) सेर्लुकि. (९३) लुकि न तत्रेति निषेधात् (१८५) न दीर्घ:। एवम् अद: इत्यत्रापि (२१४) द: सो न स्यात्। अम्विभक्तौ च (२०४) दो मो न स्यात्। इति सकारान्ता:।

## २७९। तन्वादेर्वा। (तन्वादेः ५।, वा ।१।)।

तनूः तनुः, चञ्चूः चञ्चुः। *

इति स्त्रीत्यपादः।

---

### २य पादः—कारकम् (क)।

## २८०। त्यर्थसम्बुद्ध्युक्तार्थे प्री।

(त्यर्थ सम्बुद्धि उक्तार्थे ७।, प्री ।१।)।

लेरर्थे सम्बोधने त्यैरुक्तार्थे के सति च प्री स्यात्।

कृष्णः श्रीः ज्ञानं। हे विष्णो। †

---

सुलक्षणान्वितौ ऊरू यस्याः सा लक्षणोरूः ; शफौ खुरौ इव संश्लिष्टौ ऊरू यस्याः सा शफोरूः ; सहेते इति सहौ ऊरू यस्याः सा सहोरूः, विलक्षणोरुसहिता वा ; हितेन सहितौ ऊरू यस्याः सा सहितोरूः, (३८८) संहितशब्दस्य विकल्पे सहितौ संहितौ संश्लिष्टौ ऊरू यस्याः सा सहितोरूः संहितोरूः ; उपमानात्, रम्भे इव ऊरू यस्याः सा रम्भोरूः, एवं करभोरूः। एभ्यः किं, वृत्तोरुः पीनोरुरित्यादि। पाणिनिः ४।१।६९,७० ; सहितसहाभ्याञ्चेति वक्तव्यमिति वार्त्तिकञ्च।

* तनुरादिर्यस्य तस्मात्। तन्वादेर्वा ऊप् स्यादित्यर्थः। तन्वादिर्यथा—तनुश्चञ्चु-करभोरुः कङ्गु पङ्गु प्रियङ्गवः। गण्डुः कुहुरिति प्रोक्तास्तन्वादौ सरयुस्तथा॥ तनुशब्दात् गौणेऽपि वरतनूः सुतनूरित्यादि। अत्र—बाह्वन्त-कद्रुकमण्डलुभ्यो नित्यमूप् स्यात् संज्ञायामिति वक्तव्यम्, भद्रबाहूरित्यादि (पाणिनिः ४।१।६७,७२)। श्वशुरस्य पत्नी श्वश्रूरिति निपात्यम् "श्वशुरस्योकाराकारलोपश्च" इति वार्त्तिकम्।

---

† स्यादिभिर्लिङ्गानां रूपाणि निरूप्य स्यादीनामर्थान् निरूपयति त्यर्थेत्यादि।—लिर्लिङ्गं, लेरर्थो त्यर्थः, सम्बुद्धिः सम्बोधनं, उक्तोऽर्थो यस्य तत् उक्तार्थं कारकं—त्यर्थश्च सम्बुद्धिश्च उक्तार्थश्च एतेषां समाहारस्तस्मिन्।

अर्थोऽभिधेयः—तथाच 'शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपाद्यते, तस्य शब्दस्य तद्वस्तु

सर्व्वोऽर्च्यो जीवनः पाता दानीयः प्रभवो लयः । *

---

ज्ञायतामर्थसंशयेति' प्राञ्चः । एवञ्च, "अस्मात् शब्दादयमर्थो बोद्धव्यः" इतीश्वरेच्छाशक्ति-रभिधा, तया प्रतिपाद्यः अभिधेय इति । शक्तिज्ञानञ्च व्याकरणादिभ्यो भवति, यथा —शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्यात् व्यवहारतश्च । सान्निध्यतः सिद्धपदस्य वृद्धाः वाक्यस्य शेषात् विवृतेर्वदन्ति ॥ ल्यर्थश्च पञ्चधा त्रिधा वा, तदुक्तं—स्वार्थो द्रव्यञ्च लिङ्गञ्च सङ्ख्या कर्म्मादिरेव च. अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमा इति । स्वार्थो विशेषणं, द्रव्यं विशेष्यं, लिङ्गं पुंस्त्वादि, सङ्ख्या एकत्वादि, कर्म्मादिर्द्वादिरिति ।

लिङ्गस्य अर्थे, सम्बोधने, प्रत्ययैः कथितार्थे कारके च सति, प्रथमा स्यादित्यर्थः । किञ्च यदा लिङ्गार्थातिरिक्तकर्म्मादयर्थो न विवक्ष्यते तदैव लिङ्गात् प्रथमा स्यात्, अन्यथा कृष्णं स्मरामीत्यादावपि प्रथमापत्तेः । लिङ्गार्थस्य एकत्वद्वित्वबहुत्वेषु क्रमादेकवचन-द्विवचनबहुवचनानि प्रयोज्यानि (१२) । यथा—घटः घटौ घटाः । एको द्वौ बहव-इत्यादिषु सङ्ख्या एव लिङ्गार्थः, विभक्तिप्रयोगस्तु—"नापदं शास्त्रे प्रयुञ्जीत" इति नियमात् पदत्वार्थं, कर्म्मत्वादिप्रतीत्यर्थञ्च । अतएव प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति प्राञ्चः । पुंस्त्वादिकमपि लिङ्गार्थं इति ज्ञापयन्नाह कृष्णः श्रीः ज्ञानमिति । पाणिनिः २।३।४६,४७ ।

नहि क्रियारहितं वाक्यमस्तीति न्यायात् सर्व्वत्रैव क्रियाध्याहारेण उक्तार्थत्वात् प्रथमाप्राप्तौ कथं ल्यर्थग्रहणमिति ? उच्यते, यत्र असमापकक्रियापदं कर्त्रादिपदयुक्तं तत्रैव क्रियाध्याहारः, यत्र तु केवलो रूढ़शब्दः प्रयुज्यते तत्र तन्न्यायावसरो नास्तीति । एवम् एकादिशब्दः यदा संख्येयवाची तदा घटादिना समानाधिकरणः स्यात्, तत्र लिङ्गार्थे प्रथमा—यथा, एको घटः, पञ्च व्रीहिरित्यादि ।

आभिमुख्यविधानं सम्बुद्धिः । वृक्ष, लते, इत्यादावचेतनेषु तूपचारः । "सम्बोधनञ्च प्रवर्त्तनाविषयबोधनादिफलकाभिमुख्य" इति सिद्धान्तकौमुदीटीका । "सिद्धस्याभि-मुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते ॥" इति हरिकारिका ।

* उक्तार्थे उदाहरति सर्व्व इत्यादि । सर्व्वः शिवः—अर्च्चः, जीवनः, पाता, दानीयः, प्रभवः, लयश्च । अर्च्यतेऽयमिति कर्म्मणि ण्यण्, अत्र सर्व्व इति कर्म्म उक्तम् । जीव्यतेऽनेनेति जीवनः करणे अनट्, अत्र सर्व्व इति करणमुक्तम् । पातीति पाता कर्त्तरि तृन्, अत्र सर्व्व इति कर्त्ता उक्तः । दीयतेऽस्मै इति दानीयः, (८६५) कृद्योः कभावे इत्यनेन सम्प्रदाने अनीयः, अत्र सर्व्व इति सम्प्रदानमुक्तम् । प्रभवत्यस्मादिति प्रभवः अपादाने अल्, अत्र सर्व्व इत्यपादानमुक्तम् । लीयतेऽस्मिन्निति लयः अधिकरणे अल्, अत्र सर्व्व इत्यधिकरणमुक्तम् । त्यैरुक्तार्थे के इति बहुवचननिर्द्देशात् अन्यैरुक्तार्थे-ऽपि प्रथमा—तथाच सिद्धान्तकौमुद्याम् "अभिधानन्तु प्रायेण तिङ्कृत्तद्धितसमासैः,"

२८१। कर्म्मक्रियाविशेषणाभिनिविशाधि-शीङ्स्थासन्वध्युपावस-ङं ढं ङी। (कर्म्म—ङं १। ढं १। ङी ।१।)।

कार्य्यं क्रियाविशेषणम् अभि-नि-विशादेर्ङश्च ढसंज्ञं स्यात्, तत्र च ङी। *

---

"अभिहिते प्रथमा" "तिङ्समानाधिकरणे प्रथमा" इति वार्त्तिकद्वये च। तिङा यथा—रामो वनं ययौ, अत्र कर्त्ता उक्तः, रामेण रावणो जघ्ने, अत्र कर्म्म उक्तम्। कृता तु—सर्व्वोऽर्च्य इत्यादि स्वयमुदाहृतम्। तद्धितेन यथा—वाचा कृतं वाचिकम्, अत्र कर्म्म उक्तं, तर्कं वेत्त्यधीते वा तार्किकः, अत्र कर्त्ता उक्तः। समासैः यथा—आरूढो वानरो यं स आरूढवानरो वृक्षः, छिन्नश्छागो येन स छिन्नच्छागः खड्गः, कृता पूजा येन स कृतपूजो भक्तः, दत्ता भूमिर्यस्मै स दत्तभूमिर्विप्रः, निर्गताः पक्षिणो यस्मात् स निर्गतपक्षी वृक्षः, सप्त तारा यस्मिन् तत् सप्ततारमाकाशम्—एषु क्रमेण कर्म्म करण कर्त्तृ सम्प्रदानापादानाधिकरणानि उक्तानि। अव्ययेनाप्युक्तार्थे प्रथमा—यथा विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्। 'कृष्ण इति' 'कृष्णेति मङ्गलं नाम' इत्यादाविति‌शब्दस्य वर्णमात्राभिधायकत्वेन न विभक्त्युत्पत्तिः इतिशब्दस्यैव विभक्तिकार्य्यकारित्वम्। पीतमम्बरं यस्यासौ पीताम्बरो हरिरित्यादौ सम्बन्धेनाप्युक्तार्थत्वे प्रथमेति वक्तव्यम्।

* क्रियाया विशेषणं क्रियाविशेषणम्। अभिनिः अभिनिः, अभिनेर्विशः अभिनिविश, शीङ् च स्थाश्च आसश्च शीङ्स्थास, अधेः शीङ्स्थास अधिशीङ्स्थास. अनुश्च अधिश्च उपश्च आङ् च ते अन्वध्युपाः, तेभ्यो वसः अन्वध्युपावसः, ततः अभिनिविशश्च अधिशीङ्स्थास च अन्वध्युपावसश्च तेषां ङं पश्चात्—कर्म्म च क्रियाविशेषणञ्च अभिनिविशाधिशीङ्स्थासन्वध्युपावसङश्च एतेषां समाहारः। क्रियायाः कर्म्मणः, क्रियाया विशेषणस्य, अभिनिविशादेरधिकरणस्य च, कर्म्मसंज्ञा स्यात्, तेषु च द्वितीया स्यादित्यर्थः। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् गृहेऽधिष्ठानं, ग्रामेऽधिवसतीत्यादिकमपि स्यात्। क्रियाविशेषणे तु केवलं द्वितीयाया एकवचनं स्यात् क्रियाया लिङ्गसंख्याविनिर्म्मुक्तत्वात्।

क्रियते यत् तत् कर्म्म, करोतेर्निखिलक्रियावाचकत्वात् कर्त्तुर्व्यापारैर्यत् साध्यते तत् कर्म्म इति यावत्। "कर्त्तुरीप्सिततमं कर्म्म" इति पाणिनिः (१।४।४९)। क्रियाव्याप्यं कर्म्मेति पद्मनाभः। कर्त्तृसमुद्दिष्टं कर्म्मेति क्रमदीश्वरः। यत् क्रियते तत् कर्म्मेति सर्व्ववर्म्माचार्य्यः। तच्च कर्म्म त्रिविधं—निर्व्वर्त्त्यं विकार्य्यं प्राप्यञ्चेति। निर्व्वर्त्त्यते उत्पाद्यते यत् तत् निर्व्वर्त्त्यं, यथा घटं करोति, पुत्रं प्रसूयते इत्यादि। विक्रियते विद्यमानं वस्तु

रामं नमति सानन्दं धर्म्मानभिनिविश्य सन्। *
श्रीशोऽधिशेतेऽहिमधिष्ठितोऽब्धि-
मध्यास्य घोषं मथुरामनूष्य।

---

अवस्थान्तरं नीयते यत् तत् विकार्य्यं, तदपि द्विविधं प्रकृतेरुच्छेदकं प्रकृतेर्गुणान्तराधायकञ्च, यथा काष्ठं दहति, सुवर्णं कुण्डलं करोति इत्यादि। निर्व्वर्त्त्यविकार्य्याभ्यामन्यत् प्राप्यं, यथा ग्रामं गच्छतीत्यादि। तदुक्तं हरिणा --यदसज्जायते सद्वा जन्मना यत् प्रकाशते, तन्निर्व्वर्त्त्यं, विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्, किञ्चित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्। क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते, दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते। परे तु अनीप्सितमपि प्रतिकूलमनुकूलञ्च कर्म्मान्तरं वदन्ति, यथा ओदनं बुभुक्षुर्विषं भक्षयतीत्यादि। स्वमते प्राप्यान्तर्गतमेव तत्।

क्रिया धात्वर्थस्तस्य विशेषणं क्रियाविशेषणम्। तच्च समानाधिकरणमेव, असमानाधिकरणविशेषणे (२८८) तृतीयाविधानात्। क्रियाविशेषणस्य कारकत्वं कैश्चिदेवमङ्गीक्रियते यथा "मृदु पचतीति क्रियाविशेषणत्वात् द्वितीयान्तम्। धातूपात्तभावनां प्रति हि फलांशः कर्म्मीभूतः। तथाच फलसामानाधिकरण्ये द्वितीया," "क्रियायाः कृत्रिमकर्म्मत्वविवक्षायां तद्विशेषणत्वात् द्वितीया" इति मनोरमा। "द्वितीयेति क्रियाविशेषणादिति भावः" इति शब्दरत्नम्। "सामान्ये नपुंसकमिति—अनेनैव क्रियाविशेषणानां नपुंसकत्वे सिद्धे 'क्रियाविशेषणानां क्लीवत्वं द्वितीयान्तत्वञ्च' इति न। पूर्व्वं धातूपात्तभावनां प्रति फलांशस्य कर्म्मतया तत्समानाधिकरणे क्रियाविशेषणे द्वितीयान्तत्वस्यापि सिद्धेः, तस्य क्रियाजनकत्वमपि स्वज्ञानद्वारा बोध्यम्" इति शब्देन्दुशेखरश्च। क्रमदीश्वरेण च "अपृथग्रूपक्रियाया विशेषणस्य कर्म्मत्वं क्लीवत्वञ्च" इति सूत्रं कृतम्। अतः पृथग्रूपक्रियाविशेषणस्य कर्म्मत्वादिकं न स्यात्, तेन साधुः पाकः साधू पाकौ इत्यादि, कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायेन द्रव्यत्वातिदेशात् पाकस्य पृथग्रूपत्वम्। क्रियाविशेषणस्य कर्म्मत्वेऽपि अकर्म्मकधातूनामकर्म्मकत्वमेव, कर्म्मनिबन्धनकार्य्यं किमपि न स्यादिति यावत्। कर्म्मसंज्ञाफलन्तु स्तोकं बिभेतीति स्तोकभीशब्दस्य (१३६) कव्याद्यनेकाच इत्यनेन कारकादित्वात् यकारप्राप्तिरित्यादि। पाणिनिः २।३।२,१।४।४६—४८, वार्त्तिकञ्च।

* रामं नमतीत्यादि। सन् साधुः धर्म्मान् अभिनिविश्य सानन्दं यथा स्यात्तथा रामं नमतीत्यन्वयः। रामम् इति नमनक्रियाव्याप्यं कर्म्म। सानन्दमिति क्रियाविशेषणं, आनन्देन सह वर्त्तते यत् तत्, आनन्दसहिताभिन्नो नमस्कार इत्यर्थः। धर्म्मानिति अभिनिविशधातोरधिकरणे कर्म्मत्वम्।

यो द्वारकामध्युषितो विकुण्ठ-
मुपावसच्चावसतात् स हृत्नः ॥ *

## २८२ । देशाध्वकालभावं वाढैः ।

(देश-अध्वन् काल-भाव १।, वा ।१।, अढैः ३॥) ।

अढैर्धुभिर्योगे एते ढसंज्ञा वा स्युः ।

नदीर्वनेषु चोषित्वा क्रोशान्नल्वेष्वहर्निशि ।
चंक्रमित्वा प्रियानीतिं रामो रक्षोवधे स्थितः ॥ †

---

* शौरिरिति । यः शौरिः अब्धिमधिष्ठितः सन् अहिमधिशेते, घोषमध्यास्ते मथुरामनूष्य द्वारकामध्युषितः सन् विकुण्ठमुपावसच्च स नोऽस्माकं हृत् हृदयम् आवसतादित्यन्वयः । अहिमिति अधिशीङः, अब्धिमिति अधितिष्ठतेः, घोषमिति अध्यास्तेः, मथुरामिति अनुवसतेः, द्वारकामिति अधिवसतेः, विकुण्ठमिति उपवसतेः, हृत् इति आवसतेः, अधिकरणे कर्म्मत्वम् । हृत् इति हृदयशब्दस्य रूपम् (११६) । आवसतादिति तुपः स्थाने (६५६) तातङ् । कर्म्मणि वाच्येऽपि एतेषां कर्म्मत्वं, यथा नकुलाधिष्ठितो ह्रयः, बलैरध्युषितास्तस्य मलयाद्रेरुपत्यकाः इत्यादि । गृहे अधिष्ठान कल्याणे अभिनिवेशः इत्यादिप्रयोगस्तु आतिदेशिकमनित्यमिति न्यायात् समाधानीयः । अत्र अधिशीङ्स्थासामकर्म्मकाणामेव ग्रहणं, तेन वने राजानमधितिष्ठति अपेक्षते इत्यर्थः इत्यादि ।

† देशश्च अध्वा च कालश्च भावश्च तेषां समाहारस्तत् । नास्ति ढं कर्म्म येषां ते अढाः तैः । देशः पृथगेकैकदेशः नदीवनपर्व्वतादिः । अध्वा अध्वपरिमाणं क्रोशनल्वादिः । यथा—किष्कुर्हस्तो वितस्ती च नल्वः किष्कुचतुःशतम् । चतुर्हस्तो धनुस्तस्य सहस्रं क्रोश उच्यते । क्रोशद्वयन्तु गव्यूतिस्तद्द्वयं योजनं विदुरिति । कालः क्षणदण्डमुहूर्त्तप्रहरदिनरात्रिपक्षमाससंवत्सरादि । भावो धात्वर्थः । अकर्म्मकधातुयोगे देशादीनां कर्म्मसंज्ञा वा स्यादित्यर्थः । अकर्म्मकाश्च—सत्तालज्जास्थितिजागरणं वृद्धिक्षयभयजीवितमरणं । शयनक्रीड़ारुचिदीप्त्यर्था नैते कर्म्मणि धातव उक्ता इति ॥ विस्तरस्तु (६३२) सूत्रे द्रष्टव्यः । नदीरित्यादि—रामः नदीः वनेषु च उषित्वा, अहः दिवसं निशि रात्रौ क्रोशान् क्रोशपरिमितान् पथः नल्वेषु नल्वपरिमितेषु पथिषु चंक्रमित्वा इतस्ततो भ्रमित्वा, प्रियानीतिं प्रियायाः सीताया आनयनं रक्षोवधे च स्थित इत्यन्वयः । अत्र उषित्वेति वसधातुयोगे नदीरिति कर्म्मत्वं, पक्षे वनेषु इति (३०६) सप्तमी । चंक्रमित्वा वर्क्रमित्वा इति यङि चंक्रम्यधातोः क्त्वाच्, वक्रगमनार्थत्वादकर्म्मकत्वे तद्योगात् क्रोशानिति

## २८३। सदाध्वादि व्याप्तौ सर्व्वैः सिद्धे तु घं।

(सदा ।१।, अध्वादि ।१।, व्याप्तौ ७।, सर्व्वैः ३॥, सिद्धे ७।, तु ।१।, घं १।)।

सर्व्वैर्धुभिर्योगे अत्यन्तसंयोगे अध्वादयो नित्यं ढसंज्ञाः स्युः, अर्थ-सिद्धौ तु घसंज्ञाः।

भृत्यैः कृष्णोऽन्वितः क्रोशं मासौ गुरुगृहे स्थितः।
गुरूपदेशं निभृतो माभ्यामध्यैष्ट वाङ्मयम्॥ *

## २८४। घोऽज्ञौ ञेः शब्दाशनगतिज्ञार्थोढ़-ग्रहृदृशश्रो-रखादनीक्रन्दायशब्दायह्वादासूतधवहा-

---

अहरिति च कर्म्मत्वं, पक्षे मत्वेष्विति निशीति च सप्तमी। स्थित इति स्थाधातुयोगे प्रियामीतिमिति कर्म्मत्वं, पक्षे रक्षोवधे इति सप्तमी। पाणिनिः २।३।५, वार्त्तिकञ्च; "देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणाम्" इति कारिका च। अत्र वक्तव्यम्—"अकर्म्मकधातुप्रयोगेऽक्रियान्तरान्तर्भावे देशभावाभ्याञ्च" इति क्रमदीश्वरसूत्रम्। तेन क्रियान्तरान्तर्भावे—मास आस्ते इत्यादि, अभिव्याप्येत्यर्थः।

* सदा नित्यम्। व्याप्तिः साकल्येनाभिसम्बन्धः अविच्छेद इति यावत्। अतएव "कालाध्वभ्यामविच्छेदे" इति क्रमदीश्वरसूत्रम्, "कालाध्वभ्यामतिसंयोगे" इति पद्म-नाभसूत्रञ्च। सर्व्वैः सकर्म्मकैरकर्म्मकैश्च धातुभिर्योगे क्रियाविच्छेदाभावे गम्यमाने अध्व-कालभावाः नित्यं कर्म्मसंज्ञाः स्युः, अर्थसिद्धौ प्रयोजनसिद्धौ (अपवर्गे इति पाणिनिः; अपवर्गः फलप्राप्तिरिति सिद्धान्तकौमुदी, फलप्राप्तौ क्रियापरिसमाप्तिरपवर्ग इति पद्मनाभः) सत्यां तु करणसंज्ञाः स्युरित्यर्थः। भृत्यैरित्यादि—कृष्णः क्रोशं व्याप्य भृत्यैर-न्वितः अनुगतः सन्, मासौ व्याप्य गुरुगृहे स्थितः सन्, गुरूपदेशं व्याप्य निभृतः अत्यन्तासक्तः सन्, माभ्यां व्याप्य वाङ्मयं सकलं शास्त्रम् अध्यैष्ट अधीतवान् इत्यन्वयः। अत्र अन्वित इति सकर्म्मकधातुयोगे क्रोशे अनुगमनक्रियाविच्छेदाभावात् कर्म्मत्वम्। एवं स्थित इत्यस्य योगे मासौ इति, निभृत इत्यस्य योगे गुरूपदेशमिति च कर्म्मत्वम्। अध्यैष्ट इत्यस्य योगे माभ्यामिति अध्ययनजन्यज्ञानरूपप्रयोजनस्य सिद्धत्वेन करणत्वम्। अर्थसिद्धेरन्यत्र अह्ना मासौ ग्रन्थोऽधीत इत्यत्र किमपि न ज्ञातमित्यर्थः। पाणिनिः २।३।५,६; वार्त्तिकञ्च।

**हिंसाभक्षो ह्वक्रमाभिवादिदृशस्तु वा।** (घः १।, अजौ ७।, अः ६।, शब्द—श्रौः ६।, अखाद—भक्षः ६।, ह्व-क्र माभिवादि दृशः ६।, तु ।१।, वा ।१।)।

**अजान्तानां शब्दार्थादीनां यो घः स आन्तानां ढं स्यात्, न तु खादादेः, ह्वादेस्तु वा। ***

---

* अशनं भोजनं पानञ्च,ज्ञा ज्ञानम्। शब्दश्च अशनञ्च गतिश्च ज्ञाश्च शब्दाशनगतिज्ञाः ते अर्था येषां ते शब्दाशनगतिज्ञार्थाः। नास्ति ढं कर्म्म येषां ते अढाः। शब्दाशन-गतिज्ञार्थाश्च अढाश्च यहश्च दृशश्च शुश्चेति तेषां स माहारस्तस्य। सूतः सारथिः गवादि-नियन्ता च घः कर्त्ता यस्य स सूतघः. न सूतघोऽसूतघः, स चासौ वहश्चेति असूतघवहः। न हिंसा अहिंसा, अहिंसायां भक्षः अहिंसाभक्ष। खादश्च नीश्च क्रन्दश्च अयश्च शब्दायश्च ह्वाश्च अदश्च असूतघवहश्च अहिंसाभक्षश्च तेषां समाहारः, पश्चान्नञ्योगे अखादनीक्रन्दायशब्दायह्वादासूतघवहाहिंसाभक्षस्तस्य। अभिवादि: अभिवादि., अभि-वादिश्च दृशश्च अभिवादिदृशौ, मे आत्मनेपदे अभिवादिदृशौ माभिवादिदृशौ। ह्वश्च क्रश्च माभिवादिदृशौ चेति समाहारे तस्य।

शब्दार्थाः उच्चारणार्थाः, शब्दकर्म्मका धातव इति यावत्। अशनार्थाः भक्षणार्थाः। गत्यर्थाः गमनार्थाः प्रवेशारोहणतरणप्रापणार्था अपि। ज्ञार्थाः ज्ञानार्थाः। अढाः सत्तार्थ्यर्थाः। अजान्तकाले शब्दार्थादीनां धातूनां यः कर्त्ता, स तेषां आन्तकाले कर्म्म स्यात्, खादादेर्न स्यात्, ह्वादेस्तु वा स्यादित्यर्थः। अत्र दृशश्रुधात्वोर्ज्ञानार्थत्वेऽपि पुन-र्ग्रहणं क्वचिदन्यार्थकत्वेऽपि स्यादिति ज्ञापनार्थम्। खाद अद भक्ष—एषामशनार्थत्वात्, नी अय वह—एषां गत्यर्थत्वात्, क्रन्द ह्वा (ह्वे)—एतयोः शब्दार्थत्वात् प्राप्तौ निषेधः। शब्दाय इति नामधातुः, शब्दं करोतीत्यर्थे (८५१) सिद्धः, अस्य शब्दार्थत्वादकर्म्मकत्वाद्वा प्राप्तौ निषेधः। आन्तक्रियाव्याप्यत्वेनैव अजान्तकर्त्तुः कर्म्मत्वे सिद्धेऽपि एतत् सूत्रं नियमा-र्थम्, अन्येषां न स्यादित्यर्थः। अत्र च शब्दार्थादीनाम् एकवारआन्तानामेव ग्रहणं, तेन पिता पुत्रेण शिष्यं वेदं पाठयति इत्यादौ पुत्रादीनां न कर्म्मत्वम्। अत्र अकर्म्मकधातोः (२८२) देशादेः कर्म्मत्वेऽपि, (२८१) एवमधिशीङादेरधिकरणस्य कर्म्मत्वेऽपि, अजान्त-कालीनकर्त्तुरपि कर्म्मत्वं स्यादिति वक्तव्यम्, अतएव (६३२) वनन्तेव गोपी रजनि-मजागरीति स्वयं वक्ष्यति। निसर्गपारीणमसौ भवन्तमध्यासयशासनमेकमिन्द्रः इति भट्टिः। एवं अकर्म्मकधातूनामकर्म्मकत्वे सति अजान्तकर्त्तुः कर्म्मत्वं स्यात, यथा असुरास्ते पीड़िता भवति, शूरः असुनाघातयति। अपिचान्यत्रापि कर्म्मत्वं भवति, यथा फलं ग्राशितैः नृपैरिति रघुः। पाणिनिः १।४।५२, ५३, वार्त्तिकानि च।

गेयमध्यापयद् गोपान् याज्ञिकान्नमभोजयत्।
स्वधामागमयच्छत्रून् भक्तांस्तत्त्वमबोधयत्॥
धर्म्ममस्थापयद् विष्णुर्वेदानग्राहयद् विधिम्।
दैत्यानदर्शयच्छक्तिं वेणुमश्रावयच्च गाः॥ *

खादादेस्तु—रक्षांस्यखादयदनाययदूर्द्ध्वलोक-
माक्रन्दयत् कपिभिरायययदाशु रामः।
शब्दाययन् रिपुमजूहवदादयच्च
शैलानवाहयदभक्षयदिष्टभक्ष्यम्॥ †

---

* क्रमेण उदाहरणं दर्शयति—विष्णुः गोपान् गेयं (गानं) अध्यापयत्, अधीङ् अध्ययने इत्यस्मात् णिः, अणन्तकालीनकर्तॄणां गोपानां कर्म्मत्वम्, एवं सर्व्वत्र। विष्णुः गोपान् याज्ञिकान्नम् अभोजयत्, भुज धौ नाणि भक्षे णिः। विष्णुः शत्रून् स्वधाम वैकुण्ठम् अगमयत्, इत्वेति शेषः, औ गम् ऌ गत्यां णिः। विष्णुः भक्तान् तत्त्वं याथार्थ्यं अबोधयत्, बुध्यौ ङ अवगमने णिः। विष्णुः धर्म्मम् अस्थापयत्, ष्ठा स्थाने णिः। विष्णुः विधिं वेदान् अग्राहयत्, ग्रह ञ आदाने णिः। विष्णुः दैत्यान् शक्तिम् अदर्शयत्, दृशिरौ प्रेक्षे णिः। विष्णुः गाः वेणुम् अश्रावयत्, श्रु श्रवणे णिः। (एतेषां अणन्तावस्था क्रमेण प्रदर्श्यते—गोपा गेयम् अध्यैयत, गोपा याज्ञिकान्नमभुञ्जत, शत्रवः स्वधाम अगच्छन्, भक्तास्तत्त्वमबुध्यन्त, धर्म्मोऽतिष्ठत्, विधिर्वेदानग्रह्णात्, दैत्याः शक्तिमपश्यन्, गावो वेणुमशृण्वन्।)

† खादादेरुदाहरणं—रामः कपिभिः रक्षांसि अखादयत्, खादृ भक्षणे णिः, अत्र अणन्तकालीनकर्तॄणां कपीनां अणन्तावस्थायां कर्म्मत्वाभावे अनुक्तकर्तृत्वात् (२८८) तृतीया, एवं सर्व्वत्र। रामः कपिभिः रक्षांसि ऊर्द्ध्वलोकम् अनाययत्, णी ञ प्रापणे णिः। रामः कपिभिः रक्षांसि आक्रन्दयत् आह्वयदित्यर्थः, आङ्पूर्व्वक-क्रदि तु रोदने आह्वाने णिः। रामः कपिभिः रक्षांसि आशु शीघ्रम् आययत् प्रापयदित्यर्थः। अय ङ गतौ णिः। रामः कपिभिः रक्षांसि शब्दाययन् सन् रिपुम् अजूहवत्, शब्दाययन्निति शब्दायधातोः णौ शतृप्रत्ययः। अजूहवदिति ह्वे ञै स्पर्द्धायां णिः। रामः कपिभिः रिपुम् आदयच्च, अद लौ भक्षे णिः। रामः कपिभिः शैलान् अवाहयत्, वह्‌ औ प्रापणे णिः। रामः कपिभिः इष्टभक्ष्यं (फलमूलादि) अभक्षयत्, भक्ष भक्षणे णिः। (एतेषामणन्तावस्था क्रमेण

सारथित्व-हिंसार्थयोस्तु—

वाहानवाहयत् पार्थमरींश्चाभक्षयद्धरि:। *

ऋादेस्तु—शैलानहारयत् कीशान् ऋक्षैर्वृक्षानजीहरत्।

कपीनकारयत् सेतुं वानरैरपि राघव:॥

स्वाभिवादयते वृद्धान् जानकीं लक्ष्मणेन च।

सीतां रामेण चात्मानमदर्शयत लक्ष्मण:॥ †

## २८५। याचऽर्थ दुह चि प्रच्छ रुध ब्रू शास जि नी वह:।

---

यथा—कपय: रक्षांसि अखादन्, कपय: रक्षांसि ऊर्द्ध्वलोकमनयन्, कपय: रक्षांसि आक्रन्दन्, कपय: रक्षांसि आयन्त, कपय: अव्द्रायमाना: रिपुम् आह्वन्, कपय: शैलान् अवहन्, कपय: दृष्टभक्षम् अभक्षन् इति।)

* सूतत्वस्व-हिंसार्थभक्षयोरुदाहरणं—हरि: वाहान् घोटकान् पार्थमर्ज्जुनम् अवाहयत् सारथिर्भूत्वा इत्यर्थ:, हरि: वाहान् अरीन् अभक्षयत् अहिंसयच्च अत्र अवाहयदित्यत्र सारथिकर्त्तृकत्वात्, अभक्षयदित्यत्र च हिंसार्थत्वात् अञान्तकालीनकर्त्तृणां वाहानां कर्म्मत्वम्। (वाहा: पार्थमवहन्, वाहा अरीनभक्षन् इत्यञान्तावस्था।)

† ऋादेरुदाहरणम्—राघव: कीशान् वानरान् शैलान् हारयत्, पक्षे—ऋक्षैर्भल्लूकै: वृक्षानजीहरत्। राघव: कपीन् सेतुमकारयत, पक्षे—वानरैरपि सेतुमकारयदिति शेष:। राघवो जानकीं वृद्धानभिवादयते स्म, पक्षे—लक्ष्मणेन च, वृद्धानभिवादयते स्मेति शेष:, अभिवादयते इति अभिपूर्व्वो वदधातु: ञान्तो नमस्कारे वर्त्तते, पुन: ञौ कृते, (६४१) पूर्व्वञेर्लोपे, (६१८) फलवत्कर्त्तर्य्यात्मनेपदम्। एकवार-ञौ कृते अभिवादिधातो-र्नमस्कारार्थकत्वात् शिष्यो गुरुमभिवादयतीत्यादौ (२८१) नित्यमेव कर्म्मत्वम्। लक्ष्मण: सीताम् आत्मानम् अदर्शयत, पक्षे—रामेण च, आत्मानमदर्शयतेति शेष:। अदर्शयतेति, अञान्तकालीन-कर्म्मणो लक्ष्मणस्य ञान्तकालीनकर्त्तृत्वात् (८९९) ञेढे इत्यात्मनेपदम्। पिता पुत्रं चन्द्रं दर्शयतीत्यादौ अञान्तकालीनकर्त्तु: पुत्रस्य नित्यमेव कर्म्मत्वम्। (कीशा: शैलानहरन्, ऋक्षा: वृक्षान् अहार्षु:, कपय: सेतुमकुर्व्वन्, वानरा अपि, जानकी वृद्धानभिवादयति स्म, लक्ष्मणश्च, सीता लक्ष्मणमपश्यत्, रामश्च लक्ष्मणमपश्यदित्यञान्तावस्था।)

हृ दण्डि ग्रह छष मन्थ
मुष पचाद्या भवो द्विढाः॥ *

(याच्ञार्थ—वहः १।।।, हृ—पचाद्याः १।।।, भवः १।।।, द्विढाः १।।।)।

तमर्थयेऽहं मोक्षं, यो गोपैर्दुग्धमदुग्ध गाः।
फलान्यवाचिनोद् वृक्षान्, वार्त्ताः पप्रच्छ वल्लवान्॥
रुरोध गोकुलं गोपीरब्रवीच्च मनोहरम्।
गोपालानन्वशात् केलींस्तत्राजय्यं जिगाय तान्॥
वृन्दावनमनैषीद् गा-स्तच्छिशूनवहद् व्रजम्।
जहारारण्यमाभीरी-र्दैत्यान् प्राणानदण्डयत्॥
जग्राह यज्वनो भोज्य-मकर्षत् पूतनां बलम्।
ममन्थामृतमम्भोधिं मुमोष दितिजांश्च तत्।
योऽसौ पचति लोकानां पुण्यपापं सुखासुखम्॥ †

---

* याच्ञा अर्थो येषां ते याच्ञार्थाः याच अर्थ नाथ भिक्ष प्रभृतयः। पश्चात् द्वन्द्वे वहपर्य्यन्तम् एकं पदं, श्लोकार्द्धविरामार्थं पृथक्पदकरणम्। पच आद्यो येषां ते पचाद्याः, पश्चात् हृश्च दण्डिश्च इत्यादि द्वन्द्वः। द्वि ढे येषां ते द्विढाः। एते धातवः स्वभावात् द्विकर्म्मका भवन्तीत्यर्थः। कर्त्तुः क्रियाव्याप्यत्वात् मुख्यस्य कर्म्मत्वं सिद्धम्, अनेन तु गौणस्य कर्म्मत्वं विधीयते। साक्षात् क्रियान्वयित्वं मुख्यत्वं, परम्परया क्रियान्वयित्वं गौणत्वमिति। पाणिनीये वार्त्तिके धृतस्य दुहादिगणस्य मध्ये ग्रहधातोः पाठाभावात् "अजिग्रहत्तं जनको धनुस्तत्" इत्यादिकमसाधु इति अनुन्यासवाभटौ (क्रमदीश्वरः)। पाणिनिः १।४।५१।

† तमर्थये इत्यादि। अहं तं श्रीकृष्णं मोक्षम् अर्थये याचे, यः गोपैः सह गाः दुग्धम् अदुग्ध। यो वृक्षान् फलानि अवाचिनोत्। यो वल्लवान् वार्त्ताः पप्रच्छ, गोपान् वृत्तान्तं जिज्ञासितवानित्यर्थः। यो गोकुलं गोपीः रुरोध, गोपीरन्तः स्थापयन् गोकुलमावृणोदित्यर्थः। यो गोपीः मनोहरं (वच इति शेषः) अब्रवीच्च। यो गोपालान् केलीम् अन्वशात् शिक्षितवान्। यश्च केलिविषये तान् गोपालान् अजय्यं जेतुमशक्यं जिगाय। यो वृन्दावनं गा अनैषीत् प्रापयामास। यस्तच्छिशून्

**२८६। धिक्समयानिकषाहान्तरान्तरेणे-नातियेनतेनाभ्युभयपरिसर्व्वतोविनतेऽभिपरिप्रत्य-नूपह्युपर्य्यधोऽधिभिः।** (धिक्—अधिभिः ३॥)।

एभिर्योगे ही स्यात्।

**वीप्सेत्थम्भावचिह्नेऽभिस्तेषु भागे परिप्रती।**
**अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविह॥ ***

---

गोवत्सान् व्रजम् अवहत् नीतवान्। यः आभीरीररण्यं जहार निनाय। यो दैत्यान् प्राणान् अदण्डयत्, प्राणान् गृहीत्वा अशासदित्यर्थः। यो यज्वनो भोज्यं जग्राह। यः पूतना बलम् अकर्षत, पूतनां विकृष्य बलं गृहीतवानित्यर्थः। योऽम्भोधिम् अमृतं ममन्थ, समुद्रमुन्मथ्य अमृतमुत्थापितवानित्यर्थः। यस्तत् अमृतं दितिजान् मुमोष खण्डितवान्। योऽसौ कृष्णः लोकानां पुण्यपापं सुखासुखं पचति—पुण्यं सुखं, पापम् असुखं, पचति परिणमयतीत्यर्थः।

अत्र पचाद्या इत्यादि-पदेन गुरु शिष्यं ग्रामं प्रहिणोतीत्यादि। ब्रू इत्यनेन ब्रुवर्थ-ग्रहणं, तेन गद कथ भनस प्रभृतीनां संग्रहः। वृक्षं नौकां करोति, सुवर्णं कुण्डलं करोतीत्यादौ प्रकृतिविकृतिभावेन एकमेव कर्म्म, तेन वृक्षो नौका क्रियते इत्यत्र द्वयोरेव उक्तत्वात् न गौणमुख्यव्यवहारः, किन्तु प्रकृतेः सङ्ख्यानुसारेणैव क्रियाप्रयोगः, यदुक्तं—प्रकृतेर्विकृतेर्वापि यच्चोक्तत्वं द्वयोरपि। वाचकः प्रकृतेः सङ्ख्यां गृह्णाति विकृतेर्न तु इति। पचादिश्च—पच वच वप वद चल पत नद भष चर गाह देव मद चप सेव मेष इत्यादि आकृतिगणः।

* अभिश्च उभयश्च परिश्च सर्व्वश्च तेभ्यस्तस्। उपरिश्च अधश्च अधिश्च ते, द्वयश्च ते उपर्य्यधोऽधयश्चेति ते उपर्य्युपरि अधोऽधः अध्यधि इति द्विरुक्ताः, पश्चात् द्वन्द्वः। द्युपरीति किं, गण्डस्योपरि विस्फोटक इत्यादौ षष्ठी स्यादेव, न तु द्वितीया। धिक्—निर्भर्त्सननिन्दयोरित्यमरः। समया—अन्तिकमध्ययोरित्यमरः। निकषा—अन्तिके इत्यमरः। हा—विषादशुगर्त्तिषु इत्यमरः। अन्तरा—मध्ये इत्यमरः। अन्तरेण, विना, ऋते—वर्जने इत्यमरः। एन—(५१९)वैनोऽपीत्यनेन विहित एनप्रत्ययान्तः। अति—अतिक्रमणार्थः, प्रकर्षे लङ्घनेऽप्यतीत्यमरः। येनतेनौ—यादृक्तादृगर्थौ। अभितः—समीपोभयतःशीघ्रसाकल्याभिमुखे इत्यमरः। उभयतः—उभयदिशोः। परितः, सर्व्वतः—समन्तादर्थम्, समन्ततस्तु परितः सर्व्वत इत्यमरः।

अत्र अभिपरिप्रत्यनूपानामर्थविशेषएव ग्रहणमित्याह वीप्सेति। इह द्वितीयाविधाने,

धिग्लोकमीश्वराभक्तं, समया माधवं रमा ।
निकषा गिरिशं गौरी, हा लोकं केशवद्विषम् ॥
कृष्णोऽन्तरा ब्रह्मशम्भू, नान्तरेणाच्युतं सुखम् ।
दक्षिणेन हरिं रुद्रो, गोविन्दमति नेश्वरः ॥
येनेशं हरिरीशस्तं तेनेशमभितोऽर्च्चकाः ।
रामकृष्णावुभयतो गोपेशं, परितः परे ॥
प्रमथाः सर्व्वतः सर्व्वं, धर्म्मो नेशार्च्चनं विना ।
मुक्तिर्नर्त्तेऽच्युतोपास्तिं, भूतं भूतमभि प्रभुः ॥
भक्तो विभुमभि, प्राज्ञो गोविन्दमभि तिष्ठति ।
हरिं पर्य्यभवल्लक्ष्मी-र्हरं प्रति हलाहलम् ॥
विष्णुमन्वर्च्चते भर्गः, शक्रादय उपाच्युतम् ।
लोकानुपर्य्युपर्य्यास्तेऽधोऽधोऽध्यधि च माधवः ॥ *

---

अभिः वीप्सेत्थम्भावचिह्ने मतः, परिप्रती तेषु वीप्सेत्थम्भावचिह्नेषु भागे च मतौ, अनुः तेषु वीप्सेत्थम्भावचिह्नभागेषु सहार्थे च मतः, अनूपौ हीने मतावित्यन्वयः । द्रव्यगुणक्रियाभि-र्युगपत् व्याप्तुमिच्छा वीप्सा । कस्यचित् प्रकारस्यापत्तिरित्थम्भावः । चिह्नं लक्षणम्, अन्यत् स्पष्टम् । अभ्यादिरिह अनुपसर्ग एव । धिक्प्रभृतिभिर्योगे द्वितीया स्यादिति सूत्रार्थः, योगस्त्विह अर्थेनैव, न तु शब्देन । पाणिनिः १।४।८३—८७,९०,९१,९५,२।३।८,भाष्यञ्च । उपान्वध्याङ्वसः (१।४।४८) इति पाणिनिसूत्रव्याख्यानन्तरं धिक्समयेत्यादियोगादुपपद-विभक्तिमाह भट्टोजिदीक्षितः ।

* ईश्वराभक्तं लोकं धिक्, स निन्द्य इत्यर्थः । रमा लक्ष्मीः माधवं समया, माधवस्य समीपे । गौरी गिरिशं निकषा, गिरिशस्य समीपे । केशवद्विषं लोकं हा, स विषादार्हः शोकार्हो वा । हा राम ! हा तात ! इत्यादौ हा-शब्दस्य वक्तृशोकादि-व्यञ्जकत्वात् रामादौ न द्वितीया, सम्बोधने प्रथमैव । कृष्णः ब्रह्मशम्भू अन्तरा, ब्रह्मशम्भ्वो-र्मध्ये । अच्युतं कृष्णम् अन्तरेण विना सुखं न भवतीति शेषः । रुद्रो हरिं दक्षिणेन, हरेर्दक्षिणे स्थितः । गोविन्दम् अति ईश्वरो न, गोविन्दस्य अतिक्रमिता ईश्वरो नास्तीत्यर्थः । हरिरीशं येन ईशस्तं हरिं तेन, हरिरीशस्य यादृशः ईशो हरेस्तादृश-

## २८७। दिवो घं वा। (दिवः ६।, घं १।, वा ।१।)।

दिवो घं ढं स्याद्वा। अक्षै-रक्षान् वा दीव्यतीशः। *

## २८८। साधनहेतुविशेषणभेदकं घं कर्त्ता घस्त्रौ। (साधन—भेदकं १।, घं १।, कर्त्ता १।, घः १।, त्रौ ।१।)।

नेत्रैः पुण्येन भूषाभि र्नाम्ना दृष्टः शिवो जनैः। †

---

इत्यर्थः, हरीशौ अभिज्ञाविति यावत्। अर्भकाः ईशमभितः समीपे। रामकृष्णौ गोपेशं नन्दम् उभयतः, गोपेशस्य उभयोः पार्श्वयो ; परे अन्ये गोपबालकाः गोपेशं परितः, गोपेशस्य समन्तात्। प्रमथाः शिवगणाः सर्व्वं शिवं सर्व्वतः, शिवस्य सर्व्वासु दिक्षु। ईशार्च्चनं विना शर्म्म सुखं न स्यादित्यर्थः। अच्युतोपास्तिं विष्णूपासनाम् ऋते मुक्तिर्न स्यादित्यर्थः। प्रभुरीश्वरः भूतं भूतम् अभि, सर्व्वप्राणिषु अस्तीत्यर्थः, अत्र वीप्सायां द्वित्वम्। भक्तः विभुम् अभि, इत्थम्भावापन्नः, विभुविषये भक्तिभावापन्न इत्यर्थः। प्राज्ञः गोविन्दम् अभि, अभिलक्षीकृत्य तिष्ठतीत्यर्थः, अत्र चिह्नार्थः। लक्ष्मीः हरिं परि अभवत्, समुद्रे मथिते लक्ष्मीः हरेर्भागोऽभवदित्यर्थः। हलाहलं विषं हर प्रति, हरस्य भाग अभवदित्यर्थः। भर्गः शिवः विष्णुम् अनु विष्णुना सह अर्च्च्यते। शक्रादयो देवाः अच्युतम् उप, अच्युतात् हीना इत्यर्थः। माधवः लोकान् उपरि उपरि लोकानाम् उपरि समीपे आस्ते, एवं लोकान् अधोऽधः समीपे, अध्यधि इतस्ततः समीपे आस्ते इत्यर्थः, अत्र सामीप्ये द्वित्वम्। उपर्य्युपरिबुद्धीनां चरन्तीश्वरबुद्धय-इत्यत्र उपरिबुद्धीनां श्रेष्ठबुद्धीनाम् उपरीत्यर्थः, तेन न द्वि-उपरि-योगः। अत्र व्याप्त्यर्थे यावत्शब्दयोगे द्वितीया वक्तव्या ; नदीं यावदरण्यानीत्यादि।

* क्रीड़ार्थस्य दिवधातोः करणं कर्म्मसंज्ञं स्याद्वा। अत्र वाशब्दो व्यवस्थावाची, तेन दीव्यतेः करणं नित्यं कर्म्मसंज्ञं स्यात्, द्वितीया तु वा स्यादित्यर्थः। अतएव दिवः सदैव सकर्म्मकत्वात् अक्षा दीव्यन्ते इति कर्म्मणि प्रत्ययः, अक्षाणां देविता इति (३०५) कृद्योगे कर्म्मणि षष्ठीत्यादि। पाणिनिः १।४।४३।

† साध्यते कर्म्म निष्पाद्यतेऽनेनेति साधनं करणम्। तथाच क्रियायां साध्यायां बहूनां कारणानां मध्ये यद् वस्तु अव्यवधानेन क्रियानिष्पत्तिकारणं विवक्षितं तदेव साधनं भवति, अतएव "साधकतमं करणम्" इति पाणिनिः (१।४।४२)। तथाच—कारणाव्यवधाने तु क्रियानिष्पत्तिकारणम्। यद्वै विवक्षितं तेषु करणं तत् प्रकीर्त्तित-

## २८९ । सहवारणसमोनार्थार्थविनापृथङ्नानाद्यैः । (सह—नानाद्यैः ३॥) ।

एभिर्योगे भी स्यात् ।

सहेशार्च्योऽच्युतो भेदेनालं तेन समोऽस्ति कः ।
विकारै रहितः शम्भुः, सतामर्थः शिवार्च्चया ॥
श्रीनेशेन विना, शम्भुः पृथक् विश्वेन, तत् पुनः ।
न नाना शम्भुना, रामात् वर्षेणाधोक्षजोऽवरः ॥ *

---

मिति । यथा "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥ वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् । स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति हरिकारिका । कायेन मनसा वाचा इत्यादौ—बहूनामपि करणत्वम् । फलसाधनयोग्यः पदार्थो हेतुः, यथा—विद्यया यशः, धनेन कुशलमित्यादि । कर्त्रधीनं साधनं, यदधीना कर्तुः प्रवृत्तिः स हेतुरिति साधनहेत्वोर्भेदः । "द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुत्वम्, करणत्वन्तु क्रियामात्रविषयं व्यापारनियतञ्च" इति सिद्धान्तकौमुदी । विशेष्यतेऽनेनेति विशेषणं, जटाभिस्तापस इत्यादि । भेदयति सामान्यावगमे इतरेभ्यो व्यवच्छिनत्ति यत् तत् भेदकं व्यवच्छेदकं, नाम्ना शिव इत्यादि । विशेषणं विद्यमानं, भेदकन्त्वविद्यमानमित्यनयोर्भेदः । प्रकृत्या पटुः, जात्या ब्राह्मणः, जन्मना अन्धः, स्वभावेनोदारः, सुखेन याति, साकल्येनादत्ते, प्रायेण वैष्णवः, दशाहेन शुध्येत्, अक्ष्णा काणः इत्यादौ पटुत्वभवनादीनां प्रकृत्यादिः साधनत्वविवक्षया करणे तृतीयेति दुर्गसिंहः । प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकम् । यः करोति स कर्त्ता, कृत्याश्रयः कर्त्ता इति तार्किकाः । "स्वतन्त्रः कर्त्ता" इति पाणिनिः (१।४।५४) । "क्रियामुख्यप्रयोजको कर्त्ता" इति क्रमदीश्वरः ।

साधनहेतुविशेषणभेदकम् इति समाहारद्वन्द्वः । धं करणं, घः कर्त्ता । साधनादीनि ध-संज्ञानि स्युः, कर्त्ता घसंज्ञः स्यात्, उभयत्र च स्यादित्यर्थः । नेत्रैरिति । नेत्रैः करणैः, पुण्येन हेतुना, भूषाभिर्विशिष्टः, नाम्ना भेदकेन, शिवः, अजैः कर्त्तृभिः हृष्टः इत्यन्वयः । पाणिनिः २।३।१८,२१,२३ ।

* अर्थः प्रयोजनम्; सह च वारणञ्च समश्च ऊनश्च अर्थश्च ते अर्थाः अभिधेयाः येषां ते सहवारणसमोनार्थार्थाः । नाना आद्यौ येषां ते नानाद्याः । ततः, सहवारणसमोनार्थार्थाश्च विना च पृथक् च नानाद्याश्च ते तैः । एभिर्योगे तृतीया स्यादित्यर्थः ।

## २९० । कालभाड्डे वा ।

(कालभात् ५।, ङे ७।, वा ।१।) ।

कालवाचिनो नक्षत्रात् ङे त्री स्याद्वा ।

रोहिण्यामभवत् कृष्णो रोहिण्यासीच्च चण्डिका । *

## २९१ । मानाद्दीप्सायां ढे ।

(मानात् ५।, वीप्सायां ७।, ढे ७।) ।

शतं शतं पयोऽपीप्यत् वत्सान् विष्णुः शतेन गाः ।

---

अत्र अर्थेनैव योगे, न तु शब्देन, तेन सहागतः पित्रा इत्यादौ व्यवधानेऽपि स्यात्; एवं सहार्थादिभिर्गम्यमानैरपि स्यात् । सहेत्यादि—अच्युतः ईशा शिवेन सह अर्च्यः, ईशेति ईश्धातोः क्विपि ईश्शब्दः, एवं साकं साद्धं समामित्यादिभिः । अच्युतेशयोः भेदेन अलं भेदो व्यर्थ इत्यर्थः, एव मास्म मा इत्यादिभिर्वारणार्थैः । तेन अच्युतेन समः कोऽस्ति, एवं समान तुल्य इत्यादिभिः, इवशब्दस्य तु सादृश्यद्योतकत्वेन वाचकत्वाभावात् तेन योगे न स्यात्; एवं तुल्योपमाशब्दयोगेऽपि न स्यात्, यथा कृष्णस्य तुला नास्ति इत्यादि । अत्र समार्थैः षष्ठ्यपीति (३०२) सूत्रे वक्ष्यति । शम्भुर्विकारैः कामक्रोधादिभिः रहितः हीन इत्यर्थः, एवमल्पादिभिः । सतां साधूनां शिवाज्ञया अर्थः प्रयोजनम् । ईशेन विना श्रीः त्रिवर्गसम्पत्ति-र्न स्यादित्यर्थः । शम्भुर्विश्वेन पृथक्, विश्वस्य नश्वरत्वादित्यर्थः । तत् विश्वं पुनः शम्भुना न नाना न भिन्नं, विश्वस्य शम्भुमयत्वात् । पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् द्वितीया पञ्चमी चेति पाणिनिः (२।३।३२) । अत्र ग्रन्थे पृथङ्नानाशब्दाभ्यान्तु तृतीयैव । अन्यार्थेन तु पञ्चमी । आद्यशब्दात्—यथोनः कृष्णः रामात् बलदेवात् वर्षेण अवरः कनिष्ठ इत्यर्थः, अत्र अवरशब्दयोगे वर्षेणेति तृतीया । एवं मासेन पूर्व्वः, शस्त्रेण कलहः, गुड़ेन मिश्र इत्यादि । अत्र, प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ स्यातामिति (पाणिनिः २ ३।४४) वक्तव्यम् । पाणिनिः २।३।१९,३२.७२, वार्त्तिकञ्च ।

* नक्षत्रवाचका अश्विन्यादयः शब्दाः, चन्द्रपक्षेषु तत्तन्नक्षत्रविशिष्टकालेषु च वर्त्तन्ते । अत्र च,काले वर्त्तमानादश्विन्यादिशब्दादधिकरणे तृतीया वा स्यादित्यर्थः । कृष्णः रोहिण्यां रोहिणीनक्षत्रयुक्तकाले अभवत् अवततार, चण्डिका च रोहिण्या सादृश्ये काले आसीत् अवतीर्णा । अत्र रोहिण्यामिति अधिकरणे रोहिण्या इति तृतीया वा । एवं पुष्ये पुष्येण वा गच्छेदित्यादि । काले किं, रोहिण्यां प्रीतिश्चन्द्रस्य । पाणिनिः २।३।४५ ।

द्विद्रोणेन क्रीणाति, पञ्चकेन क्रीणाति; द्विद्रोणं पञ्चकं । *

## २९२। संज्ञोऽस्मृतौ। (संज्ञ: ६।, अस्मृतौ ७।)।

स्मरणादन्यस्मिन्नर्थे वर्त्तमानस्य संपूर्व्वस्य जानातेर्ढे त्री स्याद्वा।

संजानीष्व स्व-मीशा च संजानीहि तत: शिवम्। †

## २९३। संदानो भेऽधर्म्मे नित्यम्।

(संदान: ६।, भे ७।, अधर्म्मे ७।, नित्यं १।)।

संपूर्व्वदानसम्बन्धिनि अधर्म्मे भे त्री स्यान्नित्यम्।

संयच्छते स्म गोप्येष्टं श्रीश: संयच्छति श्रियै। ‡

---

* टे कर्म्मणि प्रयुज्यमानात् मानवाचकात्, कर्म्मणो विशेषणीभूतादिति यावत्, वीप्सायां वाच्यायां तृतीया वा स्यादित्यर्थ:। मानम् इयत्तापरिच्छेदकं, तेनात्र परिमाण-वाचकस्य सङ्ख्यावाचकस्य च ग्रहणमिति। विष्णु: शतं शतं वत्सान् पयोऽपीप्यत्, शतेन गाश्च पयोऽपीप्यदिति शेष:। अत्र शतं शतमिति कर्म्मणि शतेन इति तृतीया वा। शतं शतमिति अनुक्तवीप्सायां द्वित्वं, शतेन इति तृतीयया वीप्साया उक्तत्वान् न द्वित्वम्। (शतं शतं वत्सा: गावश्च पय: अपु: इति अण्यन्तवाक्यं, वत्सान् इति गा इति च अण्यन्त-कर्त्तु: कर्म्मत्वम्।) द्विद्रोणेन क्रीणाति द्विद्रोणं क्रीणाति, द्विद्रोणपरिमितं द्रव्यं क्रीणाती-त्यर्थ:। पञ्चकेन क्रीणाति पञ्चकं क्रीणाति, पञ्च पञ्च पशून् क्रीणातीत्यर्थ:। द्विद्रोणेनेति पञ्चकेनेति च कर्म्मणि तृतीया वा। द्वौ द्वौ द्रोणौ परिमाणमस्य इति समासेन, पञ्च पञ्च परिमाणमस्य इत्यर्थे विहित-तद्धितप्रत्ययेन च उक्तत्वात् न द्वित्वम्। अत्र "गम्यमानापि क्रिया विभक्तौ प्रयोजिका इति, शतेन शतेन वत्सान् पाययति पय:, शतेन परिच्छिद्येत्यर्थ:।" इति सिद्धान्तकौमुदी। "द्विद्रोणेन धान्यं क्रीणातीति" प्रकृत्यादिभ्य उपसंख्यानमित्यस्योदाहरणमिति तत्रैव।

† सम्यो ज्ञा: संज्ञास्तस्य, न स्मृतिरस्मृतिस्तस्याम्। हे माधो त्वं स्वमात्मानम् ईशा शिवेन च संजानीष्व सम्यक् जानीहि, (८९८) संप्रतिभ्यामस्मृतौ इत्यात्मनेपदम्। अत्र ईशा इति कर्म्मणि तृतीया, स्वमिति विकल्पपक्ष:। स्मृतौ तु—ततस्तदनन्तरं शिवं सञ्जानीहि स्मर इत्यर्थ:। पाणिनि: २।३।२२।

‡ संपूर्व्वस्य दा-न 'दाने' इत्यस्य प्रयोगे अधर्म्मे धर्म्मविरुद्धे भे सम्प्रदाने नित्यं तृतीया स्यादित्यर्थ:। श्रीश: श्रीपति: गोप्या परस्त्रिया इष्टं वाञ्छितं संयच्छते स्म, दत्त-

**२९४। यस्मै दित्सासूयाक्रोधेर्ष्यारुचिद्रोह-स्थाकुश्लाघस्पृहिशपराधीक्षाप्रतिश्रुप्रत्यनुगृधार्य्यर्थो भं चौ तादर्थ्ये च।**

(यस्मै ४।, दित्सा—धार्य्यर्थाः १॥, भं १।, चौ ।१।, तादर्थ्ये ७।, च ।१।)।

**यस्मै दातुमिच्छा, असूयादयः स्थादेरर्थश्च यस्मै, तद् भ-संज्ञं स्यात्, तत्र चौ, तादर्थ्ये च।***

---

वान्! अत्र गोप्या इति अधर्म्मसम्प्रदाने तृतीया। (९०८) दानः सा चेद्धर्मे इत्यात्मनेपदम्। अधर्म्मे किं—शीशः श्रियै निजपत्नीं संयच्छति इष्टमिति शेषः। "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया" इति वार्त्तिकम्।

* आप्रतिभ्यां श्रुः आप्रतिश्रुः, प्रत्यनुभ्यां गृः प्रत्यनुगृः, स्थाश्च कुश्च श्लाघश्च स्पृहिश्च शप च राध च ईक्ष च आप्रतिश्रुश्च प्रत्यनुगृश्च धारिश्च ते, तेषामर्थाः स्थाकुश्लाघस्पृहिशपराधीक्षाप्रतिश्रुप्रत्यनुगृधार्य्यर्थाः। ततः, दित्सा च असूया च क्रोधश्च ईर्ष्या च रुचिश्च द्रोहश्च स्थाकुश्लाघस्पृहिशपराधीक्षाप्रतिश्रुप्रत्यनुगृधार्य्यर्थाश्च ते। दानस्य पात्रं सम्प्रदानम्। "कर्म्मणा यमभिप्रैति स सम्प्रदानम्" इति पाणिनिः १।४।३२। "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" इति वार्त्तिकम्। "प्रदानाभिसम्बध्यमानं सम्प्रदानम्" इति पद्मनाभः।

दातुमिच्छा दित्सा, काशीस्थविप्राय गां ददातीत्यादि-सिद्ध्यर्थम् इच्छापर्य्यन्तग्रहणम्। दानन्तु स्वस्वत्वध्वंसानन्तर परस्वत्वोत्पत्त्यनुकूलव्यापारः, अतएव रजकस्य वस्त्रं ददातीत्यादौ न सम्प्रदानत्वम्। शत्रवे भयं ददातीत्यादिप्रयोगस्तूपचारात्। एवञ्च "ददात्यर्थस्य गौणत्वेऽपि सम्प्रदानं भवत्येव, खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यप्रयोगात्"। सिद्धान्तकौमुदीटीका। मम ब्राह्मणे दानमित्यादिषु तु विवक्षावशात् न सम्प्रदानम्। त्रिविधं हि सम्प्रदानम्—"अनिराकरणात् कर्त्तुस्त्यागाङ्गकर्म्मणेप्सितम्। प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्॥" इति हरिकारिका। तत्र अनिराकर्त्तृ सम्प्रदानं यथा, देवाय वस्त्रं ददाति; प्रेरकं सम्प्रदानं यथा, याचकाय धनं ददाति; अनुमन्तृ सम्प्रदानं यथा, गुरवे गां ददाति। असूया गुणेषु दोषारोपः, क्रोधश्चित्तविकार-विशेषः, ईर्ष्या अक्षमा, रुचिरनुरागः, द्रोहोऽनिष्टाचरणम्। असूयाद्यर्थानां धातूनां कर्त्तुः प्रति असूयादिकं तत् सम्प्रदानमिति। "क्रुधद्रुहोरुपसृष्टयोः कर्म्म" इति पाणिनिसूत्रेण (१।४।३८) देवदत्तं संक्रुध्यति राजानमभिद्रुह्यतीत्यत्र कर्म्मणि द्वितीयैव,

दरातु सङ्गः स सुखं हरिः, स्मरात्
गोपीगणोऽसूयति कुप्यतीर्ष्यति।
स्म रोचते द्रुह्यति तिष्ठते ह्नुते-
ऽश्लाघिष्ट यस्मै स्पृहयत्यशप्त च॥ *

गर्गो राध्यति रामाय कृष्णाय ईक्षते व्रजे।
शुभाशुभं पर्य्यालोचयदित्यर्थः।

---

न तु चतुर्थी। ख्याधात्वर्थ इह स्थित्या स्वाभिप्रायज्ञापनेच्छा, एवं ह्नु-श्लाघ-शप-धातूनां यथाक्रमं ह्नवन-श्लाघन-शपनैः स्वाभिप्रायज्ञापनेच्छा अर्थः। अतएव "श्लाघादेर्यं ज्ञीप्सा" इति क्रमदीश्वरः। "श्लाघह्नुङ्स्थाशपां प्रयोगे यत् ज्ञपयितुमिच्छा तत सम्प्रदानं स्यात्" इति गोयीचन्द्रः। स्थादीनां प्रयोगे यं प्रति स्वाभिप्रायज्ञापनेच्छा तत् सम्प्रदानमित्यर्थः। स्पृहिधातोः कर्म्मैव सम्प्रदानम्। राध इति दैवादिकस्य स्वादेश्च ग्रहणं, राध ईक्ष इति द्वयोरत्र शुभाशुभपर्य्यालोचनमर्थः, यस्य शुभाशुभपर्य्यालोचनं तत् सम्प्रदानमिति। आप्रतिपूर्व्वश्रृणातेरङ्गीकारोऽर्थः, स च यस्य सम्बन्धे क्रियते तत सम्प्रदानम्। प्रत्यनुपूर्व्वगृणाति (नतु गिरतेः) पूर्व्ववक्तुः प्रोत्साहनमर्थः, तत्र पूर्व्ववक्ता सम्प्रदानम्। धारीति धृधातुर्ण्यन्तः, तस्य गृहीतापरिशोधनमर्थः, तत्र यस्य धनं गृहीत तत् सम्प्रदानमिति। ततश्च दित्सादिधार्य्यर्थपर्य्यन्तानां यो विषयः स सम्प्रदानसंज्ञः स्यात्, तत्र च चतुर्थी स्यादित्यर्थः। तादर्थ्ये इति—स चासौ अर्थश्चेति तदर्थः तस्य भावस्तादर्थ्यं, एवञ्च तस्यार्थो निवृत्तिस्तदर्थः, तदर्थ एव तादर्थ्यं, ततश्च, तादर्थ्यञ्च तादर्थ्यञ्च इत्येकशेषे तादर्थ्ये तस्मिन्, यत् प्रयोजनं तस्मात्, यस्य निवृत्तिस्तस्मादपि चतुर्थीत्यर्थः। यथा—ज्ञानाय पाठः, मशकाय धूम इत्यादि। पाणिनिः २।३।१३,१।४।३३—४१, वार्त्तिकञ्च।

* स हरिः सङ्गः साधुभ्यः सुखं ददातु। सङ्ग इति दित्सया सम्प्रदानत्वम्। यस्मै हरये गोपीगणः स्मरात् कामाद्धेतोः असूयति स्म, यस्य गुणेषु दोषारोपणमकरोदित्यर्थः, असूं करोतीति कण्ड्वादित्वात् (८५४) क्य, स्मशब्दयोगे (९३४) अतीते लट्। एवं यस्मै कुप्यति स्म, ईर्ष्यति स्म। यस्मै रोचते स्म यस्यानुरागपात्रमासीदित्यर्थः। यस्मै द्रुह्यति स्म। गोपीगणो यस्मै तिष्ठते स्म यं स्वाभिप्रायं विज्ञापयितुमैच्छदित्यर्थः, तिष्ठते इति (८६९) आत्मनेपदम्। यस्मै ह्नुते स्म अपह्नवेन यं स्वाभिप्रायं विज्ञापयितुमैच्छदित्यर्थः। यस्मै अश्लाघिष्ट श्लाघनेन यं स्वाभिप्राय विज्ञापयितुमैच्छदित्यर्थः। यस्मै स्पृहयति स्म। यस्मै अशप्त च शपथेन यं स्वाभिप्रायं विज्ञापयितुमैच्छदित्यर्थः, अशप्तेति (८६८) आत्मनेपदम्।

विभीषणायाशुश्राव राज्यं प्रत्यशृणोद्यशः।

प्रतिज्ञातवानित्यर्थः।

रामः प्रत्यगृणात्तस्मै लक्ष्मणोऽन्वगृणात् कपिः।

रामं वदन्तं प्रोत्साहयामास ब्रूत्यर्थः।

सर्व्वो धारयते सर्व्वं सङ्गस्तं भज मुक्तये।*

## २९५। शक्तार्थ वषड्ढित सुख स्वाहा स्वधा स्वस्ति नमोभिः। (शक्तार्थ—नमोभिः ३॥)।

एभिर्योगे ची स्यात्।

दैत्येभ्योऽलं हरिः, पूष्णे वषट्, सङ्गो हितं सुखम्।

स्वाहाग्नये, स्वधा पित्रे, स्वस्ति धात्रे, नमः सते॥†

---

* गर्गो मुनिः व्रजे गोष्ठे रामाय बलदेवाय राध्यति स्म, कृष्णाय ईक्षते स्म, रामस्य कृष्णस्य च शुभाशुभं पर्य्यालोचयदित्यर्थः (पर्य्यालोचयदिति, चकितो वा चुरादय इति ज्ञापकात् लोचृ ईक्षे इति भौवादिकात् स्वार्थे ञिः)। रामः विभीषणाय राज्यम् आशुश्राव यशश्च प्रत्यशृणोत् दातुं प्रतिज्ञातवानित्यर्थः। लक्ष्मणस्तस्मै रामाय प्रत्यगृणात, कपिः सुग्रीवः (तस्मै रामाय) अन्वगृणात, विभीषणाय राज्यं यशश्च दास्यामीति वदन्तं रामं साधुवादैः प्रोत्साहयामासेत्यर्थः। सर्व्वः शिव सङ्गी भक्तेभ्यः सर्व्वं (वाञ्छितं) धारयते, दयालुतया शिवस्य अधमर्णत्वेन निर्द्देशः, धारयते इति फलवत्कर्त्तरि (९१९) आत्मनेपदम्। हे साधो मुक्तये मुक्त्यर्थं तं सर्व्वं भज, अत्र मुक्तये इति तादर्थ्ये चतुर्थी। यत्र निमित्तस्य कर्म्मकारकेण सह योगो वर्त्तते तत्र (३११) सप्तम्येव, यथा वस्त्रेषु रजकमवधीदिति। अत्र तु सर्व्वेण सह मुक्तेर्न योगः।

† शक्तः अर्थो येषां ते शक्तार्थाः अलंशक्तप्रभुसमर्थपर्य्याप्तप्रभृतयः, ते च वषट् च हितञ्च सुखञ्च स्वाहा च स्वधा च स्वस्ति च नमश्च तैः। अत्र हित सुख इत्यनेन हितार्थ-सुखार्थयोर्ग्रहणम्। वषट् स्वाहा स्वधा स्वस्ति नमः इत्येतेषां त्यागार्थानां मन्त्रार्थानाञ्च ग्रहणम्। अत्र "अर्थशब्देन प्रयोजनार्थानां ग्रहणम्; हितशब्देन कल्याणपर्य्याय-पठितानां भद्रशोभनशिवादीनां साधुप्रभृतीनाञ्च ग्रहणम्; सुखशब्देन मुत्प्रीत्यादीनां

## २९६ । ढेनाशिषि वा ।

(ढेन ३।, [अथवा ढे ७।, न ।१।], आशिषि ७।, वा ।१।) ।

सद्भ्यः सतां वा शं भूयात् । *

## २९७ । परिक्रियो घे वा ।

(परिक्रियः ६।, घे ७।, वा ।१।) ।

भक्त्यै मुक्तिः परिक्रीता सद्भिर्विष्णोः कृषारिभिः । †

---

ग्रहणम्" इति भरतः । नारायणं नमस्कृत्य इत्यादौ उपपदविभक्तेः कारकविभक्तिर्गरीयसीति (बलीयसीति वा) न्यायात् कर्म्मत्वम् । पाणिनिः २।३।१६, वार्त्तिकञ्च ।

दैत्येभ्य इति—हरिर्दैत्येभ्योऽलं समर्थ । पूष्णे सूर्य्याय वषट्, पूष्णे यद्दातव्यं तत् वषट् इत्युच्चार्य्य दातव्यमित्यर्थः । सद्भ्यः साधुभ्यो हितं सुखञ्च भवतीति शेषः । अग्नये स्वाहा, पित्रे स्वधा, धात्रे स्वस्ति, सते विष्णवे नमः, अग्न्यादिभ्यो यत् दातव्यं तत् क्रमेण स्वाहा इत्यादि उच्चार्य्य दातव्यमित्यर्थः । अत्र शक्तार्थैर्हितसुखैश्च योगे षष्ठ्यपीति (३०२) वक्तव्यम् ; "शक्तार्थैः षष्ठ्यपीष्यते" इति क्रमदीश्वरः । तेन प्रभुर्बुभूषुर्भुवनत्रयस्य, नाप्रीणीदस्य कश्चनेत्यादि साधु ।

* ढ-शब्देन कर्म्म क्रिया चोच्यते, ढशब्दस्य क्रियावाचकत्वं घे चादिढे क्तः (१०९२) इत्यत्र आदिढे आदिक्रियायामित्यर्थेन स्वय वक्ष्यति । ततश्च प्रयुज्यमानेन क्रियावाचकपदेन योगे आशिषि (इष्टार्थाविष्करणे) गम्यमानाया चतुर्थी वा स्यादित्यर्थः । अथवा—आशिषि गम्यमानायां चतुर्थी वा स्यात् न तु ढ कर्म्मणि प्रयुज्यमाने इत्यर्थः । कर्म्मणि तु कृष्णः सतां शं करोतु इत्यादौ न स्यात् । आशिषि किं, तेषां कुशलं जातम्, आयुष्यं प्राणिनां घृतमित्यादि । सद्भ्यः सतां वा इति पक्षे षष्ठीविधानात् षष्ठ्यर्थ एवायं विधिरिति, तेन ग्रामे कुशलं भूयादित्यादौ न स्यात् । अत्र स्वस्तिवर्जकुशलायुष्यप्रयोजनमद्रभद्रहितसुखपथ्यशोभनार्थैरेव योगे ज्ञेयम् । पाणिनिः २।३।७३ ।

† परिपूर्व्वस्य क्रीणातेः प्रयोगे घे करणे चतुर्थी स्याद्वा इत्यर्थः । भक्त्यै इति—सद्भिः साधुभिः विष्णोः सकाशात् भक्त्यै मुक्तिः परिक्रीता, अरिभिः शत्रुभिः कृषा द्वेषेण, मुक्तिः परिक्रीतेति शेषः । उदाहरणद्वयेन विकल्पो दर्शित । एवं द्रोणाय द्रोणेन वा परिक्रीतो वृषलः । परेः किं, शतेन क्रीतोऽश्वः । वेतने एवायं विधिरिति क्रमदीश्वरः । "चतुर्थी च परिक्रीणो वेतनादौ करणे" इति तत् सूत्रम् । तृतीया सिद्धैव, चतुर्थ्यर्थं विधानमिति गोयीचन्द्रः । व्यवस्थार्थं परसूत्रे वाशब्दोऽवश्य-वक्तव्ये वाक्यमध्यवर्त्तित्वेनास्य नित्यत्वप्राप्तौ, विकल्पार्थं वाग्रहणम् । पाणिनिः १।४।४४ ।

## २९८। गत्यर्थमन्यढे चेष्टावज्ञेऽनध्वाकाक-शूकशृगालनावन्ने वा ।

(गत्यर्थमन्यढे ७।, चेष्टावज्ञे ७।, अनध्वा—अन्ने ७।, वा ।१।) ।

गत्यर्थमन्त्योर्ढे क्रमान्मार्गकाकादिवर्जे चेष्टावज्ञयोश्ची स्याद्वा ।

व्रजाय व्रजति श्रीशो व्रजं व्रजति केशवः ।
न त्वा तृणाय मन्येऽहं न त्वा मन्ये तृणं खल ॥

चेष्टावज्ञे किं—मनसा द्वारकामेति; त्वां मन्येऽहं जनार्द्दनम् ।
अध्वादौ तु——गच्छत्यनन्तः पन्थानं, न त्वा काकं स मन्यते । *

---

* गतिरर्थो यस्य स गत्यर्थः, सच मन्यश्च तत् तस्य ढं तस्मिन् । चेष्टा च अवज्ञा च तत्तस्मिन् । न अध्वा अनध्वा. काकश्च शूकश्च शृगालश्च नौश्च अन्नञ्च तत, न तत् अकाकशूकशृगालनावन्नं, अनध्वा च अकाकशूकशृगालनावन्नञ्च द्वयोः समाहारस्तस्मिन् । यथाक्रमदर्शनार्थं नञ्द्वययोगः । चेष्टा कायकृतव्यापारः, अवज्ञा अपकृष्टत्वेन ज्ञानम् । ततश्च—गत्यर्थधातोरध्ववर्जित कर्म्मणि चेष्टायां गम्यमानायां, मन्यते. काकादिवर्जिते कर्म्मणि अवज्ञाया गम्यमानायां, चतुर्थी वा स्यादित्यर्थ. । मन्य इत्यत्र श्यना निर्द्देशात् मन् अवबोधने इति तनादिपठितो न गृह्यते ; यथा न त्वां तृणं मन्वे । अतः तृणाय न गणयतीत्यादि असाधु । व्रजायेति—श्रीशः व्रजाय व्रजति, केशवः व्रजं व्रजति, पादचारेण गच्छतीत्यर्थः । हे खल अहं त्वा त्वां तृणाय न मन्ये, त्वा त्वां तृणं न मन्ये, तृणादप्यपकृष्टं मन्य इत्यर्थः । मनधातोर्येन कर्म्मणा अवज्ञा गम्यते तत्रैव चतुर्थी वा स्यात्. अतएव त्वा इत्यत्र न चतुर्थी ; इदमेव क्रमदीश्वरेण "युष्मदादेरनभिधानान्न स्यात्" इति सूत्रेण स्पष्टीकृतम् । मनसा द्वारकामेतीत्यत्र चेष्टाभावात्, त्वां मन्येऽहं जनार्द्दनमित्यत्र च अवज्ञाभावात् न चतुर्थी । अनन्तः पन्थानं गच्छतीत्यत्र अध्वकर्म्मकत्वात्, स त्वा त्वां काकं न मन्यते इत्यत्र काककर्म्मकत्वाच्च न चतुर्थी । एवं शूकादिकर्म्मण्यपि न चतुर्थी स्यात् । केचित् शूकेत्यत्र शुक श्व इति वा पठन्ति । एवं, तादर्थ्ये चतुर्थीसिद्धावपि, ग्रामाय सङ्गच्छतीत्यादिषु (८७५) समो गमृच्छेत्यादिना अढ़त्वादात्मनेपदप्राप्तेर्निरासार्थमिदमित्याहुः । पाणिनिः २।३।१२,१७ ; वार्त्तिकञ्च ।

## २९९ । यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणं ञं पौ ।

(यतः ५।, अपाय—वारणं १।, ञं १।, पौ ।१।) ।

यत एते तत् ञसंज्ञं स्यात्, तत्र पौ । *

विभीषणः पदाद्भ्रष्टो, भ्रातुर्भीतो, जुगुप्सितः ।
पापात्, पराजितो दुःखा-दप्रमत्तो विधेः, सतः ॥
आत्तविद्यो, मुनेर्जातो, भ्रातुस्त्रातो निजे-र्भवात् ।
विरतोऽन्तर्हितो दुष्टात्, शोकात् रामेण वारितः ॥ †

---

* अपायश्च भीश्च जुगुप्सा च पराजयश्च प्रमादश्च आदानश्च भूश्च त्राणश्च विरामश्च अन्तर्द्धिश्च वारणञ्चेति समाहारः । एते यस्मात् भवन्ति तदपादानसंज्ञं स्यात्, तत्र पञ्चमी स्यादित्यर्थः । अपायश्चलनं, भीर्भयं, जुगुप्सा निन्दया मनोनिवृत्तिः, पराजयः सोढुमशक्त्या निवृत्तिः, प्रमादः शास्त्रविहितकर्म्माकरणम्, आदानं ग्रहणं, भूरुत्पत्तिः प्रादुर्भावश्च, त्राणं रक्षणं, विरामो विरतिः, अन्तर्द्धिरन्तर्द्धानं, वारणं निवारणम् । अपादानं त्रिविधम्— "निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा । अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते ॥" इति हरिकारिका । "ध्रुवमपायेऽपादानम्" इति पाणिनिः १।४।२४ । तत्र पञ्चमी २।३।२८ । भीः त्राणम् १।४।२५ । पराजयः १।४।२६ । वारणम् १।४।२७ । अन्तर्द्धिः १।४।२८ । भूः १।४।३०,३१ । आदानम् १।४।२९ । एवं पठनं, श्रवणं, ज्ञानमध्ययनमित्यादि ; अत्र उपयोगे इति कथनात् नटस्य गाथां शृणोति, न तु नटात् ; अतएव "अगुरुत्वे षष्ठी" इति क्रमदीश्वरः । जुगुप्सा, प्रमादः, विरामश्च—वार्त्तिकम् ।

† विभीषण इत्यादि—विभीषणः पदात् स्थानात् भ्रष्टश्चलितः, भ्रातुः रावणात् भीतः, पापात् जुगुप्सितः पापं निन्दन् तस्मात् निवृत्त इत्यर्थः, दुःखात् पराजितः दुःखं सोढुमशक्त्या निवृत्तः, विधेः शास्त्रविहितकर्म्मणः अप्रमत्तः अनिवृत्तः, सतः पण्डितात् आत्तविद्यः आत्ता गृहीता विद्या येन तादृशः, मुनेर्विश्रवसो जातः उत्पन्नः, भ्रातू रावणात् (वधोद्यतात्) निजैरात्मीयैस्त्रातो रक्षितः, भवात् संसारव्यापारात् विरतो निवृत्तः, दुष्टात् (रावणात्) अन्तर्हितो लुक्कायितः, रामेण शोकात् वारितः त्वामहं लङ्काराजं करिष्यामीत्यादि प्रियवचनमुक्त्वा शोकात् निवारित इत्यर्थः । एवं यवेभ्यो गां वारयति, कूपादन्धं वारयतीत्यादि ।

३०० । अन्यारभ्यार्थारात्वहिर्विनर्त्तप्रति-पर्य्यपाङ्दिक्शब्दैर्हेतुयबर्थे च ।

(अन्य—शब्दैः ३।।।, हेतुयबर्थे ७।, च ।१।) ।

एभिर्योगे हेतौ यबन्तस्यार्थे च ङ्सी स्यात् । *

आङ् व्याप्तिसीम्नो-स्त्यागेऽन्यौ, प्रतिदाननिधौ प्रति । †
नेतरो विष्णुरीशानात्, भवात् प्रभृति सोऽर्च्यते ।
सोऽस्मदारात् वहिस्त्वत्, शं विना नार्थो वृषाद्दते ॥
भक्तिः प्रत्यमृतं शम्भोः, प्रद्युम्नः केशवात् प्रति ।
पर्य्यनन्तात् त्रयस्तापाः, आमृत्योः सेव्यतां हरिः ॥
ब्रह्मास्त्यासकलात्, पूर्व्वः कृष्णाद्रामोऽवरो गदः ।
आनन्दादीश्वरः शैलादासनादीक्षतेऽलकाम् ॥

शैलमारुह्य आसने उपविश्येत्यर्थः । ‡

---

* अन्यश्च आरभ्यश्च अन्यारभ्यौ, तौ अर्थौ येषां ते अन्यारभ्यार्थाः । दिशि वर्त्तमानाः शब्दाः दिक्शब्दाः, अन्यारभ्यार्थाश्च आराच्च वहिश्च विना च ऋते च प्रति च परि च अप च आङ् च दिक्शब्दाश्च ते तैः । यप् इति क्त्वाचस्थाने यबादेशः, तस्य केवलस्यासम्भवात् तदन्तस्य ग्रहणम्, तस्यार्थो यबर्थः, हेतुश्च यबर्थश्चेति हेतुयबर्थं तस्मिन् । दिक्शब्दा इति दिग्देशकालवाचकानां निर्द्देशः, ते च पूर्व्वपरादयः प्रागुदक्प्रत्यगादयश्च । किन्त्वत्र दिग्देशकालानां त्रयाणामेव ये वाचकास्तेषामेव ग्रहणं, तेन कालमात्रवाचकस्य मासादेर्न प्रसङ्गः । अन्यार्थैरारभ्यार्थैरारादाद्यैरष्टभिः दिग्वाचकशब्दैश्च योगे, हेतौ प्रयुज्यमानात् लिङ्गात्, यबन्तस्यार्थे गम्यमाने च, पञ्चमी स्यादित्यर्थः ।

† प्रति परि अप आङ् चतुर्णामर्थविशेषेष्वेव ग्रहणमित्याह आङ् व्याप्तीत्यादि—अत्र आङ् व्याप्तिसीम्नोरर्थयोर्वर्त्तते, व्याप्तिरभिविधिः, सीमा अवधिः । प्रति प्रतिदाननिधौ वर्त्तते, दानञ्च निधिश्चेति समाहारे दाननिधिः, सूत्रत्वात् पुंस्त्वं, प्रतेर्दाननिधिः प्रतिदाननिधिस्तस्मिन्, प्रतिदाने प्रतिनिधौ चेत्यर्थः । प्रतिदानं विनिमयः, प्रतिनिधिस्तुल्यः । अन्यौ पर्य्यपौ त्यागे वर्जने वर्त्तेते । पाणिनिः १।४।८८,८९,९२ ।

‡ नेतर इति—विष्णुः ईशानात् शिवात् न इतरः न भिन्नः, न भेद इति केचित । स विष्णुः भवात् प्रभृति जन्मन आरभ्य अर्च्यते । प्रातःकालं समारभ्य इत्यादिकन्तु, उप-

## ३०१। वारादर्थैः। (वा ।१।, आरादर्थैः ३।॥)।

दूरान्तिकार्थैः षी स्याद्वा।

रामाद्रुद्रस्य यो दूरं पापाद्दुःखस्य सोऽन्तिकम्। *

## ३०२। समार्थैनार्थ्यस्ताद्धितसुखैर्निर्द्धारे सम्बन्धे ढे च षी।

(समार्थ—सुखैः ३।॥, निर्द्धारे ७।, सम्बन्धे ७।, ढे ७।, च ।१।, षी ।१।)।

एभिर्योगे एषु च षी स्यात्।

---

पदविभक्तिः कारकविभक्तिर्गरीयसीति न्यायात् कर्म्मणि द्वितीया। स विष्णुः अस्मत् आरात् अस्माकं निकटे इत्यर्थः; त्वत् वहिः तव वहिरित्यर्थः। वृषात् धर्म्मात् विना ऋते च शं सुखम् अर्थश्च न भवतीत्यर्थः। विना ऋते इति द्वाभ्यां योगे (२८६) द्वितीया च, विना शब्देन योगे (२८९) तृतीया च भवतीति बोध्यम्। शम्भोः भक्तिः प्रीति प्रतिदानम् अमृतं मोक्ष, यः शम्भौ भक्तिं करोति शम्भुस्तस्मै मुक्तिं ददातीत्यर्थः। प्रद्युम्नः कामदेवः केशवात् प्रति केशवस्य तुल्य इत्यर्थः। त्रयस्तापाः आध्यात्मिकाधिदैविकाधिभौतिकसंज्ञकाः अनन्तात् परि अनन्तेन वर्जिता इत्यर्थः। एवं अपानन्तात् त्रयस्तापा इत्यपि। आ मृत्योः मृत्युपर्य्यन्तं हरिः सेव्यताम्। आ सकलात् सकलं जगत् व्याप्य ब्रह्म परमेश्वरः अस्ति। रामो बलरामः कृष्णात् पूर्व्वः पूर्व्वकालीनः ज्येष्ठः इत्यर्थः। गदो गदनामको बालकः कृष्णात् अवरः पश्चिमकालीनः कनिष्ठः इत्यर्थः। ईश्वरः शिवः आनन्दात् हेतोः शैलात् शैलमारुह्य आसनात् आसने उपविश्य अलकां कुवेरपुरीम् ईक्षते पश्यति; अत्र आरुह्येति यबन्तस्यार्थे शैलादिति कर्म्मणि पञ्चमी, उपविश्येति यबन्तस्यार्थे आसनादिति अधिकरणे पञ्चमी। कर्म्माधिकरणाभ्यामन्यत्र यबर्थे पञ्चमी न स्यादिति प्राञ्चः। पाणिनिः २।३।१०,११,२५,२८,३२; वार्त्तिकञ्च। अत्र वक्तव्यम् "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य" (पाणिनिः २।३।३३) इति सूत्रेण "स्तोकान्मुक्तमुदन्वता" इत्यादौ पञ्चमी तृतीया च। एवमेव "स्तोकादिधर्म्मवाचिनः करणात्" इति क्रमदीश्वरः।

* आरात् इत्यव्ययस्य अर्थ इव अर्थो येषां ते आरादर्थास्तैः। आरात् दूरसमीपयोरित्यमरः, अत आह दूरान्तिकार्थैरिति। यः रामात् रुद्रस्य च दूरं रामस्य रुद्रस्य च दूरे तिष्ठतीति शेषः, स पापात् दुःखस्य च अन्तिकं पापस्य दुःखस्य च अन्तिके तिष्ठतीत्यर्थः। अत्र दूरं अन्तिकञ्च सप्तम्यर्थे द्वितीया। पाणिनिः २।३।३५।

य: सर्व्वस्य समो यश्च दक्षिणेनोत्तरा स्थित:।
उपर्य्यध: पूर्व्वतश्च पश्चात्, यस्याखिलं हितम्।
सुखञ्च, तस्य देवानां वर्य्यस्य, पदयोर्भजे॥ *

## ३०३। ज्ञोऽज्ञाने.धे। (अ: ६।, अज्ञाने ७।, धे ७।)। †

शम्भोर्म्मुकुन्दे जानीते भक्त्या जानाति शङ्करम्।

---

* समोऽर्थो येषां ते समार्था:, समानसमतुल्यसदृशादय:। समार्थाश्च एनश्च आश्च रिश्च अस् च तस् च तात् च हितञ्च सुखञ्च तानि तै:। एन आ रि अस् तस् तात् षडेते तद्धिता:, तेषाञ्च केवलानामसम्भवात् तदन्तानां ग्रहणम्। एन इति (५१९) वैनोऽपीत्यनेन, आ इति (५२०) दक्षिणोत्तरादाङ्गीत्यनेन, रि इति (५२४) निपातनात्, अस् इति (५२२) अतएव अस्, तस् इति (५११) तस् क्तेरित्यनेन, तात् इति (५१८) दिक्शब्दादित्यनेन। जातिगुणक्रियाणामुत्कर्षेणापकर्षेण वा सजातीयात पृथक्करणं निर्द्धार:। सम्बन्धश्च अवयवावयविभाव-जन्यजनकत्वादि-रनेकविध:। समार्थै:, एनादि-षट्तद्धितान्तै र्हितसुखाभ्याञ्च योगे, निर्द्धारणे, सम्बन्धे, कर्म्मणि च, षष्ठी स्यादित्यर्थ:। हिष्ठो यद्यपि सम्बन्ध: षष्ठ्युत्पत्तिस्तु भेदकादिति ज्ञेयम्। य: सर्व्वस्येत्यादि—तस्य पदयो-र्भजे इत्यन्वय:, य: सर्व्वस्य जगत: समस्तुल्य:, यश्च सर्व्वस्य दक्षिणेन स्थित:, स्थित इति वर्त्तमाने क्त:, दक्षिणे तिष्ठतीत्यर्थ:; एवं उत्तरा उत्तरस्यां दिशि, उपरि ऊर्द्ध्वभागे, अध: निम्नदेशे, पूर्व्वत: पूर्व्वकाले, पश्चादुत्तरकाले च, सर्व्वस्य इत्यनेन स्थित इत्यनेन च सर्व्वत्रान्वय:। यस्य अखिलं जगत् हितं मित्रं, सुखं सुखजनकञ्च, तस्य देवानां वर्य्यस्य श्रेष्ठस्य ईश्वरस्य पदयोर्भजे अहमिति शेष:। अत्र यथाक्रमं लक्षणसङ्गमो बोध्य:। सामान्यत: कर्म्मणि विहितापि षष्ठी धातुविशेषाणामिति बोध्यम्, अन्यथा सर्व्वत्र कर्म्मणि षष्ठ्यापत्ति:। तथाच, "अधीगर्थदयेशां कर्म्मणि" (पा. २।३।५२), "कृञ: प्रतियत्ने" (पा. २।३।५३), "रुजार्थानां भाववचनानामज्वरे:" (पा. २।३।५४), "आशिषि नाथ:" (पा. २।३।५५), "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" (पा. २।३।५६), "व्यवहृपणो: समर्थयो:" (पा. २।३।५७), "दिवस्तदर्थस्य" (पा. २।३।५८), इत्यादि। अतएव क्रमदीश्वर:—"कर्म्मादिविषयेऽप्यविवक्षिते कर्म्मादौ सम्बन्धविवक्षायां षष्ठ्येव"—इति सूत्रम्। "माषाणामश्नीयादिति भाष्यम्। न च स्विद्यति कस्यचिदिति भट्टि:। सा लक्ष्मीरुपकुरुते यया परेषामिति किरात:। नारायणस्यानुकरोतीत्यादि।" मूले पदयोर्भजे इत्यादौ तु विकल्प:। पाणिनि: २।३।२०,२१,४१,५०,७२।

† अज्ञानादन्यस्मिन्नर्थे वर्त्तमानस्य जानाते-र्धे करणे षष्ठी स्यादित्यर्थ:। पाणिनि: २।३।५१।

शम्भुना साधनेन मुकुन्दे प्रवर्त्तते इत्यर्थः, प्रवृत्त्यर्थश्च जानातिः ।*

३०४ । तृप्त्यर्थानां वा । (तृप्त्यर्थानां ६।।।, वा ।।१।) ।

शृङ्गारस्य हरिस्तृप्तः, पूर्णः शान्तेन शङ्करः । †

३०५ । ढघे कृत्यव्यक्युकक्तवतुखलर्थक्तोच्छ-
त्रानवसुशीलार्थतृन्भव्यर्णार्थणिनि । (ढघि ७।, कृति ७।,
अ-व्य कि उक क्तवतु खलर्थ क्त उत् शतृ आन वसु शीलार्थतृन् भव्य-ऋणार्थ-णिनि ७।)।

व्यादिवर्जे कृति प्रयुज्यमाने ढे घे च षी स्यात् । ‡

---

* शम्भोरिति । शम्भोः शम्भुना मुकुन्दे विष्णौ जानीते प्रवर्त्तते भक्त इति शेषः, शम्भौ तुष्टे सति मुकुन्दे प्रवृत्तिर्भवतीति शम्भोः साधनत्वम् । धातूनामनेकार्थत्वात् ज्ञाधातुरत्र प्रवृत्त्यर्थः । (८९७) अढादित्यात्मनेपदम् । अज्ञाने किं, भक्त्या शङ्कर जानाति, स्वरेण पुत्रं जानातीत्यादौ न करणे षष्ठी ।

† तृप्तिरर्थो येषां ते तृप्त्यर्थाः तेषां, तृप्त्यर्थधातूनां करणे षष्ठी स्याद्वा इत्यर्थः । हरिः शृङ्गारस्य तृप्तः शृङ्गारेण सन्तुष्ट इत्यर्थः, तृप्त इति कर्त्तरि क्तः । पक्षे शङ्करः शान्तेन शान्त्या पूर्णः, पूरधातोः कर्त्तरि क्तः, पूर्त्तिरिह आप्यायनम् अतएव तृप्तिविशेषः । (नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्व्वभूतानां न पुंसां वामलोचना ॥) "करणे पूरतृप्त्यर्थयोः" इति कातन्त्रपरिशिष्टम् । "तृप्त्यर्थस्य च" इति क्रमदीश्वरः ।

‡ ढश्च घश्च ढघं तस्मिन् । व्यं—अतुम् क्त्वाच् णम् । खलः अर्थ इव अर्थो यस्य स खलर्थः, (११६१) ईषद्दुःसोरित्यनेन खल्, (११६२) आतोऽन इत्यनेन अनः, इति द्वयं खलर्थः । उत उकारान्तप्रत्ययः—णुक् इष्णु स्नु क्नु आलु आरु ऽरु इत्यादि । शतृ इत्यनेन उपलक्षणत्वात् तुल्यस्य न्यतुरपि ग्रहणम् । एवं आन इत्यनेन शान कान स्यमान इत्येषां ग्रहणम् । शीलमर्थो यस्य स शीलार्थः, स चासौ तृन् चेति शीलार्थतृन् ; भव्यं भविष्यत्कालः, ऋणं प्रतिदेयतया गृहीतं, भव्यञ्च ऋणञ्च भव्यर्णे, ते अर्थौ यस्य स भव्यर्णार्थः, स चासौ णिन् चेति भव्यर्णार्थणिन् । ततः व्यश्च किश्च उकश्च क्तवतुश्च खलर्थश्च क्तश्च उच्च शतृश्च आनश्च वसुश्च शीलार्थतृन् च भव्यर्णार्थणिन् च ते, न विद्यन्ते ते यत्र कृति सः अव्यक्युकक्तवतुखलर्थक्तोच्छत्रानवसुशीलार्थतृन्भव्यर्णार्थणिन् तस्मिन् । अव्ययादिभिन्ने

जगतां कारकः कृष्णः कृतिर्मुररिपोरियम्।
व्यादौ तु——स्रष्टा दधिं शासकमेतदर्चकान्
उन्नीतवन्तं, यतिभिः सुदर्शनम्।
ज्ञातं, हरिं, जिष्णुरघानि संस्तुवन्
मुदं दधानोऽर्थितमीयिवान् न कः॥
शं दाता हृत् कदागामी दायी मोक्षमृणं शिवः। *

---

कृति प्रयुज्यमाने अनुक्ते कर्म्मणि कर्त्तरि च षष्ठी स्यात् न तु उक्ते, उक्ते तु (२८०) प्रथमा स्यादेव। पाणिनिः २।३।६५,६९,७०, वार्त्तिकञ्च।

* कृष्णः जगतां कारकः, करोतीति कृधातोः (९९०) तृन्-णकौ घे इति णकः, अस्य कर्म्मणि जगतामिति षष्ठी। इयं जगदित्यर्थः (विधेयप्राधान्यात् स्त्रीलिङ्गता) मुररिपोः कृतिः, क्रियते या सा इति (११४७) कर्म्मणि क्तिः, कृतेत्यर्थः, अस्य कर्त्तरि मुररिपोरिति षष्ठी। व्यादीनामुदाहरणानि स्रष्टेत्यादि—एतत् जगत् स्रष्टा निर्म्माय दधिं धारयन्तं शासकं हिंसन्तञ्च, अर्चकान् उन्नीतवन्तम् ऊर्द्धं प्रापितवन्तं, यतिभिर्योगिभिः सुदर्शनम् अनायासदृश्यमानं ज्ञातञ्च, हरिं संस्तुवन्, अघानि पापानि जिष्णुः, मुदं दधानः को जनः अर्थितं वाञ्छितं न ईयिवान् न प्राप्तवान् अपि तु सर्व्वएव ईयिवानित्यर्थः। अत्र (११६६) स्रष्टा इत्यव्ययस्य कर्म्मणि एतत् जगदित्यत्र न षष्ठी, एवं कृष्णं द्रष्टुं याति, कृष्णं स्मारं स्मारं नमति। (१११९) दधिं इति किप्रत्ययान्तस्य कर्म्म जगत्, अत्र न षष्ठी। (१११०) शासकमित्यस्य कर्म्म जगत्, अत्र न षष्ठी। (१०५०) उन्नीतवन्तमित्यस्य कर्म्मणि अर्चकानित्यत्र न षष्ठी। (११६३) सुदर्शनमित्यस्य, (१०५०) ज्ञातमित्यस्य च कर्त्तरि यतिभिरित्यत्र न षष्ठी। (११०७) जिष्णुरित्यस्य कर्म्मणि अघानीत्यत्र न षष्ठी। एवं दुःखं सहिष्णुः, धनं गृहयालुः, चन्द्रं दिदृक्षुरित्यादि। (११००) संस्तुवन् इत्यस्य कर्म्मणि हरिमित्यत्र न षष्ठी। (१०९६,११००) दधान इत्यस्य कर्म्मणि मुदमित्यत्र न षष्ठी, एवं हरिं स्तोष्यमाण इति। (१०९६) ईयिवान् इत्यस्य कर्म्मणि अर्थितमित्यत्र न षष्ठी। शं कल्याणं दाता कल्याणदानशीलः, मोक्षं ऋणं दायी ऋणवदवश्यदेयमोक्षं दायी शिवः कदा हृत हृदयम् आगामी आगमिष्यतीत्यर्थः। अत्र शीलार्थतृन्नन्तस्य दाता इत्यस्य शमिति कर्म्मणि न षष्ठी, दायी इत्यस्य ऋणार्थणिनन्तस्य मोक्षमिति कर्म्मणि न षष्ठी, भव्यार्थणिनन्तस्य आगामीत्यस्य हृदिति कर्म्मणि न षष्ठी।

द्विकर्म्मणान्तु द्वयोरेव कर्म्मणोः षष्ठी, विष्णोर्म्मोक्षस्य याचको भक्त इत्यादि। केचित्तु गौणकर्म्मण्येव, यथा विष्णोर्म्मोक्षं याचको भक्त इत्यादि। जौमरास्तु कर्त्तरि कृति द्विक-

## ३०६। कामुकसङ्डार्थक्तेन। (कामुक सत्‌डार्थ क्तेन ३।)।

कामुकशब्देन वर्त्तमानडयोर्विहितेन क्तेन च योगे ठे घे च षी स्यात्।

यो लक्ष्म्याः कामुको ज्ञातः सतां तस्येदमासितम्। *

## ३०७। ल्यभावक्तास्त्यणकसढ़े घे वा।

(ल्य—सढ़े ७।, घे ७।, वा।१।)।

ल्ये भावार्थ-क्ते स्त्रीविहितं अं णकञ्च हित्वा अन्यत्र सढ़े घे षी स्याद्वा।

त्वया मम च कृष्णोऽर्च्यः स्नातं छात्र, स यस्य तु।

स्रष्टेः कृति-र्हृति-र्येन, चिकीर्षा यस्य भेदिका॥ †

---

र्मणां मुख्ये एव षष्ठीं वदन्ति, यथा गां दुग्धस्य दोग्धा गोप इत्यादि, अत्र क्रमदीश्वर-सूत्रम्—'कर्म्मद्वयं दुहादीनामनुक्तं स्यात कृता यदि। कश्चित्तत्र समाचष्टे षष्ठीं प्रधानकर्म्मणि॥" अत्र वक्तव्यं—क्वचिदव्ययादिकृत्प्रयोगेऽपि प्रयोगानुसारेण कर्त्तृकर्म्मणोः षष्ठी स्यादिति। परसूत्रे द्रष्टव्यौ।

* पूर्व्वसूत्रे उकक्तकृतोः ठे घे च षष्ठीनिषेधात् प्रतिप्रसवमाह परसूत्रद्वयेन। सन् वर्त्तमानकालः, डम् अधिकरणं, सञ्च डश्च सड्डे, ते अर्थौ यस्य स सड्डार्थः, स चासौ क्तश्चेति सड्डार्थक्तः, कामुकश्च सड्डार्थक्तश्च तत्तेन। यः श्रीकृष्णः लक्ष्म्याः कामुकः लक्ष्मीं कामयते, यः सतां ज्ञातः सद्भिर्ज्ञायते, तस्य इदम् आसितं तेनात्र उपविष्टम्। अत्र कामुक इति कमधातोः (१११०) कर्त्तरि उकः, अस्य कर्म्मणि लक्ष्म्या इति षष्ठी। ज्ञात इति (१०९५) वर्त्तमाने क्तः, अस्य कर्त्तरि सतामिति षष्ठी। आसितमिति (१०९४) अधिकरणे क्तः, अस्य कर्त्तरि तस्येति षष्ठी। इह सड्डक्तेन इत्यनेनैवेष्टसिद्धौ अर्थशब्दग्रहणं ज्ञापयति शीलितादेर्वर्त्तमाने क्तान्तस्यापि (१०९५) कर्त्तरि षष्ठी न स्यात्, तेन शीलितोऽयमनेन, रक्षितोऽयमनेन इत्यादि। एतदेव क्रमदीश्वरेण "क्वचिन्न स्यात्" इति सूत्रं प्रकटीकृतम्। पाणिनिः २।३।६७,६८, वार्त्तिकञ्च।

† ल्यस्त्व्यादिः, भावे क्तः भावक्तः। अश्च णकश्च अणकौ, स्त्रियामणकौ स्त्र्यणकौ न विद्येते स्त्र्यणकौ यत्र सोऽस्त्र्यणकः। ढेन सह वर्त्तते योऽसौ सढः, अस्त्र्यणकश्चासौ सढश्चेति अस्त्र्यणकसढः। ल्यश्च भावक्तश्च अस्त्र्यणकसढश्चेति तस्मिन्। ल्ये प्रयुज्यमाने

## ३०८। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतकुशलायुक्तनिपुणसाधुसुजर्थैर्नादरे ङी च।

(स्वामि—सुजर्थैः ३॥, नादरे ७।, ङी ।१।, च ।१।)।

भावार्थ-क्ते प्रयुज्यमाने स्त्री-विहितौ अ-णकौ हित्वा अन्यस्मिन् स्त्रीविहिते सकर्म्मके कृति प्रयुज्यमाने च कर्त्तरि षष्ठी स्याद्वा इत्यर्थः। त्वयेत्यादि। हे साधो इत्युह्यं, त्वया मम च स कृष्णोऽर्च्यः, अर्चधातोः कर्म्मणि वाच्य (९७१) घ्यण्, कर्त्तरि त्वयेति तृतीया, पक्षे ममेति षष्ठी। हि यस्मात् अत्र तीर्थे त्वया मम च स्नातं, स्नाधातो-र्भावे क्तः, त्वया मम च तृतीया-षष्ठ्यौ। यस्य कृष्णस्य सृष्टेः कृतिः करणं, येन सृष्टेः हृतिः हरणं, कृतिः हृतिश्च कृहृधातुभ्यां भावे (११४७) क्तिः, अस्य कर्त्तरि यस्येति षष्ठी, पक्षे येनेति तृतीया। उभयत्र सृष्टेरिति कर्म्मणि (३०५) षष्ठी। एवं (११४८) हानिः सुखानां दरिद्रस्य दरिद्रेण, (११५०) परिचर्य्या गुरोः शिष्यस्य शिष्येण, (११५८) वर्णना विष्णोः भक्तस्य भक्तेन इत्यादि। सढ इति किं, साधोर्वृद्धिरित्यादौ कर्त्तरि पूर्व्वेण (३०५) नित्यं षष्ठी। अस्त्र्यणक इति किं, यस्य कृष्णस्य सृष्टेश्चिकीर्षा कर्त्तुमिच्छा, भेदिका च भेदनं नाश इति यावत्। चिकीर्षेति सनन्तकृधातोः (११५३) स्त्रीविहितः अप्रत्ययः। भेदिकेति (९९०) स्त्रीविहितो णकप्रत्ययः। उभयत्र यस्येति कर्त्तरि (३०५) नित्यं षष्ठी। एवं (११५५) इच्छा मुक्तेस्तपस्विनः, (११५६) कथा कृष्णस्य भक्तानामित्यादि। पाणिनिः २।३।७१, वार्त्तिकद्वयञ्च। अत्र अस्त्र्यणकसढे इत्यस्य व्याख्यान्तरे कृते (स्त्री-विहितौ अ-णकौ हित्वा अन्यस्मिन् स्त्रीविहिते अस्त्रीविहिते वा सकर्म्मके कृति प्रयुज्यमाने) "शेषे विभाषा" इति वार्त्तिकानुसारेण शब्दानामनुशासनमाचार्य्येण आचार्य्यस्य वा इति सिध्यति।

कर्म्मणि कर्त्तरि च षष्ठीविधाने वक्तव्यमेतत्—

> अस्त्रीविहित-कृद्भिस्तु योगे षष्ठी नियम्यते (कर्म्मणीति शेषः)।
> एकदा तूभयप्राप्तौ कर्म्मण्येव न कर्त्तरि (पाणिनिः २।३।६६)।
> तव्यादीनां प्रयोगे तु द्वयोरेव हि नेष्यते॥
> कर्त्तुर्विभाषया केचित् (पाणिनिः २।३।७१) कर्म्मणोऽपि तथेष्यते।
> प्रधाने नियता षष्ठी गुणे तूभयथा भवेत॥

यथा वेदस्य पाठश्छात्रेण, ग्रामस्य गमनं पान्थेन इत्यादि। कर्म्मणोऽध्याहारेऽपि न कर्त्तरि, यथा भोजनमनेन इत्यादि। तव्यादौ तु याचितव्यः कृष्णो मोक्षं भक्तेन (भक्तस्य वा) इत्यादि। द्विकर्म्मकस्थले तु यत्र कृता द्वे कर्म्मणी अनुक्ते तत्र द्वयोरपि षष्ठी, केचित् मुख्ये एव, केचिच्च गौणे एव, अतः प्रयोगानुसारेणैव ज्ञेयमिति निष्कर्षः।

कां दिशं वा न गन्तव्यं, सभां वा न प्रवेष्टव्यं, इत्यादौ कर्म्मणि विद्यमानेऽपि भावे क्तप्रत्ययः स्यादिति भाष्यादीनां मतम्।

**स्वामी मुकुन्दः सर्व्वेषां, साक्षी सर्व्वेष्वधोक्षजः ।**
**निश्यक्रन्निरगुर्गोप्योऽपत्ये मातृरुदत्यजम् ॥ ***

## ३०९ । कालभावाधारं ङं म्नी ।

(काल-भाव आधारं १।, ङं १।, म्नी ।१।) ।

**एते ङसंज्ञाः स्युः, तत्र म्नी । †**

---

* सुचोऽर्थो वारः, सुचोऽर्थ इव अर्थो यस्य स सुजर्थः । वारार्थेनैवेष्टसिद्धौ सुजर्थ-ग्रहणं सुजर्थप्रत्ययान्तानां प्राप्तर्थम् । अन्यथा वारादिशब्दैरपि षष्ठीसप्तम्यापत्तेः । सुजर्थ-प्रत्ययश्च चक्रत्वस् सुच् (४८४,४८५) इति द्वयम् । "धाच्प्रत्ययोऽपि कृत्वसर्थ." इति गोयी-चन्द्रः । स्वामी च ईश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च प्रसूतश्च कुशलश्च आयु-क्तश्च निपुणश्च साधुश्च सुजर्थश्च ते तैः । न आदरो नादरस्तस्मिन् स्वाम्यादिभिरेकादशभिः शब्दैः चक्रत्वस्-सुजन्ताभ्याञ्च योगे, षष्ठी-सप्तम्यौ स्यातां, अनादरे गम्यमाने च षष्ठी-सप्तम्यौ स्यातामित्यर्थः । मुकुन्दः सर्व्वेषां स्वामी, सर्व्वेष्विति च । अधोक्षजः (अधोगतम् अक्षजमिन्द्रियजन्यं ज्ञानं यस्मात् सः) सर्व्वेषु साक्षी, सर्व्वेषामिति च । एवं कृष्णः सर्व्वेषां सर्व्वेषु च ईश्वरः, सर्व्वेषां सर्व्वेषु च अधिपतिः । स्वामीश्वराधिपतीनामेकार्थत्वेऽपि पृथग्ग्रहणात् तत्पर्य्यायभूतशब्दान्तरेण योगे न स्यात्, तेन कृष्णः सर्व्वेषां पतिरित्यादौ सम्बन्धे षष्ठ्येव, न तु सप्तमी । एवं, कृष्णः यादवेषु यादवानां वा दायादः ज्ञातिरित्यर्थः । चैत्रो मैत्रे मैत्रस्य वा प्रतिभूः लग्नक इत्यर्थः । कृष्णो यादवे यादवस्य वा प्रसूतः जात इत्यर्थः । कुशलायुक्ताभ्यां योगे तत्परत्वे एव, (आसेवायामिति पाणिनिः, तात्पर्य्ये इति भट्टोजिदीक्षित-क्रमदीश्वरौ) यथा छात्रः पाठे पाठस्य वा कुशलः आयुक्तो वा तत्पर इत्यर्थः । अन्यत्र कलासु कुशलः सुशिक्षित इत्यर्थः, रथे आयुक्तः बद्ध इत्यर्थः, इत्यादिषु सप्तम्येव । एवं निपुणसाधुभ्यां प्रशंसायामेव । अत्र "अप्रत्यादिभिरिति वक्तव्यम्" —तेन साधुर्निपुणो वा मातरं प्रति, परि, अनु वा । सुजर्थैः कालाधिकरणादेव. (अतएव "कृत्वसर्थैः कालादधिकरणात्" इति क्रमदीश्वरसूत्रम्) । यथा—गोप्यः, अपत्ये रुदति, मातुः रुदत्याश्च, रुदत् अपत्यं रुदतीं मातरञ्च अनादृत्येति शेषः, निशि त्रिः अक्रः त्रिः त्रिवारामित्यर्थः, अजं कृष्णं अगुः प्रापुः । त्रिरिति (४८५) सुच्प्रत्ययः । अगुरिति इणधातोः ल्या अन् (६८२,६७५) । एवं दिने दिनस्य वा पञ्चकृत्वः पठती-त्यादि । कालाधिकरणात् किं, गृहे द्विर्भुङ्क्ते । पाणिनिः २।३।३८—४०,४३, भाष्यञ्च ।

† कालश्च भावश्च आधारश्च तेषां समाहारः । ङम् अधिकरणं, म्नी सप्तमी । कालः

सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्व्विधः।
रेमे शरदि गोविन्दो गोपीभिरुदिते विधौ।
कालिन्द्यां, कानने, केलौ कुशलः, सकले स्थितः॥ *

## ३१०। अधिकेशार्थोपाधिभ्याम्।

(अधिक-ईश-अर्थ-उप-अधिभ्यां ३॥)।

अधिकार्थेनोपेन स्वाम्यर्थेनाधिना च योगे मी स्यात्।
गुणा उप परार्द्धे, स्युर्विष्णोरधि हरौ सुराः। †

---

घण्टदण्डमुहूर्त्तादिः। भावो धात्वर्थः, यस्य क्रियानन्तरं क्रियान्तरं लक्ष्यते स इह भावः। "तद्वैपरीत्ये च" इति वार्त्तिकम्। पाणिनिः २।३।७ ३६,३७।

* आध्रियते पदार्थोऽस्मिन् इति आधारः, (आध्रियन्तेऽस्मिन् क्रियाः इति आधारः इति काशिका)। यदुक्तं—कर्तृकर्मव्यवहितामसाक्षात् धारयत् क्रियाम्। उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥ इति हरिकारिका। स तु चतुर्व्विधः, यथा—सामीप्येति। समीपस्य भावः सामीप्यम्, आश्लेष एकदेशसम्बन्धः, विषयः प्रतिपाद्यादिः, व्याप्तिः सरवर्त्थेन सम्बन्धः। (सिद्धान्तकौमुद्यान्तु "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा" इति लिखितम्।) क्रमेणोदाहरति रेमे इति—गोविन्दः शरदि शरत्काले, विधौ चन्द्रे उदिते सति विधोरुदयक्रियानन्तरमित्यर्थः, विधौ इति भावे सप्तमी, उदिते इति तद्विशेषणत्वात् सप्तमी। यदुक्तं—विशेष्यस्य हि यल्लिङ्गं विभक्तिवचने च ये। तानि सर्व्वाणि योज्यानि विशेषणपदेऽपि चेति॥ कालिन्द्यां कालिन्दीसमीपे लक्षणया तीरे इत्यर्थः, कानने काननैकदेशे, गोपीभिः (सह) रेमे क्रीड़ितवान्। गोविन्दः कीदृशः—केलौ क्रीड़ाविषये कुशलः समर्थः, सकले जगति स्थितः सकलं व्याप्य स्थित इत्यर्थः।

† अधिकश्च ईशश्च तौ अर्थौ ययोः तौ अधिकेशार्थौ, उपश्च अधिश्च तौ उपाधी, अधिकेशार्थौ च तौ उपाधी चेति ताभ्याम्। स्वाम्यर्थेनेत्यस्य उभयार्थत्वं स्वस्वामित्वसम्बन्धस्य उभयनिष्ठत्वात्,—तथाच अधिना योगे यस्य परिवारस्तस्मात् यस्य स्वामी तस्माच्च सप्तमी स्यादित्यर्थः गुणा इति—विष्णोर्गुणाः परार्द्धे उप स्युः परार्द्धादधिका असङ्ख्या इत्यर्थः। परार्द्धं चरमसङ्ख्या,—तथाचोक्तम्, एकं दश शतञ्चैव सहस्रमयुतं तथा। लक्षञ्च नियुतञ्चैव कोटिरर्ब्बुदमेव च॥ वृन्दः खर्व्वो निखर्व्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरमिति॥ सुरा देवाः हरौ अधि हरेः परिवारा इत्यर्थः, एवम् अधि सुरेषु हरिरित्यपि, हरिः सुराणां स्वामीत्यर्थः। पाणिनिः १।४।९७।

**३११। ढेनार्थात्।** (ढेन ३।, अर्थात् ५।)।

ढेन योगे निमित्तात् ष्मी स्यात्।

वस्त्रेषु रजकमवधीत् कृष्णः। *

**३१२। क्तेना ढे।** (क्तेना ३।, ढे ७)।

क्तादिष्टितेन इना योगे ढे ष्मी स्यात्। वेदेऽधीती। †

**३१३। निर्द्धारेऽधिकेन क्रियान्तःकालाध्वनोश्च पौ च।** (निर्द्धारे ७।, अधिकेन ३।, क्रियान्त.कालाध्वनोः ७॥, च।१।, पौ।१।, च।१।)।

श्रेष्ठं कृपालुष्वकादिः रुद्रैकादशकेऽधिकम्।
मूर्त्त्यष्टकात्, शिवं ध्यायन्, भुञ्जीथा द्व्यह्नि वा त्र्यहात्॥
भूष्यो योजनलक्षेऽर्कं पश्येल्लक्षद्वयात् विधुम्। ‡

---

* अर्थो निमित्तम्। क्रियाया निमित्तं यदि कर्म्मणा संयुक्तं स्यात् तदा तस्मात् निमित्तात् सप्तमी स्यादित्यर्थः। अवधीदिति क्रियाया निमित्तस्य वस्त्रस्य हननक्रिया-कर्म्मणा रजकेन सह संयोगात् वस्त्रेषु इति सप्तमी। एवं, चर्म्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः॥ इति महानाटके। (सीमा अण्डकोषः, पुष्कलको गन्धमृगः)। कौशेये द्वीपिनं हन्ति इत्यादौ कर्म्मणा संयोगाभावात् न सप्तमी। मुक्ताफलाय करिणमित्यादौ तु, तादर्थ्ये चतुर्थी (२६४)। "निमित्तात् कर्म्मयोगे" इति वार्त्तिकम्।

† क्तादिन् क्तेन् तेन क्तेना। अधीतीति अधीतमध्ययनम् अस्यास्तीति अधीती, अस्य योगे वेदे इति कर्म्मणि सप्तमी। एवं कृती श्रुतो ब्रह्ममतेषु धीमानिति भट्टि.। क्ताद्व्यव-हितेन इना योगे एवायं विधिः, तेन कृतञ्च तत् पूर्व्वञ्चेति कृतपूर्व्वं तदस्यास्तीति कृत-पूर्व्वी, कटं कृतपूर्व्वी, वेदमधीतपूर्व्वी इत्यादौ न स्यात्। किञ्च मुख्ये कर्म्मण्येवायं विधिः, तेन मासमधीतीत्यादौ न स्यात्। "क्तस्येन् विषयस्य कर्म्मण्युपसंख्यानम्" इति वार्त्तिकम्।

‡ क्रिययोरन्तः क्रियान्तः (मध्यं), कालश्च अध्वा च तौ कालाध्वानौ, क्रियान्तश्च तौ कालाध्वानौ चेति तयोः। जातिगुणक्रियाणामुत्कर्षेणापकर्षेण वा सजातीयात् पृथक्-

## ३१४। सीमान्तमार्गात् प्रौ चान्ते।

(सीमान्तर-मार्गात् ५।, प्रौ ।१।, च ।१।, अन्ते ७।)।

**सोमनाथाच्छतं क्रोशाः कृष्णः क्रोशेषु चायुते।**
**गङ्गायमुनयोर्मध्ये कति क्रोशांश्च जाह्नवी ॥ ***

---

करणं निर्द्धारः। कालः क्षणदण्डमुहूर्त्तप्रहरादिः। अध्वपरिमाणं नल्वक्रोशादिः निर्द्धारे गम्यमाने, एवम् अधिकशब्देन योगे, तथा क्रियाद्वयमध्यवर्त्तिनि काले अध्वनि च पञ्चमी-सप्तम्यौ स्यातामित्यर्थः। उदाहरणं—कृपालुषु अर्कादिश्च श्रेष्ठं, रुद्रैकादशकं मूर्त्यष्टकाच्च अधिकं शिवं ध्यायन् द्व्यह्नि त्र्यहाद्वा भुञ्जीथाः, हे साधो इति शेषः। अत्र निर्द्धारे कृपालुषु अर्कादिश्च इति सप्तमी-पञ्चम्यौ, (३०२) षष्ठी च भविता। काकात् कोकिलः कृष्णः इत्यादि निर्द्धारणे पञ्चम्येव, नतु षष्ठी-सप्तम्यौ इति वक्तव्यम्। रुद्रैकादशके मूर्त्यष्टकाच्च इति अधिकशब्देन योगे सप्तमी-पञ्चम्यौ, द्व्यह्नि त्र्यहाद्वा इति ध्यान-क्रिया भोजनक्रिययोर्मध्यवर्त्तिनः कालात् सप्तमी-पञ्चम्यौ। जन. भूस्थः सन् योजनल- अर्कं पश्येत्, लक्षद्वयात् विधुं पश्येदिति, अत्र भूस्थितिक्रिया-दर्शनक्रिययोर्मध्यवर्त्ति- अध्वनि योजनलक्षे लक्षद्वयादिति च सप्तमी-पञ्चम्यौ। (एकादशानां समूहः एकादश- रुद्राणामेकादशकं रुद्रैकादशकं तस्मिन्। अष्टानां समूहोऽष्टकं मूर्त्तीनामष्टकं मूर्त्यष्ट- तस्मात्। द्वयोरह्नोर्भवः काल इति तद्धितार्थेद्विगौ द्व्यह्नः, ततः सप्तमी विभक्तौ (११- द्व्यह्नि। त्रयाणामह्नां समाहारः त्र्यहस्तस्मात्। भुवि तिष्ठतीति भूस्थः।) पाणि- २।३।७,२।३।४१,४२।

* सीम्नोरन्तः, स चासौ मार्गश्चेति सीमान्तमार्गस्तस्मात्। मार्गोऽध्वपरिमा- क्रोशयोजनादिः। सीमाद्वयमध्यवर्त्तिमार्गपरिमाणवाचकात् शब्दात् अन्ते गम्यमा- प्रथमा, चकारात् सप्तमी च स्यादित्यर्थः। अन्तगम्यमानाभावे तु केवलं प्रथमा स्या- त्यर्थश्च वक्तव्यः। सोमनाथात् शतं क्रोशाः कृष्णः, शतक्रोशान्ते वर्त्तते इत्यर्थः; ए- अयुते क्रोशेषु च, अयुत-क्रोशान्ते च वर्त्तते इत्यर्थः। अत्र सोमनाथकृष्णयोः सीम्नो- र्मध्यवर्त्तिमार्गात् शतं क्रोशाः इत्यस्मात् अन्ते गम्यमाने प्रथमा, अयुते क्रोशेषु च इत्यस्मा- सप्तमी च। शतमिति अयुते इति च बहुवचनविशेषणेऽपि अभिधानादेकत्वं, विं- त्याद्याः सदैकत्वे सर्व्वाः सङ्ख्येयसङ्ख्ययोरित्यमरात्। अन्ते किं—गङ्गायमुनयोर्म- जाह्नवी कति क्रोशाः, कति क्रोशान् व्याप्य तिष्ठतीत्यर्थः, अत्र केवलं प्रथमा। द्वितं- यार्थाकरणे अत्र (२८३) द्वितीया भवितुमर्हति। हिमालयमारभ्य आ समुद्रात् गङ्ग- यत्र च देशे जह्नुमुनिना पीतोज्झिता तत आरभ्य आ समुद्रात् जाह्नवीति गङ्गा- नामान्तरम्। जाह्नव्या मध्यदेशे यमुना मिलितेति। वार्त्तिकं भाष्यञ्च।

**३१५ । त्र्यादयोऽर्थार्थैकक्तेः स्वेस्तु सर्व्वाः ।**

(त्री आदयः १।।।, अर्थार्थैकक्तेः ५।, स्वेः ५।, तु ।१।, सर्व्वाः १।।।) ।

अर्थार्थैकक्तेः लेः स्त्यादयः स्युः, स्वेस्तु सर्व्वाः ।

भुक्त्यार्थेनार्थस्य मुक्तेः किं कार्य्यं नार्च्यतेऽच्युतः । *

**३१६ । संज्ञाः कं ।** (संज्ञाः १।।।, कं १।) ।

ढ ध घ भ ज ड़ाः कसंज्ञाः स्युः । †

इति कपादः ।

---

* त्री आदिर्यासां ताः, अर्थो निमित्तं, स एव अर्थोऽभिधेयो यस्य सोऽर्थार्थः, एका (अभिन्ना) क्तिर्यस्मात् स एकक्तिः, अर्थार्थेन सह एकक्तिः अर्थार्थैकक्तिस्तस्मात् । निमित्तार्थलिङ्गस्य विशेषणात् लिङ्गात् तृतीयादयः पञ्च विभक्तयः स्युः, तादृशात् सर्व्वनाम्नस्तु सर्व्वाः प्रथमादयः स्युरित्यर्थः । भुक्त्या अर्थेन मुक्तेरर्थस्य अच्युतोऽर्च्यते पूज्यते, किं कार्य्यं न अर्च्यते अपि तु सर्व्वस्मै कार्य्याय, जनैरिति शेषः । अत्र निमित्तार्थस्य अर्थशब्दस्य विशेषणात् भुक्त्या इति तृतीया, मुक्तेरिति षष्ठी, एवं भुक्त्यै अर्थाय, मुक्तेरर्थात, मुक्तौ अर्थे इत्यपि । किं कार्य्यमित्यत्र कार्य्यमित्यस्य निमित्तार्थस्य विशेषणात् किमित्यस्मात् सर्व्वनाम्नः प्रथमा, एवं द्वितीयादिकमपि । एवं हेतुकारणनिमित्तादिशब्द-विशेषणादपि—तथाच अल्पस्य हेतोर्बहु हातुमिच्छन्निति रघुः । भाष्यम् ।

† अस्मिन् पादे या या संज्ञा उक्ता सा कसंज्ञा स्यात् । ताः संज्ञाः—ढ ध घ भ ज ड़ा इति । कर्म्मकरणकर्तृसम्प्रदानापादानाधिकरणानामेकतमं कारकमिति यावत् । करोति कर्त्तृत्वादिव्यपदेशानिति कारकमिति भाष्यम् । "क्रियानिमित्तं कारकम्" इति दुर्गसिंहः पद्मनाभश्च । क्रियान्वयित्वं कारकत्वमित्यपि कश्चित् । चैत्रस्य धनमित्यादौ धनादिकमेव आकाङ्क्षितं स्यात् न तु गच्छतीत्यादिकं, तेन सम्बन्धस्य क्रियानिमित्तत्वाभावान्न कारकत्वम्, एवं लिङ्गार्थसम्बोधनयोरपि। गृहे प्रविशतीत्यादौ गृहादेः कर्म्मतया द्वितीयाप्राप्तौ अधिकरणविवक्षया सप्तमी, विवक्षावशाद्धि कारकाणि भवन्तीति न्यायात् । एवं महाकविप्रयोगादयो विवक्षया समाधानीयाः, स्थितेर्गतिश्चिन्तनीयेति न्यायात् । तेन स्वेच्छया ग्रामे गच्छतीत्यादिप्रयोगो न कर्त्तव्य इति साम्प्रदायिकाः । उभयोर्युगपत् प्राप्तौ तु—कर्त्ता कर्म्माधिकरणं करणं सम्प्रदानकम्, अपादानञ्च सन्देहे परं पूर्व्वेण बाध्यते इति वचनात् व्यवस्था । यथा, पश्य मृगो धावतीत्यादि । एवं क्रम-

दीश्वरोऽपि—अपादान सम्प्रदान करणाधारकर्म्मणाम् । कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते ॥ इति ।

अत्र वक्तव्यानि सूत्राणि लिख्यन्ते—

१ । "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (पाणिनिः १।२।५८) । जातिप्रतिपादन एकोऽपि जातिरूपोऽर्थो बहुवद्वा स्यात् । यथा ब्राह्मणः पूज्यः, ब्राह्मणाः पूज्याः । अत्र असंख्याप्रयोगे इति वक्तव्यम् । यथा पद्मनाभः—"जात्यर्थे वैकस्मिन् बहुवचनमसंख्याप्रयोगे" (कारकप्रकरणे ३७ सूत्रम्) । क्रमदीश्वरोऽप्येवम्—"जात्युक्तावसंख्याविशिष्टस्यैकत्वे" (कारकपादे ४८ सूत्रम्) ।

२ । "अस्मदो द्वयोश्च" (पाणिनि. १।२।५९) । अस्मद एकत्वे द्वित्वे च बहुवद्वा स्यात् । यथा अहं ब्रवीमि, आवां ब्रूवः इत्यादौ वयं ब्रूमः । अविशेषणादिति वाच्यम् । यथा पद्मनाभः—"अस्मदो द्वयोश्चाविशेषणात्" (कारकप्रकरणे ३८ सूत्रम्) । एवं क्रमदीश्वरः यथा—"अस्मदोऽविशेषणस्य द्वित्वे च" (कारकपादे ४९ सूत्रम्) । यथा कविरहम् ।

३ । "युष्मदो गुरुविशेषणस्य" (संक्षिप्तसारे कारकपादे ५० सूत्रम्) । "युष्मदो गौरवे" (सुपद्मे कारकप्रकरणे ३९ सूत्रम्) । यथा त्वं मे गुरुः, यूयं मे गुरवः । एवमेव तयादित्यः, यथा, "युष्मादि गुरावेकेषाम्" इति ।

४ । "अन्यत्र च गौरवे" (संक्षिप्तसारे कारकपादे ५१ सूत्रम्) । यथा जीवत्सु तातपादेषु ।

५ । "विंशत्यादेरनावृत्तौ बहुत्वेऽप्येकवचनम्" (संक्षिप्तसारे कारकपादे ४४ सूत्रम्) । एवं सुपद्मेऽपि "विंशत्यादेरेकत्वमनावृत्तौ" (कारकप्रकरणे ३९ सूत्रम्) । यथा विंशतिः पुरुषाः । आवृत्तौ तु द्वे विंशती नराणाम् ।

६ । "दारादेर्नित्यम्" (सुपद्मे कारकप्रकरणे ४२ सूत्रम्) । "आपो दारा वर्षाः सिकता जलौकस इत्यादेरबहुत्वेऽपि बहुवचनम्" (संक्षिप्तसारे कारकपादे ४५ सूत्रम्) । "पुंसि गृहाश्च" "सुमनोऽप्सरोवल्लजादेर्वा" (पूर्व्वोक्ते ४६, ४७ सूत्रे) ।

७ । "फल्गुनी-प्रोष्ठपदानाञ्च नक्षत्रे" (पाणिनिः १।२।६०) । पूर्व्वफल्गुन्य इत्यत्र द्वित्वे बहुत्वम् । तिष्यपुनर्वसू इत्यत्र तु बहुत्वे द्वित्वम् (पाणिनिः १।२।६३) ।

---

**३१७। दैक्यं सोऽन्वये।** (दैक्यं १।, सः १।, अन्वये ७।)।

द्वयोर्बहूनां वा दानामैक्यं स-संज्ञं स्यात्। तच्चान्वये सति कार्य्यम्। यथा—वन्द्यौ चरणौ कृष्णस्य इत्यर्थे, कृष्णचरणौ वन्द्यौ इति स्यात्, नतु कृष्णवन्द्यौ चरणाविति। *

**३१८। भिन्नान्यैकार्थद्व्यादिसङ्ख्याव्यादीनां च-ह-य-ष-ग-वाः।** (भिन्न—व्यादीनां ६।।।, च—वाः १।।।)।

भिन्नार्थानां दानां स-चसंज्ञः, अन्यार्थानां दानां हसंज्ञः,

---

* स्यादीनामर्थं निरूप्य स्याद्यन्तानामेकपदीकरणार्थमाह—दैक्यमिति। दश्च दश्च ते दे, दश्च दश्च दश्च तानि दानि, दे च दानि च तानि दानि, दानामैक्यं दैक्यम्, ऐक्यम् एकता। दं पदं, तच्च स्याद्यन्तमेव। तथाच—"नाम्नां समासो युक्तार्थः, ततस्था लोप्या विभक्तयः" इति सर्व्ववर्म्मा। नाम्नां स्याद्यन्तलिङ्गानामित्यर्थः। "समर्थः पदविधिः" इति पाणिनिः (२।१।१)। "समर्थानां समासः" इति पद्मनाभः। "समासोऽनेकपदस्यैकपदत्वम्" इति क्रमदीश्वरवृत्तिः। प्रणमतीत्यादौ समासस्तु (५४८) व्यस्य ग्यनुकारेत्यादिविध्यन्तगत भवति। द्वयोः पदयोः बहूनां वा पदानाम् ऐक्यम् एकपदीकरणं ससंज्ञं स्यादित्यर्थः। सः समासः। तच्च ऐक्यम् अन्वये सति कर्त्तव्यमिति। अन्वयः अभिप्रेतसम्बन्धः, स च क्वचित् विशेष्यरूपेण, क्वचित् विशेषणरूपेण, द्वन्द्वे तु सर्व्वेषां विशेष्याणां साहित्यरूपेण अन्वयः। कृष्णचरणौ इत्यत्र अवयवावयविभावः सम्बन्धः। कृष्णस्य इत्यस्य वन्द्यौ इत्यनेन सम्बन्धाभावात् न कृष्णवन्द्यौ इति समासः। यदा तु कृष्णेन वन्द्यौ कस्यचित् चरणौ इत्यर्थो भवति, तदा कर्त्तृत्वसम्बन्धेन कृष्णवन्द्यौ इति स्यादेव।

किञ्च यत्र प्रतियोगिपद-कारकपद-भिन्नपदापेक्षा वर्त्तते तत्र समासो न स्यात्, यथा—ऋद्धस्य राज्ञो मातङ्गाः इत्यत्र ऋद्धस्य राजमातङ्गा इति न स्यात्। यत्र च प्रतियोगिपदकारकपदयोरपेक्षा वर्त्तते तत्र स्यादेव, यथा—रामस्य नाममहिमा, कृष्णमाश्रितमनाः, बाणेन निर्भिन्नहृदय इत्यादिः स्यादेव। तथाच—प्रतियोगिपदादन्यत् यदन्यत् कारकादपि, वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते इति, सापेक्षत्वेऽपि गमकत्वात् समास इति, समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरिति च प्राञ्चः। एवञ्च नित्योऽनित्यो

**एकार्थानां दानां यसंज्ञः, द्व्यादिक्ष्यन्तपूर्व्वदानां षसंज्ञः, सङ्ख्या-पूर्व्वदानां गसंज्ञः, व्यपूर्व्वदानां वसंज्ञः, स्यात् । ***

---

विकल्पश्च समासः कर्त्तुरिच्छयेति । समासश्चतुर्व्विधः—"पूर्व्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः । इति प्राचां प्रवादः ।" "तत्पुरुषविशेषः कर्म्मधारयः, तद्विशेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव, तत्पुरुषस्य क्वाचित्केव ।" इति सिद्धान्तकौमुदी । हरिणा तु "सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा । सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥" इति सूत्रे षड्विधमेव समासमाचष्टे । पाणिनिः २।१।१ ।

* भिन्नश्च अन्यश्च एकश्च ते, ते अर्था येषां तानि भिन्नान्यैकार्थानि । द्वौ (द्वितीया) आदिर्यासां ता द्व्यादयः, तासाञ्च केवलानामसम्भवात् तदन्ता एव गृह्यन्ते । द्व्यादयश्च सङ्ख्या च व्यश्च द्व्यादिसङ्ख्याव्यानि, तानि आद्यो येषां तानि । भिन्नान्यैकार्थानि च द्व्यादिसङ्ख्याव्यादीनि च तेषाम् । चश्च हश्च यश्च षश्च गश्च वश्च ते ।

सञ्ज्ञि-सञ्ज्ञानां समसङ्ख्यत्वात् यथासङ्ख्यं दर्शयति भिन्नार्थानामित्यादि । भिन्नार्थानां पृथक्पृथगभिधेयानां पदाना समासः चसंज्ञः स्यात् । चो द्वन्द्वः । हरिहरावित्यादौ अभेदः शिवरामयोरित्यादिवचनात् वस्तुतः पदार्थयोरभेदेऽपि, भेदविवक्षया द्वन्द्वः । अत-एव विनायके विघ्नराजद्वैमातुरगणाधिपा इत्यादिप्रयोगः । पदार्थतावच्छेदकभेदादित्येके । पदजन्यप्रतिपत्तिविषयभेदादिति च केचित् । एवमेव गोयीचन्द्रः—"शब्दप्रतिपाद्य-सम्बन्धमात्रे एव परस्परापेक्षा गृहीतव्या" इति । किञ्च द्वन्द्वः सर्व्वपदार्थप्रधानोऽपि परपदस्यैव लिङ्गं भजतीति यथा—घटश्च फलञ्च घटफले, फलञ्च घटश्च फलघटौ, स्त्री च पुत्रौ च स्त्रीपुत्रा इत्यादि । सिद्धान्तकौमुद्यां "समुच्चयान्वाचयेतरेतरयोगसमा-हाराश्चार्थाः" इति चकारार्थौ दर्शितः । "परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः, अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः, मिलितानामन्वयः इतरेतरयोगः, समूहः समाहारः ।" पाणिनिः २।२।२९ ।

अन्यार्थानां समस्यमानपदात् भिन्नार्थानां पदानां समासः हसंज्ञः, हो बहुव्रीहिः । स तु सर्व्वपदार्थाप्रधानः । स च द्विविधः—तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । यत्र समस्यमानपदार्थः समासवाच्ये वर्त्तते स तद्गुणसंविज्ञानः, यथा त्रिलोचनः शिवः । तदन्योऽतद्गुणसंविज्ञानः, यथा हतकंसः कृष्णः । अस्यापरौ भेदौ यथा—समानाधि-करणो भिन्नाधिकरणश्च ; पीताम्बर इत्यादौ सामानाधिकरण्यम्, शस्त्रपाणिरित्यादौ भिन्नाधिकरणत्वम् । पाणिनिः २।२।२३,२४ ।

एकार्थानां समानाधिकरणानां विशेष्य-विशेषण-भावापन्नानामिति यावत् पदानां समासः यसंज्ञः, यः कर्म्मधारयः । पाणिनिः १।२।४२ ।

## ३१९। क्तोर्लुक् त्ये च। (क्तोः ६।, लुक् ।१।, त्ये ७।, च ।१।)।

**से स्थितायाः क्तोर्लुक् स्यात्, त्ये च परे। ***

---

द्वितीयादिविभक्त्यन्तपदपूर्व्वकाणां पदानां समासः षसंज्ञः, षस्तत्पुरुषः, स चोत्तरपदप्रधानः। पाणिनिः २।१।२२।

सङ्ख्यापूर्व्वपदानां तस्यार्थे इत्यादि वक्ष्यमाणनियमात् तद्धितार्थे समाहारे उत्तरपदे परे च सङ्ख्यावाचकपदपूर्व्वकाणां पदानां समासो गसंज्ञः, गो द्विगुः। तद्धितार्थे उत्तरपदे परे च द्विगुरुभयपदार्थप्रधानः, समाहारद्विगुरुत्तरपदप्रधानः। पाणिनिः २।१।५२।

व्यपूर्व्वदानां—वः कसामीप्येत्यादि नियमात् कारकाद्यर्थे अव्ययपदपूर्व्वकाणां पदानां समासो वसंज्ञः, वोऽव्ययीभावः, स च पूर्व्वपदप्रधानः। पाणिनिः २।१।५,६।

अत्र कातन्त्रोक्तं छन्दोबद्धं समासविवरणं प्रदर्श्यते—

पदे तुल्याधिकरणे विज्ञेयः कर्म्मधारयः।
संख्यापूर्व्वो द्विगुरिति ज्ञेयः, तत्पुरुषावुभौ॥
विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु।
समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च॥
स्यातां यदि पदे द्वे तु यदि वा स्युर्बहून्यपि।
तान्यन्यस्य पदस्यार्थे बहुव्रीहिः—विदिक् तथा॥
द्वन्द्व. समुच्चयो नाम्नोर्बहूनां वापि यो भवेत्।
अल्पस्वरतरं तत्र पूर्व्वं यच्चार्च्चितं द्वयोः॥
पूर्व्वं वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते।
स नपुंसकलिङ्गः स्यात् द्वन्द्वैकत्वं तथा द्विगोः॥

* सर्व्वसमासेषु स्थितायाः स्यादेः क्तोर्लुक् स्यात्, सर्व्वप्रत्ययेषु परेषु च स्यादेर्लुक् स्यादित्यर्थः। समासे यथा—हरिहरौ, पीताम्बरः, परमात्मा, कृष्णाश्रितः, पञ्चगुः, उपकृष्णम्। प्रत्यये यथा—श्रीमान्, पुत्रकाम्यति, वाचिकं, क्षत्रियः, माथुरः, हैमः, ग्राम्यम्, इत्यादौ प्रथमादेर्लुक्। किञ्च तत्रत्यः सार्व्वत्रिकः इत्यादौ त्रादेशस्य लोपाभावस्तु स्यादिप्रकरणं हित्वा तद्धितप्रकरणे त्रादेशविधानसामर्थ्यात्। स्यादेरिति किं, पचतितरामित्यादौ तिबादेर्न लोपः। लुक्करणेन, त्यलोपे त्यलक्षणमिति न्यायात् प्राप्तव्यं विभक्तिनिमित्तकं कार्य्यं (९३) लुकि न तन्नेति निषेधान्न स्यादिति, तेन कस्य पुत्रः किंपुत्रः इत्यादौ (१३३) टेरकारो न स्यात्, धातारं गतः धातृगत इत्यादौ (१२८) न वृद्धिः, यज्वा चासौ विप्रश्चेति यज्वविप्र इत्यादौ (१६४) न दीर्घः। विरामे परे विहितन्तु स्यादेव, तेन ब्रह्माच्युतेशा इत्यादौ (११८) नस्य लुप्, पयोविकार इत्यादौ (१०१) सस्य विसर्गः। किञ्च त्वया कृतं त्वत्कृतमित्यादौ (२१५) एकत्वेऽर्थे त्वदादेशः स्यादेव, कृतयो-

## द्वन्द्व-समासः (च)।

**इतरेतरयोगे च समाहारे च चो द्विधा।**

**हरिश्च हरश्च हरिहरौ। ब्रह्मा च अच्युतश्च ईशश्च ब्रह्माच्युतेशाः।***

**३२०। पुंवत् स्त्रेः।** (पुंवत् ।१।, स्त्रेः ६।)।

**से स्थितायाः स्त्रेः पुंवत् स्यात्, त्ये च परे। पूर्व्वपश्चिमे।**†

---

र्थस्यापि ग्रहणादित्युक्तेः। युवावादेशौ तु द्विवचने परे एव स्यातां, नतु द्वित्वेऽर्थे इति वक्तव्यम्, तेन युवाभ्यां कृतं (१८० पृष्ठं द्रष्टव्यं) युष्मत्कृतमित्यादि। पाणिनिः २।४।७१।

* चो द्वन्द्वः इतरेतरयोगे च समाहारे च भवन् द्विधा भवति। इतरेतरयोगोऽवयवप्रधानः, तेन अवयवकृते द्वित्वबहुत्वे भवतः। समाहारः संहतिप्रधानः, तेन संहतेरेकत्वादेकवचनमेव इति भेदः। हरिश्च हरश्च इति वाक्ये सि-द्वयस्य लुकि हरिहर इति समुदायस्य लिङ्गसंज्ञायाम् अवयवद्वयघटितत्वात् द्विवचनम्। राजरथिनावित्यादौ तु पूर्व्वपदस्य विभक्तेर्लुकि (११८) निरामे परे विहितनकारलोपः स्यात्, परपदस्य विभक्तिलोपेऽपि पुनर्लिङ्गसंज्ञायां विभक्त्युत्पत्तौ विरामविहितं नकारलोपादिकं न स्यादेव। ब्रह्माच्युतेशा इत्यत्र अवयवत्रयघटितत्वात् बहुवचनम्। एवं घटौ च घटौ च घटाः, अत्र अवयवचतुष्टयघटितत्वात् बहुवचनम्। समस्तपदलिङ्गन्तु परपदस्य यत् तदेव भवतीति।

† पुमानिव पुंवत्, त्ये च इति अनुवर्त्तते। किञ्च त्यशब्देनात्र विभक्तिभिन्नप्रत्ययो ग्राह्यः, किन्तु विभक्तिस्थाने तद्धितप्रत्ययं कृते तु पुंवत् स्यादेव, यथा सर्व्वस्याः सर्व्वतः इत्यादि। सर्व्वसमासे सर्व्वप्रत्यये च परे सर्व्वनाम्नः पुंवद्भावः स्यादित्यर्थः। अत्र समासगतपूर्व्वपदस्यैव स्त्रेः पुंवत् स्यात् न तु परपदस्य, अतएव पश्चिमा च पूर्व्वा च पश्चिमापूर्व्वे इत्यत्र पूर्व्वा इति परपदस्य स्त्रेः न पुंवद्भावः। न च, (८७) न गौण्याख्येत्यनेन स्त्रिसंज्ञानिषेधात् पूर्व्वपश्चिमे इत्यत्र कथं पुंवद्भाव इति वाच्यं, न गौण्याख्येत्यनेन द्वन्द्वसमासे कृते एव स्त्रिसंज्ञा निषिध्यते, पुंवत् स्त्रेरित्यनेन समासे स्थितस्यैव पुंवद्भावो विधीयते, इत्यविरोधात्। सर्व्वा प्रिया यस्य स सर्व्वप्रियः इत्यादौ अनेन पुंवद्भावः। (३२९) पूरणीप्रियेत्यनेन तु (३२७) पुंवत् स्त्वाक्तेत्यादिना विहितस्यैव पुंवद्भावस्य निषेधः। एव सर्व्वासां पतिः सर्व्वपतिरित्यादि। प्रत्यये यथा—सर्व्वामिच्छति सर्व्वकाम्यतीत्यादि। "सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति भाष्यम्।

## ३२१। ऋतो ङा तत्पुत्रे सगोत्रविद्ये चे।

(ऋतः ६।, ङा ।१।, तत्पुत्रे ७।, सगोत्रविद्ये ७।, चे ७।)।

चे स्थितस्य ऋदन्तस्य ङा स्यात् ऋदन्ते पुत्रे च परे सगोत्रविद्ये। मातापितरौ पितापुत्रौ, होतापोतारौ। *

## ३२२। चगैक्यवं क्लीवं। (चगैक्यवं १।, क्लीवं १)।

चस्यैक्यं गस्यैक्यं वस्य क्लीवं स्यात्। †

## ३२३। चैक्याच्चुदषहोऽः। (चैक्यात् ५।, चुदषहः ५।, अ. १।)।

चवर्गान्ताद्दषहान्तात् चैक्यात् अः स्यात्।

---

* सच पुत्रश्च तत्पुत्रं तस्मिन्। तत्शब्देनेह पूर्व्वस्थित-ऋदन्त एवोच्यते। गोत्रञ्च विद्या च ते, समाने गोत्रविद्ये यस्य तत् सगोत्रविद्यं तस्मिन्। द्वन्द्वसमासस्थपूर्व्ववर्त्ति-ऋदन्तशब्दस्य ङा स्यात् ऋदन्ते पुत्रे च परे, पूर्व्वोत्तरपदयोः समानगोत्रत्वे समान-विद्यत्वे च सतीत्यर्थः। मातापितरौ पितापुत्रौ इत्युभयत्र समानगोत्रत्वम्, होतापोतारौ इत्यत्र समानविद्यत्वम्। ऋदन्ते किं—पितृपितामहौ। सगोत्रविद्ये किं—जामातृपुत्रौ दातृभोक्तारौ इत्यादि। अत्र पुत्रशब्देन पुत्रार्थशब्द उच्यते इति क्रमदीश्वरः, तेन दुहितात्मजौ इत्यादि। पूर्व्वपदस्य समानगोत्रत्वे परपदस्य च समानविद्यत्वे न भवति, यथा पितृहोतारौ। किञ्चात्र द्विपदद्वन्द्वे एव ङा भवति, तेन होता च पोता च यष्टा च ते होतृपोतृयष्टार इत्यत्र न स्यात्। द्विपदवाक्ये तु स्यादेव, तेन होतापोतारौ च यष्टोद्गातारौ च ते होतापोतायष्टोद्गातार इति। होतापोतारौ च यष्टा चेति वाक्ये तु होतापोतायष्टार इति। अत्र मातापितरौ इत्युदाहरता प्रायेण द्वन्द्वे स्त्रीलिङ्गस्यैव पूर्व्वस्थितिरिति सूचितम् (पाणिनिः १।२।७०)। "मातरपितरावुदीच्याम्" (६।३।३२) इति पाणिनिसूत्रेण मातापितरौ इत्यस्य रूपान्तरम्। पाणिनिः ६।३।२५।

† चश्च गश्च तौ तयोरैक्यं, चगैक्यञ्च वश्च तत्। ऐक्यं समाहारः। अव्ययीभावस्य क्लीवत्वफलन्तु उपसर्गं उपनदि इत्यादौ (१६७) ह्रस्वः। गुरुपर्णं छायाच्छायं रत्नःसभं नृपसभं दासीसभं स्त्रीसभं गोशालं (पाणिनिः २।४।२१—२५) इत्यादिकमपि क्लीवलिङ्गं भवत्येवेति वक्तव्यम्। पाणिनिः २।४।१,२,१७,१८।

वाक् च त्वक् च द्वयोः समाहारः वाक्त्वचं, श्रीस्रजं, शमीदृषदं, वाक्त्विषं, पीठच्छत्रोपानहं। *

३२४। ऊर्व्वष्ठीवं पदष्ठीवं धेन्वनडुहौ अहोरात्रः स्त्रीपुंसौ वाङ्मनसे ऋक्सामे दारगवं अक्षिभ्रुवं इत्यादयः साध्याः।

(ऊर्व्वष्ठीवं १।, पदष्ठीवं १।, धेन्वनडुहौ १॥, अहोरात्रः १।, स्त्रीपुंसौ १॥, वाङ्मनसे १॥, ऋक्सामे १॥, दारगवं १।, अक्षिभुवं १।, इत्यादयः १॥, साध्याः १॥)। †

इति चः।

---

* चुश्च दश्च मूर्द्धन्य-षश्च ह चेति चुदषह तस्मात्। समाहारद्वन्द्वे स्थितात् चवर्गान्त-दान्त षान्त-हान्तात् षः स्यादित्यर्थः। (५२७) आदस्त इत्यनेन एतट्-अ प्रत्ययादीनां तद्धितत्वात्, (४३१) न दं तसावित्यनेन दान्तत्वनिषेधे वाक्त्वचमित्यादौ विरामसमाश्रित्य (२११) कुङादिकं न स्यात्। एवञ्च समासपादोक्तप्रत्यया अन्त्यपदादेव स्युरिति, तेन त्वक्पत्रं सखिपुत्रः इत्यादौ पूर्व्वपदात् न कश्चित् प्रत्ययः। चे किं, पञ्चानां वाचां समाहारः पञ्चवाक् इति द्विगौ न स्यात्। ऐक्यमिति किं, प्रावृट्शरदौ इति इतरेतरे न स्यात्, समाहारे तु प्रावृट्शरदमिति स्यादेव। पाणिनिः ५।४।१०६।

† ऊर्व्वष्ठीवमित्यादयः साध्याः निपात्या इत्यर्थः। ऊरू च अष्ठीवन्तौ च ऊर्व्वष्ठीवं, पादौ च अष्ठीवन्तौ च पदष्ठीवं, उभयत्र अप्रत्ययः, पादस्य पदादेशश्च। धेनुश्च अनड्वांश्च धेन्वनडुहौ, एतदादिभ्योऽपि अप्रत्ययः। अहश्च रात्रिश्च अहोरात्रः, समाहारेऽपि पुंस्त्वम्। सङ्ख्यापूर्व्वत्वे तु क्लीवत्वं यथा त्रिरात्रमित्यादि। स्त्री च पुमांश्च स्त्रीपुंसौ। वाक् च मनश्च वाङ्मनसे। ऋक् च साम च ऋक्सामे। दाराश्च गावश्च दारगवं। अक्षिणी च भ्रुवौ च अक्षिभ्रुवं। इत्यादयः इति आदिशब्देन षट्समासेषु अनुक्तानि उच्यन्ते। तत्र समासान्तरेऽनुक्तं तत्रैव वक्तव्यं, द्वन्द्वे अनुक्तानि तु अत्र उच्यन्ते। नक्तन्दिवं रात्रिन्दिवं अहर्दिवं ऋग्यजुषं; अग्नीषोमौ सूर्य्याचन्द्रमसौ मित्रावरुणौ; इत्यादिकः प्रयोगानुसारेण इतरेतरयोगः समाहारश्च ज्ञेयः। पाणिनिः ५।४।७७।

अत्र समाहारविषयकाणि कतिचित् पाणिनिसूत्राणि लिख्यन्ते—"द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" (२।४।२), यथा पाणिपादं मुखनासिकं, मार्द्दङ्गिकपाणविकम्, रथिकाश्वारोहम्। "जातिरप्राणिनाम्" (२।४।६), यथा धानाशष्कुलि। "विशिष्टलिङ्गो

## बहुव्रीहि-समासः (ख)।

पीतमम्बरं यस्यासौ पीताम्बरो हरिः। नीलमुज्ज्वलं वपुर्यस्यासौ नीलोज्ज्वलवपुः कृष्णः।*

---

नदीदेशोऽग्रामाः” (२।४।७), यथा गङ्गाशोणं, कुरुकुरुक्षेत्रम। “क्षुद्रजन्तवः” (२।४।८), यथा दंशमशकम्। आनकुलात् क्षुद्रजन्तवः। “येषाञ्च विरोधः शाश्वतिकः” (२।४।९), यथा, गोव्याघ्रम्। “गवाश्वप्रभृतीनि च” (२।४।११), यथा गवाश्वं, दासीदासं, पुत्र-पौत्रं, स्त्रीकुमारं मूत्रपुरीष, मांसशोणितमित्यादि। “विभाषा वृक्षमृगतृणधान्यव्यञ्जन-पशुशकुन्यश्ववडवपूर्व्वापराधरोत्तराणाम्”, (२।४।१२), यथा प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः, रुरु-पृषतं रुरुपृषताः, कुशकाशं कुशकाशाः, दधिघृतं दधिघृते, गोमहिषं गोमहिषाः, तित्तिरिकपिञ्जलं तित्तिरिकपिञ्जलाः, अश्ववडवम् अश्ववडवौ (२।४।२७), इत्यादि।

निपातनादेकशेषोऽपि द्वन्द्वो भवितीति। दिङ्मात्रं यथा—अश्वी च अश्वश्च अश्वौ, हंसी च हंसश्च हंसौ, युवती च युवा च युवानौ (पा. १।२।६७), स्वसा च भ्राता च भ्रातरौ, दुहिता च पुत्रश्च पुत्रौ (पा. १।२।६८), श्वश्रूश्च श्वशुरश्च श्वशुरौ (पा. १।२।७१), माता च पिता च पितरौ (पा. १।२।७०), जाया च पतिश्च दम्पती जम्पती च। रामश्च रामश्च रामौ, रामश्च रामश्च रामश्च रामाः (पा. १।२।६४) इत्यादि।

* पीताम्बर इत्यत्र समस्यमानाभ्यां ‘पीतं’ ‘अम्बरं’ इति पदाभ्याम् अन्यो हरिर्बुध्यते, एवं त्रिपदबहुव्रीहौ नीलोज्ज्वलवपुरित्यत्र समस्यमानेभ्यो नीलं’ ‘उज्ज्वलं’ ‘वपुः’ इति पदेभ्योऽन्यः कृष्णो बुध्यते। एवं चतुःपदबहुव्रीहिरपि, यथा आरूढा बृहा बहवो वानरा यं स आरूढबृहद्बहुवानरो वृक्ष इत्यादि। प्रायशः समानाधिकरणानां पदानां अन्यार्थत्वे बहुव्रीहिः स्यादिति बोध्यम्। (२२२) सह मात्रा वर्त्तते योऽसौ समातृकः इति उदाहरता ग्रन्थकारेण तु कदाचित् भिन्नाधिकरणानां पदानामपि बहुव्रीहिः स्यादिति सूचितम्, अतएव धर्म्मे वृत्तिर्यस्यासौ धर्म्मवृत्तिरित्यादि। (सिद्धान्तकौमुद्यान्तु “व्यधिकरणानामपि न पञ्चभिर्भुक्तमस्य”। एवमेव गोयीचन्द्रः।) अपिच पीताम्बर इत्युदाहरता विशेषणविशेष्ययोः समासे विशेषणमेव पूर्व्वं स्यादिति सूचितं, तेन पीता-म्बर इत्यत्र अम्बरपीत इति न स्यात्। (२६८) शङ्खभिन्नीत्यादि उदाहरता क्वचित् क्तान्तविशेषणं परमपि स्यादिति सूचितं, तेन अग्न्याहितः आहिताग्निः (पाणिनिः २।२।३७) इत्यादि। वस्तुतः पूर्व्वपदोत्तरपदव्यवस्था प्रयोगानुसारेण ज्ञेया। द्वितीया-दिविभक्त्यन्तान्यपदार्थो बहुव्रीहिरिति आचार्य्यैर्मन्यते यथा—आरूढो वानरो यं स आरूढवानरो वृक्षः। जितः कामो येन स जितकामस्तपस्वी। उपनीतं भोजनं यस्मै स उपनीतभोजनोऽतिथिः। निर्गतो जनो यस्मात् स निर्गतजनो देशः। पीताम्बर इति षष्ठ्यन्तान्यपदार्थः। उषितो विहगो यस्मिन् स उषितविहगो वृक्ष इत्यादि। “प्रथमार्थे तु न, यथा वृष्टे देवे गतः” इति सिद्धान्तकौमुदी। स्वमते तु प्रथमान्तान्यपदार्थोऽपि, यथा समातृक इत्यादि।

(१०७) षृ र्णोऽदान्ते न इति हरिभाविणी हरिभाविनी, श्रीभाविण श्रीभाविन। रम्यविणा श्रीकामिण। रम्यपक्केन रम्ययूना रम्याह्ना। *

## ३२५। नञोऽनौ वाज्झसोः।

(नञः ६।, अनौ १॥, वा ।१।, अच्-हसोः ७॥)।

नञोऽचि परे अन् हसे च अः स्यात् से वा।
नास्त्यन्तो यस्यासौ अनन्तः नान्तः। अच्युतः नच्युतः। †

---

* हरिं भावयितुं शीलमस्याः इति भूक् शुद्धिचिन्तयोरित्यस्मात् (९९३) णिनि कृते, (६४१) ञ्लोपे, (२५७) नान्तत्वादीपि, समासान्तरविहितेन ईपा सहितस्य नस्य (१०७) वा णत्वम्। अत्र, (२६६) धात् क्तीतादिति ज्ञापकात् स्याद्युत्पत्तेः प्रागपि कारकाणां समास', तथाच कृति कारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति भाष्यम्। श्रियां भावो यस्यासौ श्रीभावः तेन श्रीभाविण श्रीभाविन, अत्र समासान्तरविहितस्यादिसम्बन्धिनो नस्य वा णत्वम्। उभयत्र एकाच्कवर्गयुक्तशब्दसम्बन्धिभिन्नत्वात् विकल्पः। रम्यो विः पक्षी यत्र तेन रम्यविणा, श्रियां कामो यस्य तेन श्रीकामिण, उभयत्र एकाच्कवर्गयुक्तशब्दसम्बन्धित्वात् नित्यं णत्वम्। रम्यं पक्कं यस्मिन् तेन रम्यपक्केन, रम्यो युवा यस्मिन् तेन रम्ययूना, रम्यं अहर्यस्मिन् तेन रम्याह्ना, एतेषु पक्कयुवाहवर्जनात् न णत्वम्।

† अन् च अश्च अनौ। अच् च हस् च अज्झसौ तयोः। समासे स्थितस्य नञः स्थाने अचि परे अन् हसे च अः स्यात् वा। नास्ति अन्त इति अन्तो नाशः। नास्ति च्युतं नाशो यस्य स अच्युतः नच्युतः। च्युतमिति च्युधातोर्भावे क्तः। च्युतधातोः कर्त्तरि (९९६) कप्रत्यये च्युतो नश्वर इति केचित्, तन्मते न च्युतोऽच्युतः च्युतभिन्न इत्यर्थः। तथाच—तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥ इति प्राञ्चः।
उदाहरणं यथा—न ब्राह्मणोऽब्राह्मणः ब्राह्मणसदृश इत्यर्थः। पापस्याभावोऽपापम्। न घटोऽघटः घटभिन्न इत्यर्थः। अनुदरी अल्पोदरीत्यर्थः। अकेशी अप्रशस्तकेशीत्यर्थः। असुरः सुरविरोधीत्यर्थः। पाणिनिः ६।३।७३,७४।
अत्र वाशब्दस्य व्यवस्थावाचित्वात् नाकादिषु आदेशो न स्यात् यथा—

**३२६। महत्तैकार्थे जातीयघासकरविशिष्टे तु तौ च।** (महत् ।६।, त ।१।, आ ।१।, एकार्थे ७।, जातीय—विशिष्टे ७।, तु ।१।, तौ ।१।, च ।१।)।

**महतस्त आ स्यात् एकार्थे, जातीयादौ तु तौ च।**

**महाबलः।** *

**३२७। पुंवत् स्त्र्युक्तपुंस्कः स्त्रियां ङ्रमानि-तत्वशसन्ततरादौ चारूप्ये।** (पुंवत् ।१।, स्त्री ।१।, उक्तपुंस्कः १।, स्त्रियां ७।, ङ्र—तरादौ ७।, च ।१।, अरूप्ये ७।)।

---

नाकी नवेदा नकुलश्च नक्रो नासत्य-नचत्र नपाच्च नभ्राट्।
नपुंसकं वै नमुचिर्नखञ्च नादेशमेतेषु वदन्ति धीराः॥ इति पाणिनिः ६।३।७५।

एषामर्थाः—न अकं (दुःखं) अस्मिन्निति नाकः। न वेत्तीति नवेदाः असुन्प्रत्ययान्तः। न कुलमस्येति नकुलः। न क्रामतीति नक्रः, क्रमेर्डः। न सत्यः असत्यः, न असत्यः नासत्यः। न चरतीति नचत्रम्, चीयतेः चरतेर्वा चत्रमिति निपातः। न पातीति नपात् शतृप्रत्ययान्तः। न भ्राजते इति नभ्राट् क्विबन्तः। न स्त्री पुमान् नपुंसकं, स्त्रीपुंसयोः पुंसकभावो निपातनात्। न मुञ्चतीति नमुचिः। न खमाकाशमस्येति नखम्।

* एकोऽर्थो यस्य स एकार्थस्तस्मिन्। जातीयश्च घासश्च करश्च विशिष्टश्च समाहारे तस्मिन्। महत्शब्दस्य तकारस्य आकारः स्यात् एकार्थे विशेष्यशब्दे परे, जातीयादौ परे तु महत्शब्दस्य (स्त्रीलिङ्ग) तीकारस्य आकारः स्यादित्यर्थः। जातीय इति (४८७) प्रत्ययः, घास कर विशिष्ट इति शब्दाः। महत् बलं यस्यासौ महाबलः। एवं महती कीर्त्तिर्यस्यासौ महाकीर्त्तिः। विशेष्यशब्दपरत्वं कर्म्मधारयेऽपि सम्भवति। तत्र महांश्चासौ देवश्चेति महादेवः, महती चासौ कीर्त्तिश्चेति—महाकीर्त्तिरिति। एकार्थ किं, महाश्च पण्डितश्च महत्पण्डितौ, महतः पुत्रः महत्पुत्र इत्यादौ न स्यात्। जातीयादौ तु महतो महत्या वा प्रकार इत्यर्थे (४८७) महाजातीयः। महतो महत्या वा घासो महाघासः। महतो महत्या वा करो महाकरः। महतो महत्या वा विशिष्टः महाविशिष्टः। अमहान् महान् भूतः महद्भूतश्चन्द्रः, अमहती महती भूता महद्भूता ब्राह्मणी, इत्यादावभूततद्भावे न स्यादिति वक्तव्यम्। पाणिनिः ६।३।४६, वार्त्तिकञ्च।

उक्तपुंस्कः स्त्रीलिङ्गः पुंवत् स्यात् एकार्थे स्त्रीलिङ्गे, ङ्यादौ च, न तु रूप्ये। *

## ३२८। नोपताककोङ्पूरण्याख्यायुम्नक्तविकारार्थणित्तं जातिस्वाङ्गेपं त्वमानिनि।

(न ।१।, ऊप्—णित्तं १।, जातिस्वाङ्गेप् ।१।, तु ।१।, अमानिनि ७।)।

---

* पुमानिव पुंवत्। उक्तः पुमान् येन स उक्तपुंस्कः, एकस्मिन्नर्थे यः स्त्रीपुंसयोर्वर्त्तते स उक्तपुंस्क इति यावत्। "भाषितः पुमान् येन समानायामाकृतावेकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कः शब्दः। तदेतदेव कथं भवति। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनाच्यते। तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः।" इति काशिका। शस् अन्ते यस्य स शसन्तः, तर आदिर्यस्य स तरादिः, शसन्तश्चासौ तरादिश्चेति शसन्ततरादिः। ङ्यश्च मानिन् च तश्च त्वश्च शसन्ततरादिश्च तत् तस्मिन्। न रूप्योऽरूप्यस्तस्मिन्। एकार्थे इत्यनुवर्त्तते। उक्तपुंस्कः स्त्रीलिङ्गशब्दः पुंवत् स्यात् विशेष्यस्त्रीलिङ्गशब्दे परे, ङ्यादौ च परे, न तु रूप्ये इत्यर्थः। यथा—सुन्दरी भार्य्या यस्य स सुन्दरभार्य्यः, एवं सुन्दरी चासौ भार्य्या चेति सुन्दरभार्य्या। ङ्यादौ तु सुन्दरीवाचरति (८४८) सुन्दरायते। आत्मानं सुन्दरीं मन्यते या सा (९९३) सुन्दरमानिनी। सुन्दर्य्या भावः (४३८) सुन्दरता सुन्दरत्वम्। शसन्ततरादिस्तु (४६२—४८३)—तरस्तमश्च रूपश्च चलरां चतमां तथा। इष्ठेयम् इमन्कल्पौ देश्यो देशीय इत्यपि। बहुः पाशश्च रूप्यश्च शस् चैते तरादय इति॥ यथा—(४६२) इयमनयोरतिशयेन शुभ्रा शुभ्रतरा, इयमासामतिशयेन शुभ्रा शुभ्रतमा। (४६४) अतिशयेन शुभ्रा शुभ्ररूपा। (४६५) अनयोरतिशयेन का किन्तराम्, आसामतिशयेन का किन्तमाम्। (४६६) अतिशयेन लघ्वी लघिष्ठा लघीयसी। (४७५) लघ्व्या भावो लघिमा। (४७७) ईषदूना शुभ्रा शुभ्रकल्पा शुभ्रदेश्या शुभ्रदेशीया। (४७८) ईषदूना शुभ्रा बहुशुभ्रा। अत्र बहोः परस्थित्यभावात् न पुंवद्भावः। बहोश्च शसन्ततराद्युपन्यासस्तु वक्ष्यमाणतद्धितप्रकरणे शसन्ततरादिविधायकसूत्रवर्गमध्यपातानुरोधात्। (४७९) कुत्सिता शुभ्रा शुभ्रपाशा। (४८०) भूतपूर्व्वा शुभ्रा शुभ्रचरी। (४८१) शुभ्राया भूतपूर्व्वो गौः शुभ्रारूप्यः, अत्र रूप्यवर्जनात् न पुंवत्। (४८२) बह्वीर्देहि बहुशो देहि इति। उक्तपुंस्कः किं, गङ्गाभार्य्यः। तस्याः, ततः तस्यां, तत्र, तदा, तर्हि इत्यादौ तु (३२०) पुंवत् सेरिति पुंवत्। हस्तिनीनां नद्धः हास्तिकं, अग्नायी देवता अस्य आग्नेयः, कुक्कुट्या अण्डं कुक्कुटाण्डं, मृग्याः क्षीरं मृगक्षीरं, मृग्याः पदं मृगपदं, काक्याः शावकः काकशावकः इत्यादौ च पुंवद्भावो वक्तव्यः। पाणिनिः ६।३।३४,३५,३६,४२, वार्त्तिकानि च।

ऊङन्तं, तस्याकस्य वा केन ककारोङ्, पूरणीत्यान्तं, संज्ञाभूतम्, इम्-उम्-रक्तार्थ-विकारार्थ-वर्जं णित्तान्तञ्च, पुंवन्न स्यात्, जाति-स्वाङ्गविहितवन्तन्तु मानिन्वर्जे। *

३२९। पूरणी प्रिया मनोज्ञा सुभगा दुर्भगा क्षान्ता कान्ता वामना वामा चपला बाला समा सचिवा तनया दुहितृ स्वा कल्याणी भक्तौ।

(पूरणी—भक्तौ ७)।

एषु परेषु पुंवन्न स्यात्। †

---

* तश्च अकश्च ताकौ, तयोः कः ताककः, स ऊङ् यस्य स ताककोङ्। इश्च उश्च य्, ताभ्यां म् युम, (४१७) (मकारस्य प्रत्येकसम्बन्धेन इम् उम् इत्यर्थः), रक्तश्च विकारश्च तौ रक्तविकारौ, तौ अर्थौ येषां ते रक्तविकारार्थाः, युम च रक्तविकारार्थाश्च ते, न विद्यन्ते ते यत्र सोऽयुमरक्तविकारार्थः, मूर्द्धन्य णः इत् यस्य स णित्, णिच्चासौ तश्चेति णित्तः, अयुमरक्तविकारार्थश्चासौ णित्तश्चेति अयुमरक्तविकारार्थणित्तः। पश्चात् ऊप् च ताककोङ् च पूरणी च आख्या च अयुमरक्तविकारार्थणित्तश्च समाहारे तत्। जातिश्च स्वाङ्गञ्च जातिस्वाङ्गे, ताभ्यामीप् जातिस्वाङ्गेप्। न मानिन् अमानिन् तस्मिन्। ऊबन्तं पदं, तद्धितस्य केन अकप्रत्ययस्य वा केन ककारोङ् पदं, द्वितीयादि-पूरणीप्रत्ययान्तं पदं, दत्ताभद्रादि संज्ञारूपं पदं, इम-उम्-रक्तार्थ-विकारार्थ वर्ज-णकारेत् तद्धितप्रत्ययान्तं पदञ्च पुंवन्न स्यात्। जातिविहितेबन्तं स्वाङ्गविहितेबन्तञ्च मानिन्वर्जे शब्दे परे पुंवन्न स्यादित्यर्थः। पाणिनिः ६।३।३७—४१।

† पूरणी चेत्यादि द्वन्द्वे तस्मिन्। पूरणीति पूरणीप्रत्ययान्तः स्त्रीलिङ्गशब्दः द्वितीयादिः। भक्तिशब्दश्चात्र कर्म्मविहितक्तिप्रत्ययान्तो भज्यमानद्रव्यवाची बोध्यः, भावसाधिते तु पुंवत् स्यादेव। एषु अष्टादशसु परेषु पुंवत् न स्यादित्यर्थः। अत्र केचित् क्षान्तातनययोः स्थाने समानकल्याणौ, स्वा इत्यत्र स्वसा इति, बाला इत्यत्र अबला इति च आहुः, बाला-वामा-शब्दौ च नाहुः। मेघदूते दृष्टभक्तिर्भवान्या इति, रघौ च दृढभक्तिरिति ज्येष्ठे इति, भावविहितत्वात् पुंवद्भावः। "स्त्रीत्वविवक्षायान्तु दृढाभक्तिः" इति सिद्धान्तकौमुदी। प्रसूततनया इति तु प्रसूतं तनयया यस्या इति व्यधिकरणबहुव्रीहिः। पाणिनिः ६।३।३४।

## ३३०। गवाबादेः ह्रस्वोऽन्ते गौण्येऽनीयसः।

(गवाबादेः ६।, ह्रः १।, अन्ते ७।, गौण्ये ७।, अनीयसः ५।)।

अन्ते स्थितस्य गोः आप ईप ऊपश्च ह्रः स्यात् अप्रधानत्वे सति, नत्वीयसः।

शीतगुः ध्वस्तमायः कालतनुः। ईयसस्तु बहुप्रेयसी।*

ऊबादेस्तु (३२८)—वामोरूभार्य्यः रसिकाभार्य्यः पाचिकाभार्य्यः षष्ठीजायः दत्ताजायः मैथिलीभार्य्यः। ब्राह्मणीभार्य्यः सुकेशीभार्य्यः। अमानिनि किं—ब्राह्मणमानिनी। युमादेस्तु वैयाकरणभार्य्यः सौवश्वभार्य्यः काषायकन्यः हैममुद्रिकः। †

---

* आप आदिर्यस्य स आबादिः, गौश्च आबादिश्च तत्तस्य। गुणस्य भावो गौण्यं तस्मिन्। न ईयस् अनीयस् तस्मात्। ईयसः परस्य ईपः ह्रो न स्यादित्यर्थः, एष निषेधः बहुव्रीहावेव, (ईयसो बहुव्रीहेर्नेति वाच्यमिति वार्त्तिकम्) तेन प्रेयसीमतिक्रान्तः अतिप्रयसिः खल इत्यादि। अर्द्धं पिप्पल्याः अर्द्धपिप्पली, एवं अर्द्धखारी अर्द्धनगरी इत्यादेर्ह्रस्वनिषेधो वक्तव्यः। अत्र आबादिस्त्रीत्यानां ग्रहणात् न स्त्रीलिङ्गशब्दमात्रस्य ह्रस्वः, तेन अतिलक्ष्मीः, अतिश्रीरित्यादि। पुंवद्भावस्य विधिनिषेधौ निरूप्य उदाहरति शीतगुरित्यादि। शीता शीतला गौः किरणो यस्यासौ शीतगुश्चन्द्रः, ध्वस्ता माया यस्य स ध्वस्तमायः, उभयत्र पूर्व्वस्य पुंवद्भावः, परस्य ह्रस्वः। ईबन्तं बहुव्रीहौ (३३२) कप्रत्ययेन बाधितत्वान्नोदाहृतम्। काली तनूर्यस्यासौ कालतनुः, पूर्व्वस्य पुंवत्, परस्य ह्रस्वः। एवम् अन्यत्रापि गौणत्वे पञ्चगुः अतिमायः अतिस्त्रिरित्यादि। बह्व्यः प्रेयस्यो यस्य स बहुप्रेयसी कृष्णः, पूर्व्वस्य पुंवद्भावः, परस्य ईयसो वर्ज्जनात् न ह्रस्वः, (१४८) ईपः सेर्लोपः स्यादेव। समासान्तविधेरनित्यत्वादत्र न (३३२) कप्रत्ययः, (अत्र पाणिनिसूत्रं यथा "ईयसश्च" ५।४।१५६)। अत्र ह्रस्वनिषेधात् सुप्रेयसी कुलमित्यत्र (१६७) क्लीबे ह्रः इत्यनेनापि ह्रस्वो न स्यादिति। एवं प्रयोगानुसारेणान्यत्रापि। अत्र पुंवद्भावप्रकरणे त्रिपदबहुव्रीहौ मतभेदो दृश्यते, यथा, चित्राजरतीगुः, जरतीचित्रागुर्वा ; एवं दीर्घातन्वीजङ्घः, तन्वीदीर्घाजङ्घः इति केचित्। अपरे तु चित्राजरद्गुरिति वदन्ति ; चित्राजरत्यो गावो यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम्। कर्म्मधारयपूर्व्वपदे तु द्वयोरपि पुंवत्, यथा जरच्चित्रगुः। पाणिनिः १।२।४८, वार्त्तिकञ्च।

† वामौ सुन्दरौ ऊरू यस्याः सा वामोरूः (२७८), वामोरूः भार्य्या यस्य सः। रसं वेत्तीति रसिका (४२८), रसिका भार्य्या यस्य सः। पचतीति (९९०) पाचिका,

पूरण्यादौ तु (३२९)—*

## ३३१। हे पूरणीप्रमाणीभ्याम् अः।

(हे ७।, पूरणी-प्रमाणीभ्यां ५॥, अः १।)।

आभ्याम् अः स्यात् हे।

(२५८) यचोर्लोपोऽयुक्तौ ,पौ। कल्याणीपञ्चमा रात्रयः, कल्याणीप्रियः। मुख्यात्र पूरणी ग्राह्या, तेन—†

---

पाचिका भार्य्या यस्य सः। षण्णां पूरणी (४५५) षष्ठी, षष्ठी जाया यस्य सः। दत्ता (इति संज्ञा) जाया यस्य सः। मिथिलायां भवा मैथिली (४२९), मैथिली भार्य्या यस्य सः। एषु पूर्व्वपदानामूङन्तादीनां पुंवद्भावनिषेधः। ब्राह्मणी (१६७) भार्य्या यस्य सः ब्राह्मणीभार्य्यः, सुकेशी (२६५) भार्य्या यस्य सः सुकेशीभार्य्यः, उभयत्र जाति-स्वाङ्ग-विहितत्वान्न पुंवत्। आत्मानं ब्राह्मणीं मन्यते या सा ब्राह्मणमानिनी, मनधातोः (९९३,२५७) णिन्, ईप् च। अत्र मानिनि परे पुंवद्भावः। व्याकरणं वेत्ति अधीते वा या सा (४२९,४१७) वैयाकरणी, सा भार्य्या यस्य सः। सु सुन्दरः अश्वो यस्य सः स्वश्वः, स्वश्वस्येयं (४३७,४१७) सौवश्वी, सा भार्य्या यस्य सः। कषायेण रक्ता काषायी (४२९), काषायी कन्था यस्य सः। हेम्नो विकारः (४३७) हैमी, सा मुद्रिका यस्य सः। एतेषु इम्-अम्-रक्त विकारार्थ-वर्जनान् पुंवद्भावः। सर्व्वत्र पर-पदानां ह्रस्वः। (६।३।४३) पाणिनिसूत्रेण ब्राह्मणिकल्पा, ब्राह्मणिब्रुवा, ब्राह्मणिहता इत्यादौ ङीबन्तस्यानेकाचो ह्रस्वः इति वक्तव्यम्।

* पूरण्यादौ परे (३२९) उदाहरिष्यन् सूत्रमाह।

† पूरणी द्वितीयादिः। प्रमीयतेऽनया इति प्रमाणी। पूरणी च प्रमाणी च ताभ्याम्। पूरणीवाचकात् प्रमाणीशब्दाच्च अः स्यात् बहुव्रीहौ इत्यर्थः। पञ्चानां पूरणी पञ्चमी (४५१)। कल्याणी प्रशस्ता पञ्चमी रात्रिर्यासु रात्रिषु ता रात्रयः कल्याणीपञ्चमाः, अत्र पञ्चमीशब्दे परे (३२९) पुंवद्भावो नाभूत्, पञ्चमीशब्दादनेन अप्रत्यये यचोर्लोप इति ईपो लोपे, (२४९) आप्। कल्याणी प्रिया यस्य स कल्याणी-प्रियः, (३२९,३३०)। एवं कल्याणीमनोज्ञः इत्यादि। मुख्यात्रेति अत्र पूरणी-परे पुंवद्भावनिषेधे पूरणीपरात् अप्रत्यये च उभयत्र मुख्या पूरणी ग्राह्या। मुख्यत्वञ्च समासवाच्यानामसाधारणधर्म्मत्वम्। कल्याणीपञ्चमा इत्यत्र समासवाच्यानां रात्रीणां

### ३३२ । दृत: क: । (दी-ऋत: ५।, क: १।) ।

दीसंज्ञकादृदन्ताच्च क: स्यात् हे । कल्याणपञ्चमीक: पक्ष: । रात्रि: पूरणी वाच्या चेति पूर्व्वेण मुख्यत्वम् । स्त्रीप्रमाण: । *

### ३३३ । सह: सो वा । (सह: ६।, स: १।, वा ।१। ।

सहस्य हे स: स्याद्वा ।

सह मात्रा वर्त्तते योऽसौ समातृक: सहमातृक: । †

### ३३४ । सक्थ्यक्ष्ण: ष: स्वाङ्गे ।

(सक्थ्यक्ष्ण: ५।, ष: १।, स्वाङ्गे ७।) ।

आभ्यां हे ष: स्यात् स्वाङ्गे । दीर्घसक्थ:, पुण्डरीकवदक्षिणी

---

योऽसाधारणधर्म्म: रात्रित्वं तच्च तासु रात्रिषु पञ्चम्यां रात्रावपि वर्त्तते, अतो मुख्यत्वम् । तेन इति; परसूत्रोदाहरणे कल्याणपञ्चमीक: पक्ष: इत्यत्र न पुंवद्भावनिषेध:, नापि अप्रत्यय:, इत्यनेन सम्बन्ध: । पाणिनि: ५।४।११६ ।

* दी च ऋश्च दृत् तस्मात् । (९६) नदीसंज्ञकशब्दात् ऋदन्तशब्दाच्च बहुव्रीहौ क-प्रत्यय: स्यादित्यर्थ: । इति तूपलक्षणमात्रम्, अन्येभ्योऽपि उर:प्रभृतिभ्य: शब्देभ्यो बहुव्रीहौ प्रयोगानुसारेण कप्रत्ययो वक्तव्य: (पाणिनि: ५।४।१५१,५।४।१५४) । कल्याणी पञ्चमी यस्मिन् पक्षे स: कल्याणपञ्चमीक: पक्ष:, अत्र समासवाच्यस्य असाधारणधर्म्म: पक्षत्वं, तत्तु पञ्चम्यां रात्रौ न वर्त्तते, अतो मुख्यत्वाभावात् न पुंवद्भावनिषेध: (३२८), नापि अप्रत्यय: (३३१) । कल्याणीत्यत्र (३१७) पुंवद्भावे, पञ्चमीत्यस्मात् नदीसंज्ञकादनेन कप्रत्यय: । रात्रि: पूरणी वाच्या चेति पूर्व्वेण कल्याणीपञ्चमा रात्रय: इत्यत्रोदाहरणे रात्रि: समासवाच्येत्यर्थ:, पूरणीवाच्या पञ्चमीवाच्या चेत्यर्थ:, अत: पञ्चमीशब्दस्य मुख्यत्वमिति । स्त्री प्रमाणी यस्य स स्त्रीप्रमाण:, स्त्रीशब्दस्य अनुक्तपुंस्कत्वात् न (३२७) पुंवद्भाव:, प्रमाणीशब्दात् (३३१) अप्रत्यय: । पाणिनि: ५।४।१५३ ।

† समातृक इति (३३२) क:, अनेन वा सह-स्थाने स: । केचित्तु मात्रा सहित: समातृक इति वाक्यं कृत्वा तृतीयातत्पुरुषं वदन्ति । एवं सह समानम् उदरं यस्य स: सोदर: सहोदर इत्यादि । हे किं, सहकृत्वा, सहयुध्वा । साग्नि: साङ्गम् साश्वत्थं सपलाशं सपिशाचम इत्यादि नित्यं वक्तव्यमिति । पाणिनि: ६।३।८२ ।

यस्यासौ पुण्डरीकाक्षः। स्वाङ्गे किं, दीर्घसक्थि शकटं। *

## ३३५। दारुण्यङ्गुलेः। (दारुणि ७।, अङ्गुलेः ५।)।

पञ्चाङ्गुलं दारु। †

## ३३६। द्वित्रेर्मूर्द्ध्नः। (द्वित्रेः ५।, मूर्द्ध्नः ५।)। ‡

## ३३७। न्वोर्लोपौतौ तेऽच्ये।

(न्वोः ६॥, लोपौतौ १॥, ते ७।, अच्ये ७।)।

नस्य लोपः स्यात् उवर्णस्य औत् स्यादचि ये च ते। द्विमूर्द्धः। §

---

* सक्थि च अक्षि च तत् सक्थ्यक्षि तस्मात्। स्वस्य आत्मनः अङ्गं स्वाङ्गं तस्मिन्। स्वाङ्गलक्षणमुक्तं (२६५)। स्वाङ्गवाचिभ्यामाभ्यामित्यर्थः। ष-प्रत्ययस्य ष इत् (२५७) ईदर्थः, अकारः स्थितिः। दीर्घे सक्थिनी (ऊरू) यस्य सः दीर्घसक्थः। पुण्डरीकवदिति, पुण्डरीकं सिताम्भोजं तदेव चक्षुर्न सम्भवति, अतो लक्षणया तत्तुल्यं अर्थः, अतएव वाक्ये पुण्डरीकवदित्युक्तं, एवं व्याघ्रस्था (३५८) इति स्वयं वक्ष्यति। उभयत्र उदाहरणे अनेन षप्रत्यये, (२५८) इकारलोपः। षित्त्वात् स्त्रियां दीर्घसक्थी, सरोजाक्षी। दीर्घसक्थि इति शकटस्य प्राणित्वाभावादिति भावः। एवं स्थूलाक्षिरिक्षुः। षे किं, परमसक्थि, परमाक्षि। पाणिनिः ५।४।११३।

† अङ्गुलिशब्दात् षः स्यात् षे, दारुणि वाच्ये। दारु काष्ठं। पञ्च अङ्गुलयो यत्र तत् पञ्चाङ्गुलं दारु; "पञ्चाङ्गुलयो यस्मिन् तत् पञ्चाङ्गुलं दारु अङ्गुलिसदृशावयवं धान्यानां विक्षेपणकाष्ठमुच्यते" इति गोयीचन्द्रः। स्त्रियान्तु षित्त्वादीपि पञ्चाङ्गुली खनित्। दारुणि किं, पञ्चाङ्गुलिर्हस्तः। एवं पञ्चाङ्गुला शिला, इत्यत्र (३६७) सङ्ख्याव्यादिति अप्रत्यये, स्त्रियाम् आप्। पाणिनिः ५।४।११४।

‡ द्विश्च त्रिश्च तत् तस्मात्। द्वित्रिभ्यां परात् मूर्द्ध्नः षः स्यात् षे। पाणिनिः ५।४।११५।

§ न च उश्च नू तयोः। लोपश्च औत् च लोपौतौ। अच् च यश्च अच्यं तस्मिन्, ते इत्यस्य विशेषणम्। द्वौ मूर्द्धानौ यस्य सः द्विमूर्द्धः, (३३६) षप्रत्यये, अनेन नलोपे, (२५८) अलोपः। एवं त्रयो मूर्द्धानो यस्य स त्रिमूर्द्धः। स्त्रियां द्विमूर्द्धी त्रिमूर्द्धी राक्षसी। द्वित्रेः किं, बहुमूर्द्धा। (४३१) न टं तस्यावित्यनेन दान्तत्वनिषेधात् (११८) नो लुप् फेऽधावित्यस्याप्राप्तौ नलोपार्थमिदम्। औत् यथा—बाभ्रविः, बाभ्रव्य इत्यादि। क्वचित् न स्यात् यथा—स्वायम्भुवं धाम। पाणिनिः ६।४।१४४,१४६।

## ३३८। सङ्ख्याया डोऽबह्वोः।

(सङ्ख्यायाः ५।, डः १।, अबह्वोः ५।)।

बहुवर्जायाः सङ्ख्याया डः स्यात् हे। पञ्च षट् परिमाणं येषां ते पञ्चषाः, उपगताः दश येषां ते उपदशाः। बह्वोस्तु उपबहवः। *

## ३३९। नाभेर्नाम्नि। (नाभेः ५।, नाम्नि ७।)।

पद्मनाभः। †

## ३४०। लोम्नोऽन्तर्वहिर्भ्यां।

(लोम्नः ५।, अन्तर्-वहिर्भ्यां ५॥)।

अन्तर्लोमः वहिर्लोमः। ‡

---

* नास्ति बहुर्यत्र सा अबहुस्तस्याः। बहुशब्दस्य (१०१) सङ्ख्यावदित्यनेन सङ्ख्यात्वातिदेशात् प्राप्तौ निषेधः। पञ्चषाः इति डप्रत्यये (१२६) टिलोपः। एवं द्विवाः चतुःपञ्चाः इत्यादि। उपगता विंशतिर्यस्य स उपविंशः, (१२६) डप्रत्यये विंशतेस्तिलोपः, (२५८) यर्योर्लोप इत्यकारलोपः। उपगता बहवो येषां ते उपबहवः। एवम् उपगणाः। बहुवर्जनात् सङ्ख्येयवृत्तिसङ्ख्याया एव ग्रहणं, तेन अष्टाभिः सह वर्त्तते या सा साष्टा पञ्चाशत् इत्यत्र सङ्ख्यावृत्तित्वात् न स्यात्। अतएव पाणिनौ संख्येये इत्युक्तम्। शोभनं प्रातर्यस्य तत् सुप्रातमित्यत्र "अव्ययादेरिति वक्तव्यम्" इति वार्त्तिकात् डप्रत्ययो वक्तव्यः। पाणिनिः ५।४।७३। अत्र "डचप्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानम्" इति वार्त्तिकसूत्रात् निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि, निर्गतस्त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः खड्गः इत्यपि वक्तव्यम्।

† नाभेः परो डः स्यात् हे संज्ञायाम्। पद्मं नाभौ यस्य, पद्मवत् नाभिर्यस्य इति वा, पद्मनाभो विष्णुः। एवं वज्रनाभः। ऊर्णा नाभौ यस्य स ऊर्णनाभः, ऊर्णनाभिरित्यन्ये, अत्र ऊर्णा इत्यस्य निपातनात् ह्रस्वः। नाम्नि किं, गभीरनाभिः। अरविन्दनाभिरिति तु समासान्तविधेरनित्यत्वात् असंज्ञात्वाद्वा। "अच् प्रत्यन्ववपूर्व्वात् सामलोम्नः" (पाणिनिः ५।४।७५) इति सूत्रे 'अजिति योगविभागादन्यत्रापि, पद्मनाभः' इति सिद्धान्तकौमुदी। क्वचिदन्यत्रापीति क्रमदीश्वरसूत्रम्, "एतदुपलक्षणम्, पद्मनाभिरपि भवति" इति गोयीचन्द्रः।

‡ पृथग्योगात् नाम्नीति नानुवर्त्तते। अन्तर्-वहिर्भ्यां परात् लोम्नो डः स्यात्

### ३४१। नञ्दुःसोः सक्थ्नो वा।

(नञ्दुःसोः ५।, सक्थ्नः ५।, वा ।१।)।

असक्थः असक्थिः। *

### ३४२। अस् प्रजायाः। (अस् ।१।, प्रजायाः ५।)।

अप्रजाः सुप्रजाः। †

### ३४३। मन्दाल्पाच्च तु मेधायाः।

(मन्दाल्पात् ५।, च ।१।, तु ।१।, मेधायाः ५।)।

अमेधाः सुमेधाः मन्दमेधाः। ‡

---

हे। अन्तर्गतानि लोमानि यस्य सः अन्तर्लोमः, एवं बहिर्लोमः। अन्तर्लोमा नासिका इति क्रमदीश्वरः। आभ्यां किं, दीर्घलोमा। पाणिनिः ५।४।११७।

* नञ् च दुश्च सुश्चेति तस्मात्। एभ्यः परात् सक्थ्नो डः स्याद्वा हे। नास्ति सक्थि यस्य सोऽसक्थः असक्थिः। एवं दुःसक्थः दुःसक्थिः, सुसक्थः सुसक्थिः। अत्र अस्वाङ्ग एव ग्रहणं, स्वाङ्गे तु (३३४) पूर्व्वेणैव षः। (अत्र सक्थिशब्दस्थाने शक्तिरिति केचित् पठन्ति इति भट्टोजिदीक्षितः। क्रमदीश्वरस्तु शक्तिरिति पृथक् पदं स्वीकुरुते)। जयादित्यादिमतमवलम्ब्यैव वोपदेवेन लिखितम्। पाणिनिः ५।४।१२१।

† नञ्-दुः-सुभ्यः परस्याः प्रजाया अस् स्यात् हे। वेति नानुवर्त्तते पाणिनिसूत्रे नित्यमिति कथनात्। नास्ति प्रजा यस्यासौ अप्रजाः, असि कृते, (२५८) यथोर्लोप इत्याकारलोपे, (१८५) अत्वसोऽधोरिति दीर्घः। एवं दुष्प्रजाः, सुप्रजाः। इह नञादेरव्यवहितोत्तरत्वमपेक्षितं, तेन सुगुणिप्रज इत्यादौ न स्यात्। पाणिनिः ५।४।१२२।

‡ मन्दश्च अल्पश्च तस्मात्। मन्दाल्पाभ्यां चकारात् नञ्दुःसुभ्यश्च परस्या मेधायाः अस् स्यात् हे। नास्ति मेधा यस्य सः अमेधाः, सुन्दरी मेधा यस्य सः सुमेधाः, मन्दा मेधा यस्य सः मन्दमेधाः। एवं दुर्म्मेधाः। अनेन अस्, (२५८) आलोपः, (१८५) दीर्घः। इहापि नञादेरव्यवहितोत्तरत्वमपेक्षितं, तेन मन्दबहुमेधः इत्यादौ न स्यात्। लक्ष्यत्वात् मन्दादीनां परत्र नानुवृत्तिः। "नित्यमसिच् प्रजामेधयोः" (५।४।१२२) इति पाणिनिसूत्रे 'नित्यग्रहणं क्वचिदन्यत्रापि विधानार्थम्, अल्पमेधाः' इति तट्टीका। "मन्दाल्पाभ्यां मेधायाः" इति चन्द्रवर्द्धमानसूत्रम्। अतएव "अन्यतोऽपीत्येके" इति क्रमदीश्वरसूत्रम्। जयादित्येनापि शिष्टप्रयोगो दर्शितः, यथा "श्रोत्रियस्यैव ते राजन् मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर्नैषा सूक्ष्मोपदर्शिनी॥"

## ३४४। धर्म्मादन्। (धर्म्मात् ५।, अन् ।१।)।

सुधर्म्मा। *

## ३४५। नञ्सुत्रिव्युपाच्चतुरोऽः। (नञ्-सु-त्रि-वि-उपात् ५।, चतुरः ५।, अः १।)।

एभ्यश्चतुरः अः स्यात् हे। अचतुरः सुचतुरः। †

## ३४६। भान्नेतुः। (भात् ५।, नेतुः ५।)।

नक्षत्रात् नेतृशब्दात् अः स्यात् हे। मृगनेत्रा रात्रिः। ‡

---

* पूर्व्वपदाभावे बहुव्रीहिरेव न स्यादित्यतः पूर्व्वपदात् परात् धर्म्मादन् स्यात् हे। सु धर्म्मो यस्य स सुधर्म्मा,—अनेन अन्, (२५८) अकारलोपः, (१६४) दीर्घः। एवं सधर्म्मा विधर्म्मा बहुधर्म्मा इत्यादि। अत्र मतभेदो दृश्यते यथा—"धर्म्मादनिच् केवलात्" (५।४।१२४) इति पाणिनिसूत्रस्य "केवलात् पूर्व्वपदात् परो यो धर्म्मशब्दः तस्मादनिच् भवति न पदसमुदायात् अतस्त्रिपदे बहुव्रीहौ न भवतीति" चन्द्रवर्द्धनान्जयादित्यादिकृता व्याख्या। भट्टोजिदीक्षितोऽप्येवमाह। तन्मते परमः स्वो धर्म्मो यस्मात् त्रिपदे बहुव्रीहौ मा भूत्; किन्तु परमः स्वधर्म्मो यस्येत्यत्र अनिच् भवत्येव, स्वः स्वकीयो धर्म्मः स्वधर्म्मः इति कर्म्मधारयेण स्वधर्म्मशब्दस्य धर्म्मान्तत्वात्। क्रमदीश्वरेण तु 'साक्षात्कृतो धर्म्म एतैः साक्षात्कृतधर्म्माणो वेदितव्याः' इति भाष्यदर्शनात् "अकृतसमासान्तराद्धर्म्मादन्" इत्येव सूत्रं कृतम्। तन्मते परमः सुधर्म्मो यस्येति परमसुधर्म्मः, अनुपालितकुलधर्म्मः इत्येव स्यात्, न तु अन्। 'परमः शोभनो धर्म्मोऽस्येति त्रिपदे बहुव्रीहौ तु परमसुधर्म्मा इत्येव भवतीति' गोयीचन्द्रः। वस्तुतस्तु पाणिनिसूत्रस्थकेवलशब्दो धर्म्मादित्यस्य विशेषणं, केवलात् अकृतसमासान्तरादिति तस्यार्थश्चेति क्रमदीश्वरमतं प्रतिभाति। वोपदेवमतमपि तथेति निरुपपदधर्म्मपदप्रयोगादनुमीयते।

† नञ् च सुश्च त्रिश्च विश्च उपश्चेति तस्मात्। एभ्यः परात् चतुर्शब्दात् अः स्यात् हे। न सन्ति चत्वारि यस्यासौ अचतुरः, सुष्ठु चत्वारि यस्यासौ सुचतुरः। एवं त्रीणि चत्वारि वा परिमाणं येषां ते त्रिचतुराः। विगताश्चत्वारो यस्य स विचतुरः। उपगताश्चत्वारो यस्याः सा उपचतुरा। पाणिनिः ५।४।७७। "त्र्युपाभ्यामुपसंख्यानम्" इति वार्त्तिकञ्च।

‡ नक्षत्रात् नक्षत्रवाचकादित्यर्थः परात् नेतृशब्दात् अः स्यात् हे। मृगः मृगशिरो नक्षत्रं नेता प्रापको यस्याः सा रात्रिः मृगनेत्रा, अ-प्रत्यये (२४८) आप्। एवं पुष्यनेत्रा

## ३४७। सङ्ख्यासुपमानात् पात् पादोऽहस्त्यादेः।

(सङ्ख्या सु उपमानात ५।, पात् ।१।, पादः १।, अहस्त्यादेः ५।)।

एभ्यः पादस्य पात् स्यात् हे, न तु हस्त्यादेः।

द्विपात् सुपात् व्याघ्रपात्। हस्त्यादेस्तु हस्तिपादः। *

## ३४८। कुम्भादेरीपि।

(कुम्भादेः ५।, ईपि ७।)।

कुम्भादेः परस्य पादस्य पात् स्यात् हे ईपि परे।

(२२३) पात् पत् पौ। कुम्भपदी शतपदी। ईपि किं, कुम्भपादः। †

---

हस्तनेत्रा इत्यादि। यस्मिन् नक्षत्रे उदिते रात्रिः प्रवर्त्तते तत् तस्या नेत। "नेतुर्नक्षत्र उपसङ्ख्यानम्" इति वार्त्तिकम्।

* सङ्ख्या च सुश्च उपमानञ्च तस्मात्। न हस्त्यादि रहस्त्यादिस्तस्मात्। एभ्यः परस्य अकारान्त-पाद-शब्दस्य पाद स्यात् हे, न तु हस्त्यादेः परस्य। उपमानतया प्राप्तौ हस्त्यादेर्निषेधः। द्वौ पादौ यस्य स द्विपात्। शोभनौ पादौ यस्य स सुपात्। व्याघ्रस्येव पादौ यस्य स व्याघ्रपात्। हस्तिन इव पादौ यस्य स हस्तिपादः। हस्त्यादिर्यथा—हस्ती कटोलः कण्डोली गण्डोली गणिका महान्। दासी कुशूल इत्यष्टौ हस्त्यादौ परिकीर्त्तिताः॥ कटोलश्चण्डालः, गण्डोली धान्याद्याधारविशेषः, डोल इति भाषा। पाणिनिमते—कुद्दाल अज अश्व गण्ड कपोत—एतेऽपि हस्त्यादिगणपठिताः। अत्र गूढादपीति वक्तव्यं, तेन गूढपात् सर्पः। पाणिनिः ५।४।१३८,१४०।

† अत्र ईपीति विषयसप्तमी, ईपि कर्त्तव्ये इत्यर्थः। कुम्भाविव पादौ यस्याः सा कुम्भपदी, शतं पादा यस्याः सा शतपदी, अनेन पादस्य पाद, (२६५) ईप्, (२२३) पदादेशः। कुम्भादिर्यथा—कुम्भाष्टजालाः शतसूत्रगोधाः विष्णुः शितिर्द्रोण-कुणी च कृष्णः। निरार्द्रसूचीशकृदेकदास्यो विः शूकरो वै कलसोऽपि वेति॥ "कुम्भाष्टजालशत-मुनिसूत्रकृष्णकुणिशितिकलसाः। विनिरर्द्दसकृत्सूचीशूकरदास्येकद्रोणगोधाश्च॥" इति गोयीचन्द्रः। अत्र आर्द्रशब्दस्थाने अर्द्दशब्दः विष्णुशब्दस्थाने मुनिशब्दश्च पठितः, सकृत्शब्दः दन्त्यादिश्च। अयं गणो-विंशतिसंख्यकः, पाणिनीये गणपाठे तु द्वात्रिंशत्-संख्यकः। पूर्व्वसूत्रेणैव पाद-आदेशसिद्धौ नियमार्थोऽयं, तेन ईपोऽभावपक्षे न पाद-आदेशः। पाणिनिः ५।४।१३९।

## ३४९। व्यतीहारे चिः पूर्व्वो घोऽनच्या वा।

(व्यतीहारे ७।, चिः १।, पूर्व्वः १।, घः १।, अनचि ७।, आ।१।, वा।१।)।

व्यतीहारे यो हस्तस्मात् चिः स्यात्, पूर्व्वस्य च घः स्यात्, आ वा नत्वचि।

केशेषु केशेषु गृहीत्वा यत् युद्धं प्रवृत्तं—केशाकेशि।

दण्डैश्च दण्डैश्च प्रहृत्य यत् युद्धं प्रवृत्तं—दण्डादण्डि।

मुष्टामुष्टि मुष्टीमुष्टि, बाहाबाहवि बाहूबाहवि। अचि तु, अस्यसि।*

इति हः।

---

* परस्परमेकजातीयक्रियाकरणं व्यतीहारः, तत्र यो बहुव्रीहिस्तत्परपदात् चिः स्यात्, चकारेत् अव्ययार्थं (९४), इकारस्थितिः। घौ कृते पूर्व्वपदस्य आकारः, पक्षे दीर्घश्च, अचि परे तु न आकारः, नापि दीर्घ इत्यर्थः। केशाकेशि दण्डादण्डि उभयत्र पूर्व्वपदस्याकारः, परपदात् चिः, (२५८) अकारलोपः, (२४६) लोलुक्। एवं मुष्टिभिर्मुष्टिभिः प्रहृत्य यद् युद्धं प्रवृत्तं मुष्टामुष्टि मुष्टीमुष्टि; बाहुभिर्बाहुभिः प्रहृत्य यद् युद्धं प्रवृत्तं बाहाबाहवि बाहूबाहवि, उभयत्र पूर्व्वपदस्याकारः, पक्षे दीर्घः, परपदात् चिः, बाहुशब्दस्य तु विशेषसूत्रात् (३३७) उकारस्य ओकारः, (३५) ओकारस्य अव्। असिभिः असिभिः प्रहृत्य यद् युद्ध प्रवृत्तम् अस्यसि, अत्र परपदात् चिः पूर्व्वपदस्य तु न आकारः नापि दीर्घः अच्परत्वात्। उदाहरणज्ञापकात्, तत्र गृहीत्वा तेन प्रहृत्य युद्धे व्यतीहारे यो हस्तत्रैवायं विधिरिति, तेन कायञ्च कायञ्च गृहीत्वा रथे च रथे च स्थित्वा इत्यादौ न स्यात्। अतएव "तत्र तेनेदमिति सरूपे" इति पाणिनिसूत्रम् (२।२।२७)। "कर्म्मव्यतिहारे युद्धएवायं समासः। तत्रापि सप्तम्यन्तस्य ग्रहणविषये; तृतीयान्तस्य प्रहरणविषये। सरूपे किं, हलैश्च मुषलैश्चेदं युद्धं प्रवृत्तम्" इति टीका। पाणिनिः ५।४।१२७, ६।३।१३७।

बहुव्रीहौ, (पाणिनिः ५।४।१३४) जायाया जानिः, (पाणिनिः ५।४।१३२) धनुषो धन्वन्, (५।४।१३३) वा संज्ञायाम्, (पाणिनिः ५।४।१२९) प्रसंभ्यां जानुनो ज्ञुः, (५।४।१३०) ऊर्द्धाद्विभाषा, इत्यादि प्रयोगानुसारात् वक्तव्यम्। यथा—युवजानिः, अधिज्यधन्वा, शतधन्वा शतधनुः, पुष्पधन्वा पुष्पधनुः, प्रज्ञुः संज्ञुः, ऊर्द्धज्ञुः ऊर्द्धजानुरित्यादि।

## कर्म्मधारय-समासः (ग)।

परमश्चासावात्मा चेति—परमात्मा।

सञ्चासौ चिच्चासा-वानन्दश्चेति—सच्चिदानन्दः। *

**३५०। कोड़ादिः पुंवत् यजातीयदेशीये तत्वे त्वजात्याख्यः।**

(कोड़ादि १।, पुंवत् ।१।, य जातीय-देशीये ७।, तत्वे ७।, तु ।१।, अजात्याख्यः १।)।

कोङ्पूरण्यादिः पुंवत् स्यात् यादौ, तत्वयोस्तु जातिसंज्ञावर्ज्जं।

पाचकस्त्री पञ्चमभार्य्या। †

---

* उत्तरपदद्विगु-द्वन्द्व-बहुव्रीहि-वर्ज्जं पदबहुत्वे समासो नास्तीति दुर्गसिंह-क्रमदीश्वरौ। तन्मतमस्वीकुर्व्वन् त्रिभिः पदैरपि कर्म्मधारयमाह सच्चिदानन्द इति। आनन्दयतीति आनन्दः इति विशेष्यं पदं, त्रयाणां विशेषणत्वे समासानुपपत्तेः। कुब्जकुण्ठः पटुविस्पष्टः इत्यादावुभयस्य विशेषणत्वेऽपि विशेष्यविशेषणभावस्य कामचारत्वात् एकस्य विशेष्यत्वं कल्प्यते। विशेषणस्य तु पूर्व्वस्थितिरेव, तेन ब्राह्मणदीर्घः एवं न स्यात्। कडारादिशब्दास्तु वा पूर्व्वं प्रयोज्याः, (पाणिनिः २।२।३८) तेन कड़ारजैमिनिः जैमिनिकडारः इत्यादि। कड़ारादिर्यथा—कड़ार जठर गड़ुल काण खोड़ खञ्जः कुब्ज कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गल तनु बधिर मठर बर्ब्बर इति।

मयूरव्यंसकाद्याः, (पाणिनिः २।१।७२) शाकपार्थिवाद्याश्च (शाकपार्थिवादीनां सिद्धये उत्तरपदलोपसंख्यानमिति वार्त्तिकम) निपात्यन्ते। व्यंसयति छलयतीति व्यंसको धूर्त्तः, विपूर्व्वादंसधातोर्ण्वकः, मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः। एवं उद्धर उत्सृज इति यस्यां क्रियायां सा उद्धरोत्सृजा, उच्चमविधमा, उत्पतनिपता, अशीतपिबता इत्यादि। शाकः शक्तिः वत्सरो वा प्रियो यस्य सः शाकप्रियः, शाकप्रियः पार्थिवः शाकपार्थिवः, निपातनात् मध्यपदलोपः। एवं श्रीहर्षनामा नृपतिः श्रीहर्षनृपतिः, मेरुनामा महीभृत् मेरुमहीभृत्, सुखयुक्ता नासिका सुखनासिका इत्यादि। मयूरव्यंसकादिः शाकपार्थिवादिश्च आकृतिगणः, प्रयोगानुसारेण बोद्धव्यः, तेन अन्यो राजा राजान्तरम्, अकिञ्चनः, अकुतोभयः, उच्चावचं, चिदेव चिन्मात्रमित्यादि मयूरव्यंसकाद्यन्तर्गतम्।

† क उङ् यस्य स कोङ्, कोङ् आदिर्यस्य स कोङादिः। यश्च जातीयश्च देशीयश्च तत्तस्मिन्। तश्च त्वश्च तत्वं तस्मिन्। जातिश्च आख्या च जात्याख्ये, न विद्यते

## ३५१। द्विचत्र्यष्टाधिका द्वात्रयोऽष्टा-स्त्रिदशा-द्योऽन्यषट्के त्वनशीतौ वा।

(द्वित्र्यष्टाधिका: १।॥, द्वात्रयोऽष्टा: १।॥, त्रिदशाद्यै ७।, अन्यषट्के ७।, तु ।१।, अनशीतौ ७।, वा ।१।)।

**एषामेते क्रमात् स्यु: दशादित्रिके, चत्वारिंशदादिषट्के अशीति-वर्जे तु वा।**

**द्व्यधिका दश द्वादश, त्रयोदश, अष्टादश।**

**द्वाचत्वारिंशत् द्विचत्वारिंशत्। अनशीतौ किं द्व्यशीति:।***

---

जात्याख्ये यत्र क्रोड़ादौ सोऽजात्याख्य:। (३२७) पुंवत् स्युरुक्तपुंस्केत्यनेन उक्तपुंस्कस्य क्रोड़ादे: पुंवद्भावप्रसक्तौ, (३२८) नोपाककोड़ित्यनेन निषेधे, कर्म्मधारयादौ पुनरनेन विधि: क्रियते, तेनायमर्थ:—तद्धितस्य यकस्य वा केन ककारोड्, पूरणीप्रत्ययान्तम्, आख्याभूतम्, इम् उम्-रक्ताथ-विकारार्थवर्ज णित्तद्धितान्तं, जाति-स्वाङ्ग-विहितेबन्तञ्च पदं यदि उक्तपुंस्कं भवति, तदा एकार्थे स्त्रीलिङ्गे परे कर्म्मधारयादौ पुंवत् स्यात्, जातीय-देशीय-प्रत्यये च परे पुंवत् स्यात्, तत्वयो: परयोस्तु जातिसंज्ञावर्जं उक्तपुंस्क: क्रोड़ादि: पुंवत् स्यादित्यर्थ:। जातीयप्रत्यये पुंवद्भावप्रसङ्गाभावेऽपि अनेन विशेषविधानम्। यथा—रसिका चासौ भार्य्या चेति रसिकभार्य्या, पाचिका चासौ स्त्री चेति पाचकस्त्री, पञ्चमी चासौ भार्य्या चेति पञ्चमभार्य्या। एवं दत्तभार्य्या, मैथिलभार्य्या, ब्राह्मणभार्य्या, सुकेशभार्य्या, (४८७) रसिकजातीया, (४७७) रसिकदेशीया, (४३८) रसिकता रसिकत्वम्। क्रोड़ादिभिन्नस्य तु दीर्घजातीया इत्यादीनां न पुंवत्। उक्तपुंस्क किं गङ्गिकाभार्य्या इत्यादि। अजात्याख्य इति किं, ब्राह्मणीत्वं दत्तात्वं ; गुणवाचकात्तु स्यादेव, यथा, शुक्लाया: भाव: शुक्लत्वमित्यादि। केचित्तु क्रोड़ादिरित्यनेन येषां पुंवद्भावो निषिद्धस्ते गृह्यन्ते, तेन (३२९) पूरणीप्रियेत्यादौ निषेधेऽपि कर्म्मधारये पुंवद्भाव इत्याहु:, यथा—कल्याणपञ्चमी महाष्टमी महानवमी कल्याणप्रिया इत्यादि।

क्रोड़ादि: (३२८) नोपाककोड् इत्यादिसूत्रे ये पठिता:, पूरण्यादि: (३२९) पूरणीप्रियेत्यादिसूत्रे ये पठिता:, ते पुंवत् स्यु: ये जातीयदेशीये च परे, त-त्वे परे तु जातिवाचकस्य सञ्ज्ञावाचकस्य च न स्यादित्यर्थ: इति रामतर्कवागीश:। पाणिनि: ६।३।४२। "त्वतलोर्गुणवचनस्य" इति वार्त्तिकम्।

* द्वौ च त्रयश्च अष्ट च ते द्वित्र्यष्ट, द्वित्र्यष्टभि: सहिता अधिका: द्वित्र्यष्टाधिका:, शाकपार्थिवादित्वात् सहितपदस्य लोप:, तस्मात् परस्याधिकशब्दस्य प्रत्येकेन सम्बन्धात्

## ३५२। वैकोनस्यैकाद्नैकान्नौ सङ्ख्यायां।

(वा।१।, एकोनस्य ६।, एकाद्न-एकान्नौ १॥, सङ्ख्यायां ७।)।

एकाद्नविंशतिः एकान्नविंशतिः एकोनविंशतिः। *

## ३५३। सख्यहोराज्ञः षः षगे च।

(सखि-अहन्-राज्ञः ५।, षः १।, ष-गे ७।, च।१।)।

एभ्यः षः स्यात् ये षे गे च। प्रियसखः परमाहः महाराजः।†

---

द्व्यधिक-त्र्यधिक अष्टाधिका इत्यर्थ। द्वाश्च त्रयश्च अष्टाश्च द्वात्रयोऽष्टाः, दश आद्यो येषां ते दशाद्याः, त्रयाणां दशाद्यानां समाहारः त्रिदशाद्य तस्मिन्। षणां समूहः षट्कं, अन्त्यञ्च तत् षट्कञ्चेति तस्मिन्। न अशीतिरनशीतिस्तस्याम्। त्रिदशाद्यशब्देन दश-विंशति-त्रिंशत्-शब्दानामेव ग्रहणम्, अन्यथा अन्त्यषट्के अशीतिवर्जनमनर्थकं स्यात्। तेन द्व्यधिकत्र्यधिकाष्टाधिकानां स्थाने क्रमात् द्वा त्रयस् अष्टा इत्येते आदेशा भवन्ति दशशब्दे विंशतिशब्दे त्रिंशत्शब्दे च परे, प्रकरणात् कर्म्मधारये; चत्वारिंशत् पञ्चाशत् षष्टि सप्तति नवतीति पञ्चसु परेषु वा स्युरित्यर्थः। द्व्यधिकाश्च ते दश चेति द्वादश, त्र्यधिकाश्च ते दश चेति त्रयोदश, अष्टाधिकाश्च ते दश चेति अष्टादश, शाकपार्थिवादित्वात् अधिकपदलोपः। एवं द्वाविंशतिः त्रयोविंशतिः अष्टाविंशतिः, द्वात्रिंशत् त्रयस्त्रिंशत् अष्टात्रिंशत्। द्व्यधिका चासौ चत्वारिंशच्चेति द्वाचत्वारिंशत्, पक्षे द्विचत्वारिंशत्। एवं द्वापञ्चाशत् द्विपञ्चाशत्, द्वाषष्टिः द्विषष्टिः, द्वासप्ततिः द्विसप्ततिः, द्वानवतिः द्विनवतिरित्यादि। अशीतौ तु न आदेशः, तेन द्व्यशीतिः त्र्यशीतिः अष्टाशीतिः। कर्म्मधारये किं, द्व्यधिका दश यत्र स द्व्यधिकदश इत्यादौ न स्यात्। अन्त्यषट्के इति किं, द्विशतं, त्रिसहस्रमित्यादि। पाणिनिः ६।३।४७,४८,४९। प्राक् शतादिति वक्तव्यमिति वार्त्तिकञ्च।

* एकोनस्य स्थाने एकाद्न-एकान्नौ स्यातां सङ्ख्यावाचके परे ये। एकोना चासौ विंशतिश्चेति एकाद्नविंशतिरित्यादि। वाशब्दस्य व्यवस्थया सङ्ख्या इह विंशत्यादिरेव, तेन एकोनाश्च ते दश चेति एकोनदश इत्येव। "यद्यपि संख्यायामिति सामान्येनोक्तं तथापि विंशति त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शत सहस्रादावेव परेऽन्नाद्नावादेशौ भवतः, नत्वन्यस्मिन् संख्याशब्दे परेऽनभिधानात्" इति गोयीचन्द्रः। ये किं, एकोना विंशतिर्यत्र स. एकोनविंशतिरिति। पाणिनिः ६।३।७६।

† सखा च अहश्च राजा चेति तस्मात्। प्रियश्चासौ सखा चेति प्रियसखः, अनेन षः (२५८) इकारलोपः। स्त्रियां षित्वादीपि (२५७) प्रियसखी। परमञ्च तत् अहश्चेति

## ३५४। सर्व्वैकदेशसङ्ख्यातसङ्ख्याव्यान्नैकान्नैक्येऽह्नोऽह्नः।

(सर्व्व—व्यात् ५।, न ।१।, एकात् ५।, न ।१।, ऐक्ये ७।, अह्नः ६।, अह्नः १।)।

एभ्यः परस्य अहन् इत्यस्य स्याने अह्नः स्यात् यादौ नत्वेकात् न चैक्ये। *

## ३५५। प्राग्वत् नो णोऽतोऽह्नस्य।

(प्राग्वत् ।१।, न. ६।, णः १।, अत. ५।, अह्नस्य ६।)।

सर्व्वाह्णः पूर्व्वाह्णः। एकात्तु एकाहः।

अत इति किं, त्रिभिरहोभिर्जातः त्र्यह्नः। †

---

परमाहः, षप्रत्यये, (३३७) नलोपे, (२५८) अकारलोपः, अहान्तानां पुंस्त्वमभिधानात्। महांश्चासौ राजा चेति महाराजः, (३२६) महतस्तस्य आकारः, षप्रत्यये, न-लोपे, अकारलोपः। स्त्रियां महाराज्ञी, "महाराज्ञी तु प्रायो नामग्रहणे स्त्रीलिङ्गस्यापि ग्रहणमित्यस्य प्रायिकत्वात्" इति क्रमदीश्वरः। "महती चासौ राज्ञी चेति" इति गोयीचन्द्रः। "लिङ्गविशिष्टपरिभाषया अनित्यत्वान्नेह मद्राणां राज्ञी मद्रराज्ञी" इति भट्टोजिदीक्षितः। एवं कृष्णस्य सखा कृष्णसखः, त्रयाणां सखीनां समाहारस्त्रिसखं। यादौ किं, कृष्णः सखा यस्य स कृष्णसखिः, कृष्णसखा इति तु भाष्यकारः (१२९ सूत्रटीका द्रष्टव्या)। अतएव "वायुः सखा यस्य स वायुसखा" इति गोयीचन्द्रः। पाणिनिः ५।४।९१।

* सर्व्वश्च एकदेशश्च सङ्ख्यातश्च सङ्ख्या च व्यश्च समाहारे तस्मात्, न एको नैकस्तस्मात्, न ऐक्यं नैक्यं तस्मिन्। अत्र एकैकभागे वर्त्तमानः पूर्व्वादिरेकदेशः। एभ्यः परस्य अहन्शब्दस्य अह्न इत्यकारान्त आदेशः स्यात्, नतु एकात्, न च समाहारे द्विगौ। पाणिनिः ५।४।८८।

† प्राग्वदित्यनेन (१०७) सू: अवकुपन्तरेऽपीति च प्राप्तं, तथाच—षकार-रेफ-ऋवर्ण-युक्तात् अदन्तात् परस्य अह्न इत्यकारान्तस्य नो णः स्यात् अव-कु-पु-अन्तरेऽपीत्यर्थः। सर्व्वञ्च तत् अहश्चेति सर्व्वाह्णः, पूर्व्वञ्च तत् अहश्चेति पूर्व्वाह्णः। एवं प्राह्णः अपराह्णः इत्यादि (३५३,३५४,३५५)। एकञ्च तदहश्चेति एकाहः (३५३, ३३७,२५८)। त्र्यह्न इति तद्धितार्थद्विगुः, प्रत्युदाहरणार्थमिहोक्तम्। अह्नस्येत्यकारान्त

## ३५६। कौटग्रामात् तक्ष्णः।

(कौट-ग्रामात् ५।, तक्ष्ण ५।)।

कौटतक्षः, (ग्रामतक्षः)। *

## ३५७। जातमहद्वृद्धादुक्ष्णः।

(जात-महत्-वृद्धात् ५।, उक्ष्ण. ५।)।

जातोक्षः, महोक्षः, वृद्धोक्षः। †

## ३५८। शुनोऽत्यप्राण्युपमानात्।

(शुनः ५।, अति-अप्राण्युपमानात् ५।)।

अतेः प्राणिवर्जादुपमानाच्च शुनः षः स्यात् यादौ।
आकर्ष इव श्वा आकर्षश्वः। प्राणिनस्तु,व्याघ्रइव श्वा व्याघ्रश्वा।‡

---

इति किं, दीर्घाणि अहानि यस्यां सा दीर्घाह्नी शरत्। प्राग्वदिति कि, सङ्ख्याताङ्गः व्यङ्गः। पूर्व्वत्र नैक्ये इति किं, द्वयोरह्नोः समाहारः द्व्यहः। एतेषां पुंस्त्वमभिधानात्। पुण्याहमिति तु नपुंसकं "अपथपुण्याहे नपुंसके" इति लिङ्गानुशासन विशेष सूत्रात्। एवं सुदिनाहमिति। "पुण्यसुदिनाभ्यां क्लीवे" इति क्रमदीश्वरसूत्रम। पाणिनिः ८।४।७।

* आभ्यां परात् तक्षन्शब्दात ष स्यात यादौ। कुट्यां भवः कौट. कौटश्चासौ तक्षा चेति कौटतक्षः, "स्वतन्त्रकर्म्मजीवी न कस्यचित् प्रतिबद्ध." इति गोयीचन्द्रः। ग्रामस्य तक्षा ग्रामतक्षः "बहूना साधारण इत्यर्थ." इति गोयीचन्द्रः कौटग्रामात किं राजतक्षा। पाणिनिः ५।४।९५।

† एभ्यः परात् उक्षन्शब्दात् षः स्यात् यादौ। जातश्चासौ उक्षा चेति जातोक्ष एवं महोक्षः, वृद्धोक्षः। यादौ किं, महान् उक्षा यस्य स महोक्षा शिवः। पाणिनि.५।४।७७।

‡ न प्राणी अप्राणी, अप्राणी चासौ उपमानञ्चेति अप्राण्युमानं, अतिश्च अप्राण्युपमानञ्चेति तस्मात्। आकृष्यतेऽनेनेति आकर्षः, आकुड़सी इति ख्यातः। आकर्षशब्देन लक्षणया आकर्षतुल्य उच्यते, तज्ज्ञापनार्थम् इवशब्दः। आकर्ष इति अप्राण्युपमानात् परात् श्वन्शब्दात षः। अतेस्तु, श्वानमतिक्रान्त. अतिश्वः वराहः, अतिश्वी सेवा। व्याघ्रशब्देन लक्षणया व्याघ्रतुल्य उच्यते, व्याघ्रश्चासौ श्वा चेति व्याघ्रश्वा, प्राण्युपमानात् न षः। पाणिनिः ५।४।९६,९७।

## ३५९। पूर्व्वोत्तरमृगाच्चानतेः सक्थ्नः।

(पूर्व्व-उत्तर-मृगात् ५।, च ।१।, अनतेः ५।, सक्थ्नः ५।)।

एभ्यः पूर्व्वोक्ताच्च अतिवर्ज्जात् सक्थ्नः षः स्यात् यादौ। पूर्व्वसक्थं। *

## ३६०। देशात् ब्रह्मणः कुमहद्भ्यान्तु वा।

(देशात् ५।, ब्रह्मणः ५।, कु-महद्भ्यां ५॥, तु ।१।, वा ।१।)।

कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा। †

## ३६१। सरोऽनोऽयोऽश्मनः संज्ञाजात्योः।

(सरस्-अनस्-अयस्-अश्मनः ५।, संज्ञा-जात्योः ७॥)।

महानसं उपानसं लोहितायसं पिण्डाश्मः अमृताश्मः। ‡

---

* पूर्व्वश्च उत्तरश्च मृगश्च तस्मात्। नास्ति अतिर्यत्र सोऽनतिस्तस्मात्। पूर्व्वोत्तरमृगेभ्यः अप्राग्युपमानाच्च सक्थ्नः षः स्यात् यादौ। पूर्व्वञ्च तत् सक्थि चेति पूर्व्वसक्थं। एवम् उत्तरसक्थं। पूर्व्वोत्तरशब्दौ अवयववाचिनौ। मृगस्य सक्थि मृगसक्थं। फलकमिव सक्थि फलकसक्थं, शिलासक्थं। प्राग्युपमानात्तु व्याघ्रसक्थि। अतेस्तु सक्थि अतिक्रान्त. अतिसक्थिः। पाणिनि. ५।४।९८।

† देशवाचकात् परात् ब्रह्मणः ष. स्यात् यादौ, कुमहद्भ्यां परात्तु वा। अवन्तिषु ब्रह्मा अवन्तिब्रह्मः, सुराष्ट्रब्रह्म.। देशात् किं, देवब्रह्मा नारद। महांश्चासौ ब्रह्मा चेति महाब्रह्मः महाब्रह्मा। ब्रह्मन्शब्दोऽत्र ब्राह्मणवाची। पाणिनिः ५।४।१०४,१०५।

‡ सरस् च अनस् च अयस् च अश्मन् चेति तस्मात्। संज्ञा च जातिश्च संज्ञाजाती तयोः। संज्ञालक्षणमाह गोयीचन्द्रः "यो योगवृत्तिमितरत्रापहाय विशेषे वर्त्तते स एव संज्ञाख्यां लभते।" जातिलक्षणन्तु पूर्व्वमेवोक्तं स्त्रीत्वे २६३ सूत्रे। एभ्यः षः स्यात् यादौ संज्ञायां जातौ च। जालस्य सरः जालसरसं संज्ञा। जलसरसमिति तु भट्टोजिदीक्षितः। चन्द्रसरो दैतवनसरः अच्छोदसरः इत्यादौ तु न भवति। मण्डूकसरसं जातिः। महच्च तत् अनश्चेति महानसं संज्ञा। उपगतमनः उपानसं जातिः। लोहितमयः लोहितायसं संज्ञा। कालमयः कालायसं जातिः। पिण्ड इव अश्मा पिण्डाश्मः संज्ञा। अमृतं अश्मा अमृताश्मः जातिः। संज्ञाजात्योः किं, दीर्घसरः दृढानः कृष्णायः भग्नाश्मा। पाणिनिः ५।४।९४।

## ३६२ । सर्व्वैकदेशसङ्ख्यातपुण्यवर्षादीर्घाद्रात्रे: ।

(सर्व्व—दीर्घात् ५।, रात्रे: ५।) ।

रात्रेरेकैकदेशे वर्त्तमान: पूर्व्वादिरेकदेश: ।

पूर्व्वरात्र: अपररात्र: । *

## ३६३ । गोरतार्थे । (गो: ५।, अतार्थे ७।) ।

गोशब्दात् ष: स्यात् यादौ, न तु तार्थे । परमगव: । †

## ३६४ । नावोऽर्द्धात् गे च ।

(नाव: ५।, अर्द्धात् ५।, गे ७।, च ।१।) ।

अर्द्धात् परात् नौशब्दात् ष: स्यात्, अतार्थे गे च । अर्द्धनावं । ‡

## ३६५ । खार्य्या वा । (खार्य्या: ५।, वा ।१।) ।

अर्द्धखारं अर्द्धखारी । §

इति ष: ।

---

* सर्व्वश्च एकदेशश्च सङ्ख्यातश्च पुण्यश्च वर्षाश्च दीर्घश्च तस्मात् । एभ्य: परस्या: रात्रे: ष: स्यात् यादौ । सर्व्वा चासौ रात्रिश्चेति सर्व्वरात्र: । रात्रान्तानां पुंस्त्वमभिधानात् । पूर्व्वा चासौ रात्रिश्चेति पूर्व्वरात्र: रात्रे: पूर्व्वभाग इत्यर्थ:, एवमपररात्र:, मध्यरात्र:, सङ्ख्यातरात्र:, पुण्यरात्र:, वर्षाणां रात्रि: वर्षारात्र:, दीर्घरात्र: । पाणिनि: ५।४।८७ ।

† परमश्चासौ गौश्चेति परमगव: । एवं पुमांश्चासौ गौश्चेति पुंगव: । राज्ञो गौ: राजगव: । त्रयाणां गवां समाहार: त्रिगवं, षण्णां गवां समाहार: षड्गवं । पञ्च गावो धनमस्य पञ्चगवधन: । अतार्थे किं, पञ्चभिर्गोभि: क्रीत: पञ्चगु: । पाणिनि: ५।४।९२ ।

‡ अत्र सूत्रे परत्र च यादेरनुवृत्तावपि अभिधानात् अर्द्धात् परात् नौशब्दात् ये एव ष: स्यात्, पुन. गे च इति कथनात् नौशब्दात् ष: स्यात् अतार्थे गे च इत्यपरोऽर्थो बोद्धव्य: । अतएव पाणिनौ सूत्रद्वयम् । अर्द्धञ्च तत् नौश्चेति अर्द्धनावं क्लीवत्वमभिधानात् । अर्द्धात् किं, दीर्घनौ: । एवं त्रिनावं द्विनावधन: । तार्थे तु, पञ्चभि: नौभि: क्रीत: पञ्चनौ: । पाणिनि: ५।४।९९,१०० ।

§ अर्द्धात् परात् खारीशब्दात् ष: स्यात् वा ये । खारीशब्दात् ष: स्यात् वा अतार्थे गे च इति च अर्थ: । अर्द्धञ्च तत् खारी चेति अर्द्धखारं, क्लीवत्वमभिधानात् । पक्षे अर्द्ध-

## तत्पुरुष-समासः (ष) ।

कृष्णमाश्रितः कृष्णाश्रितः । * .

### ३६६ । व्यं पूर्व्वं । (व्यं १।, पूर्व्वं १।) ।

परं व्यं पूर्व्वं स्यात् से सति ।

---

खारी । एवं त्रिखारं त्रिखारि, द्विखारधनः द्विखारीधनः । तार्थे तु, द्वाभ्यां खारीभ्यां क्रीतः द्विखारिः । पाणिनिः ५।४।१०१ ।

* द्वितीयादिविभक्त्यन्तपदपूर्व्वकाणां समासस्तत्पुरुष इत्युक्तं (३१८), क्रमेणोदाहरति कृष्णमाश्रित इति । एवं क्रियाविशेषण द्वितीयान्तादेरपि यथा—नित्यभीरुः, मन्दगामी, मासं व्याप्य स्थितः मासस्थितः इत्यादि । पाणिनिमते तु क्रियाविशेषणस्थले सुप्सुपेति समासः, क्रियाविशेषणस्य कारकत्वेनानङ्गीकारात् ।

नञ् इत्यव्ययस्य स्याद्यन्तेन सह समासो नञ्तत्पुरुषः (पाणिनिः २।२।६), स च प्रथमान्तपदपूर्व्वक एव । यथा न ब्राह्मणः अब्राह्मणः । नञ् च द्विविधः पर्य्युदासः प्रसज्यप्रतिषेधश्च । तथाच—प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ अब्राह्मण इत्यादौ परपदार्थसदृशार्थकत्वात् विधेः प्राधान्यं, प्रतिषेधांशे तात्पर्य्याभावात् प्रतिषेधस्याप्राधान्यम्, अतएव पर्य्युदास-नञः परपदेन सह सापेक्षत्वात् समासः । किञ्चित् न कुर्व्वाण इत्यादौ विध्यंशे तात्पर्य्याभावात् विधेरप्राधान्यं प्रतिषेधस्य च प्राधान्यम्, अतएव प्रसज्यप्रतिषेध-नञः क्रियया सह सम्बन्धात् स्याद्यन्तेन सह सापेक्षत्वाभावात् न समास इति । "शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम्" इत्यादौ केचित्तु समास इष्यते । प्राञ्चस्तु नञर्थः षड्विधः—तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ यथा—अब्राह्मणः, अपापं, अघटः, अनुदरी कन्या, अकेशी, असुरः इत्यादि । अत्र वक्तव्यं—अब्राह्मण इत्यादौ नञ्तत्पुरुषः समासः, नातिशीतोष्ण इत्यादौ तु सुप्सुपेति समासः । अनतिशीतोष्ण इति कृते तु नञ्तत्पुरुष एव ।

एवञ्च कु-प्रादिभिः सह स्याद्यन्तस्य नित्यसमासः स्यात् (पाणिनिः २।२।१८, 'प्रादयः गताद्यर्थे प्रथमया', इति वार्त्तिकञ्च) । नित्यसमासे स्वपदविग्रहो नास्ति, पदान्तरेण अर्थकथनम् । कुत्सितः पुरुषः कुपुरुषः, ईषत् जलं काजलं, प्रकृष्टो गतः प्रगतः, दुष्टो जनः दुर्जनः, शोभनो जनः सुजनः इत्यादिः शिष्टप्रयोगानुसारेण नित्यसमासो ज्ञेयः ।

राजानमतिक्रान्ता अतिराजी, अतिश्वी, अत्यङ्कः, अतिस्त्रिः ।*

## ३६७। सङ्ख्याव्याद्रात्र्यङ्गुलिभ्यामः ।

(सङ्ख्या-व्यात् ५।, रात्रि-अङ्गुलिभ्यां ५॥, अः १।) ।

सङ्ख्याया व्याच्च पराभ्यां रात्र्यङ्गुलिभ्याम् अः स्यात् यादौ, न तु तार्थे। अतिरात्रः अत्यङ्गुलः ।†

हरिणा त्रातो हरित्रातः। विष्णवे दत्तं विष्णुदत्तं । अच्युतात् जातं अच्युतजातं। कृष्णस्य सखा कृष्णसखः, महाघासः, ग्रामतक्षः, मृगसक्थं, जालसरसं, मण्डूकसरसं, राजगवः, वर्षारात्रः । ‡

---

(५४८ सूत्रं द्रष्टव्यम्)। स्याद्युत्पत्तेः प्रागपि कृदन्तेन सह उपपदस्य नित्यं समासः, यथा—कुम्भं करोति इति कुम्भकारः, शक्तिग्रहः, धनक्रीतीत्यादि।

* समासान्तप्रत्ययानामेव निमित्तीभूतस्य यादेः इह पूर्व्वनिपाते अनुवृत्तिर्नास्ति, तेन समाससमावेऽस्य विधानात् उपकृष्णम् इत्यव्ययीभावेऽपि पूर्व्वनिपातः। अतिराजीति (३५३) ष-प्रत्यये, (३३७,२५८) नकार-अकार-लोपे, (२५७) ष्णित्वादीप्। श्वानमतिक्रान्ता अतिश्वी (३५८) ष प्रत्ययः, शेषं पूर्व्ववत्। अङ्गमतिक्रान्तः अत्यङ्कः, (३५३) षः, (३५४) अङ्कादेशः। स्त्रियमतिक्रान्तः अतिस्त्रिः, परपदार्थस्याप्राधान्यात् (३३०) ह्रस्वः, एवम् अतिमायः, अतिवामोरुः। राजानमतिक्रान्ता अतिराजीत्युदाहरता अत्यादिभिर्द्वितीयान्तस्य समास इति सूचितं (अत्यादयः क्रान्ताद्यर्थे द्वितीयया इति वार्त्तिकम्), तेन वेलामुद्गतः उद्वेलः, ज्यामधिरूढं अधिज्यं, मुखमभिगतः अभिमुखः—इत्यादि बोध्यं। अत्र प्रयोगानुसारेण अव्ययभिन्नस्यापि पूर्व्वनिपातो वक्तव्यः, यथा—वनस्याग्रे अग्रेवनं, रात्रीणां गणः गणरात्रं, दन्तानां राजा राजदन्तः इत्यादि। पाणिनिः २।२।३०।

† सङ्ख्या च व्यश्च सङ्ख्याव्यं तस्मात्, एकवचनं यथासङ्ख्य-निरासार्थं। अत्र मण्डूकप्लुताधिकारात् यादेरनुवृत्तिः। रात्रिमतिक्रान्तोऽतिरात्रः, अङ्गुलिमतिक्रान्तोऽत्यङ्गुलः, उभयत्र अनेन अप्रत्यये (२५८) इकारलोपः। एवं तिसृणां रात्रीणां समाहारः त्रिरात्रं, द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलं। तार्थे किं, द्वे अङ्गुली परिमाणमस्य द्व्यङ्गुलि (क्षेत्रं)। द्व्यङ्गुलं क्षेत्रं, द्व्यङ्गुला भूमिरित्यादि तु यवोदरपरिमाणार्थकाङ्गुलशब्देन समासे सिद्धं, तथाच—अङ्गुलन्तु यवो मतः इत्यमरमाला। पाणिनिः ५।४।८६,८७।

‡ तृतीया-तत्पुरुषमाह—हरिणा त्रात इति। एवं खड्गच्छिन्नः, रथव्रज्या,

## ३६८। मुख्यार्थोरसः। (मुख्यार्थ-उरस: ॥) ।

मुख्यार्था-दुरस्शब्दात् अः स्यात् यादौ। अश्वोरसं, मुख्योऽश्व इत्यर्थः।

पुरुषेषु उत्तमः पुरुषोत्तमः, अवन्तिषु ब्रह्मा अवन्तिब्रह्मः। *

इति षः।

---

मासपूर्व्वः, मासोनः, वर्षावरः, गुड़मिश्र इत्यादि। दध्ना मिश्रित-ओदनः दध्योदनः, गुड़ेन मिश्रिता धानाः गुड़धानाः, हस्तिना युक्तो रथः हस्तिरथः, एवं अश्वरथः इत्यादौ शाकपार्थिवादित्वात् मध्यपदलोपः। चतुर्थीमाह—विश्वाय दत्तमिति। एवं गोभ्यो हितः गोहितः, यूपाय दारु यूपदारु, कुण्डलाय सुवर्णं कुण्डलसुवर्णं, इत्यादि। अत्र वक्तव्यं—केषाञ्चिन्मते प्रकृतिविकृतिभावस्थले एव चतुर्थीतत्पुरुषः, अन्यत्र तु षष्ठीसमासः। यथा अश्वस्य घासः अश्वघासः, न तु अश्वाय घासः। एवं रन्धनस्थाली इत्यादि। पञ्चमीमाह—अच्युतात् जातमिति। एवं व्याघ्रभीतः धर्म्मभीतः, अश्वपतितः, अर्जुन-पराजितः, सर्परक्षितः, घटभिन्न इत्यादि। षष्ठीमाह—कृष्णस्य सखा कृष्णसखः (३५३), महती देशस्य महत्या भूम्या वा घासः महाघासः (३२६), महतः सकारस्य तोकारस्य वा आकारः। ग्रामस्य तचा ग्रामतचः (३५६) ष-प्रत्ययः। मृगस्य सक्थि मृगसक्थं (३५८)। जालस्य सरः मण्डूकस्य सरः, जालसरस मण्डूकसरसं (३६१)। राज्ञो गौः राजगवः (३६२)। वर्षाणां रात्रिः वर्षारात्रः (३६२)। एवं मासस्य जातः मासजात इत्यादि। अत्र वक्तव्यम्—"कृद्योगा षष्ठी समस्यते इति वाच्यम्", "प्रतिपदविधाना षष्ठी न समस्यते इति वाच्यम्"—इति वार्त्तिकद्वयम्। यथा इध्मनो व्रश्चनः इध्मव्रश्चनः; सर्पिषो ज्ञानम्, मातुः स्मरणम्, एधोदकस्य उपस्करणम्, चौरस्य रुजा, सर्पिषो नाथनम्, चौरस्योज्जासनम्, व्रतस्य पचनमित्यादि।

* मुख्योऽर्थो यस्य तत् मुख्यार्थं, मुख्यार्थञ्च तत् उरश्चेति तस्मात्। अश्वस्य उरः प्रधानं अश्वोरसं। उरसशब्दो हृदयवाचकः, अत्र तु लक्षणया प्रधानार्थः। "अश्वानामुर इव" इति भट्टोजिदीक्षितः। मुख्यार्थादिति किं, वृक्षस्य उरः वृक्षोरः वृक्षस्य वक्ष इत्यर्थः। सप्तमीतत्पुरुषमाह—पुरुषोत्तमः। अत्र उदाहरणज्ञापकात् पुरुषाणामुत्तम इति न षष्ठीसमासः "न निर्द्धारणे" (पाणिनिः २।२।१०) इति सूत्रेण निषेधात्। अवन्तिब्रह्म इत्यत्र (३६०) षप्रत्ययः। पाणिनिः ५।४।१३।

अत्र वक्तव्यं, विलेशयादेर्विभक्तेरलुक् वनेचरादेर्वा, यथा—विलेशयः, खलेशयः, उरसिलोमा, कण्ठेकालः। वनेचरः वनचरः, खेचरः खचरः, त्वचिसारः त्वक्सारः, सरसिजं सरोजमित्यादि। एवं परस्मैपदम्, आत्मनेपदम्, युधिष्ठिरः, कर्णेजपः, पश्यतोहरः, अन्तेवासी इत्यादौ नित्यम्। मातुःष्वसा मातुःस्वसा मातृष्वसा, पितुःष्वसा पितुःस्वसा पितृष्वसा इत्यादौ विकल्पः। पाणिनिः ६।३।१—६।३।२४, ८।३।८४, ८५, ९५।

## द्विगु-समासः (ग)।

तस्यार्थे—विषये, वाच्ये अपत्यार्थष्णिकादिकं
प्रोज्भ्याजादेः, समाहारे, गस्त्रिधोत्तरदे परे।

पञ्चभिर्गोभिः क्रीतः पञ्चगुः। *

### ३६९। गैक्यादतोऽपात्रादेरीप्।

(गैक्यात् ५।, अतः ५।, अपात्रादेः ५।, ईप् ।१।)।

गैक्यादकारान्तादीप् स्यात्, न तु पात्रादेः।

त्रयाणां लोकानां समाहारः त्रिलोकी।

---

* गो द्विगुः—तस्य तद्धितस्य अर्थे, समाहारे, उत्तरपदे परे च भवन् त्रिधा भवति। तद्धितार्थेऽपि द्विधा भवति, यथा—तद्धितप्रत्ययमात्रस्य अर्थे विषये इत्येकः, अपत्यार्थ-ष्णिकादिकं प्रोज्भ्य त्यक्त्वा अजादेस्तद्धितस्य अर्थे वाच्ये इत्यपरः। ष्णिकादिकमिति ष्णिरेव ष्णिक इति छन्दोऽनुरोधात् स्वार्थे कः, ष्णिप्रभृतिकमित्यर्थः। यत्र तस्यार्थविषये समासः क्रियते तत्र तद्धितप्रत्ययोत्पत्तेः पूर्व्वावस्थायां समासे कृते ततः प्रत्ययोत्पत्तौ वृद्ध्यादिः, यथा द्वयोर्मात्रोरपत्यमित्यत्र प्राप्तव्यस्य ष्णप्रत्ययस्य उत्पत्तेः पूर्व्वावस्थायां द्वयोः मात्रोः एतयोरेकपदीभावे द्विमातृपदात् (४१५) ष्णप्रत्यये कृते, (४१६) द्वि इत्यस्य वृद्धौ, (४२५) ङुर् कृते द्वैमातुरः इति पदं। एवं पञ्चानां नापितानामपत्यं पाञ्चनापितिरित्यादि। वाच्ये यथा—पञ्चभिर्गोभिः क्रीतः पञ्चगुः इत्यत्र कर्म्मणि वाच्ये करण-कारकात् (४२६) ढघे कादित्यादिना प्राप्तव्यप्रत्ययस्य अर्थे वाच्ये, समासेनैव तद्धितस्य उक्तार्थत्वे, उक्तार्थानामप्रयोगः इति न्यायात् तद्धितप्रत्ययस्य अनुत्पत्तौ, (३३०) गवाचादेरिति ह्रस्वः। अजादेरिति किं—द्वयोर्मूर्द्ध्नोर्भवः द्विमूर्द्धन्यः, इत्यादौ तद्धितप्रत्ययात् पूर्व्वं समासे, द्विमूर्द्धन्शब्दात् (४३३) ष्य-प्रत्ययः, अत्र विषये एव द्विगुः, न तु वाच्ये। समाहारे यथा—त्रिभुवनं। उत्तरपदे परे यथा पञ्चगवधनः। पाणिनिः २।१।५१।

पात्रादेस्तु, द्विपात्रं त्रिपात्रं, त्रिभुवनं, चतुर्युगं। *

३७०। वानापः। (वा ।१।, अन्-आपः ५।)।

अनन्तादापश्च ईप् स्यात् वा। पञ्चकर्म्मी पञ्चकर्म्मं, त्रिखट्वी त्रिखट्वं। †

३७१। तार्थे मानात् काण्डात्त्वचे। (तार्थे ७।, मानात् ५।, काण्डात् ५।, तु ।१।, अचेत्रे ७।)।

त्र्याढ़की, त्रिकाण्डी रज्जुः। चेत्रे तु, त्रिकाण्डा भूमिः। ‡

३७२। पुरुषाद्वा। (पुरुषात् ५।, वा ।१।)।

---

* गस्य ऐक्यं गैक्यं (समाहारद्विगुः) तस्मात्। पात्रमादिर्यस्य स पात्रादिः, न पात्रादिरपात्रादिः तस्मात्। समाहार-द्विगूनां (३२२) क्लीवत्वेऽपि ईपो विधानात् नित्यस्त्रीत्वं सूचितं। द्वयोः पात्रयोः समाहारः द्विपात्रं। आदिना त्रिगुणं चतुर्गुण चतुःशतं चतुष्पथ चतुर्मुखं पञ्चगवं पञ्चनावं द्विखारं द्विचन्द्रम् इत्यादि प्रयोगतो ज्ञेयं। अत इति किं, त्रयाणां जगतां समाहारः त्रिजगत् इत्यादि। पाणिनिः ४।१।२१, २।४।१७, "पात्रादिभ्यः प्रतिषेध." इति वार्त्तिकञ्च।

† वाशब्दोऽत्र समुच्चयार्थः, तथाच—अनन्तात् आबन्ताच्च गैक्यात् ईप् स्यात्, समुच्चयेन (३६७) सङ्ख्याव्यादित्यतः मण्डूकगत्या अनुवृत्य अश्च स्यादित्यर्थः। समुच्चयाकृष्टं नोत्तरत्र इति न्यायात् परत्र अप्रत्ययस्य नानुवृत्तिरिति। पञ्चानां कर्म्मणां समाहारः, अनेन ईपि (३३७) न-लोपे, (२५८) अकार-लोपे, पञ्चकर्म्मी। पक्षे अनेनैव समुच्चय-लब्धोऽप्रत्ययः, (३२२) क्लीवत्वं। एवं त्रितक्षी त्रितक्षं इत्यादि। "वाबन्तः", "अनो नलोपश्च वा च स्त्रियाम्" इति वार्त्तिकद्वयम्।

‡ तद्धितार्थद्विगौ परिमाणवाचकात् ईप् स्यात्, काण्डशब्दात्तु क्षेत्रभिन्ने वाच्ये इत्यर्थः। त्रयः आढ़काः परिमाणमस्याः त्र्याढ़की धान्यसंहतिः। एवं द्वौ द्रोणौ परिमाण-मस्याः द्विद्रोणीत्यादि। त्रयः काण्डाः (नलाः) परिमाणमस्याः त्रिकाण्डी रज्जुः। क्षेत्रे तु त्रिकाण्डा भूमिः क्षेत्रैकदेशः। पाणिनि ४।१।२२,२३।

द्विपुरुषी द्विपुरुषा । त्रिसखं त्रिगवं त्रिनावं, त्रिखारं त्रिखारि, त्र्यहः । *

## ३७३ । द्वित्रेर्वाञ्जलेः ।

(द्वित्रेः ५।, वा ।१।, अञ्जलेः ५।, अः १।) ।

द्व्यञ्जलं द्व्यञ्जलि, द्व्यङ्गुलं, त्रिरात्रं । †

पञ्च गावो धनं यस्यासौ पञ्चगवधनः द्विनावधनः द्विखारधनः, द्व्यङ्गप्रियः । ‡

इति गः ।

---

* परिमाणवाचकात् पुरुषशब्दादीप् स्यात् वा तद्धितार्थे द्विगौ । द्वौ पुरुषौ परिमाणमस्याः द्विपुरुषी द्विपुरुषा भित्तिः । त्रयाणां सखीनां समाहारः त्रिसखं (२५३) । त्रयाणां गवां समाहारः त्रिगवं (२६३) । तिसृणां नावां समाहारः त्रिनावं (२६४) । तिसृणां खारीणां समाहारः त्रिखारं (२६५), पक्षे त्रिखारि (१६७) । त्रयाणामह्नां समाहारः त्र्यहः (२५३), अभिधानात् पुंस्त्वं । (२५४) सर्व्वैकदेशेत्यत्र समाहारवर्जनात् न अह्नादेशः । परिमाणभिन्ने तु द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा इत्येव । पाणिनिः ४।१।२४ ।

† द्वित्रिभ्यां परादञ्जलेः अः स्यात् वा तद्धितार्थे द्विगौ । द्वावञ्जली परिमाणमस्य द्व्यञ्जलं जलं, पक्षे अप्रत्ययाभावे जलविशेषणत्वात् क्लीवत्वं । एवं त्र्यञ्जलं त्र्यञ्जलि । त्रिलोचनस्तु तद्धितार्थभिन्ने द्विगौ द्वित्रिभ्यामञ्जलेरप्रत्ययं विदधाति, तन्मते द्वयोरञ्जल्योः समाहारः द्व्यञ्जलं द्व्यञ्जलि, एवं द्वावञ्जली प्रियौ यस्य स द्व्यञ्जलप्रियः द्व्यञ्जलिप्रियः इति समाहारोत्तरपदपरयोरुदाहरणं । तद्धितार्थे तु द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिरिति । अतएव 'अतद्धितलुकीत्येव' इति भट्टोजिदीक्षितः । द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलं, तिसृणां रात्रीणां समाहारः त्रिरात्रं, उभयत्र (२६७) सङ्ख्याव्यादिति अप्रत्ययः । पाणिनिः ५।४।१०२, "संख्यापूर्व्वं रात्रं क्लीवम्" इति वार्त्तिकञ्च ।

‡ उत्तरपदे परे उदाहरति—पञ्चगवधनः, अत्र धने उत्तरपदे परे द्विगौ, (२६२) अप्रत्ययः, द्वे नावौ धनमस्य द्विनावधनः (२६४) अप्रत्ययः । द्वे खार्य्यौ धनमस्य द्विखारधनः द्विखारीधनः (२६५) विकल्पेन अः । द्वे अहनी प्रिये यस्यासौ द्व्यह्नप्रियः, (२५३।२५४) अः, अह्नादेशश्च ।

## अव्ययीभाव-समासः (व)।

व: कसामीप्यसादृश्य-साकल्यानुक्रमर्द्धिषु ।
वीप्सापर्य्यन्तयोग्यत्व-पश्चादर्थानतिक्रमे ।
शब्दप्रादुर्भावाभाव-यौगपद्येष्वनेकधा ॥ *

## ३७४ । वात् क्तेर्मोऽतोऽप्याः ।

(वात् ५।, क्तेः ६।, मः १।, अतः ५।, अप्याः ६।) ।

अकारान्तात् वात् परस्याः क्तेर्मः स्यात्, नतु प्याः । †
कृष्णमधिकृत्य प्रवृत्ता कथा, अधिकृष्णम् ।
अप्याः किं, कृष्णस्य समीपात् गतः, उपकृष्णात् गतः । ‡

## ३७५ । चीप्सयोर्वा । (ची-प्सोः ६॥, वा ।१।) ।

उपकृष्णं उपकृष्णेन कार्य्यं । उपकृष्णं उपकृष्णे स्थितः । §

---

* व: अव्ययीभावः—कं कारकं, सामीप्यं, सादृश्यं, साकल्यं निःशेषत्वं, अनुक्रमः, ऋद्धिः समृद्धिः, वीप्सा युगपत् व्याप्तुमिच्छा, पर्य्यन्तः शेषसीमा, योग्यत्वं, पश्चादर्थः, अनतिक्रमः, शब्दप्रादुर्भावः शब्दोत्पत्तिः, अभावः, यौगपद्यम् एककालत्वं – एषु चतुर्द्दशसु अर्थेषु भवति, प्रयोगानुसारादनेकधा च भवतीत्यर्थः । स च अव्ययशब्दानां स्याद्यन्तैः सह नित्यसमासः स्यादिति । पाणिनिः २।१।६ ।

† अकारान्तशब्दस्य अव्ययीभावसमासे कृते, (३१९) क्तेर्लुक् त्ये चेत्यनेन क्तेर्लुकि, पुनर्लिङ्गसंज्ञायाम्, उत्पद्यमानविभक्तीनां स्थाने मः स्यात्, नतु पञ्चम्याः स्थाने इत्यर्थः ।

‡ कृष्णमधिकृत्येति, यद्यपि क इति सामान्येनोक्तं, तथापि द्वितीयासप्तम्योरर्थएव ज्ञेयः । अत्र कृष्णमिति कर्म्मार्थे अधिशब्देन (२६६) व्यं पूर्व्वमिति अधेः पूर्व्वनिपातः, (३१९) कृष्णमिति द्वितीयाया लुकि, अधिकृष्ण इत्यस्य पुनर्लिङ्गसंज्ञायां जातस्य सेः स्थाने अनेन म्, एवं सर्व्वत्र । सप्तम्यर्थे तु स्त्रीष्वधिकृत्य प्रवृत्ता या कथा सा अधिस्त्रि इत्यादि । उपकृष्णादिति अप्याः इत्यस्य उदाहरणेनैव सामीप्योदाहरणं दर्शितं । एवं कुम्भस्य समीपम् उपकुम्भम् इत्यादि, अत्र उपशब्दस्य सामीप्यमर्थः । पाणिनिः २।४।८३ ।

§ अकारान्तादव्ययीभावात् परयोः तृतीया-सप्तम्योः मो वा स्यात् । कृष्णस्य समीपेन

### ३७६ । लुक् परात् । (लुक् ।१।, परात् ५।) ।

अकारान्तादन्यस्मात् वात् परस्याः क्तेर्लुक् स्यात् । *

### ३७७ । सहः सोऽकाले ।

(सहः ६।, सः १।, अकाले ७।) ।

सहस्य सः स्यात्, न तु काले । हरेः सादृश्यं सहरि । काले तु, सहपूर्व्वाह्णं । †

तृणेन सह सकलमत्ति सतृणं । ज्येष्ठमनुक्रम्य अनुज्येष्ठं । मद्राणां समृद्धिः सुमद्रं । विष्णुं विष्णुं प्रति प्रतिविष्णु । अग्नि-ग्रन्थपर्य्यन्तमधीते साग्नि । रूपस्य योग्यं अनुरूपं । शिवस्य पश्चात् अनुशिवं । शक्तिमनतिक्रम्य यथाशक्ति । हरेः शब्दः प्रादुर्भूतः इतिहरि । पापस्याभावः अपापं । चक्रेण युगपद्धेहि सचक्रं । यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः यावच्छ्लोकं । ‡

---

कार्य्यं (शेष इति शेषः) इत्यर्थे उपकृष्णं उपकृष्णेन । सप्तम्यान्तु, कृष्णस्य समीपे स्थितः, साधुरिति शेषः, उपकृष्णं उपकृष्णे इति । एवं उपगङ्गं उपगङ्गेन (३२२,१६७) इत्यादि । पाणिनिः २।४।८४ ।

* अकारान्तादन्यस्मात् इगन्तात् हसन्ताच्च क्तेः सर्व्वासां विभक्तीनामित्यर्थ. नित्यं लुक् स्यात् । पाणिनिः २।४।८२ ।

† अव्ययीभावे पूर्व्ववर्त्तिनः सहशब्दस्य सः स्यात्, न तु कालवाचिशब्दे परे इत्यर्थः । सहरि इत्यत्र सहशब्दस्य सादृश्यं अर्थः, इकारान्तात् क्तेर्लुक् । सहपूर्व्वाह्णमित्यत्र कालवाचि-पूर्व्वाह्णे परे सहस्य न सः, पूर्व्वाह्णस्य सदृशमित्यर्थः । पाणिनिः ६।३।८१ ।

‡ साकल्यादौ क्रमेणोदाहरति—तृणेन सह सकलमत्ति तृणमपि न त्यजतीत्यर्थः सतृणं, अत्र सहशब्दस्य साकल्यम् अर्थः । ज्येष्ठ-मनुक्रम्य ज्येष्ठस्य हीनो भूत्वा गच्छतीत्यर्थः अनुज्येष्ठं, अत्र हीनार्थेन अनुना योगे (२८६) ज्येष्ठमिति द्वितीया, अनु-शब्दस्य अनुक्रमोऽर्थः । मद्राणां मद्रदेशानां समृद्धिः सुमद्रं वर्त्तते इत्यर्थः, एवं सुभिक्षं वर्त्तते, अत्र सुशब्दस्य समृद्धिरर्थः । विष्णुं विष्णुं प्रतीति (२८६) द्वितीया, प्रतिविष्णु इत्यत्र समासेन वीप्साया उक्तत्वात् न द्वित्वं । एवं परिविष्णु अनुविष्णु इत्यादि । साग्नि इत्यत्र पर्य्यन्तार्थेऽव्ययीभावः, सहशब्दस्य सः, अग्निग्रन्थात् परं किमपि नाधीते

## ३७८। शरद्विपाड़यश्चेतोमनोविडुपानद्धिमवद्विद्दिवनडुद्दिक्चतुर्यत्तदोऽः।

(शरद्-विपाश्-अयस्-[? अनस्]-चेतस्-मनस्-विश्-उपानह्-हिमवत्-विद्-दिव्-अनडुह्-दिश्-चतुर्-यद्-तदः ५।, अः १।)।

एभ्यः अः स्यात् वे। उपशरदं। *

## ३७९। जराया जरस् च।

(जरायाः ६।, जरस् ।१।, च ।१।)।

उपजरसं। †

---

इत्यर्थः। योग्यत्वार्थे अनुरूपं ददातीत्यादि। अनुशिवमिति पश्चादर्थे, भक्ताः अनुशिवं तिष्ठन्तीत्यर्थः। एवं अनुरथं पादाताः इत्यादि। यथाशक्ति इति अनतिक्रमार्थे ददातीत्यर्थः। एवं यथाबलं धारयतीत्यादि। अत्रापि अतिशब्दयोगे द्वितीया (२८६)। इतिहरि इत्यत्र इतिशब्दस्य प्रादुर्भावोऽर्थः, हरिरिति शब्दो लोके प्रकाशित इत्यर्थः। अपापमित्यत्र नञर्थोऽभावः, स च संसर्गाभाव एव, न तु भेदः। (३२५) नञः स्थाने अः। एवं निर्मक्षिकमित्यादि। चक्रेण युगपत् धेहि—हे विष्णो चक्रेण सह युगपदेककाले गदां धारय इत्यर्थः, सहस्य सः। अनेकधा इत्यस्य एकमुदाहरणमाह—यावच्छ्लोकं अच्युतप्रणामाः श्लोकानाम् इयत्तया प्रणामानां इयत्ता अवधारिता इत्यर्थः। एवं यावद्-भोजनपात्रं ब्राह्मणान् निमन्त्रयस्व इत्यादि। ये ये तथाभूताः यथातथं, ये ये यथाभूताः यथायथं। तिष्ठन्ति वहन्ति आयान्ति गावो यस्मिन् काले, यथाक्रमं तिष्ठद्गु वहद्गु आयतीगवम्—इत्यादयो ज्ञेयाः (पाणिनिः २।१।१७)।

* शरच्च विपाट् च अयश्च चेतश्च मनश्च विट् च उपानच्च हिमवांश्च विद् च द्यौश्च अनड्वांश्च दिक् च चतुश्च यश्च तश्च तत् तस्मात्। शरदः समीपं उपशरदं, एवं उपविपाशं, उपायस, उपचेतसं, उपमनसं, उपविशं, उपोपानहं, उपहिमवतं, उपविदं, उपदिवं, प्रत्यनडुहं, प्रतिदिशं ('चतुर्दिशमित्यसाधु' इति क्रमदीश्वरः), उपचतुरं, उपयदं, उपतदं इति। पाणिनिः ५।४।१०७। अत्र पाणिनिसूत्रे 'शरत्प्रभृतिभ्यः' इत्युक्तगणे अयस् इति स्थाने अनस् इति पठितम्, हिमवत् सद् दृश् त्यद् कियत् एतानि चातिरिक्तानि दृश्यन्ते। क्रमदीश्वरोऽपि अनस् इत्येव पठति, न त्वयस् इत्यनुसन्धेयम्।

† जरायाः अः स्यात् वे, तस्मिन् जरसादेशश्च। जरायाः समीपम् उपजरसं। पाणिनिः ५।४।१०७। शरत्प्रभृतिगणान्तर्गतं सूत्रमेतत्।

**३८० । सरजसोपशुने ।** (सरजस-उपशुने १।।)

निपात्ये । *

**३८१ । सम्परःप्रत्यनुभ्योऽक्ष्णः ।**

(सम्-परस्-प्रति-अनुभ्यः ५।।।, अक्ष्णः ५।) ।

समक्षं । †

**३८२ । अनः ।** (अनः ५।) ।

अनन्तात् अः स्यात् वे । अध्यात्मं । ‡

**३८३ । क्लीवाद्वा ।** (क्लीवात् ५।, वा ।१।) ।

उपचर्म्मं उपचर्म्म । §

---

* रजसा सह सकलमस्ति सरजसं, निपातनात् अः । शुनः समीपं उपशुनं निपातनात् श्वन्शब्दस्य वस्य उ, अप्रत्ययश्च । "सरजसं पद्ममित्यसाधु" इति क्रमदीश्वरः, सरजः पद्ममित्येव साधु । अतएव "सरजसतामवनेरपां निपातः" इति किराते चिन्त्यम् । पाणिनिः ५।४।७७ ।

† सम् च परश्च प्रतिश्च अनुश्च तेभ्यः । एभ्यः परात् अक्ष्णः अः स्यात् वे । अक्ष्णोः समीपं समक्षं, अक्ष्णोः परः परोक्षं, परशब्दात् निपातनात् अस्-कृते परस् इत्यव्ययं । "प्रतिपरसमनुभ्योऽक्ष्णः" इति सूत्रे अक्ष्णः परमिति विग्रहे निपातनात् परस्य ओकारादेशः इति भट्टोजिदीक्षितः । क्रमदीश्वरस्तु "परेः परस् च" इति सूत्रं विन्यस्य परिशब्दात् परसादेशं वदति । अक्ष्णोरभिमुखं प्रत्यक्षं अन्वक्षञ्च । एषु अक्षिशब्दात् अप्रत्यये (२५८) इकारलोपः । प्रत्यक्षः परोक्षः इति तु इन्द्रियवाचिना अकारान्तेन अक्षशब्देन, अक्षाणां प्रति प्रत्यक्षः, अक्षाणां परः परोक्षः इति षष्ठीसमासे (३६६) व्यं पूर्व्वमिति पूर्व्वनिपातः । अथवा अर्शआदित्वादच् इति भट्टोजिदीक्षितः । पाणिनिः ५।४।१०७ । शरत्प्रभृतिगणान्तर्गतं सूत्रमेतत् ।

‡ पृथक् योगात् समादेर्नानुवृत्तिः । आत्मानमधिकृत्य अध्यात्मं (३३७,२५८) । एवम् अधिराजम् अधिपूषमित्यादि । 'अनव्ययीभावे तु परमात्मा' इति क्रमदीश्वरः । पाणिनिः ५।४।१०८ ।

§ क्लीवलिङ्गादनन्तात् अः स्याद्वा अव्ययीभावे । चर्म्मणः समीपं उपचर्म्मं उपचर्म्म । एवम् अहरहः प्रति प्रत्यहं प्रत्यहः इत्यादि । पाणिनिः ५।४।१०९ ।

## ३८४। झप्नदीपौर्णमास्याग्रहायणीगिरेर्व्वा।

(झप्—गिरेः ५।, वा ।१।)।

उपसमिधं उपसमित्, उपनदं उपनदि। *

इति वः।

---

षट् समासाः।

## ३८५। पथ्यप्पुरः से। (पथिन्-अप्-पुरः ५।, से ७।)।

एभ्यः अः स्यात् से सति। सखिपथौ,रम्यपथो देशः, महापथः, दक्षिणापथः, चतुष्पथं, उपपथं, विमलापं सरः, विष्णुपुरं। †

## ३८६। द्व्यन्तर्गेर्य्योऽपोऽनात्।

(द्वि-अन्तर्-गेः ५।, ई ।१।, अः १।, अपः ६।, अनात् ५।)।

एभ्योऽनवर्णान्तेभ्योऽपोऽकार ईः स्यात्।

---

* झप् प्रत्याहारस्तदन्तात्, नदी-पौर्णमासी-आग्रहायणी-गिरिभ्यश्च अः स्यात् वे वा। अत्र वा-ग्रहणं परत्र निवृत्त्यर्थम्। समिधः समीपं उपसमिधं उपसमित, एवं उपतड़ितं उपतड़ित्। नद्याः समीप उपनदं उपनदि। एवं उपपौर्णमास उपपौर्णमासि। उपाग्रहायणं उपाग्रहायणि। उपगिरं उपगिरि। अप्रत्ययाभावपक्षे दीर्घान्तानां क्लीबे स्वः (१६७)। पाणिनिः ५।४।११०—११२।

† पन्थाश्च आपश्च पूश्च तत् तस्मात्। से इति सर्व्वसमासप्राप्त्यर्थं। षट् सूदाहरति— सखा च पन्थाश्च तौ (चः)। रम्यः पन्थाः यत्र सः (हः)। महांश्चासौ पन्थाश्चेति (यः)। दक्षिणस्यां दिशि दक्षिणे देशे वा पन्थाः (षः), दक्षिणा इति तु (५२०) सप्तम्याः स्थाने आ, तद्धितादेशत्वात् (३१६) न आकारलोपः। एवं उत्तरापथः। चतुर्णां पथां समाहारः (गः)। पथः समीपे (वः)। एषु पथिन्शब्दस्य अप्रत्यये (३३७) न-लोपे, (२५८) इकार-लोपः। विमला आपो यस्मिन् तत्। विष्णोः पूः विष्णुपुरमिति अभिधानात् क्लीवत्वं। यद्यपि अदन्तपुरशब्दोऽप्यस्ति तथापि पुरशब्देनानिष्टवारणार्थमिदं। पाणिनिः ५।४।७४। 'पथः संख्याव्ययादेः" इति वार्त्तिकञ्च।

द्वीपं अन्तरीपं समीपं। अनात् किं, प्रापं। *

## ३८७। समापानूपौ। (समाप-अनूपौ १॥)।

निपात्यौ। समापो देवयजनं, अनूपो देशः। †

## ३८८। सम् तुम् मनः-कामे ऽवश्यम् ल्ये ऽन्त्यलोपं सम्-मांसौ तु हित-तते पाक-पचने वा।

(सम् ।१।, तुम् ।१।, मनः-कामे ७।, अवश्यम् ।१।, ल्ये ७।, अन्त्यलोपं २।, सम्-मांसौ १॥, तु ।१।, हित तते ७।, पाक-पचने ७।, वा ।१।)।

सम् तुम् च मनः-कामयोः, अवश्यम् ल्ये, अन्त्यलोपं याति; सम् हित-ततयोः, मांसः पाक-पचनयोर्वा।

समनाः सकामः, रन्तुमनाः रन्तुकामः, अवश्यसेव्यः, सहितः संहितः, सततः सन्ततः, मांस्पाकः मांसपाकः, मांस्पचनं मांसपचनं। ‡

---

* द्वौ च अन्तश्च गश्च तत् तस्मात्। न अः अनस्तस्मात्। द्विशब्दात् अन्तर्शब्दात् अवर्णान्तभिन्न-गेश्च अपशब्दस्य अकार ईः स्यात् इत्यर्थः। द्वयोर्दिशोरापो यत्र तत् ("द्विर्गता आपोऽस्मिन्निति द्वीपः" इति क्रमदीश्वरः; द्वीपमिति भट्टोजिदीक्षितः), अन्तर्गता आपो यत्र, सम्यक् आपो यत्र इति वाक्यानि। एवं अतीपं प्रतीपं इत्यादि। प्रगता आपो यत्र तत् प्रापं। पाणिनिः ६।३।९७। "ईत्वमनवर्णादिति वक्तव्यम्" इति वार्त्तिकञ्च।

† समीचीनाः (समा इति भट्टोजिदीक्षितः) आपो यत्र स समापः देवयजनं (यज्ञः)। ("समापं नाम देवयजनम्" इति तु क्रमदीश्वरः।) अनुगता आपो यत्र सः अनूपः देशः। एतयोरेवार्थयोर्निपातनं, अन्यत्र समीपं अन्वीपमिति। पाणिनिः ६।३।९८। "समाप ईत्वप्रतिषेधः" इति वार्त्तिकञ्च।

‡ सम् तुम् इति पदभेदः मनः-कामाभ्यां यथासङ्ख्यनिरासार्थः। मनश्च कामश्च तस्मिन्। सम् च मांसश्च तौ, हितश्च ततश्च तस्मिन्, पाकश्च पचनश्च तस्मिन्। सम् मनः-कामयोः, तुम् मनः-कामयोः, अवश्यम् ल्ये अन्त्यलोपं याति से सति। सम्

## ३८९ । धुरोऽनक्षस्य: ।

(धुर: ५।, अनक्षस्य ६।, अ: १।) ।

राजधुरा । अक्षस्य तु अक्षधू: । *

## ३९० । ऋच: । (ऋच: ५।) ।

ऋच: पर: अ: स्यात् से । अर्द्धर्च । †

## ३९१ । नञ्बह्वोर्माणवक-चरणे ।

(नञ्-बह्वो: ५।, माणवक-चरणे ७।) ।

अनृचो माणवक:, बह्वृच: चरण: । अन्यत्र अनृक् साम, बह्वृक् सूक्तं । ‡

---

हित-ततयो: मांस: पाक-पचनयो: अन्त्यलोपं याति वा से सतीत्यर्थ: । सम्यक् मनो यस्य, सम्यक् कामो यस्य, इति वाक्यं । तुम् इति (११६४) चतुम् । रन्तु मनो यस्य, रन्तुं कामो यस्य । ल्यस्तव्यादि: (९८९) । अवश्यं सेव्य: अवश्यसेव्य:, एवं अवश्यकरणीय इत्यादि । सम्यक् हितं यस्य, सम्यक् ततं यस्य । मांसस्य पाक:, मांसस्य पचनं । सर्व्वत्र अन्त्यलोप: । असमासे तु नान्त्यलोप: । अवश्यम्—गि-प्रादुरादिव्यवधानेऽपि, यथा—अवश्यप्रवाच्य:, अवश्याङ्गीकरणीय इत्यादि । "समो हिततततयोर्वा लोप: ।" "संतुमुनो: कामे लोपो वक्तव्य: ।" "मनसि च वक्तव्यम् ।" "अवश्यम: कृत्ये लोपो वक्तव्य: ।" एतानि वार्त्तिकानि । काशिकावृत्तिश्च यथा—"लुम्पेदवश्यम: कृत्ये तुम् काममनसोरपि, समो वा हिततततयोर्मांसस्य पचि युड्घञो: ॥"

* धूर्भार: । धुर: अ: स्यात् समासे, न तु अक्षसम्बन्धिन्या: । अक्षो रथचक्रं । राज्ञो धू: राजधुरा, एवं महाधुरा इत्यादि स्त्रीत्वादाप् (२५०) । अक्षस्य धू: अक्षधूरित्यत्र न अप्रत्यय: । पाणिनि: ५।४।७४ ।

† अर्द्धञ्च तत् ऋक् चेति, ऋचोऽर्द्धमिति वा अर्द्धर्चं, (अर्द्धर्चौ वा पाणिनि: २।४।३१) ; एवं सप्त ऋचो यस्मिन् स सप्तर्चो मन्त्र: । पाणिनि: ५।४।७४ ।

‡ नञ् च बहुश्च तत् तस्मात्, पुंस्त्वं सौत्रात् । माणवकश्च चरणश्च तस्मिन् । नञ्-बहुभ्यां परस्या: ऋच: अ: स्यात् क्रमात् माणवक-चरणयोर्वाच्ययो: । नास्ति ऋक् यस्य सोऽनृचो माणवक: शिशु: । बह्व्य: ऋचो यत्र स बह्वृच: चरण: वेदैकदेश: । न ऋक् अनृक् । साम, बह्वृक् इति पूर्व्ववत्, सूक्तं, साम सूक्तञ्च वेदांशविशेषौ । पाणिनि: ५।४।७४—काशिका "अनृचो माणवके ज्ञेयो बह्वृचश्चरणाख्यायाम् ।"

## ३९२। प्रत्यन्ववात् सामलोम्नः।

(प्रति-अनु-अवात् ५।, साम-लोम्नः ५।)।

प्रतिसामं प्रतिलोमं। *

## ३९३। अक्ष्णोऽचक्षुषि। (अक्ष्णः ५।, अचक्षुषि ७।)।

गवामक्षीव गवाक्षः। चक्षुषि तु, विप्राक्षि। †

## ३९४। ब्रह्महस्तिराजपल्यात् वर्च्चसः।

(ब्रह्म—पल्यात् [? पल्यात्] ५।, वर्च्चसः ५।)।

ब्रह्मवर्च्चसं हस्तिवर्च्चसं राजवर्च्चसं पल्यवर्च्चसं। ‡

## ३९५। समवान्धात् तमसः।

(सम्-अव-अन्धात् ५।, तमसः ५।)।

सन्तमसं। §

---

* प्रतिश्च अनुश्च अवश्च तस्मात्। एभ्यः पराभ्यां सामन् लोमन् इत्येताभ्यां अः स्यात् से सति। साम साम प्रति, लोम लोम प्रति, वीप्सायां वः। एवं अनुलोमं अनुसामं। पाणिनिः ५।४।७५।

† न चक्षुः अचक्षुस्तस्मिन्। अक्षिशब्दात् अः स्यात् समासे, अचक्षुषि वाच्ये। गवाक्षो वातायनं। विप्रस्य अक्षि। विशालाक्षः पद्माक्षः इति बहुव्रीहौ चक्षुर्भिन्ने वाच्ये अः। लवणाक्षं पुष्कराक्षं गवाक्ष इति क्रमदीश्वरः उदाहरति। पाणिनिः ५।४।७६। अत्र "अप्राण्यङ्गादिति वक्तव्यम्" इति वार्त्तिकम् भट्टोजिदीक्षितेन न गृहीतम्।

‡ ब्रह्मा च हस्ती च राजा च पल्यश्च तस्मात्। एभ्यः परात् वर्च्चसः अः स्यात से। तेजःपुरीषयोर्वर्च्च इत्यमरः। ब्रह्मणो वर्च्चः, हस्तिनो वर्च्चः, राज्ञो वर्च्चः, पल्यस्य तत् वर्च्चश्चेति वाक्यानि। अत्र, वार्त्तिके संक्षिप्तसारे च पल्यस्थाने पल्य इति पाठो दृश्यते। गोयीचन्द्रश्च "यत्र पलालरज्ज्वा व्रीहिं वेष्टयित्वा स्थापयन्ति तत् किल पल्यमुच्यते इति धातुपारायणम्" इति वदति। पाणिनि. ५।४।७८। "पल्यराजभ्याञ्चेति वक्तव्यम्" इति वार्त्तिकञ्च।

§ एभ्यः परात् तमसः अः स्यात् से। सन्ततं विस्तीर्णं तमः सन्तमस। अवहीनं तमः अवतमसं, अन्धयतीति पचादित्वात् अन्, अन्धं तमः अन्धतमसं। पाणिनिः ५।४।७९।

३९६। श्वोवसीयस-श्वःश्रेयस-निःश्रेयसं ।

(श्वोवसीयस—निःश्रेयसं १।)।

एते निपात्याः । *

३९७। तप्तान्ववाद्रहसः ।

(तप्त-अनु-अवात् ५।, रहसः ५।)।

तप्तरहसं । †

३९८। प्रत्युरसानुगवे । (प्रत्युरस अनुगवे १॥)।

एते निपात्ये । ‡

३९९। गेरध्वनः । (गेः ५।, अध्वनः ५।)।

प्राध्वो रथः । §

---

* अव्ययानामनेकार्थत्वात् (श्वःशब्दः आशीर्द्योतक.) श्वः शोभनं वसीयः शुभं (वसुमत्-ईयस) (वसुशब्द प्रशंसावाची) श्वोवसीयसं कल्याणं, श्वः शोभनं श्रेयः श्वःश्रेयसं कल्याणं, निर्निश्चितं श्रेयो निःश्रेयसं निर्व्वाणं। अत्र वसीय इत्यत्र अवसीय इति केषाञ्चितम्। पाणिनिः ५।४।७७,८०।

† एभ्यः परात् रहसः अः स्यात् से। तप-धातोः कर्त्तरि क्तः तप्तं, तप्तञ्च तत् रहश्चेति, अकथ्यं यत् भवेत् वाक्यं तत् तप्तरहसं विदुः ; अथवा "परेणानधिगम्यं हि यद्रहो वञ्चितप्तवत्। तप्तञ्च तद्रहश्चेति तत्तप्तरहसं विदुः॥" इति। रहोरहः अनुरहसं, अवगतं रहः अवरहसं। पाणिनिः ५।४।८१।

‡ उरसि प्रतिवर्त्तते प्रत्युरसं, अधिकरणार्थे अव्ययीभावः। गवां अनु आगतं अनुगवं शकटं। अन्यत्र प्रतिगतमुरः प्रत्युरः, गवां पश्चात् अनुगु इति। पाणिनिः ५।४।८२,८३।

§ गेः परात् अध्वनः अः स्यात् से। प्रगतः अध्वानं, प्रगतोऽध्वा येन इति वा, प्राध्वः रथः। एवं प्रत्यध्वं शकटं। गेः किं, उत्तमाध्वा। पाणिनिः ५।४।८५।

**४००। पाण्डूदक्कृष्टात् भूमः।**

(पाण्डु उदक्-कृष्टात् ५।, भूमेः ५।)।

पाण्डुभूमो देशः। *

**४०१। सङ्ख्याया नदीगोदावरीभ्याञ्च।**

(सङ्ख्यायाः ५।, नदी-गोदावरीभ्यां ५॥, च।१।)।

पञ्चनदं, सप्तगोदावरं, द्विभूमः प्रासादः। †

**४०२। निसः शतो डः।** (निसः ५।, शतः ५।, डः १।)।

निस्त्रिंशः, निश्चत्वारिंशः। ‡

**४०३। सूत्सुरभिपूतेर्गन्धादिर्वोतूपमानात्।**

(सु-उत् सुरभि-पूतेः ५।, गन्धात् ५।, इः १।, वा।१।, तु।१।, उपमानात् ५।)।

सुगन्धिः, पद्मगन्धिः पद्मगन्धः। §

---

* उदक् इति उत्पूर्व्वात् अञ्चधातोः कर्त्तरि क्विप्, कृष्ट इति कृषधातोः क्तः। एभ्यः परात् भूमेः अः स्यात् से। पाण्डुर्भूमिर्यस्मिन् स पाण्डुभूमो देशः। उदीची उद्गता भूमिर्यस्मिन् स उदग्भूमो देशः, पुंवद्भावादुदक्स्थितिः। अत्र उदक्स्थाने उदकमिति भाष्यकारः। कृष्टा भूमिर्यस्मिन् स कृष्टभूमो देशः। कृष्टस्थाने कृष्ण इति केचित्। पाणिनीये ५।४।७५ सूत्रे "कृष्णोदकपाण्डुसंख्यापूर्व्वाया भूमेरजिष्यते" इति इष्टिः।

† सङ्ख्यायाः पराभ्यां नदी-गोदावरीभ्यां भूमेश्च अः स्यात् से। पञ्चानां नदीनां समाहारः, सप्तानां गोदावरीणां समाहारः, द्वे भूमी यत्र सः इति वाक्यानि। अत्र नदीशब्देन (८६) सूत्रोक्तपारिभाषिकनदीसंज्ञको न बोध्यते, नापि च स्वरूपग्रहणं किन्तु नदीपर्य्यायवचनम्; अतः सप्तगङ्गं द्वियमुनमित्यादि। पञ्चनदमित्यादौ संज्ञायाम् अव्ययीभावसमासः इति पाणिनिः। पाणिनिः २।१।२०।

‡ निसः परात् शत् इत्यन्तात् डः स्यात् से। निर्गता त्रिंशत् यस्य स निस्त्रिंशः, एवं निश्चत्वारिंशः निष्पञ्चाशः। "निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः।" इति भट्टोजिदीक्षितः। निसः किं, दुस्त्रिंशत् इत्यादि। "डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम्" इति वार्त्तिकम्।

§ सुश्च उच्च सुरभिश्च पूतिश्च तस्मात्। एभ्यः परात् गन्धात् इः स्यात् से, उपमान

## ४०४ । नार्च्चायां स्वतेः सख्यादेरः ।

(न ।१।, अर्च्चायां ७।, सु-अतेः ५।, सख्यादेः ५।, अः १।) ।

स्वतिभ्यां परात् सख्यादेरो न स्यात् पूजायां ।
शोभनो राजा सुराजा, अतिशयेन राजा अतिराजा ।
अर्च्चायां किं, गामतिक्रान्तः अतिगवः । *

## ४०५ । किमः चेपे । (किमः ५।, चेपे ७।)।

किंराजा । †

## ४०६ । नञोऽह्वे । (नञः ५।, अ-ह्व-वे ७।) ।

नञः परात् सख्यादेरो न स्यात्, न तु ह्व-वयोः ।

---

वाचकात् परात्तु वा इत्यर्थः । शोभनो गन्धो यस्य स सुगन्धिः, एवं उद्गन्धिः सुरभिगन्धिः पूतिगन्धिः । पद्मस्येव गन्धो यस्य सः पद्मगन्धिः पद्मगन्धः । अत्र समवायसम्बन्धेन वर्त्तमानात् गन्धात् इः स्यादिति सम्प्रदायः, तेन सुगन्धो वायुरिति, वस्तुतः शिष्टप्रयोगानुसारेणैव । किञ्च गुणवाचिनो गन्धादेव इः, तेन शोभनानि गन्धद्रव्याणि यस्यां सा सुगन्धा विपणिरिति । पाणिनिः ५।४।१३५,१३७ । "गन्धस्येत्त्वे तदेकान्तग्रहणम्" इति वार्त्तिकम् । तदर्थश्च "तदवयव इवाविभागेन लक्ष्यमाणो यो गुणस्तद्वाची गन्धशब्दो गृह्यते, न तु द्रव्यवाची ।"

* सुश्च अतिश्च तस्मात् स्वतेः । प्रशंसार्थे वर्त्तमानाभ्यां सु-अतिभ्यां परात्, (३५३) सख्यहोराज इत्यारभ्य (३९९) गेरध्वन इत्यन्तेषु येभ्योऽप्रत्ययो विहितः स न स्यादित्यर्थः । सुराजा अतिराजा उभयत्र प्रशंसार्थौ स्वती । अतएव "सुराज्ञि देशे राजन्वान्" इत्यमरलिखनम् । एवम् अतिशयेन श्वा अतिश्वा, सुगौः सुराजिः सुपन्थाः इत्यादि । अतिगव इत्यत्र न प्रशंसार्थोऽतिः, एवं अतिसखः इत्यादि । परमराजः उत्तमराजः इत्यादौ अर्च्चार्थेऽपि स्वत्यभावात् भवत्येव । पाणिनिः ५।४।६९ ।

† निन्दायां वर्त्तमानात् किमः परात् सख्यादेरो न स्यात् । कुत्सितो राजा किंराजा, यो न रक्षति प्रजाः । एवं किंगौः, यो न वहति भारम् । निन्दायां किं, केषां राजा किंराजः, केषां गौः किंगवः इत्यादि । "स किंसखा साधु न शास्ति योऽधिपम्" इति किराते । पाणिनिः ५।४।७०, २।१।६४ ।

असखा। ह्वे तु—अनपं सरः, अधुरं। *

## ४०७। पथो वा। (पथः ५।, अः।१।)।

अपथं अपन्थाः। ह्वे तु—अपथो देशः, अपथं। †

## ४०८। कत् क्वच्‌त्रिरथवदे।

(कत् ।१।, कु ।१।, अच्-त्रि-रथ-वदे ७।)

कोः स्थाने कत् स्यात् से अजादौ परे। कदन्नं कत्त्रयः। ‡

## ४०९। काक्षे। (का ।१।, अक्षे ७।)।

काक्षं। §

---

* ह्रस्य वस्य ह्वं, न ह्वं अह्वं तस्मिन्। ह-व-भिन्न-समासे नञः परात् सख्यादेरो न स्यात्। असखा इति नञ् तत्पुरुषः। न सन्ति आपो यत्र तत् अनपं सरः, अत्र (३८५) अ-प्रत्ययः। धुरोऽभावः अधुरं, अत्रापि (३८९) अ-प्रत्ययः। पाणिनिः ५।४।७१।

† ह-व-भिन्न-समासे नञः परात् पथः अः स्याद्वा। न पन्थाः इति तत्पुरुषे अपथं अपन्थाः। नास्ति पन्था यस्मिन्निति अपथो देशः, पथोऽभावः इति अपथं, उभयत्र (३८५) नित्यम् अ-प्रत्ययः। पाणिनिः ५।४।७२।

‡ अच्च त्रिश्च रथश्च वदश्च तस्मिन्। अत्र कु इति शब्दः कुत्सितवाची, तेन कोः (पृथिव्याः) उत्थितः कूत्थितः इत्यादौ न स्यात्। कुत्सितमन्नं कदन्नं, एवं कदाकारः कदौषधम्। कुत्सितास्त्रयः कत्त्रयः, एवं कद्रथः कद्वदः। अस्य सूत्रस्य कर्म्मधारय एवाभिधानात् कुत्सितो रथो यस्येत्यादौ न स्यात्, यतः पाणिनिसूत्रे "तत्पुरुषे" इत्युक्तम्। अत्र वक्तव्यम् "तृणे च जातौ" इति (पाणिनिः ६।३।१०३) सूत्रेण कत्तृण-मिति। पाणिनिः ६।३।१०१,१०२। "कद्भावे चाप्युपसंख्यानम्" इति वार्त्तिकञ्च।

§ अक्षशब्दे परे कोः का स्यात् से। कुत्सितमक्षं (इन्द्रियं) काक्षं। अक्ष इति सामान्यतो ग्रहणात् कुत्सिते अक्षिणी यस्य स काक्षो विप्रः इत्यत्र अक्षिशब्दात् (३३४) षे कृतेऽपि स्यात्। "अक्षशब्देन तत्पुरुषः, अक्षिशब्देन बहुव्रीहिर्वा" इति भट्टोजि-दीक्षितः। पाणिनिः ६।३।१०४।

## ४१० । पथिपुरुषे वा । (पथि पुरुषे ७।, वा ।१।) ।

कापथः कुपथः, कापुरुषः कुपुरुषः । *

## ४११ । कोरीषदर्थे । (कोः ६।, ईषदर्थ ७।) ।

ईषज्जलं काजलं । †

## ४१२ । कत्कवौ चाग्न्युष्णे ।

(कत्-कवौ १॥, च ।१।, अग्नि-उष्णे ७।) ।

कदग्निः कवाग्निः काग्निः, कदुष्णं कवोष्णं कोष्णं । ‡

---

* कोः का स्यात् वा पथि-पुरुषयोः परयोः। कुत्सितः पन्थाः, कुत्सितः पुरुषः, इति वाक्यद्वयं। अत्र द्रष्टव्यम्—"का पथ्यक्षयोः" इति पाणिनिसूत्रे (६।३।१०४) पथिन्-शब्दात् नित्यं कापथः इति पदम्; पश्चात् "पथि च च्छन्दसि" इति सूत्रे (६।३।१०८) वेदे कवपथः कापथः कुपथः इति पदत्रयं दर्शितम्। वोपदेवेन तु लौकिकालौकिकमतं लौकिकत्वेन प्रयुक्तम्। विचार्य्यञ्चान्यत्—कापथः इत्यत्र पुंस्त्वं वार्त्तिकमतेनासङ्गतं, "पथः संख्याव्ययादेः" इत्यत्र क्लीवत्वमुक्तम् (३८५ सूत्रं द्रष्टव्यम्)। अतएव क्रमदीश्वरः—"कुत्सितः पन्थाः कापथम्। कुपथमित्यसाधु।" इति। "पथिशब्देन समासे नित्यं कादेशः। पथिशब्दसमानार्थेन पथशब्देनापि क्लीवत्वाभावः" इति गोयीचन्द्रः। एतच्च द्रष्टव्यं—तर्कवाचस्पतिप्रकाशितायां सिद्धान्तकौमुद्यां कापथः इति पाठो दृश्यते; शिवरामशर्म्मणा शोधितायान्तु तस्यां कापथम् इति पाठः। बोधलिङ्गप्रकटीकृते अष्टके पाणिनीये च कापथः इति पुंलिङ्गमेवास्ति। सुपद्मे तु समासप्रकरणस्य "पथः संख्याव्ययात् क्लीवे" इति ६८ सूत्रे कापथमित्युक्तं, अलुक्प्रकरणे तु ६८ सूत्रे कापथः इत्युक्तम् इति स्वोक्तविरोधः। शेषोक्तसूत्रटीकायान्तु "वार्त्तिकभाष्ययोर्न मतमेतत्, अदन्तपक्षे तु कुपथ." इति लिखितम्। पाणिनिः ६।३।१०६।

† ईषदर्थे वर्त्तमानस्य कोः का स्यात् से। कोर्ग्रहणं पथिपुरुषयोरननुवर्त्तनार्थम्। प्रयोगानुसारेण यस्मिन् कस्मिन्नपि परे इत्यर्थः। एवं ईषदन्नं कान्नमित्यादि। भारवौ च "देवाकानिनि कावादे—काकारे भभरे" इत्यादि। पाणिनिः ६।३।१०५।

‡ ईषदर्थे कोः स्थाने कत्-कवौ, चकारात् का च स्यात् अग्नि-उष्णयोः परयोः। ईषदग्निः, ईषदुष्णमिति वाक्यद्वयं। पाणिनिः ६।३।१०७।

**४१३ । ज्योति र्जनपद रात्रि नाभि बन्धु गन्ध पिण्ड लोहित कुक्षि वेणी ब्रह्मचारि तीर्थ्य पत्नी पक्षे समानः सः ।**

(ज्योतिः—पक्षे ७।, समानः १।, सः १।) ।

**समानं ज्योतिर्यस्यासौ—सज्योतिः ।** *

**४१४ । रूप नाम गोत्र स्थान वर्ण वयो वचन धर्म्म जातीयोदर्य्ये वा ।**

(रूप—उदर्य्ये ७।, वा ।१।) ।

**सरूपः समानरूपः ।** †

**इति स-पादः ।**

---

* एषु चतुर्द्दशसु परेषु समानः सः स्यात् से सति । एवं सजनपदः, जनपदपर्य्याय-ग्रहणात् समानो देशः सदेशः । सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुक्षिः सवेणीकः । ब्रह्मचार्य्यादिसम्बन्धेन समानशब्दः एकार्थ एव न तु तुल्यार्थः, समानं एकं ब्रह्म वेदं चरतीति वाक्ये (६६३) ग्रहादित्वात् णिनि, ब्रह्मचारिन् शब्दे परे समानः सः, एकब्रह्मव्रताचारा मिथः सब्रह्मचारिण इत्यमरः । समाने एकस्मिन् तीर्थे गुरौ वसतीति (४२६) ण्यप्रत्यये तीर्थ्यशब्दे परे समानः सः ; नियंकारपक्षे (ण्यप्रत्यये) समानं तीर्थं यस्य इति बहुव्रीहिः । तीर्थ-ऋषिजुष्टजले गुरौ इति, सतीर्थ्यास्त्वेक-गुरव इति चामरः । पाणिनौ संक्षिप्तसारे च सयकार-तीर्थ्यशब्द एव दृश्यते । समान-एकः पतिरस्या इति वाक्ये निपातनात् पत्युः पत्नादेशे ईपि समानस्य सः सपत्नी (पाणिनिः ४।१।३५) । एवं समानः पक्षः (सहाय) सपक्षः । पाणिनिः ६।३।८५,८६,८७ । एषु सूत्रेषु परसूत्रे च गन्ध पिण्ड लोहित कुक्षि वेणी पत्नी पक्ष शब्दा न दृश्यन्ते "वामनस्तु पुनः पक्षधर्म्मजातीयान्यपि पठति" इति क्रमदीश्वरः । सेतुशब्दोऽपि संक्षिप्तसारे दृश्यते ।

† एषु दशसु परेषु समानः सः स्यात् वा । समानं रूपं यस्यासौ सरूपः । समानमेकं नाम यस्य स सनामा । एवं सगोत्रः सस्थानः सवर्णः सवयाः सवचनः सधर्म्मा (३४४) । समानस्य प्रकारः इति (४८७) सजातीयः । समाने एकस्मिन् उदरे भवतीति (४२६) उदरशब्दात् ण्यप्रत्यये सोदर्य्यः । सोदर-सहोदरशब्दौ तु उदरेण सह वर्त्तते योऽसौ इति (३३३) सूत्रेण सिद्धौ । एषु विकल्पपक्षे समानस्थितिः । पाणिनिः ६।३।८५,८८ । उदर्य्यं वर्जयित्वा सर्व्वं पाणिनिमते नित्यम्, चान्द्रमते तु विकल्पः ।

**४१५ । बाह्वाद्यतोऽत्र्याबादेर्गर्गादेर्नडादेः पितृष्वस्रादे रेवत्यादेः शेषशिवादेः ष्णि-ष्णेय-ष्ण्य-ष्णायन-णीय-ष्णिक-ष्णा अपत्ये ।**

(बाह्वाद्यतः ५।, अत्र्याबादेः ५।, गर्गादेः ५।, नडादेः ५।, पितृष्वस्रादेः ५।, रेवत्यादेः ५।, शेषशिवादेः ५।, ष्णि—ष्णाः १।।।, अपत्ये ७।) ।

एभ्यः परा एते क्रमात् स्युरपत्यार्थे ।*

---

* बाहुरादिर्यस्य सः, बाह्वादिश्च अच्च स तस्मात् । अत्रिश्च आप् च तौ आदी यस्य सः अत्र्याबादिस्तस्मात्, अत्र्यादेः आबादेश्चेत्यर्थः । गर्ग आदिर्यस्य तस्मात् । नड आदिर्यस्य तस्मात् । पितृष्वसा आदिर्यस्य तस्मात् । रेवती आदिर्यस्य तस्मात् । उक्तादन्यः शेषः, शिव आदिर्यस्य सः शिवादिः, शेषश्च शिवादिश्च तत् तस्मात् । सूत्रत्वात् शेषशिवादिवर्जं सर्वत्र पुंस्त्वम् । ष्णिश्च ष्णेयश्च ष्ण्यश्च ष्णायनश्च णीयश्च ष्णिकश्च ष्णश्च ते । एतेभ्यः सप्तगणेभ्यः एते सप्त प्रत्ययाः क्रमात् स्युः अपत्यार्थे । न पतति वंशो येन तदपत्यं, पुत्र-पौत्र-प्रपौत्रादिः (कन्या च) उच्यते (पाणिनिः ४।१।१६२) । क्रमश्च—बाह्वादेः अकारान्ताच्च ष्णिः, अत्र्यादेः आबादेश्च ष्णेयः, गर्गादेः ष्ण्यः, नडादेः ष्णायनः, पितृष्वस्रादेः णीयः, रेवत्यादेः ष्णिकः, शेषात् शिवादेश्च ष्णः इति । एतेषां ष इत् ईबर्थः, ण इत् वृद्ध्यर्थः । पाणिनिः ४।१।९५,९६,९८,१०५,११०,११२,१२०,१२१,१२२,१२३,१३२, १३४,१४६ ; ४।२।९२ । ष्णि = इञ् इति पाणिनिः, इण् इति क्रमदीश्वरः । ष्णेय = ढक्, ढञ् इति पाणिनिः, एयण् इति क्रमदीश्वरः । ष्ण्य = यञ् इति पाणिनिः, ण्य इति क्रमदीश्वरः । ष्णायन = फक्, फञ् इति पाणिनिः, णायन इति क्रमदीश्वरः । णीय = छण् इति पाणिनिः, ईय इति क्रमदीश्वरः । ष्णिक = ठक् इति पाणिनिः, णिक इति क्रमदीश्वरः । ष्ण = अण् इति पाणिनिः, णट् इति क्रमदीश्वरः ।

## ४१६। णित्ते ञिराद्यचः सुभग-सुपञ्चाला-द्योस्तु द्व्यन्त्यदानां।

(णित्ते ७।, ञिः १।, आद्यच. ६।, सुभग-सुपञ्चालाद्योः ६॥, तु ।१।, द्व्यन्त्यदानां६॥) ।

अचां मध्ये आद्यचो ञिः स्यात्, णिति ते परे, सुभगादेस्तु द्वयोर्द्दयोः, सुपञ्चालादेस्तु अन्त्यस्य दस्य। *

(३३७) ञ्वोर्लोपौती तेऽच्चि। बाह्वोरपत्यं बाहविः, उप-विन्दोरपत्यं औपविन्दविः, उडुलोम्नोऽपत्यं औडुलोमिः, अग्नि-शर्म्मणोऽपत्यं आग्निशर्म्मिः। कृष्णस्यापत्यं कार्ष्णिः। †

## ४१७। य्वोर्युम् दान्तेऽस्वङ्ग व्यङ्ग व्यड़ व्यव-हार व्यायाम स्वागत स्वध्वर णनः।

(य्वोः ६॥, युम् ।१॥, दान्ते ७।, अस्वङ्ग—णनः ६।)।

---

* मूर्द्धन्य ण इत् यस्य स णित्, णिश्चासौ तश्चेति णित्तः तस्मिन्। आदिश्चासौ अच् चेति आद्यच् तस्य। सुभगश्च सुपञ्चालश्च सुभगसुपञ्चालौ, तौ आदी ययोस्तौ सुभगसुपञ्चालादी तयोः। द्वे च अन्त्यश्च द्व्यन्त्यानि, द्व्यन्त्यानि च तानि दानि चेति द्व्यन्त्य-दानि तेषां। पूर्व्वं (९) अच एव वृद्धिस्थानित्वेन निर्द्दिष्टेऽपि अत्र अचो ग्रहणं परसूत्रे आद्यचोऽनुवृत्त्यर्थं। सामान्यतः सर्व्वेषां शब्दानां अचां मध्ये आद्यचो वृद्धिः, सुभगादे-र्द्वयोः पदयोराद्यचो वृद्धिः, सुपञ्चालादेस्तु केवलम् अन्त्यपदस्याद्यचो वृद्धिः स्यात्, णिति तद्धिते परे इत्यर्थः। पाणिनिः ७।३।११७, ४।१।१२६।

† बाह्वादीनाह—बाहुनामकस्य कस्यचिदपत्यं इत्यर्थे, बाह्वोरिति पदात् णिः, ण इत्, इकारस्थितिः, (३१६,३३७, २५)बाहवि इति भागस्य पुर्नालिङ्गसंज्ञायां स्याद्युत्-पत्तिः, एवं सर्व्वत्र। यया विभक्त्या वाक्यं तद्विभक्त्यन्तात् प्रत्ययः। एवम् औपविन्दविः। औडुलोमिरित्यत्र णिप्रत्यये, (३३७,२५८) नलोपः अकारलोपश्च। एवम् आग्निशर्म्मिः। कार्ष्णिरिति (२५८) अकारलोपः। बाह्वादिस्तु—बाहु उपबाहु उपविन्दु उडुलोमन् अग्निशर्म्मन् सुशर्म्मन् कृष्ण युधिष्ठिर अर्जुन शाम्ब गद प्रद्युम्न राम सत्यक प्रभृतिः।

आयच: स्थाने जातयोर्दान्ते स्थितयोर्यवयो: स्थाने क्रमादिमुमौ स्तो णिति ते परे, न तु स्वङ्गादे: । *

## ४१८। द्वार स्वर स्व: स्वस्ति स्वादुम्दु व्यल्कस श्व: श्वन् स्फ्यक्कृत स्व स्वाध्याय स्वग्रामैकन्यग्रोधानां श्वापदन्यङ्कोस्तु वा नत्विति श्वादे: ।

द्वार—न्यग्रोधानां ६।॥, श्वापद-न्यङ्को: ६।, तु ।१।, वा ।१।, न ।१।, तु ।१।, इति ७।, श्वादे: ६।) ।

द्वारादेरद्वितीयस्य न्यग्रोधस्य च य्वोर्युम् स्यात्, श्वापदन्यङ्कोस्तु वा, न तु श्वादेरिकारादौ ते । †

---

* य्व वव य्वौ तयो: । इश्च उश्च यू ताभ्यां म युम् इति लुप्तप्रथमा द्विवचनं यथाक्रमार्थं । स्वङ्गश्च व्यङ्गश्च व्यड़श्च व्यवहारश्च व्यायामश्च स्वागतश्च स्वध्वरश्च णन् च तत्, पश्चान्नञ्योगे तस्य । स्वङ्गादय: सप्त शब्दा:, णन् इति (११४१) कृत्प्रत्यय:, तेन तदन्तस्य ग्रहणम् । आयच इति णिते इति च अनुवर्त्तते । इमुमौमित्वादादौ । णिति ते परे आदौ इमुमि कृते पश्चात् वृद्धि: । पाणिनि: ७।३।३,७,८,९ । अत्र द्रष्टव्यम्—पाणिनीये स्वागतादिगणे व्यायामशब्दो नास्ति, स्वपतिशब्दस्तु दृश्यते ।

† एकोऽद्वितीयश्चासौ न्यग्रोधश्चेति एकन्यग्रोध: । एकेति किं, न्यग्रोधमूले भवा: न्याग्रोधमूला: शालय: इति भट्टोजिदीक्षित: । न्याग्रोधमूलिकमिति (४३२) सूत्रं स्वयं वक्ष्यति । द्वारश्च स्वरश्च स्वरिति रेफान्तमव्ययञ्च स्वस्तीत्यव्ययञ्च स्वादुम्दुश्च व्यल्कसश्च श्वस् इति सान्तमव्ययञ्च श्वा च स्फ्यक्कृतश्च स्वश्च स्वाध्यायश्च स्वग्रामश्च एकन्यग्रोधश्च ते तेषां । श्वापदश्च न्यङ्कुश्चेति तस्य । श्वा आदिर्यस्य स श्वादिस्तस्य । द्वारादीनां यवयोरदान्तत्वात् आयच. स्थाने अजातत्वाच्च पूर्व्वेणाप्राप्तौ वचनमिदं । द्वारादेर्यवयोरिमुमौ स्यातां णिति तद्धिते परे, श्वापदन्यङ्कोस्तु वा, श्वन्प्रभृतीनां (वार्त्तिकोक्त—श्वदंष्ट्र-श्वगणयोश्च) इकारादौ तद्धिते परे तु न स्यादित्यर्थ: । अत्र स्व: अध्याय: स्वाध्याय: इति व्युत्पत्ति:, न तु (सु) शोभन: आध्याय: स्वाध्याय इति काशिका । स्वादुम्दु इति पदं केषाञ्चित् मते पृथक् पदद्वयम् । स्वग्रामशब्दश्च द्वारादिगणे न दृश्यते । पाणिनि. ७।३।४,५,८,९ ।

वैयश्विः सौवश्विः। स्वङ्गादेस्तु स्वाङ्गिः व्याङ्गिः व्याडिः। *

४१९। व्यासादेर्ङक् णौ।

(व्यासादेः ६।, ङक् ।१।, णौ ७।)।

वैयासकिः सौधातकिः। †

आत्रेयः शौभ्रेयः। गाङ्गेयः माहेयः यौवतेयः। ‡

४२०। ओर्लोपोऽकद्रुपाण्डोरेये।

(ओः ६।, लोपः १।, अकद्रु-पाण्डोः ६॥, एये ७।)।

---

* पूर्व्वसूत्रोदाहरणमाह—विगतोऽश्वो यस्य सः व्यश्वः तस्यापत्यं वैयश्विः, अदन्तत्वात् णिप्रत्यये यकारस्य इमि कृते तस्यैव वृद्धिः। एवं शोभनोऽश्वो यस्य सः स्वश्वः तस्यापत्यं सौवश्विः, वकारस्य उमि तस्यैव वृद्धिः।

आद्यचः स्थाने जातयोः किं, दधिप्रियः अश्वो यस्य स दध्यश्वः, मधुप्रियोऽश्वो यस्य स मध्वश्वः, तस्य तस्य अपत्यं दध्यश्विः मध्वश्विः इत्यादौ इम् उम् न स्यात्। दान्ते स्थितयोः किं, इणधातोः शतृ यत् इति शब्दः, यतः इदं यातमिति, एवं द्वयो-र्वर्षयोर्भवं द्विवार्षिकं इत्यादौ इम् उम् न स्यात्।

स्वङ्गादेस्तु शोभनं अङ्गं यस्य स स्वङ्गः स्वङ्गस्यापत्यं स्वाङ्गिः, विगतं अङ्गं यस्य सः व्यङ्गः व्यङ्गस्यापत्यं व्याङ्गिः, व्यड़स्यापत्यं व्याड़िः इत्यादौ यवयोर्दान्तत्वादाद्यचः स्थाने जातत्वाच्च प्राप्तो निषेधः। णनन्तस्य तु व्यावक्रोशी, व्यव-क्रुशधातोः (११४१) णन्प्रत्यये, व्यवक्रोश-शब्दात् स्वार्थे णे ईपि सिद्धम्। पाणिनिः ७।३।६।

† व्यासादिशब्दस्य स्थाने ङक् स्यात् णिप्रत्यये परे, ङित्त्वादन्त्यस्य स्थाने। अक्-स्थितिः। व्यासस्यापत्यं वैयासकिः, व्यासशब्दात् णिः यकारस्य (४१७) इम्, (४१६) इकारस्य वृद्धिरैकारः, अनेन ङक्। एवं सुधातुरपत्यं सौधातकिः, सुधातृशब्दात् णिः, आद्यचो वृद्धिः, ऋस्थाने ङक्। व्यासादिस्तु—व्यास वरुड़ निषाद चण्डाल विम्ब सुधातृ प्रभृतिः। पाणिनिः ४।१।९७, वार्त्तिकञ्च।

‡ अत्र्यादीनाह—अत्रेरपत्यं, शुभ्रस्यापत्यं। आबादीन् आह गङ्गाया अपत्यं, मह्या अपत्यं, युवत्या अपत्यं, सर्व्वत्र णेयप्रत्यये यथायोग्य (२५८) इवर्णावर्णयोर्लोपः। अत्र्यादिस्तु—अत्रि शुभ्र पूरु मृकण्डु पाण्डु कद्रू भ्रूण कुमारिका रोहिणी विमातृ विधवा अम्बिका रुक्मिणी गोधा शुक नटी प्रभृतिः। पाणिनिः ४।१।१२२।

उवर्णस्य एये परे लोपः स्यात् नत्वनयोः। कामण्डलेयः। तयोस्तु काद्रवेयः पाण्डवेयः। *

**४२१। कल्याणी सुभगा दुर्भगा बन्धकी रजकी बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्य-नसूय्यनुदृष्टि कुलटाभ्य इनेयः।**

(कल्याणी—कुलटाभ्यः ५॥, इनेयः १।)।

सौभागिनेयः दौर्भागिनेयः। †

**४२२। क्षुद्रागोधाभ्यो वैरारौ।**

(क्षुद्रा-गोधाभ्यः ५॥, वा ।१।, एरारौ १॥)।

नाटेरः नाटेयः, गौधेरः गौधारः गौधेयः। ‡

---

* कमण्डलोः कमण्डल्वा वा अपत्यं कामण्डलेयः, णेये अनेन उवर्णलोपः। कद्र्वा अपत्यं, पाण्डोरपत्यं—उभयत्र उवर्णलोपाभावे, (३३७) उवर्णस्य ओकारः, (३५) ओस्थाने अव्। कमण्डलुः चतुष्पाज्जातिविशेषः। पाणिनिः ४।१।१३५ ; ६।४।१४७।

† अर्थवशात् विभक्तिविपरिणामः इति न्यायात् एये इति सप्तम्यन्तं पदं षष्ठ्यन्तं भूत्वा अनुवर्त्तते। कल्याणीति त्रयोदशभ्यः परस्य णेयस्य स्थाने इनेयः स्यात्, स्थानिवत्त्वात् वृद्धिः, स्त्रियामीप् च। कुलटा इह कुलत्यक्ता सती भिक्षुकी, असतीवाच्ये तु (४२२) परसूत्रप्राप्तिः। कल्याण्या अपत्यं काल्याणिनेयः, स्त्रियां काल्याणिनेयीत्यादि। सुभगाया अपत्यं सौभागिनेयः, दुर्भगाया अपत्यं दौर्भागिनेयः, उभयत्र (४१६) सुभगादित्वादुभयपदवृद्धिः। एवं परस्त्रिया अपत्यं पारस्त्रैणेयः इत्यत्र (२५८) ईवर्ण-लोपप्रसक्तावपि, सुभगादिपाठ-सामर्थ्यात् (२५८) ईकारलोपाभावे, अग्रतः सन्धौ, पश्चात् तस्यैव वृद्धिः। सुभगादिश्च—सुभगा दुर्भगा सुहृद् शक्तुसिन्धु अनुशतिक अनुसंवत्सर कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्व्वलोक सर्व्वपुरुष सर्व्वभूमि परस्त्री राजपुरुष अधिभूत अधिदेव चतुर्विद्या अग्निमरुत् अग्निवरुण सुह्मनगर कुरुजङ्गल विश्वधेनु अर्द्धक्रोश इत्यादिः। प्रवाहण अशौच अनैश्वर्य्य अचेतस अकुशल अनिपुण अयथातथ्य इत्यादौ विकल्पः। यथा, अशौचं आशौचमित्यादि। पाणिनिः ४।१।१२६, १२७। अत्र पाणिनीये कल्याण्यादिगणे रजकीशब्दस्थाने जरतीशब्दो दृश्यते।

‡ क्षुद्राश्च गोधा च ताभ्यः ; (पाणिनौ "गोधाया ढ्रक्" इति एकवचननिर्द्देशात् "क्षुद्राभ्यो वा" इति बहुवचननिर्द्देशाच्च)। एरश्च आरश्च एरारौ। क्षुद्राः कुलशीलहीनाः

गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः । *

## ४२३ । ओदौतोऽव्वत् तकादय-क्यङ्ग्याः ।

(ओत्-औतः ५।, अव्वत् ।१।, तकादय क्य-ङ्याः १।।।) ।

ओदौङ्गां पर-स्तसंज्ञः कृत्संज्ञकस्य यः क्यङ्गी च अव्वत् स्यात् । †

बाभ्रव्यः । ‡

नाड़ायनः गार्ग्यायणः दाक्षायणी । पैतृष्वस्रीयः मातृष्वस्रीयः । रैवतिकः आश्वपालिकः । यादवः आङ्गिरसः । §

---

अङ्गहीनाश्च । "काः क्षुद्रा नाम ? अनियतपुंस्का अङ्गहीना वा" इति भाष्यम् । "व्यङ्गाद्‌शीलाभ्याच्च" इति क्रमदीश्वरः । गोधाशब्दः शुभ्रादिगणान्तर्गतः । अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्षुद्राभ्यः परस्य ष्णेयस्य एरः स्याद्वा, गोधायाः परस्य ष्णेयस्य एरारौ स्यातां वा इत्यर्थः । कुलशीलहीना यथा—नट्या अपत्यं नाटेरः, पक्षे नाटेयः । एवं कुलटाया अपत्यं कौलटेरः कौलटेयः । सतीवाच्ये तु पूर्व्वसूत्रादिनेये कौलटिनेय इति । एवं दास्या अपत्यं दासेरः दासेयः इत्यादि । अङ्गहीना यथा—काणायाः अपत्यं काणेरः काणेय इत्यादि । गोधाया अपत्यं गौधेरः गौधारः गौधेय इत्यादि । पाणिनि. ४।१।१२९,१३०,१३१ ।

* गर्गादीनाह—गर्गस्यापत्यं, वत्सस्यापत्यं, जमदग्नेरपत्यं, पराशरस्यापत्यं, सर्व्वत्र गर्गादित्वात् ष्णाप्रत्यये, आयचो वृद्धौ, (२५८) यथासम्भवमिवर्णोवर्णयोर्लोपः । स्त्रियां (२५९) यलोपे गार्गीत्यादि । गर्गादिश्च—गर्ग वत्स अज अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शक धनञ्जय लोहित बभ्रु मण्डु मनु वतण्ड कण्व यज्ञवल्क शण्डिल चणक मुद्गल जमदग्नि पराशर उलूक दण्ड प्रभृतिः । पाणिनिः ४।१।१०५ ।

† ओच्च औच्च तस्मात् । अव इव अव्वत् । तश्च कश्च तौ, तयोर्दः तकादयः, तकादयश्च क्यश्च ङ्याश्च ते । पाणिनिः ६।१।७९,८० ।

‡ बभ्रोरपत्यं बाभ्रव्यः, अत्र बभ्रुशब्दात् ष्णा कृते, (३३७) उकारस्य ओकारे, अनेन यस्य अव्वद्भावे, (३५) ओकारस्य अव् । (पाणिनिः ४।१।१०६) । एवं नावा ताय्यं नाव्यं, (४२९) ष्णाप्रत्यये, अनेन अव्वत्वत्वे, औस्थाने आव् । कृते यकारे, लव्यं भाव्यमित्यादि । गामिच्छति गव्यति, नावमिच्छति नाव्यति (८४३) क्यप्रत्यये अव्वत् । गौरिवाचरति गव्यते, नौरिवाचरति नाव्यते, उभयत्र (८४८) ङ्याप्रत्यये, अव्वत् ।

§ नडादि-चतुष्टयमाह—नडस्यापत्यं नाडायनः, गार्ग्यस्यापत्यं गार्ग्यायणः, दक्षस्यापत्यं स्त्री दाक्षायणी, सर्व्वत्र नडादित्वात् ष्णायनः । नडादिश्च (पाणिनिः

## ४२४। मनवर्जान्वर्म्मोच्चस्थेनोऽनोऽध्वात्मनो-ऽपत्यण्योऽविकारण्याभावकर्म्मय ईने न न-लोपः।

(मनवर्जान्-वर्म्मोच्चस्थेनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यणे ७।, अविकारण्या-भावकर्म्मये ७।, ईने ७।, न ।१।, न-लोपः १।)। *

**मन्वर्जस्यानो वर्म्मणः उच्चणः स्यात् परस्थेनश्च अपत्यार्थ-णे, अनो विकारार्थवर्जे णे भावकर्म्मार्थवर्जे ये च, अध्वात्मनोरीने, न-लोपो न स्यात्।**

**याज्वनः भाद्रवर्म्मणः औच्चणः चाक्रिणः। †**

---

४।१।९९,१००,१०१) नड़ नर द्वीप काश्य दण्डिन् हस्तिन् बदर अश्मल दण्ड्र प्रभृतिः। पितृष्वसुरपत्यं पैतृष्वस्रीयः, मातृष्वसुरपत्यं मातृष्वस्रीयः, उभयत्र पितृष्वस्रादित्वात् णीयः। (पाणिनिः ४।१।१३२,१३४)। रेवत्या अपत्यं रैवतिकः, अश्वपालस्यापत्यम् आश्वपालिकः, उभयत्र रेवत्यादित्वात् णिकः। एवं द्वारपालिक इत्यादि। रेवत्यादिश्च—रेवती अश्वपाली मणिपाली द्वारपाली वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह चामरग्राह प्रभृतिः। यदोरपत्यं यादवः, अङ्गिरसोऽपत्यं आङ्गिरसः, एवं रघोरपत्यं राघवः इत्यादिषु शेषत्वात् णः। (पाणिनिः ४।२।९२) सूत्रे शेषः—अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः। अत्र तु वाह्वाद्यादिगणान्तर्गतभिन्न इत्यर्थः।

* मनं वर्जयतीति मन्वर्जः (१००९), मन्वर्जश्चासौ अन् चेति मन्वर्जान्। स्थः संयोगः, स्यादिश्च स्थेन्। मन्वर्जान् च वर्म्म च उच्चा च स्थेन् च मनवर्जान्वर्म्मोच्चस्थेन् तस्य। अध्वा च आत्मा च तस्य। अपत्ये णः अपत्यणस्तस्मिन्। न विकारोऽविकारः, अविकारे णः अविकारणः, भावश्च कर्म्म च भावकर्म्मणी न भावकर्म्मणी अभावकर्म्मणी, अभावकर्म्मणोर्यः अभावकर्म्मयः, अविकारणश्च अभावकर्म्मयश्च अविकारण्याभावकर्म्मयं तस्मिन्।

† अत्र (४२३) विकारार्थवर्ज-णे परे सर्व्वेषां-मनन्तानां न-लोपनिषेधे, अपत्यार्थ-णे परे मनन्तस्य न-लोपार्थमाह मन्वर्जानिति, अपत्यणे परे मन्-वर्जस्यैव अनन्तस्य न-लोप-निषेधः, मनन्तस्य तु न-लोपः स्यादेव, अपत्यार्थभिन्नणे परे तु मनन्तस्यापि न-लोपनिषेधः। मनन्तवर्जनात् वर्म्मणोऽपि न-लोपप्राप्तौ तस्य न-लोपनिषेधार्थं पुनर्वर्म्मणोग्रहणम्। उच्चणस्तु इह ग्रहणं नियमार्थमेव, तेन उच्चणः अपत्यणे एव न-लोपनिषेधः, अन्यणे तु न-लोपः स्यादेवेति। यज्वनोऽपत्यं याज्वनः, भद्रवर्म्मणोऽपत्यं भाद्रवर्म्मणः, उभयत्र

शैवः वाशिष्ठः। *

## ४२५। सङ्ख्यासंभद्रान्मातुरुङ्‌र् ण्णे।

(सङ्ख्या-संभद्रात् ५।, मातुः ६।, उर् ।१।, णे ७।)।

द्वैमातुरः। †

## ४२६। नन् पुंस्त्रियोः। (नन् ।१।, पुंस्त्रियोः ६॥)।

पौंस्नः स्त्रैणः। ‡

---

षत्वात् णः, अनेन न-लोपनिषेधः। मन्नन्तस्य तु सुमाम्नोऽपत्यं सौसामः इत्यादि। अपत्यणे इति किं, चर्मणा परिवृतो रथः चार्मणः। उक्ष्णोऽपत्यं औक्ष्णः (४३५) उङ्-लोपः, अपत्यार्थभिन्नणे तु उक्ष्ण इदं औक्षं चर्म। चक्रिणोऽपत्यं चाक्रिणः, एवं शाङ्गिनः दाण्डिनः शाखिनः इत्यादि संयोगादिनो न-लोपनिषेधः। अनोऽविकारणे यथा—ब्रह्म सामाति ब्राह्मणः। साम इदं सामनमित्यादि। तर्हि कथं ब्रह्मणोऽपत्यं ब्राह्मणः, ब्रह्मण-इदं ब्राह्मं भर इत्यादिप्रयोगः। उच्यते—"ब्राह्मोऽजातौ" (६।४।१७१) इति पाणिनि-सूत्रेण निपातः। "योगविभागोऽत्र कर्त्तव्यः। ब्राह्म इति निपात्यते अनपत्येऽणि। ब्राह्मं हविः। ततोऽजातौ। अपत्ये जातावपि ब्रह्मणष्टिलोपो न स्यात्। ब्रह्मणोऽपत्यं ब्राह्मणः। अपत्ये किं, ब्राह्मी औषधिः।" इति भट्टोजिदीक्षितः। अभावकर्म्मणे यथा—मूर्द्धनि भवः मूर्द्धन्यः, ब्रह्मणि साधुः ब्रह्मण्यः इत्यादि। पाणिनिः ६।४।१६४—१७३। "अश्मनोविकार इति उपसंख्यानं कर्त्तव्यम्" "मपूर्व्वात् प्रतिषेधे वा हितनाम-इति वक्तव्यम्" इति वार्त्तिकद्वयस्य।

* शिवादीनाह। शिवस्यापत्यं शैवः, वशिष्ठस्यापत्यं वाशिष्ठः। शिवादिस्तु—शिव वशिष्ठ गोतम मनु विश्रवण यस्क ककुत्स्थ इक्ष्वाकु कुरु पृथा भूमि सपत्नी ऊर्णनाभ प्रभृतिः। पाणिनिः ४।१।११२।

† सङ्ख्या च सम् च भद्रश्च तस्मात्। सङ्ख्यावाचकात् समो भद्राच्च मातृशब्दस्य उर् स्यात् णे परे, ङित्त्वादन्त्यस्य स्थाने। द्वयोर्मात्रोरपत्यं द्वैमातुरः, अत्र तद्धितार्थे विषये द्विगौ, शेषत्वात् णे कृते एकपदीभावात् द्वि-इकारस्य (४१६) वृद्धिः। एवं तिसृणां मातृणामपत्यं त्रैमातुरः, षण्णां मातृणामपत्यं षाण्मातुरः। संमातुरपत्यं सांमातुरः, एवं भाद्रमातुरः। पाणिनिः ४।१।११५।

‡ पुम्स-स्त्री-शब्दयोः नन् स्यात् णे, नित्त्वादन्ते, अदन्तनकारस्थितिः। पुंसोऽपत्यं पौंस्नः, स्त्रिया अपत्यं स्त्रैणः, णे ननि च कृते (२५८) सकारलोपः। एवं इदमाद्यर्थे

## ४२७। कुञ्जादेर्णायन्योऽस्त्रीत्वेऽपत्ये।

(कुञ्जादेः ५।, णायन्यः १।, अस्त्रीत्वे ७।, अपत्ये ७।)।

कुञ्जादेरपत्यार्थे णायन्यः स्यात्, नतु स्त्रियां नच त्वे।

कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीत्वे तु कौञ्जायनी कौञ्जायनाः।*

## ४२८। गर्गयस्कविदादि-भृग्वत्रि-कुत्सा-ङ्गिरो-वशिष्ठ-गोतम-रूढात् लुक् त्वेऽस्त्रियां।

(गर्ग—रूढात् ५।, लुक् ।१।, त्वे ७।, अस्त्रियां ७।)।

देशतुल्याख्यः क्षत्रियः रूढः। एभ्यः परेषामुक्तानां त्यानां त्वे विहितानां लुक् स्यात् नतु स्त्रियां।†

गर्गाः वत्साः, यस्काः लह्याः, विदाः उर्व्वाः, भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः, अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।‡

---

णे कृतेऽपि यथा—पुंस इदं पौंस्नं, स्त्रीणां समूहः स्त्रैणं, स्त्री देवता अस्य स्त्रैणः। पाणिनिः ४।१।८७।

* स्त्री च त्वञ्च स्त्रीत्वं, न स्त्रीत्वं अस्त्रीत्वं तस्मात्। णायन्येन णायनो बाध्यते। कुञ्जस्यापत्यं, ब्रध्नस्यापत्यं, णित्त्वात् आद्यचो वृद्धिः। कुञ्जस्यापत्यं स्त्री, कुञ्जस्यापत्यानि पुमांसः, इत्युभयत्र नड़ादित्वात् णायन एव। कुञ्जादिस्तु—कुञ्ज ब्रध्न शङ्ख लोम भस्म शुभ विपाश् प्रभृतिः। पाणिनिः ४।१।९८; ५।३।११३।

† गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः, आदिशब्दस्य प्रत्येकेन सम्बन्धात् गर्गादि-यस्कादि-विदादय इत्यर्थः। ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च गोतमश्च रूढश्च तस्मात्। देशेन तुल्या आख्या यस्य सः देशतुल्याख्यः, यथा वङ्गो देशविशेषः, वङ्गं पातीति (४२९) णप्रत्यये वङ्गाराजा इत्यादि। "जनपदवचन-क्षत्रियः" इति पाणिनिः। उक्तानां त्यानामिति अपत्यार्थप्रत्ययानामित्यर्थः। लुक्-करणात् (९३) त्यलोपे त्यलक्षणमिति न्यायेन वृद्ध्यादिर्न स्यात्।

‡ गर्गस्यापत्यानि वत्सस्यापत्यानि, उभयत्र गर्गादित्वात् णास्य लुक्। यस्कस्याप-त्यानि लह्यस्यापत्यानि यस्कादित्वात्, विदस्यापत्यानि उर्व्वस्यापत्यानि विदादित्वात्,

## ४२६। ढघे कात् णीककण्णीनेयाश्चानितश्च।

(ढ-घे ७।, कात् ५।, णीक कण्-णीन-इयाः १।॥, च ।१।, अनितः १।॥, च ।१।) ।

कात् परा एते पूर्व्वे च सेतोऽनितश्च स्युः ढे घे च वाच्ये । *

तर्कं वेत्ति अधीते वा तार्किकः ; पदकः, क्रमकः ; वैयाकरणः ; वाचा कृतं वाचिकं ; पाणिनीयं ; शक्त्या युध्यतेऽसौ शाक्तीकः, याष्टीकः ; तिष्येण युक्ता रात्रिः तैषी, पौषी ; क्षत्राय साधुः क्षत्रियः ; यज्ञाय हितं यज्ञियं ; मथुराया आगतः

---

एवं भृगोरपत्यानि एतेषु णस्य लुक् । यस्कादिर्यथा—यस्क पुष्करसद् वध्रुक मत्यक लह्य (लुह्य वा) रथोमुख कोष्टुपाद प्रभृतिः । विदादिश्च—विद पुत्र उर्व्व कश्यप कुशिक भरद्वाज उपमन्यु आपस्तम्ब शरद्वत् रथन्तर विश्वानर प्रभृतिः । अत्रेरपत्यानि अत्र णेयस्य लुक् । कुत्सस्यापत्यानि अङ्गिरसोऽपत्यानि वशिष्ठस्यापत्यानि गोतमस्यापत्यानि एतेषु णस्य लुक् । अङ्गस्य राज्ञोऽपत्यानि, एवं वङ्गस्यापत्यानि कलिङ्गस्यापत्यानि इत्यादिषु णस्य लुक् । क्वचित् प्रसिद्धत्त्रियोऽपि रूढौ वक्तव्यः यथा—रघूणामन्वयं वक्ष्ये; इक्ष्वाकूणामिदं हि कुलव्रतम् इति च रघुः । नाथो यदूनामिति उद्भटः । अस्त्रियामिति किं, भृगोरपत्यानि स्त्रियः इत्यत्र णलोपाभावे भार्गवीशब्दात् जस्विभक्तौ भार्गव्यः इति । अपत्यार्थप्रत्ययानामिति किं, भृगोरिमे भार्गवाः मन्त्राः इत्यादौ न णलोपः । एव प्रिया गार्ग्या यस्य स प्रियगर्गः इत्यत्र समुदायस्य एकत्वेऽपि गार्ग्यशब्दस्य बहुत्वे प्रयुक्तत्वात् णलोप स्यादेव । एव प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः अत्र समुदायस्य बहुत्वेऽपि गार्ग्यशब्दस्य एकत्वे प्रयुक्तत्वात् णलोपो न स्यात् । एवं प्रिययस्क, प्रिययास्काः इत्यादयः । पाणिनिः २।४।६२—६६ । अत्र वक्तव्यम्—"न गोपवनादिभ्यः" इति पाणिनिसूत्रेण (२।४।६७) विदादिगणान्तर्गत-गोपवनादिभ्यो लुक्निषेधः ।

* ढश्च घश्च ढघं तस्मिन् । णीकश्च कण् च णीनश्च इयश्च ते । नास्ति इत् येषां ते अनितः । णीनेयाश्चेति चकारेण पूर्व्वोक्ताः णिप्रभृतयः प्रत्ययाः समुच्चीयन्ते । अनितश्चेति चकारेण सेतः इति विशेषणान्तरं समुच्चीयते । ततश्च—इह चत्वारः पूर्व्वोक्ताश्च सप्त इति एकादश प्रत्ययाः सर्व्वकारकेभ्यः कर्म्मणि कर्त्तरि च वाच्ये स्युः, ते च प्रयोगानुसारेण क्वचित् इद्रहिताः स्युरित्यर्थः । इत्-रहिता इति कथनात् (४१६) णिति ते परे वृद्धिर्न भविष्यतीति । अर्थविशेषे प्रत्ययविशेषस्तु अभिधानादेव ज्ञेयइति ।

माथुरः ; इह भवं ऐहिकं ; कादाचित्कं ; ग्रामीणः, ग्राम्यः ; मूर्द्धन्यः ; नादेयः ; शालीयः ; नागरः ; अग्र्यः । *

## ४३० । व्यटेर्लोपोऽनाराच्छ्वतोऽच्येऽयौ ।

(व्य टेः ६।, लोपः १।, अनारात्-श्वतः ६।, अच्-ये ७।, अयौ ७।) ।

---

* तर्कम् वेत्ति अधीते वा इत्यर्थे एव तर्कम् इत्यस्मात् कर्मकारकात् कर्त्तरि वाच्ये णिकः । (पाणिनिः ४।२।६५) । एवं—पदं वेत्ति अधीते वा पदकः, क्रमं वेत्ति अधीते वा क्रमकः, उभयत्र अनित् कण् । (पाणिनिः ४।२।६१) । व्याकरणं वेत्ति अधीते वा वैयाकरणः, व्याकरणशब्दात् णप्रत्यये (४१७) यस्थाने इय्, तस्य वृद्धिः । (पाणिनिः ४।२।५९) । वाचा कृतं वाचिकम्, अत्र वाचा इत्यस्मात् करणकारकात् कर्म्मणि वाच्ये णिकः, (४३१) न दं तसावित्यनेन दान्तत्वनिषेधात् (२११) विरामाभावे कुङादि नं स्यात् । (पाणिनिः ५।४।३४) । पाणिनिना प्रोक्तं पाणिनीयम्, अत्र पाणिनिना इति कर्त्तृकारकात् कर्म्मणि वाच्ये णीयः । (पाणिनिः ४।३।१०१) । एवं शर्ववर्म्मणा प्रोक्तं शार्ववर्म्मिकमित्यादि । शाक्तीक इत्यत्र करणकारकात् कर्त्तरि वाच्ये णीकः ; यष्ट्या युध्यते असौ याष्टीकः । (पाणिनि. ४।४।५९) । पाणिनिमते तु शक्तिः प्रहरणमस्य, यष्टिः प्रहरणमस्य इत्याकारं वाक्यम् । तिष्येण नक्षत्रेण युक्ता रात्रिः तैषी, एवं पुष्येण नक्षत्रेण युक्ता रात्रिः पौषी, उभयत्र तिष्येण पुष्येण इति कर्त्तृकारकात् कर्म्मणि वाच्ये णे कृते वृद्धौ, (२६०) यकारलोपे, (२५७) षित्वादीप् । (पाणिनिः ४।२।३) । क्षत्रियः, यज्ञियम् इत्युभयत्र तादर्थ्ये हितशब्दयोगे च चतुर्थ्यन्तादकारकादपि इयप्रत्ययः, सूत्रे कारकादिति तु प्रधानेन व्यपदेशा भवन्तीति न्यायादुक्तं । (३०८) स्वामीश्वराधिपतीत्यनेन सम्बन्धविवक्षायामेव षष्ठीसप्तमीविधानात्, क्षत्राय साधुरित्यत्र निमित्तार्थे चतुर्थी । (पाणिनिः ४।१।१३८—अत्र सूत्रे जातौ घः न तु साध्वर्थे । पाणिनिः ५।१।५) । माथुर इति मथुरायाः इति अपादानकारकात् कर्त्तरि वाच्ये णः । (पाणिनिः ४।३।७४) । इह इति अधिकरणात् कर्त्तरि वाच्य णिके ऐहिकं, एवं कदाचित् भव कादाचित्कं, अत्र कण् । (पाणिनिः ४।३।५३) । ग्रामे भवः ग्रामीणः, अत्र णीनः, एवं ग्राम्य इत्यत्र ण्यः । (पाणिनिः ४।२।९४ ; ४।३।२५) । मूर्द्धनि भवो मूर्द्धन्यः, अत्र ण्ये कृते (४२४) न-लोपनिषेधः । (पाणिनिः ४।३।५५) । नद्यां भवो नादेयः, अत्र णेयः, (पाणिनि. ४।२।९७) । शालायां भवः शालीयः अत्र णीयः । (पाणिनिः ४।२।११४) । नगरे भवो नागरः, अत्र णः (पाणिनिः ४।२।१२८) । अग्रे भवः अग्र्यः, अत्र ण्यः, (पाणिनिः ४।४।११६) । एतेषु उदाहरणेषु (२५८) यथासम्भवम् इवर्णावर्णलोपः प्रत्ययाश्च सेतोऽनितश्च ज्ञेयाः । एवं प्रयोगानुसारेण कारकात् कर्म्मणि कर्त्तरि च वाच्ये प्रत्यया भवन्तीति ।

पौनःपुनिकः, वाह्यः वाहीकः । *

## ४३१ । न दं तसौ त्वस्त्यर्थे च ।

(न ।१।, दं १।, त-सौ १॥, तु ।१।, अस्त्यर्थे ७।, च ।१।) ।

अयावचि ये च ते पूर्व्वं दसंज्ञं न स्यात् तान्त-सान्तौ तु अस्त्यर्थे च ।

आरातीयः शाश्वतिकः । †

---

* व्यस्य टिः व्यटिस्तस्य । आराच्च शश्वच्च तत्, न तत् अनाराच्छश्वत् तस्य । अच्च यश्च अच्यं तस्मिन् । नास्ति युर्यस्मिन् अयुस्तस्मिन् । आरात्-शश्वत्-वर्जितस्य अव्ययस्य टेर्लोपः स्यात् प्रकरणबलात् तद्धितसंज्ञके अचि युभिन्ने ये च परे इत्यर्थः । पुनःपुनर्भवः इति वाक्ये (४२९) णिके. (४१६) वृद्धौ, अनेन टिलोपे पौनःपुनिकः । वहि-र्भवः इति वाक्ये ष्णे ईकं च वृद्धौ, टिलोपे वाह्यः वाहीक इति । एवं सायंप्रातर्भवः सायंप्रातिक इत्यादि । अयौ किं, शंयुः अहंयुः । आरात्शश्वतोरुदाहरणं परसूत्रे दर्शितम् । अत्र आरात्-शश्वत्-वर्जनादेव अव्ययप्राप्तौ पुनर्व्ययग्रहणं क्वचिदव्ययस्य टिलोपाभावज्ञापनार्थं, तेन सुष्ठु भावः सौष्ठवं, शं विद्यतेऽस्य शंयः, एवं कंय इति । "अव्ययानां भमात्रे टिलोपः । अनित्योऽयम्" । इति सिद्धान्तकौमुदी ।

† तश्च सश्च तसौ । अस्ति अर्थो यस्य तस्मिन् । तस्मिन्निर्दिष्टे पूर्व्वस्येति न्यायादाह—पूर्व्वं दसंज्ञं न स्यादिति । अच्येऽयौ इत्यनुवर्त्तते । (३१९) प्रत्यये परे क्वि-लुंकि लुप्तविभक्तिमाश्रित्य पदत्वे अनेन निषिध्यते । आरातीय इति आरात् भव इति वाक्ये (४२९) ईये, अनेन पदत्वनिषेधात् न (५८) चपोऽवे जश् । एवं शश्वत् भव इति वाक्ये ष्णिके शाश्वतिक इति । ये परे यथा—त्वच इदं त्वाच्यं, दिशि भवं दिश्यमित्यादौ अनेन दान्तत्वाभावात् (२११) विरामे परे न कुङादिः । एवं आनडुह्यं मधुलिह्यं गौदुह्यं औपानह्यमित्यादौ क्रमेण न, दङ् ढ घ धङ् (१८३,१७५,१७६,२३७) । तान्त-सान्तौ यथा—तड़ितो भावः ताड़ित्यं, अस्त्यर्थे तड़ित्वान् इत्यादौ न (५८) तस्य द । एवं पयसो विकारः पायस्यं घृतादि, पायसं परमान्नं, अस्त्यर्थे पयस्वान् पयस्वी तेजस्वी इत्यादौ अदान्तत्वात्, स्यादीयहस्परत्वाभावादिति केचित्, न सस्य (१०२) विसर्गः । अयौ किं, शंयुः अहंयुः अत्र दान्तत्वात् (५२) मस्यानुस्वारः । अच्ये किं, वाक्सर्य दिक्साम्यम् इत्यादौ दान्तत्वात् (६४) विरामविहितं कार्य्यं स्यादेव । किञ्च नञा निर्द्दिष्टमनित्यमिति न्यायात् भवदीयमित्यादौ दान्तत्वात् (५८) जश्, शंय इत्यादौ (५२) मस्यानुस्वारः । पाणिनिः १।४।१८,१९ । "अव्ययतोरकप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन" इति वार्त्तिकञ्च ।

## ४३२ । अह्नोऽह्नोऽनीने ।

(अह्नः ६।, अह्नः १।, अनीने ७।) ।

आह्निकं । ईने तु द्व्यहीनः । *

सुपाञ्चालकः अर्द्धपाञ्चालकः । †

दौवारिकः सौवरं सौवं सौवस्तिकः सौवादुमृदवं वैयल्कसं श्वौवं श्वौवनं स्फैयकृतं सौवं सौवीध्यायिकं सौवग्रामिकं नैयग्रोधं । एकेति किं, न्याग्रोधमूलिकं । श्वौवापदं श्वापदं, नैयङ्कवं न्याङ्कवं । स्वागतिकं । ‡

---

* न ईनोऽनीनमस्त्वह्नि । अहन्-शब्दस्य अह्नः स्यात् अचि ये च तद्धिते, न तु ईने परे च । त्वन्तत्वात् अस्त्यर्थे इत्यस्य नानुवृत्तिः । अह्नि भवं आह्निकं (४२९) ष्णिके, अनेन अह्नादेशे, (४१६) वृद्धिः । ईने तु, द्वयोरह्नोर्भवः इति तद्धितार्थविषयद्विगौ (४२९) ईने कृते, अह्नादेशनिषेधात् (२३७,२५८) द्व्यहीनः । पाणिनिः ५।१।७९, ८६, ८७ ; ६।४।१४५ ।

† (४१६) सुपञ्चालादीनुदाहरति—सुपञ्चाले (देशे) भवः, अर्द्धपञ्चाले भवः, उभयत्र (४२९) कण्, परपदस्य वृद्धिः । सुपञ्चालादिस्तु—सुपञ्चाल सर्व्वपञ्चाल अर्द्धपञ्चाल पूर्व्वपञ्चाल दक्षिणपञ्चाल उत्तरपञ्चाल गुरुलघु पितृपितामह वातपित्त वातश्लेष्म एकपुरुष पूर्व्वपुरुष पूर्व्वहायन अपरहायन द्विसंवत्सर द्विवर्ष त्रिसप्तति द्विनिष्क द्विसुवर्ण प्रोष्ठपद भद्रपद इत्यादि । अत्र द्रष्टव्यम्—पाणिनेः ७।३।१०—१८ सूत्राणि उत्तरपदवृद्ध्यर्थकानि ; ७।३।१९—२१ सूत्राणि उभयपदवृद्ध्यर्थकानि । तत्र प्रथमोक्तानि सूत्राणि वोपदेवमते सुपञ्चालादिगणघटकानि ; शेषोक्तानि तु तन्मते सुभगादिगणप्रयोजकानि (४१६ सूत्रं द्रष्टव्यम्) ।

‡ (४१८) द्वारादीनुदाहरति—द्वारि नियुक्तः दौवारिकः, (४२९) ष्णिकः, वस्य उम्, तस्य वृद्धिः । द्वार इति अजन्तस्य ग्रहणात् रेफान्तस्य न स्यात्, तेन द्वारि नियुक्तः द्वारिक इति । (पाणिनिः ४।४।६९) । स्वरे भवं सौवरं, स्वरमधिकृत्य कृतोग्रन्थः सौवरः इति वा, ष्णः, उम्, तस्य वृद्धिः । (पाणिनिः ४।३।८७) । एवं सर्व्वत्र । स्वः (स्वर्गे) भवं, सौवं, अत्र स्वर्शब्दात् ष्णः, (४३०) टेर्लोपः । (पाणिनिः ४।३।२५,५३) स्वस्तीति वक्ति सौवस्तिकः, स्वस्ति यथा स्यात्तथा वक्ति, वक्ष्यति इति वा—ष्णिके,

## ४३३। विकारसङ्घभावेदंहितस्वार्थादौ।

(विकार—स्वार्थादौ ७।)।

**एष्वर्थेषु च ते त्याः स्युः।**

**हैम्नो विकारः हैमः आप्यः आम्नेयः, भिक्षाणां समूहः भैक्षं आङ्गं गाणिक्यं राजकं, गुरोर्भावः गौरवं यौवनं साम्यं वैरूप्यं राज्यं सौहार्द्दं, विष्णोरिदं वैष्णवं त्वदीयं माधवनं शौवनं। ***

---

टेर्लोपः। स्वादु-मृदुना कृतं, स्वादुमृदुनि संस्कृतं वा, (भक्तं) सौवादुमृदवं। व्यल्कशो-ऽव्युत्पन्नः, व्यल्कशे भवं वैयल्कश। केचित्तु व्यल्कशशब्दं द्वारादौ न पठन्ति, ते पुनः, विगतोऽर्कः व्यर्कः तं श्यति व्यर्कशः, कपिलिकादित्वात् रस्य लः, तत्र भवः वैयल्कश इति आद्यचः स्थानजातत्वात् (४१७) यस्य इम् तस्य वृद्धिरिति वदन्ति। श्वः (परदिने) भवं शौवं, ष्णे टेर्लोपः। शौवस्तिकत्वमिति भट्टिकाव्ये—श्वः परदिनं तिकते गच्छतीति श्वस्तिकः (९९६) कप्रत्ययः, श्वस्तिक एव शौवस्तिकस्तस्य भाव इति व्याख्या, अत्र श्वस्शब्दस्य वस्य उम्। शुनि भवं शौवनं, (४२४) अविकारणे परे न-लोपनिषेधः। (१९४) श्वयुवमघोनामिति तद्धितपरे वर्जनात् न वस्य उः। स्फाकृते भवं स्फैयकृतं, स्फाः खादिरः खड्गः, तेन कृतमिति तृतीयातत्पुरुषः। स्वे (धने आत्मनि वा) भवं सौवं। स्वाध्याये वेदे भवं सौवाध्यायिकं वेदाध्ययनं। स्वग्रामे भवं सौवग्रामिकं। स्व-ग्रहणेनैवेष्टसिद्धौ स्वाध्याय-स्वग्रामयो-र्ग्रहणं अन्यशब्दादिस्थितस्वशब्दस्य निषेधार्थं, तेन स्वशब्दस्यद स्वाशब्दं, स्वोदरं पूरयतीति स्वौदरिक इत्यादि। न्यग्रोधे भवं नैयग्रोधं, न्यग्रोधो वटवृक्षः। एकेकि किं, न्यग्रोधमूले भवं न्याग्रोधमूलिकम्। श्वापदे भवं शौवापदं श्वापदं, न्यङ्कौ (मृगे) भवं नैयङ्कवं न्याङ्कवं, उभयत्र विकल्पेन वस्य उम्। शुनां गणः श्वगणः श्वगणे भवं श्वागणिकं, (पाणिनौ तु श्वगणेन चरतीति श्वागणिकः श्वगणिक इति ४।४।११) अत्र (४१८) आदेरिकारादौ तद्धिते परे निषेधात् न वस्य उम। इकारे किं, श्वदंष्ट्रायां भवः शौवादंष्ट्रः इत्यादौ उम् स्यादेव। अत्र (३४) मनीषादित्वात् (पाणिनिः ७।३।९—"पदान्तस्यान्यतरस्याम्") अकारदीर्घ.।

* स्वस्य आत्मनोऽर्थः अभिधेयः स्वार्थः, स्वार्थ आदिर्यस्य स स्वार्थादिः। विकारश्च सङ्घश्च भावश्च इदम् च हितञ्च स्वार्थादिश्च समाहारं तस्मिन्। प्रकृतेरवस्थान्तर विकारः, (पाणिनिः ४।३।१३४), सङ्घः समूहः, (पाणिनिः ४।२।३७), भावोऽसाधारणधर्म्मः, (शब्दप्रवृत्तिनिमित्तं भावः, प्रकृतिजन्यबोधे प्रकारो भाव इति वा) (पाणिनिः ५।१।११९), इदमिति सम्बन्धोपलक्षणं, (पाणिनिः ४।३।१२०), हितमिष्टसाधनं, (पाणिनि. ५।१।५)

## ४३४। ऋद्रो ये। (ऋत् ।१।, रः १।, ये ७।)।

पित्र्यं। *

## ४३५। हन्षन्धृतराज्ञामुङ्लोपः ष्णे।

(हन्-षन्-धृतराज्ञां ६।॥, उङ्लोपः १।, ष्णे ७।)।

वार्त्रघ्नं पौष्णं धार्त्तराज्ञं। एषां किं, सामनं। †

---

स्वार्थः प्रकृतार्थानतिरिक्तः ("स्वार्थे 'उपसंख्यानम्'" इति वार्त्तिकम्)। एषु अर्थेषु ते पूर्व्वोक्ताः (४१५) ष्णि ष्णेय ष्ण्य ष्णायन ष्णीय ष्णिक ष्ण, (४२९) ष्णीक कण् ष्णीन इय, एते एकादश प्रत्ययाः सेतः अनितश्च स्युरित्यर्थः। अत्रापि यस्मात् शब्दात् यस्मिन्नर्थे यः प्रत्ययः सेत् अनित्, वा स्यात्, एतत् सर्व्वं प्रयोगानुसारेणैव ज्ञेयं। आदिपदेन "सास्य देवता" (पा. ४।२।२४), "तदस्य पण्यम्" (पा. ४।४।५१), "शिल्पम्" (पा. ४।४।५५), "प्रहरणम्" (पा. ४।४।५७), "शीलम्" (पा. ४।४।६१), "तत्र नियुक्तः" (पा. ४।४।६९), "तस्येश्वरः" (पा. ५।१।४२) इत्यादयो बहवोऽर्था बोध्याः। हैम इति अनेन ष्णप्रत्यये, (४१६) वृद्धिः (३३७,२५८) नस्य अकारस्य च लोपः। एवं अपां विकारः आप्यः अत्र ष्ण्यः। अग्नेर्विकारः आग्नेयः, अत्र ष्णेयः। भिक्षाणां समूहः भैक्षं (पाणिनिः ४।२।३८), अङ्गानां समूहः आङ्गं, (वार्त्तिकम्), अत्र ष्ण (४३२) अङ्गादेशः। गणिकानां समूहः गाणिक्यं, अत्र ष्ण्यः। राज्ञां समूहः राजकं, अत्र कण्। यूनां भावः यौवनं, (४२४) अविकार-ष्णे परे न-लोपाभावः, (१९४) तद्धितवर्जनात् न वस्य उः। (पाणिनिः ५।१।१३०)। समस्य भावः साम्यं, विरूपस्य भावो वैरूप्यं, उभयत्र ष्ण्यः। (पुरोहितादिगणान्तर्गतस्य) राज्ञो भावः (पाणिनिमते भावः कर्म्म वा) राज्यं (सम्राड्वचनं), ष्ण्यप्रत्यये, (३३७, २५८) नस्य अकारस्य च लोपः। सुहृदो भावः सौहार्द्दं ष्णः, (४१६) सुभगादित्वात् उभयपदवृद्धिः। वैष्णवमित्यत्र ष्णे, (३३७) उवर्णस्य ओकारे, (३५) अव्। तव इदं त्वदीयं, अत्र ष्णीयः, (२१५) त्वदादेशः। मघवत इदं माघवनं, (१९१) तुङपक्षे माघवतं, श्वन इदं शौवनं, उभयत्र ष्णे, (१९४) न वस्य उः, (४२४) अविकारष्णे न-लोपनिषेधश्च।

* ऋकारो रः स्यात तद्धित-यकारे परे। पितुरिदं पित्र्यं, (४३२) अनित् ष्ण्यः। (पितुरागत इति तु पाणिनिः ४।३।७९)। ये किं, पैतृकं, सेत् कण्।

† हन् च षन् च धृतराजन् च तेषां। षन् इति षन्-भागान्तः, तेन उक्षन्-पूषन्-प्रभृतीनां ग्रहणं। (११७) सदालोऽल्लोप इत्यनेनैव अल्लोपे सिद्धे इदं नियमार्थं, तेन

## ४३६। युष्मदस्मद्‌त्वन्मदां युष्माकास्माक-तवकममकाः ष्णीने।

(युष्मद्—मदां ६।।।, युष्माक—ममकाः १।।।, ष्णीने ७)।

**यौष्माकं यौष्माकीणं, आस्माकं आस्माकीनं, तावकं तावकीनं मामकं मामकीनं।** *

**सूर्य्याय हितं सौरीयं आगस्तीयं आत्मनीनं। चोर एव चौरः त्रैलोक्यं रामकः।** †

---

ष्णे परे एषामेव उङ्‌लोपः स्यात् नान्यस्य इत्यर्थः। वृत्रघ्न इदं इति वाक्ये (४३३) ष्णे कृते वृत्रहन् इत्यस्य उङ्‌लोपे, (१८९) हस्थाने घ्नः, (४१६) आद्यचो वृद्धिः, वार्त्रघ्नं। एवं पूष्ण इदं पौष्णं, धृतराज्ञ इदं धार्त्तराज्ञं। उष्णस्तु अपत्यार्थे ष्णे, पौष्ण इति (४२४) पूर्व्वमुदाहृतम्। एषां किं, साम्न इदं सामनं, अत्र पूर्व्वेणापि (११७), उङ्‌लोपो न स्यात्। सर्व्वत्र अविकार-ष्णे न-लोपाभावः (४२४)। पाणिनिः ६।४।१३५।

* युष्मद् अस्मद् त्वद् मद् एषां स्थाने क्रमात् युष्माक अस्माक तवक ममक एते आदेशाः स्युः ष्णे ष्णीने च परे। युष्माकमिदं इति वाक्ये ष्णे ष्णीने च कृते‌ऽलुकि युष्माकादेशे वृद्धौ यौष्माकं यौष्माकीणं। एवं आस्माकं आस्माकीनं। तव इदं इति वाक्ये ष्णे ष्णीने च युष्मद एकत्वात् (२१५) त्वदादेशे, अनेन तवकादेशे वृद्धौ तावकं तावकीनं, एवं मामकं मामकीनं। स्त्रियां मामकी (छन्दसि), मामिका (लोके)। पाणिनिः ४।३।१,२,३।

† (४३३) हितार्थे उदाहरति सौरीयमित्यादि। सूर्य्याय इत्यस्मात् ष्णीये विभक्ति-लोपे, (२६०) यलोपः। एवं आगस्तीयं। आत्मने हितं आत्मनीनं, अत्र ष्णीने (४२४) न-लोपनिषेधः। (पाणिनिः ५।१।९ ; ६।४।१६९)। स्वार्थे उदाहरति, चौर इति। एवं त्रिलोकी एव त्रैलोक्य, अत्र ष्ण्य वृद्धौ (२५८) ईकारलोपः। स्वार्थप्रत्ययान्ताः पूर्व्वलिङ्गा एवेति नियमेऽपि अस्य क्लीवत्वमभिधानात्; अतएवोक्तं क्वचित् स्वार्थिकाः प्रत्यया लिङ्गवचनान्यतिवर्त्तन्ते। राम एव रामकः, अत्र कण्। कप्रत्ययोऽन्यार्थेऽपि भवति, यथा—अज्ञाने कुत्सिते चैव संज्ञायामनुकम्पने। तद्युक्तनीतावप्यल्पे वाच्ये ह्रस्वे च कः स्मृतः॥ इति प्राञ्चः। तद्युक्तनीतौ अनुकम्पायुक्तनीतावित्यर्थः। पाणिनिः "अज्ञाते" (५।३।७३), "कुत्सिते" (७४), "संज्ञायां कन्" (७५), "अनुकम्पायाम्" (७६), "नीतौ च तद्युक्तात्" (७७), "अल्पे" (८५), "ह्रस्वे" (८६)।

## ४३७। केऽकः स्वो हे तु वा।

(के ७।, अकः ६।, स्वः १।, हे ७।, तु ।१।, वा ।१।)।

**कन्यका, सुकन्यकः सुकन्याकः।** *

**शिवो देवता यस्यासौ शैवः, शाक्तेयः।** †

## ४३८। त्वतौ भावे। (त्वतौ १॥, भावे ७।)।

**साधुत्वं जड़ता, पाचकत्वं, ब्राह्मणीत्वं।** ‡

---

* अकः प्रत्याहारस्य स्वः स्यात् कपि परे, बहुव्रीहौ तु वा। कन्या एव कन्यका, अत्र अनित-कपि कृते, अनेन ह्रस्वे, स्वार्थप्रत्ययान्तास्तल्लिङ्गा एवेति (२४९) आप्। एवं मृणालिका रामोरुका, सेनानिका इत्यादि। शोभना कन्या यस्येति बहुव्रीहौ सुकन्यकः सुकन्याक, अत्र वा ह्रस्वः। अक इति किं, नौरेव नौका इत्यादि। पाणिनिः ७।४।१३,१४,१५।

हसे परेऽपि क्वचित् ह्रस्वो वक्तव्यः यथा—कालिदासः, वैदेहिबन्धु,केतकिदन्तुरितं, नाड़िनचत्रमित्यादयः प्रयोगानुसारात्।

† (४३३) आदिपदस्य उदाहरणमाह शैवः, अव णः। (पाणिनिः ४।२।२४)। एवं शक्तिर्देवता यस्यासौ शाक्तेयः, अत्र ष्णेयः। एवं शाक्त वैष्णवः गाणपत्य इत्यादि। प्रयोगानुसारेण अर्थविशेषे तद्धितप्रत्यया भविष्यन्तीत्यादिपदेन सूचितमिति।

‡ स्याद्यन्तात् त्व त इति द्वयं स्यात् भावेऽर्थे। अभिधानात् त्वान्तस्य क्लीबत्वं, तान्तस्य च स्त्रीत्वं स्यात्। भावस्तु प्रवृत्तिनिमित्तं, येन धर्म्मेण अयं गौरिति प्रतीतिः स धर्म्मो गोशब्दस्य भाव इत्यर्थः। साध्व्या भावः साधुत्वं, जड़ाया भावः जड़ता, उभयत्र (३२७) पुंवद्भावः। पाचिकाया भावः पाचकत्वं, अत्र (३२८) पुंवद्भावनिषेधेऽपि, (३५०) विशेषविधानात् पुंवद्भावः। एवं पट्व्या भावः पटुत्वं, मैथिल्या भावः मैथिलत्वमित्यादि। ब्राह्मण्या भावः ब्राह्मणीत्वं (३५०) अजात्याख्य इत्युक्तेः न पुंवद्भावः, एवं दत्तात्वमित्यादि। त्व त इत्युभयस्य भावविहित-ष्णादिप्रत्ययस्य च सामान्यविशेषभावाभावात् वाध्यबाधकत्वाभावे जड़स्य भावः जड़त्वं जड़ता जाड्यं, गुरोर्भावः गुरुत्वं गुरुता गौरवमित्यादि स्यादेव। अत्र वक्तव्यम्—"देवात् तल्" (५।४।२७) इति पाणिनिसूत्रेण देव एव देवता इति स्वार्थे तल्प्रत्ययः। पाणिनिः ५।१।११९।

## ४३९। लीकोऽघांत् सः ष-त्ति।

(लि-इकः ५।, अ-घांत् ५।, सः ६।, षः १।, ति ७।)।

अ-घांत् लीकः सः षः स्यात् तद्धिते ते। यजुष्टं, घात्तु गीस्त्वं। *

## ४४०। वृत् साम्ये। (वृत् ।१।, साम्ये ७)।

उपमानार्थे वृत् स्यात्। कृष्ण इव कृष्णवत् †

## ४४१। मतुरस्त्यर्थे। (मतुः १।, अस्ति-अर्थे ७।)।

श्रीरस्ति यस्यासौ श्रीमान्, विदुष्मान् दोष्मान्। ‡

---

* लिरिक् लीक् तस्मात्। नास्ति घों यत्र सोऽघंस्तस्मात्। दीर्घवर्जात् लिङ्गस्य इकः परस्य सस्य षः स्यात् तद्धित-तकारे परे। यजुषो भावः यजुष्टं, एवं हविष्टं। गिरो भावः गीस्त्वं, एवं धूस्त्वं, अत्र (२२८) दीर्घे, रेफस्य (१०२) विसर्गे, (६५) विसर्गस्य सकारे, षत्वप्राप्तौ दीर्घपरत्वान्निषेधः। लीकः किं, मधुस्तरां। पाणिनिः ८।३।१०१।

† समस्य भावः साम्यं तस्मिन्। स्याद्यन्तात् वृत् स्यात् उपमानेऽर्थे। चकारोऽव्ययार्थः (६४)। कृष्ण इव कृष्णवत् शिवो भातीति शेषः, एवं कृष्णमिव कृष्णवत् शिवं मन्ये इति शेषः। एवं सर्व्वविभक्त्यन्तात् वृतप्रत्यये कर्त्तव्ये। उपमानं क्रियाविशेषणीयमेव, तेन पुत्रेण तुल्यः स्थूल इत्यादौ क्रियाभिन्नसाम्ये न स्यात्। पाणिनिः ५।१।११५, ११६,११७। एषु सूत्रेषु द्वितीयातृतीयाषष्ठीसप्तमीविभक्त्यन्तादेव वतिः स्यादित्युक्तम्।

‡ अस्ति अर्थो यस्य यस्मिन् वा सः अस्त्यर्थो विद्यमानसम्बन्धस्तस्मिन्। प्रथमान्तपदात्, अस्ति अस्य अस्मिन् वा इत्यर्थे, (अस्य अस्मिन्निति पाणिनिसूत्रे धृतत्वात्), मतुः स्यात्, उकार इत् (१९२) नुमर्थः, (१८५) दीर्घार्थः, स्त्रियां (२५७) ईबर्थश्च। तेन श्रीमान् श्रीमती। एवं श्रीरस्ति यस्मिन्निति वाक्येऽपि श्रीमान्। विद्वान् अस्ति यस्य यस्मिन् वा इति वाक्ये विदुष्मान्, अत्र (२२९) मतौ परे वसोर्वकारस्य उकारविधानसामर्थ्यादेव, (४४२) अकारोऽन्त्वेन प्राप्तव्यं वतुं बाधित्वा, मतुः स्यात्। ततश्च वस्य उत्वे, (४३१) न दं तसावित्यनेन दान्तत्वनिषेधात् विरामाभावे, (१८३) दत्वोऽप्राप्तौ, (१११) षत्वं। एवं दोरस्ति यस्य स दोष्मान्। अत्र यवादेर्मतुर्वक्तव्यः, यवादिश्च—यव ऊर्मि भूमि कृमि द्राक्षा ध्रजित् ककुत् गरुत् प्रभृतिः। पाणिनिः ५।२।९४,९५।

## ४४२ । मोङ्म-झपात् वतुः ।

(म्-अ-उङ्-म-अ-झपात् ५।, वतुः १।) ।

मकारोङोऽवर्णोङो मकारान्ता द्वर्णान्तात्, झपान्ताच्च, वतुः स्यादस्त्यर्थे । लक्ष्मीवान्, यशस्वान् भास्वान्, किंवान्, ज्ञानवान् विद्यावान्, विद्युत्वान् । *

## ४४३ । स्रङ्मेधासमायात् विन् वा ।

(स्रज्-मेधा-असम्-मायात् ५।, विन् ।१।, वा ।१।) ।

स्रग्वी मेधावी तेजस्वी मायावी । पक्षे स्रग्वान् इत्यादि । †

---

"न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इति प्राञ्चः, तेन, शोभना बुद्धिरिति कर्म्मधारये सुबुद्धिरस्त्यस्येति सुबुद्धिमान् जन इति न स्यात्, शोभना बुद्धिर्यस्यासौ सुबुद्धिरिति बहुव्रीहिणैव तदर्थप्रतिपादनात् । मत्वादीनां स्थानमाह दुर्गसिंहः, भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायाममी मत्वादयो मताः ॥ यथा—भूम्नि गोमान् । निन्दायां पापी । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरवती कन्या । संसर्गे दण्डी पान्थः ।

* मश्च अश्च मौ, मौ उङौ ययोस्तौ मोङौ, मोङौ च मश्च अश्च झप् चेति तस्मात् । झप् प्रत्याहारः । लक्ष्मीरस्त्यस्य, यशोऽस्त्यस्य, भा अस्त्यस्य, किम् अस्त्यस्य, ज्ञानमस्त्यस्य, विद्या अस्त्यस्य, विद्युत् अस्त्यस्य, सर्व्वत्र अस्मिन् वा, इति क्रमेण वाक्यानि । यशस्वान् भास्वान् विद्युत्वान् एतेषु (४३१) दान्तत्वनिषेधात् न सस्य विसर्गः, न च (५८) तस्याने द । पदमाधनन्तु पूर्व्ववत् । पाणिनि. ८।२।९,१० ।

कुमुद-वेतस नड़ादीनाम् अकारलोपो निपात्यः, तेन कुमुद्वान् वेतस्वान् नड्वान् इत्यादि । (पाणिनिः ४।२।८७ । एतन्मते ड्मतुप्) । राजन्वान् इत्यत्र न-लोपाभावो निपात्यः । (पाणिनिः ८।२।१४) । उदन्वानुदधौ अर्थे निपात्यः । (पाणिनिः ८।२।१३) । अष्ठीवन्-चक्रीवत्-चर्म्मण्वदादयश्च निपात्याः (पाणिनिः ८।२।१२) ।

† स्रक् च मेधा च असम् च माया चेति समाहारे तस्मात् । एभ्योऽस्त्यर्थे विन् वा स्यात् । पक्षे पूर्व्वेण वतुः । स्रक् अस्त्यस्य स्रग्वी, अत्र दान्तत्वनिषेधाभावात् विरामे परे (२११) कुङ्, ततः (१८८) दीर्घः, (११८) न लुप् । एवं मेधा अस्त्यस्येत्यादि । आमयोऽस्त्यस्य आमयावीति निपातनात् अकारस्य आकारः । पाणिनिः ५।२।१२१ । "आमयस्योपसंख्यानं दीर्घश्च" इति वार्त्तिकञ्च ।

## ४४४। नैकाजादिन् वा।

(नैकाजात् ५।, इन् ।१।, वा ।१।)।

अनैकाचोऽवर्णान्तादिन् वा स्यादस्त्यर्थे। ज्ञानी शिखी। *

## ४४५। शं-कंभ्यां य-यु-त-तु-ति-व-भाः।

(शं-कं भ्या ५॥, य—भाः १॥)।

शंयः शंयुः शन्तः शन्तुः शन्तिः शंवः शंभः। †

## ४४६। गो तृण मेधा दन्त काण्ड द्यु बल बलि पर्व्व चूड़ा फेन लोम पाम प्रज्ञा मधु केश रजः फलोर्णा शृङ्ग निद्राश्मो वातादे—र्मिन् सेरोरेर मोलेभ तलेल श न ण र व वलेन युरकाल्वंकिन् वा।

(गो—वातादेः ५।, मिन्—किन् ।१।, वा ।१।)।

---

* न एको नैकः, नैकोऽच् यस्य स नैकाच्, नैकाच्चासौ अश्चेति नैकाजः तस्मात्। ज्ञानम् अस्त्यस्य ज्ञानी, शिखा अस्त्यस्य शिखी, एवं माली दण्डी इत्यादि। पक्षे ज्ञानवानित्यादि। नैकाचः किं, स्वं धनम् अस्त्यस्येति न स्वी, परन्तु स्ववान्, स्वामीति स्वयं वक्ष्यति। पाणिनिः ५।२।११५। "इनिठनोरेकाचरात् प्रतिषेधः" इति वार्त्तिकञ्च।

† शम् कम् इति मान्ताव्ययाभ्याम् एते सप्त प्रत्ययाः स्युः अस्त्यर्थे। शं कल्याणं विद्यतेऽस्य शंयः, अत्र टिलोपाभावबीजं (४३०) द्रष्टव्यम्। एवं (४३१) नञा निर्द्दिष्टमनित्यमिति न्यायात् दान्तत्वनिषेधाभावे (५०) मस्यानुस्वारः। एवं शयुरित्यादि। कं वारिणि च मूर्द्धनीत्यमरः। पाणिनिः ५।२।१३८। अत्र द्रष्टव्यम्—बोधलिङ्गप्रकाशिते अष्टके पाणिनीये शिवरामप्रकाशितायाञ्च वैयाकरणसिद्धान्तकौमुद्यां बप्रत्ययो वर्ग्यत्वेन लिखितः, तारानाथतर्कवाचस्पतिप्रकाशितायान्तु सिद्धान्तकौमुद्याम् अन्तःस्थत्वेनेति प्रभेदः। "यो वः प्रत्ययसन्धिजः" इति नियमात्तु अन्तःस्थएव भवितुमर्हति।

एभ्य एते क्रमात् स्युः अस्त्यर्थे वा। गोमी।*

## ४४७। नाम्न्यस्त्यर्थेऽचो घः।

(नाम्नि ७।, अस्त्यर्थे ७।, अचः ६।, घः १।)।†

स्वामी, तृणसः, मेधिरः रथिरः, दन्तुरः, काण्डीरः अण्डीरः, द्युमः द्रुमः, बलूलः वातूलः, बलिभः तुन्दिभः, पर्व्वतः मरुत्तः, चूडालः मांसलः, फेनिलः पिच्छिलः, लोमशः रोमशः, पामनः अङ्गना, प्राज्ञः श्राद्धः, मधुरः कुञ्जरः, केशवः मानवः, रजस्वला कृषीवलः, फलिनः बर्हिणः, ऊर्णायुः अहंयुः, शृङ्गारकः वृन्दारकः, निद्रालुः दयालुः, अर्शसः वैजयन्तः, वातकी अतिसारकी।‡

---

* क्रमो यथा—

| गो | तृण | मेधा | दन्त | काण्ड | द्यु | बल | बलि | पर्व्व | चूडा | फेन | लोम |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मिन् | स | इर | उर | ईर | म | ऊल | इभ | त | ल | इल | श |

| पाम | प्रज्ञा | मधु | केश | रजस् | फल | ऊर्णा | शृङ्ग | निद्रा | अर्शस् | वात |
|---|---|---|---|---|---|---|---|---|---|---|
| न | ण | र | व | वल | इन | यु | आरक | आलु | अ | किन् |

वातादेरित्यादिपदं सर्व्वत्र योज्यं। अत्र यद्यपि सामान्येनोक्तं तथापि अर्थविशेषे ज्ञातव्यः। गावो विद्यन्तेऽस्य गोमी, पक्षे गोमान्। पाणिनिः ५।२।११४; ४।२।८०; "मेधारथाभ्यामिरन्निरचौ वक्तव्यौ" इति वार्त्तिकम; ५।२।१०६; १११; १०८; "बलाच्चोलः" इति वार्त्तिकम्; ५।२।१३९; "पर्व्वमरुद्भ्यां तप्" इति वार्त्तिकम्; ५।२।९६; ९९; १००; १०१; १०७; १०९; ११२; "फलबर्हाभ्यामिनच्" इति वार्त्तिकम्; ५।२।१२३,१४०; "शृङ्गवृन्दाभ्यामारकन्" इति वार्त्तिकम्; निद्रालुः दयालुरिति निपूर्व्वद्राधातोः दयधातोश्च आलुच्प्रत्ययेन सिद्धं (पा. ३।२।१५८) न तु तद्धितप्रत्ययेन; ५।२।१२७; १२९।

† अचो दीर्घः स्यात् अस्त्यर्थप्रत्ययेषु, नाम्नि वाच्ये। पाणिनिः ६।३।१२०।

‡ स्वोऽस्यास्तीति स्वमस्तीति वा स्व इत्यस्मात् मिन्, अनेन दीर्घः, स्वामी ईश्वरः। तृणम् अस्त्यस्य तृणसः, एवं मेधा अस्त्यस्य मेधिरः इत्यादि वाक्यं। यथासम्भवं (२५८) इवर्णावर्णलोपः। सर्व्वत्र अभिधानात् स्त्रीपुंलिङ्ग-व्यवस्था।

## ४४८ । वाग्मि वाचाट वाचालाः ।

(वाग्मि—वाचालाः १॥) ।

वाचोऽस्त्यर्थे एते निपात्यन्ते । *

## ४४९ । जन-खलादि-गो-रथ-वातात् तेन्-त्रकड्योलं सङ्घे ।

(जन—वातात् ५।, त-इन्-त्र-कड्य-ऊलं १।, सङ्घे ७।) ।

जनता बन्धुता, खलिनी हलिनी, गोत्रा, रथकड्या, वातूलः ।†

---

एतद्भिन्नानि—चूडादित्वात्—("सिध्मादिभ्यश्च" इति तु पाणिनिः ५।२।९७) मांसलः अंसलः पांशुलः श्यामलः पिङ्गलः कपिलः कण्डूलः पृथुलः पक्ष्मलः मञ्जुलः मृदुलः चटुलः पेशलः शुक्लः तुन्दिलः श्रीलः कुशलः धारालः शीतलः पुष्कलः श्लेष्मलः । रोमादित्वात्—कपिशः कर्कशः गिरिशः । पामादित्वात्—वामनः दद्रुणः लक्ष्मणः । प्रज्ञादित्वात्—वार्त्तः शार्करः सैकतः वैद्यः बाभवः । मध्वादित्वात्—शौषिरः ऊषरः पुष्करः मुखरः खरः नखरः पाण्डुरः बन्धुरः कुञ्जरः नगरं । केशादित्वात्—विषुवः राजीवः गाण्डीवः अर्णवः मणिवः हिरण्यवः । रजआदित्वात्—दन्तावलः शिखावलः पर्षद्वलः ऊर्जस्वलः भ्रातृवलः पुत्रवलः उत्साहवलः । फलादित्वात्—मलिनः । ऊर्णादित्वात्—शुभंयुः । निद्रादित्वात्—तन्द्रालुः लज्जालुः श्रद्धालुः कृपालुः हृदयालुः, शीतालुः उष्णालुः हिमेलुः—इत्यादीनि प्रयोगानुसारात् ज्ञेयानि ।

* वाच्शब्दस्य स्थाने एते निपात्यन्ते अस्त्यर्थे । निपातो ह्यर्थविशेषे इति वाग्मीति प्रशंसायां, वाचाटवाचालौ निन्दायां, बहुभाषित्वादस्त्यर्थे इति । "यो हि सम्यग्बहु भाषते स वाग्मी" । यौ तु कुत्सितं बहु भाषेते तौ वाचाटवाचालौ । अतएव पाणिनौ (५।२।१२४,१२५) सूत्रद्वयं, परसूत्रे च "कुत्सित इति वक्तव्यम्" इति वार्त्तिकम् ।

† जनश्च खलश्च तौ आदी यस्य स जनखलादिः, स च गौश्च रथश्च वातश्च तत्तस्मात् । तश्च इन्च त्रश्च कड्यश्च ऊलश्च तत् । समूहार्थे जनादेस्तः खलादेरिन् गोशब्दात् त्रः रथात् कड्यः वातादूलः स्यादित्यर्थः । जनानां समूहः जनता, एवं बन्धुता गजता । खलानां समूहः खलिनी, एवं हलिनी बिसिनी पद्मिनी कुमुदिनी । जनादिः खलादिश्च प्रयोगतो ज्ञेयः । गवां समूहः गोत्रा, रथानां समूहः रथकड्या, वातानां समूहः वातूलः । ऊलप्रत्ययान्तस्य पुंस्त्वम् अन्येषां स्त्रीत्वञ्च अभिधानात् । पाणिनिः ४।२।४३, ५०,५१ ; "वातात् समूहे च" इति "खलादिभ्यः इनिः" इति च वार्त्तिकम् । अत्र रथकड्या इत्यपि पाठान्तरं दृश्यते ।

## ४५० । सङ्ख्याया डट् पूरणे ।

(सङ्ख्यायाः ५।, डट् ।१।, पूरणे ७।) ॥

एकादशानां पूरणः एकादशः । *

## ४५१ । नोऽसङ्ख्यादेर्मट् ।

(नः ५।, असङ्ख्यादेः ५।, मट् ।१।) ।

असङ्ख्यादेर्नान्तसङ्ख्याया मट् स्यात् पूरणे । पञ्चमः । †

## ४५२ । तमट् षष्ठ्यादेः । (तमट् ।१।, षष्ठ्यादेः ५।) ॥

असङ्ख्यादेः षष्ठ्यादेः पूरणे तमट् स्यात् ।

षष्टितमः सप्ततितमः । सङ्ख्यादेस्तु एकषष्टः । ‡

## ४५३ । शतादि-मास-संवत्सरात् । (५।) ।

एभ्यस्तमट् स्यात् पूरणे । शततमः एकशततमः, मासतमः संवत्सरतमः । §

---

* सङ्ख्यावाचकेभ्यो डट् स्यात् पूरणे । डटावितौ, अकारस्थितिः, डित्वात् (१२६) टिलोपः, टित्वात् (२५७) ईप् । पूर्य्यते सम्पद्यते अनेनेति पूरणः करणेऽनट् । दशपर्य्यन्तानां विशतप्रत्ययेन बाधितत्वात् तान् विहाय उदाहरति, एकादशानां पूरणः एकादशः इति, एकादश सङ्ख्या येन करणेन पूर्णा भवति स एकादशः पुत्रः, दशपुत्रेभ्यः पर इत्यर्थः । एवं द्वादश इत्यादि । स्त्रियाम् एकादशी इत्यादि । पाणिनिः ५।२।४८ ।

† सङ्ख्या आदिर्यस्य स सङ्ख्यादिः, न सङ्ख्यादिरसङ्ख्यादिस्तस्मात्, न इत्यस्य विशेषणं । पञ्चाना पूरणः पञ्चमः (११८) नस्य लुप् । टित्वात (२५७) पञ्चमीत्यादि । एवं सप्तमः अष्टमः नवमः दशमः । असङ्ख्यादेः किं एकादशः द्वादश इत्यादि । एषां मुख्यानामेव ग्रहणं, तेन अतिपञ्चानां पूरण इत्यादौ न स्यात् । पाणिनिः ५।२।४९ ।

‡ षष्टिरादिर्यस्य स षष्ठ्यादिस्तस्मात् । षष्टेः पूरणः, सप्ततेः पूरणः । एवं ऊनषष्टितमः, अशीतितम इत्यादि । एकषष्ट इति (४५०) डट् । पाणिनिः ५।२।५८ ।

§ शतादिश्च मासश्च संवत्सरश्च तत्तस्मात् । पृथक् योगात् असङ्ख्यादेरिति

## ४५४। विंशत्यादेर्वा। (विंशत्यादेः ५।, वा ।१।)।

विंशतितमः विंशः, त्रिंशत्तमः त्रिंशः। *

## ४५५। चतुः-षड्-डति-कतिपयात् थट्। (चतुः—कतिपयात् ५।, थट् ।१।)।

चतुर्थः षष्ठः कतिथः कतिपयथः। †

## ४५६। बहु-गण-पूग-सङ्घातोस्तिथट् तल्लोपश्च। (बहु—अतोः ५।, तिथट् ।१।, तल्लोपः १।, च ।१।)।

बहुतिथः यावतिथः। ‡

---

नानुवर्त्तते, तेन सङ्ख्यादिभ्योऽसङ्ख्यादिभ्यो वा एभ्य इत्यर्थः। शतस्य पूरणः, एकशतस्य पूरणः, मासस्य पूरणः, संवत्सरस्य पूरणः। एवं एकमासतमः एकवत्सरतम इत्यादि। पाणिनिः ५।२।५७।

* विंशतिरादिर्यस्य स तस्मात्। आदिपदेन नवतिपर्य्यन्तं व्यवस्थीयते। सङ्ख्यादेरसङ्ख्यादेर्वा विंशत्यादेस्तमट् स्याद्वा पूरणे। विंशतेः पूरणः विंशतितमः, पक्षे (४५०) डट्, (१२६) तेर्लोपः, (२५८) अकारलोपः, विंशः। एवं त्रिंशत्तमः त्रिंशः इत्यादि। सङ्ख्यादेस्तु एकविंशतितमः एकविंश इत्यादि। पूर्व्वेण (४५२) सङ्ख्यादिवर्जनेऽपि, अनेन सङ्ख्यादेः षष्ट्यादेः पूरणे तमट् वा वक्तव्यः, तेन एकषष्टितमः एकषष्ट इत्यादि। पाणिनिः ५।२।५६।

† चतुर् च षष् च डतिश्च कतिपयश्च तत्तस्मात्। डतिरिति प्रत्ययः (५०८), तेन तदन्तानां कति-यति-ततीनां ग्रहणं। एभ्यः पूरणे थट् स्यादित्यर्थः। चतुर्णां पूरणः चतुर्थः, एवं षष्ठ इत्यादि। विद्यमानविभक्तिकानां पदत्वं स्वाभाविकं, लुप्तविभक्तिकानान्तु पदत्वं आतिदेशिकमेव, ततश्च आतिदेशिकमनित्यमिति न्यायात्, चतुर्थः षष्ठ इत्युभयत्र पदत्वाभावेन विरामाभावात् (१०२) रस्य न विसर्गः, (१५५) षस्य च न ड इति। पाणिनिः ५।२।५१।

‡ बहुश्च गणश्च पूगश्च सङ्घश्च अतुश्च तत्तस्मात्। अतुरिति प्रत्ययः (५०८), तेन यावत् तावत् एतावत् कियत् इयत् इत्येतेषां ग्रहणं। एभ्यः पूरणे तिथट् स्यात्, तिथट् परे अव्यवहितपूर्ववर्त्ति-तकारस्य लोपश्च इत्यर्थः। बहूनां पूरणः इत्यादि वाक्यं। पाणिनिः ५।२।५२,५३।

४५७ । द्वितीय तृतीय तुर्य्य तुरीयाः । (१॥) ।

एते निपात्याः । *

४५८ । सङ्ख्याया धाच् प्रकारे ।

(सङ्ख्यायाः ५।, धाच् ।१।, प्रकारे ७।) ।

चतुःप्रकारं चतुर्द्धा । †

४५९ । द्वैधं द्वेधा त्रैधं त्रेधा षोढ़ैकध्यं वा ।

(द्वैध—ऐकध्यं ।१॥, वा ।१।) ।

एते निपात्यन्ते वा प्रकारे । पक्षे द्विधा त्रिधा षड्धा एकधा । ‡

४६० । सङ्ख्याया अवयवे तयट् ।

(सङ्ख्यायाः ५।, अवयवे ७।, तयट् ।१।) ।

चतुरवयवं चतुष्टयं । §

---

* द्वयोः पूरणः, त्रयाणां पूरणः, चतुर्णां पूरणः, इति वाक्येषु क्रमेण एते निपात्याः । तुर्य्य इत्यत्र (२२८) तद्धितयकारवर्जनात् न दीर्घः । पाणिनिः ५।२।५४,५५; तुर्य्यतुरीयेत्यत्र "चतुरश्छयतावाद्यक्षरलोपश्च" इति वार्त्तिकञ्च ।

† सङ्ख्यायाः इत्यनेन (१०१) सङ्ख्यातुल्यानामपि ग्रहणं, तेन सङ्ख्यावाचकेभ्यः डत्यतुबहुगणेभ्यश्च धाच् स्यात् प्रकारे । चकारोऽव्ययार्थः । प्रकारो भेदसादृश्ये इत्यमरः । चतुःप्रकारमिति चत्वारः प्रकारा यस्य तत् । एवं कतिधा इत्यादि । सर्व्वविभक्त्यर्थे एवायं प्रत्ययः, तेन चतुःप्रकारान् भुङ्क्ते, चतुःप्रकारैः भुङ्क्ते इत्यादौ चतुर्द्धा भुङ्क्ते इति । पाणिनिः ५।३।४२ । अपिच (५।४।२०) इति पाणिनिसूत्रेण बहोः क्रियाभ्यावृत्तिगणने वर्त्तमानात् स्वार्थे धाप्रत्ययो वा स्यात् ; यथा, बहुधा दिवसस्य भुङ्क्ते, बहुवारानित्यर्थः । अतएव वारार्थेऽपि धा इति जौमराः । यथा, तद्धितपरिशिष्टे "बहोरविप्रकर्षे धा वा" इति सूत्रकृता गोयीचन्द्रेण "बहुशब्दादविप्रकर्षे वारे वाच्ये धा वा स्यात्" इति वृत्तिर्लिखिता ।

‡ द्विप्रकारं, त्रिप्रकारं, षट्प्रकारं, एकप्रकारमिति यथाक्रमं वाक्यानि । षड्धेति (१५५) डे कृते, दान्तटवर्गपरत्वात् न (४७) धस्य ढः । पाणिनिः ५।३।४४,४५,४६ ; षोढ़ेत्यत्र "धासु वा" इति वार्त्तिकञ्च ।

§ पुनः सङ्ख्याग्रहणं डत्यतुबहुगणानामप्राप्त्यर्थं । अवयववृत्तेः सङ्ख्यायाः तयट् स्यात्,

## ४६१ । द्वित्रेर्वायट् । (द्वित्रेः ५।, वा ।१।, अयट् ।१।) ।

द्वयं द्वितयं, त्रयं त्रितयं । *

## ४६२ । तरतमौ द्विबहूनामेकोत्कर्षे ।

(तर-तमौ १॥, द्वि-बहूनां ६॥, एकोत्कर्षे ७।) ।

द्वयोरेकस्यातिशये तरो बहूनां तमः स्यात् ।
अयमनयोरतिशयेन विद्वान् विद्वत्तरः, अयमेषामतिशयेन विद्वान् विद्वत्तमः । शुभ्रतरा शुभ्रतमा । †

## ४६३ । रूपकल्पे चेबप् स्वं वा त्रित्तु पुंवच्च ।

(रूप-कल्पे ७।, च ।१।, ईप् ऊप् ।१।, स्वं १।, वा ।१।, त्रित् ।१।, तु ।१।, पुंवत् ।१।, च ।१।) ।

---

ट इत् । द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः । चत्वारोऽवयवा यस्य तत् (कुलं) चतुरवयवं इति वाक्ये चतुष्टयं, (१०२,६५,४३८,४७) । स्त्रिया चतुष्टयी । पाणिनिः ५।२।४२।

* द्वौ च त्रयश्च तत् तस्मात् द्वित्रेः । आभ्यां अयट् स्याद्वा अवयवे । द्व्यवयवं त्र्यवयवं इति वाक्यद्वयं, द्वि-त्रि-शब्दाभ्यां अयट्, (२५८) इकार-लोपः । पक्षे पूर्व्वेण तयट् । स्त्रियां द्वयी, त्रयी । पाणिनिः ५।२।४३ ।

† तरश्च तमश्च तौ । द्वौ च बहवश्च द्विबहवस्तेषां, (३१३) निर्द्धारणे षष्ठी । द्विबहूनामिति बहुवचनान्तत्वेऽपि शब्दसाम्यात् तरतमाभ्यां क्रमो ज्ञेयः । उत्कर्षोऽतिशयः । एवम् उत्कर्षार्थ-प्रत्ययान्ताः पूर्व्वलिङ्गा एव । विद्वत्तरः विद्वत्तमः, उभयत्र विद्यायाः उत्कर्षो गम्यते, (१८३) दङ्, (६४) दस्य त । इयमनयोरतिशयेन शुभ्रा शुभ्रतरा, आसामतिशयेन शुभ्रा शुभ्रतमा, (३२७) पुंवद्भावः । एवं अतिशयेन साध्वी साधुतरा इत्यादि । अत्र द्रष्टव्यम्—सूत्रे उत्कर्षशब्दं प्रयुज्य वृत्तौ अतिशयशब्दः प्रयुक्तः । अस्यायमभिप्रायः—विद्वत्तरः विद्वत्तमः इतिवत् मूर्खतरः मूर्खतमः इत्यपि भवति । नहि प्रकर्षमात्रे एव तरतमौ, परन्तु अपकर्षस्य अतिशयेऽपि । गुणानामुत्कृष्टापकृष्टत्वेऽपि तदतिशय एव तरतमप्रयोजकः । अतएव तद्धितपरिशिष्टे श्रीमता गोयीचन्द्रेण "द्विबहुभ्योऽत्यर्थे तरतमौ" इति सूत्रं विन्यस्य "अतिशयश्च समानरूपापेक्ष एव भवति" इति उक्तम् । पाणिनिः ५।३।५५,५७ ।

चकारात् तर-तम-रूप-कल्पेषु ईबन्तमूबन्तञ्च स्वं स्याद्वा उट्-ऋदित्तु पुंवच्च। स्त्रितरा स्त्रीतरा, वामोरुतरा वामोरूतरा। विदुषितरा विदुषीतरा विद्वत्तरा, सतितरा सतीतरा सत्तरा।*

## ४६४। त्यादेश्च रूपः। (त्यादेः ५।, च ।१।, रूपः १।)।

त्वेस्त्यादेर्योत्कर्षे रूपः स्यात्। पटुरूपः, पचतिरूपं।†

## ४६५। किमेव्याच्चाद्रव्ये चतरां चतमां।

(किम्-ए-व्यात् ५।, च ।१।, अद्रव्ये ७।, चतरां-चतमां ।१॥)।

किम एदन्तात् व्यात् त्याद्यन्ताच्च द्विबहूनामेकोत्कर्षे चतरां चतमां स्तः नतु द्रव्ये। किन्तरां प्राह्णेतरां उच्चैस्तरां, पचतितरां। एवं चतमां। द्रव्ये तु उच्चैस्तरस्तरुः।‡

---

* रूपश्च कल्पश्च रूपकल्पं तस्मिन्। ईप् च ऊप् च ईबूप्। उश्च ऋश्च वृ, वृ इत यस्य वृित्। ईबन्तं ऊबन्तञ्च पदं ह्रस्वं वा स्यात् तरतमरूपकल्पेषु परेषु, उकारेत् ऋकारेत्तु पुंवच्च वा इत्यर्थः। (३२७) पुंवतस्त्वक्तेत्यनेन नित्ये प्राप्ते अनेन विकल्प-विधानं। इयमनयोरतिशयेन स्त्री, इयमनयोरतिशयेन वामोरुः, इति वाक्यद्वयं। उभयत्र स्त्रियाः सौन्दर्यगत उत्कर्षो गम्यते। अनेन वा ह्रस्वः। विदधातोः शतृ (११०३) तस्य स्थाने क्वसु प्रत्यये, (२५७) ईपि, (२१९) वस्य उः विदुषी इति, ततः इयमनयोरतिशयेन विदुषी, एवं असधातोः (११००) शतृप्रत्यये ईपि सती, ततः इयमनयोरतिशयेन सती इति तरप्रत्यये, अनेन वा ह्रस्वः, पक्षे पुंवच्च। पाणिनिः ६।३।३५।

† येन विधिस्तदन्तस्येति न्यायात् त्यादेः त्याद्यन्तात् चकारात् लिङ्गाच्च रूपः स्यात्। अत्र एकप्रत्ययस्य अर्थद्वयेन क्रमान्वयासम्भवात् केवलम् उत्कर्षे इत्येव अनुवर्त्तते। अतिशयेन पटुः पटुरूपः, अतिशयेन पट्वी पटुरूपा, (३२७) पुंवद्भावः। अतिशयेन पचति पचतिरूपं, अत्र क्रियाया उत्कर्षः। एवं अतिशयेन पचन्ति पचन्तिरूपं इत्यादिषु कर्त्तृवचनानुसारेण तिबादयः प्रयुज्यन्ते, परन्तु क्रियायाः पुंस्त्वाद्यभावेन रूपान्त-क्रिया-पदस्य लिङ्गनिर्णयाभावे सामान्यत्वान्नपुंसकं, एवं क्रियायाः सङ्ख्याभावेन च प्रथमोपस्थितमेकवचनमेव। पाणिनिः ५।३।६६ ; १।१।३८।

‡ किम् च एश्च व्यश्च किमेव्यं तस्मात्। न द्रव्यमद्रव्यं तस्मिन्। चतरां च चतमां च तौ। मण्डूकगत्या द्विबहूनामेकोत्कर्षे इति अनुवर्त्तते। चकारात् त्याद्यन्ताच्च।

## ४६६। गुणाद्विष्ठेयसू।

(गुणात् ५।, वा ।१।, इष्ठ-ईयसू १॥)।

**गुणवाचिनो द्विबहूनामेकोत्कर्षे क्रमादिष्ठेयसू ईयस्विष्ठौ वा स्तः।***

## ४६७। ञीमंश्च ङिन्नैकाचः।

(ञि-इमन् ।१।, च ।१।, ङित् ।१।, नैकाचः ५।)।

**ञि-रिमन् इष्ठ ईयसुश्च अनेकाचो लेः परो ङित् स्यात्।**

**लघिष्ठः, लघीयान्।†**

---

किन्तु चानुकृष्टं नोत्तरत्र इति न्यायात् त्यादन्तस्य न पश्चादनुवृत्तिः। द्रव्याणि यथा—क्षित्यप्तेजोमरुद्व्योम-काला दिग्देहिनौ मन इति नव। द्वयोरेकोत्कर्षे चतरां, बहूनामेकोत्कर्षे चतमामिति क्रमः। चकारेत् अव्ययार्थं। अत्र किमादीनां मध्ये ये गुणादिवाचिनो द्रव्यवाचिनश्च तेभ्यो गुणादौ वाच्ये एतौ प्रत्ययौ स्तः, द्रव्यवाच्ये तु न स्त इत्यर्थः। इदमनयोरतिशयेन किम् किन्तरां, किम्शब्दोऽत्र कुत्सितार्थः। द्वयोरतिशयेन प्राह्णे प्राह्णेतरां, एकारान्तात् प्रत्ययविधानसामर्थ्यात् सप्तमीविभक्तेरलुक्। अयमनयोरतिशयेन उच्चैः उच्चैस्तरां (शब्दः), एवं नीचैस्तरां, सुतरां नितरामित्यादि। इदमनयोरतिशयेन पचति पचतितरां, अत्र पचनक्रियाया उत्कर्षः। उच्चैस्तर इति, यद्यपि द्रव्ये (जातौ च) प्रकर्षाभावस्तथापि गुणक्रियाप्रकर्षो यदा द्रव्ये आरोप्यते तदैवायं प्रतिषेधः, पूर्वेण (४६२) तरतमाविति। एवमेव गोयीचन्द्रस्तद्धितपरिशिष्टे—"जातिद्रव्ययोः प्रकर्षाभावात् गोतरो डित्थतम इति न भवति। यदात्रापि क्रियागुणप्रकर्षो विवक्ष्यते तदा तरतमाभ्यां भवितव्यमेव।" पाणिनिः १।१।२२ ; ५।४।११।

* गुणवाचिन इति गुणवद्वाचिन एव ग्रहणं, नतु गुणमात्रवाचिनः, तेन शुक्लीयान् घटः इति स्यात्, नतु घटस्य शुक्लीयानिति। अतएव "गुणवचनेभ्यो मतुपो लुगिष्टः" इति भाष्यलिखनम्। "शुक्लोगुणोऽस्यास्तीति शुक्लः पटः" सिद्धान्तकौमुदी। द्विबहूनामेकोत्कर्षे इति अनुवर्त्तते। यद्यपि पाणिन्यादिव्याकरणेषु (पाणिनिः ५।३।५५, ५७,५८) द्विबहूनामित्यनेन ईयस्विष्ठयोः क्रमो दृश्यते, तथापि, वोपदेवेन क्रमविपरीतप्रयोगदर्शनात्, इष्ठेयसू ईयस्विष्ठौ वा स्त इति उक्तौ क्रमाभावः कथितः।

† ञिश्च इमन् च तत् ञीमन्। चकारादिष्ठेयसू च। नास्ति एकोऽच् यस्य स नैकाच् तस्मात्। इमन्साहचर्यात् ञिरत्र लेः पर एव, तेन नागरवतीत्यादौ न प्रसङ्गः। अयमनयोरेषां वा अतिशयेन लघुः लघिष्ठः, इष्ठे, अनेन तस्य ङिद्भावे,

४६८। लुङ्मद्वद्विनां। (लुक् ।१।, मत्-वत्-विनां ६॥)।

मतिष्ठः। मेधिष्ठः। *

४६९। टन् लोप्यः। (टन् ।१।, लोप्यः १।)।

करिष्ठः। †

४७०। वाढान्तिक स्थूल दूर युव क्षिप्र क्षुद्र प्रिय स्थिर स्फिरोरु गुरु बहुल तृप्र दीर्घ ह्रस्व वृद्ध वृन्दारकाः—साध नेद स्थव दव यव क्षेप क्षोद प्र स्थ स्फ वर गर बंह त्रप द्राघ ह्रस वर्ष वृन्दाः।

(वाढ—वृन्दारकाः १॥, साध—वृन्दाः १॥)।

एषां स्थाने क्रमादेते स्युः आदिषु।

साधिष्ठः नेदिष्ठः स्थविष्ठः दविष्ठः यविष्ठः क्षेपिष्ठः क्षोदिष्ठः

---

(१२६) टिलोपः। एवं लघीयानिति वा। पक्षे लघुतरः लघुतम इति। पाणिनिः ६।४।१५५।

* मश्च वश्च विन् च तेषां। अर्थवशात् विभक्तेर्विपरिणाम इति न्यायात् आदेः सप्तम्यन्तत्वेनानुवृत्तिः। तेन—जि इमन् इष्ठ ईयसु एषु परेषु मत्-वत्-विनां लुक् स्यात्। अतिशयेन मतिमान् मतिष्ठः, अनेन मतोर्लुकि, ङित्वात् टि-लोपः। अतिशयेन मेधावान् मेधावी वा इति वाक्यद्वये वतु-विनोर्लुकि ङित्वात् टिलोपे मेधिष्ठ-इति। एवं मतीयसी मेधीयसीत्यादि। पाणिनिः ५।३।६५।

† टन् लोप्यः स्यात् आदिषु। अतिशयेन कर्त्ता करिष्ठः, अत्र तृणो लोपे, त्यलोपे त्यलक्षणमिति न्यायात्, (५४२) गुणे एकाच्त्वात् न द्विर्भावः। एवं करीयान्। कर्त्तुर्भावः करिमा। कर्त्तारमाचष्टे कारयति, अत्र तृणो लोपे, तत्सम्बन्धगुणस्य निवृत्तौ, णौ परे पुनः (५७७) वृद्धिः। पाणिनिः ६।४।१५४।

प्रेष्ठ: स्थेष्ठ: स्फेष्ठ: वरिष्ठ: गरिष्ठ: बंहिष्ठ: त्रपिष्ठ: द्राघिष्ठ: ह्रसिष्ठ: वर्षिष्ठ: वृन्दिष्ठ: । *

## ४७१ । प्रशस्य: श्र: । (प्रशस्य: १।, श्र: १।) ।

श्रेष्ठ: । †

## ४७२ । ज्यो वृद्धश्चेयस्त्वा: ।

(ज्य: १।, वृद्ध: १।, च ।१।, ईयस्त्वी ।१।, आ: १।) ।

वृद्ध: प्रशस्यश्च आदौ ज्य: स्यात्, तस्माच्चेयसोरी आ: स्यात् । ज्येष्ठ: ज्यायान् । ‡

---

* वाढ़श्च अन्तिकश्च इत्यादि, साधश्च नेदश्चेत्यादि च द्वन्द्व: । स्फिरो वह्वर्थ:, उरुर्म्महार्थ:, तृप्नोतीति तृप्र: औणादिको रेफ: । वृन्दारको देवो मुख्यो वा । क्रमो यथा—

| वाढ़ | अन्तिक | स्थूल | दूर | युवन् | क्षिप्र | क्षुद्र | प्रिय | स्थिर |
| --- | --- | --- | --- | --- | --- | --- | --- | --- |
| साध | नेद | स्थव | दव | यव | क्षेप | क्षोद | प्र | स्थ |
| स्फिर | उरु | गुरु | बहुल | तृप्र | दीर्घ | ह्रस्व | वृद्ध | वृन्दारक |
| स्फ | वर | गर | बंह | त्रप | द्राघ | ह्रस | वर्ष | वृन्द |

एषां मध्ये ये गुणवाचका न भवन्ति तेभ्योऽपि इष्ठादयो भवन्ति, इष्ठादिषु परेषु आदेशविधान-सामर्थ्यात् । अयमनयोरेषां वा अतिशयेन वाढ़: साधिष्ठ:, एवं सर्व्वत्र प्रथमान्तेन वाक्यं । इष्ठप्रत्यये अनेन साधादि-आदेशे (४६७) डित्त्व (१२६) टिलोप: । प्रेष्ठ: स्थेष्ठ: स्फेष्ठ: एतेषु एकाच्त्वात् न डित्त्वं । एकाच्-वर्जनसामर्थ्यादेव (२५८) यथोरिति न अकारलोप: । रामतर्कवागीशस्तु प्र स्थ स्फान् विना सर्व्वे हसन्तादेशा:, एकाच्त्वात् आदीनां न डित्त्वमिति वदति । एतन्मतञ्च पाणिनिसम्मतम्, वर् गर् बंहि वर्षि द्राघि त्रप् इत्यादि-हसन्तादेशप्रयोगात् । पाणिनि: ५।३।६३,६।४।१५६, १५७ ।

† प्रशस्य: श्र: स्यात् आदौ । अयमनयोरेषां वा अतिशयेन प्रशस्य: श्रेष्ठ: । एवं श्रेयान् । प्रशस्यस्य भाव: श्रेमा । पाणिनि: ५।३।६० ।

‡ ईयसोरी ईयस्त्वी इति लुप्तप्रथमैकम् । अयमनयोरेषां वा अतिशयेन वृद्ध: प्रशस्यो वा ज्येष्ठ: । एवं ज्यायान्, अत्र ज्यादेशात् परस्य ईयसोरीकारस्य आ. । पूर्व्वेण (४७०) वर्षिष्ठ: वर्षीयानिति च भवति । पाणिनि: ५।३।६१,६२ ।

४७३। पृथु मृदु कृश भृश दृढ परिवृढस्यर्ऋः।

(पृथु—परिवृढस्य ६।, ऋत।१।, रः १।)।

एषामृकारस्य आदौ रः स्यात्। प्रथिष्ठः। *

४७४। युवाल्पौ कन् वा।

(युवाल्पौ १॥, कन्।१।, वा।१।)।

कनिष्ठः, यविष्ठः अल्पिष्ठः। एवमीयसुः। †

४७५। गुणादिमन् भावे।

(गुणात् ५।, इमन्।१।, भावे ७।)।

गुणवाचिन इमन् स्यात् भावे। लघिमा। ‡

४७६। भूयोभूमभूयिष्ठाः।

(भूयस्-भूमन्-भूयिष्ठाः १॥)।

---

* पृथुश्च मृदुश्चेत्यादि द्वन्द्वे तस्य। अयमनयोरेषां वा अतिशयेन पृथुः प्रथिष्ठः। एवं म्रदिष्ठः क्रशिष्ठः भ्रशिष्ठः द्रढिष्ठः परिव्रढिष्ठः, प्रथीयान्, प्रथिमा इत्यादि च। पाणिनिः ६।४।१६१।

† युवा अल्पश्च कन् स्याद्वा आदौ। अयमनयोरेषां वा अतिशयेन युवा अल्पो वा कनिष्ठः इति युवाल्पयोरुदाहरणं, पक्षे युवन्शब्दस्य (४७०) यविष्ठः, अल्पशब्दस्य अल्पिष्ठः। एवं कनीयान्, पक्षे यवीयान् अल्पीयान्। पाणिनिः ५।३।६४।

‡ गुणवाचिन इति गुणवद्वाचिन इत्यर्थः। तेन रूपस्य भावः रूपत्वं, रसस्य भावः रसत्वमित्यादि, न तु रूपिमा रसिमा इत्यादि। शुक्लिमा कालिमा नीलिमा इत्यादि तु शुक्लादिगुणवतो घटादेरेव धर्म्मः। लघोर्भावः, लघ्व्या भावः, लघुनो भाव इति वाक्यत्रयेऽपि लघिमा, (३२७) पुंवद्भावः, (४६७) ङित्वं, (१२६) टिलोपश्च। इमन्-प्रत्ययान्तः पुंलिङ्गएव अभिधानात्, केवलं प्रियस्य भावः प्रेमा प्रेम इति पुंलिङ्गः क्लीबलिङ्गश्च। प्रेमा ना प्रियता हार्द्दं प्रेम स्नेह इत्यमरः। पाणिनिः ५।१।१२२।

बह्वी-रीयस्निमनिष्ठास्वस्य भूमादेशो निपात्यते। *

# ४७७। त्यादेश्चोने कल्पदेश्यदेशीयाः।

(त्यादेः ५।, च।१।, ऊने ७।, कल्प-देश्य-देशीयाः १॥)।

लेस्त्याद्यन्ताच्च ईषदूनेऽर्थे एते स्युः।

ईषदूनो विद्वान्—विद्वत्कल्पः विद्वद्देश्यः विद्वद्देशीयः। तार्किक-देशीया। पचतिकल्पं। †

# ४७८। लेर्वहुः प्राक्। (लेः ५।, वहुः १।, प्राक् ।१।)।

ईषदूनः पटुः वहुपटुः। ‡

# ४७९। पाशः कुत्सायां। (पाशः १।, कुत्सायां ७।)।

कुत्सितो भिषक् भिषक्पाशः। §

---

* अतिशयेन बहुरिति बहुशब्दादीयसुप्रत्यये भूयः, इष्ठप्रत्यये भूयिष्ठः। बहोर्भाव-इति इमनप्रत्यये भूमा इति। पाणिनि: ६।४।१५८ १५९।

† ति आदिर्यस्य स त्यादिस्तस्मात्। आ (ईषत्) ऊनः ओनस्तस्मिन्, (२६) अकारलोपः। कल्पश्च देश्यश्च देशीयश्च ते। विद्वत्कल्प इति (१८३) विरामे परे दङ्। एवं विद्वद्देश्यः विद्वद्देशीयः। एषां पूर्व्वलिङ्गतैव। ईषदूना दीर्घा दीर्घकल्पा दीर्घदेश्या दीर्घदेशीया, एषु (३२७) ग्रसन्ततरादित्वात् पुंवद्भावः। ईषदूना तार्किकी तार्किकदेशीया, (३५०) पुंवद्भावः। ईषदूनं यथा स्यात्तथा पचति पचतिकल्पं, एवं पचतःकल्पं, पचन्तिकल्पमित्यादि। पाणिनि: ५।३।६७।

‡ लेः पुनरुपादानं त्यादिनिवृत्त्यर्थं। स्याद्यन्तात् वहुः स्यात्, सच वहुः परत्र जातः सन् पूर्व्वः स्यादित्यर्थः। वहुपटुरिति विभक्तेर्लुकि कृते, पुनर्लिङ्गसंज्ञायां विभक्तिः। ईषदूना विदुषी वहुविदुषी, अत्र वहुप्रत्ययस्य ग्रसन्ततरादित्वेऽपि परस्थायित्वाभावात् न (३२७) पुंवत्। पाणिनि: ५।३।६८। अत्र द्रष्टव्यम्—बोधलिङ्गशिवराममते वहुप्रत्ययो वर्ग्यवकारादिः, तर्कवाचस्पतिमते तु अन्तःस्थादिः; प्रत्ययत्वेन अन्तःस्थादिरेवात्र लिखितः। ४४५ सूत्रटीका द्रष्टव्या।

§ स्याद्यन्तात् पाशः स्यात् कुत्सायां। कुत्सिता विदुषी विद्वत्पाशा, ग्रसन्ततरा-दित्वात् पुंवद्भावः। पाणिनि: ५।३।४७।

**४८०। चरट् भूतपूर्व्वे।** (चरट् ।१।, भूतपूर्व्वे ७।)।

भूतपूर्व्वेऽर्थे चरट् स्यात्। भूतपूर्व्व आढ्यः आढ्यचरः। *

**४८१। ष्या रूप्यश्च।** (ष्याः ५।, रूप्यः १।, च ।१।)।

ष्यन्तात् रूप्यः चरट् च स्यात् भूतपूर्व्वेऽर्थे।

कृष्णस्य भूतपूर्व्वो गौः—कृष्णरूप्यः कृष्णचरः। शुभ्रारूप्यः शुभ्रचरः। †

**४८२। बह्वल्पार्थात् काच्छस् वा।**

(बह्वल्पार्थात् ५।, कात् ५।, चशस् ।१।, वा ।१।)।

बह्वर्थादल्पार्थाच्च कात् परश्शस् स्याद्वा।

बहुशो देहि भूरिशः, अल्पशः स्तोकशः। ‡

---

* भूतपूर्व्वः प्राग्भूतः, तस्मिन्नर्थे स्याद्यन्तात् चरट् स्यात्, ट ईबर्थः। भूतपूर्व्वः आढ्यः (न तु सम्प्रति वर्त्तते), भूतपूर्व्वा आढ्या आढ्यचरी, भूतपूर्व्वा विदुषी विद्वच्चरी, शसन्ततरादित्वात् (३२७) पुंवद्भावः, टित्वात् (२५७) ईप्। पूर्व्वग्रहणात् यत्र वर्त्तमानता प्रतीयते तत्र न स्यात्, यथा ईश्वरो भूत इति। पाणिनिः ५।३।५३।

† ष्यन्तात् षष्ठ्यन्तात्। शुभ्रायाः (गोः) भूतपूर्व्वो गौः शुभ्रारूप्यः, अत्र (३२७) रूप्यवर्ज्जनात् न पुंवद्भावः, शुभ्रचरः अत्र पुंवत् स्यादेव। पाणिनिः ५।३।५४।

‡ बहुश्च अल्पश्च बह्वल्पौ, तौ अर्थौ यस्य स तस्मात्, कात् इत्यस्य विशेषणं। चकारेत् अव्ययार्थम्। पृथक् योगात् भूतपूर्व्वे इत्यस्य, ष्या इत्यस्य च नानुवृत्तिः। बहुश इति बहून् बह्वीः बहूनि वा देहीत्यर्थे कर्म्मकारकात् चशस्। भूरिशः इति भूरि अव्ययं बह्वर्थः। एवं सङ्घशः पूगशः वृन्दशः इत्यादि। बहुभिर्नेत्रैः पश्यति, बहुभ्यो देहि, बहुषु तीर्थेषु स्नातः इत्यादौ बहुशः। अल्पं देहि अल्पशः, एवं स्तोकशः। क्रमश इति तु वक्तव्यं। कात् किं, बहूनां स्वामीत्यत्र न स्यात्। पाणिनिः ५।४।४२। अत्र पाणिनिसूत्रे स्वार्थे शस् स्यात्, परसूत्रे च वीप्सायाम्। चशसो वारार्थस्तु टीकाकृद्भिः प्रयुज्यते, यथा, "कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः" इति कुमारे बहुशो बहुवारमिति मल्लिनाथव्याख्यानम्। भट्टिकाव्ये "अनेकशोऽसौ शपथानशप" इत्यत्र अनेकश इति पदे जयमङ्गलादयोऽप्येवम्।

## ४८३। सङ्ख्यैकार्थात् वीप्सायां।

(सङ्ख्या-एकार्थात् ५।, वीप्सायां ७।)।

कति कति कतिशः गणशः यावच्छः तावच्छः, द्विशः, पादशः।*

## ४८४। चकृत्वस् वारे। (चकृत्वस् ।१।, वारे ७।)।

कति वारान् भुङ्क्ते कतिकृत्वः, गणकृत्वः पञ्चकृत्वः। †

## ४८५। सुच् चतुर्द्विन्त्रेः।

(सुच् ।१।, चतुर्-द्वि-त्रेः ५।)।

एभ्यः सुच् स्यात् वारे। चतुः द्विः त्रिः। ‡

## ४८६। मयट् तद्रूपे। (मयट् ।१।, तद्रूपे ७।)।

---

* एकः एकभागः, एकः अर्थो यस्य स एकार्थः, सङ्ख्या च एकार्थश्च समाहारे तस्मात्। सङ्ख्यावाचक-कारकात् एकभागार्थाच्च कारकात् चशस् स्यात् वीप्सायां। कति कति देहि कतिशः, एवं गणं गणं देहि गणशः, यावन्तं यावन्तं यावच्छः, तावन्तं तावन्तं तावच्छः, (१०१) सङ्ख्यातुल्यत्वात् चशस्। द्वौ द्वौ द्विशः, एवं त्रिश इत्यादि। एकभागार्थात्तु पादं पादं पादशः, एवं पणं पणं पणशः इत्यादि। प्रत्ययेन वीप्साया उक्तत्वात् अनुक्तवीप्सायां द्वित्वस्य नियमादत्र न द्विः। पाणिनिः ५।४।४३।

† सङ्ख्याभिन्नस्य वारोऽर्थो न सम्भवतीत्याह कतिवारानिति। चित्त्वादव्ययं। एवं गणकृत्वः। (१०१) सङ्ख्यावत्त्वं। पञ्च वारान् पञ्चकृत्वः, एवं दशकृत्व इत्यादि। (२४६) विभक्तेर्लुकि, (१८५) न दीर्घः। पाणिनिः ५।४।१७।

‡ चतुश्च द्विश्च त्रिश्च तस्मात्, पुंस्त्वं सूत्रत्वात्। सुचा चकृत्वस् बाध्यते। सुच-उकार उच्चारणार्थः, चकारोऽव्ययार्थः। वारः क्रियाभ्यावृत्तिगणनम्। चतुरिति, चतुरो वारान् इत्यर्थे सुच्, (१०२) रस्य विसर्गः, (६७) विसर्गस्य सः, (२१२) सस्य लोपः, ततः सुचः सस्य विसर्गः। एवं द्वौ वारौ द्विः, त्रीन् वारान् त्रिः। पाणिनिः ५।४।१८।

तदात्मकेऽर्थे मयट् स्यात्। विष्ण्वात्मकं विष्णुमयं। वाङ्मयं। *

## ४८७। प्रकारे जातीयः। (प्रकारे ७।, जातीयः १।)।

तार्किकजातीया। †

## ४८८। वित्ते चुञ्चुचणौ।

(वित्ते ७।, चुञ्चुचणौ १॥)।

विद्याचुञ्चुः विद्याचणः। ‡

## ४८९। निर्वृत्ते भावादिमः।

(निर्वृत्ते ७।, भावात् ५।, इमः १।)।

पाकिमः। §

---

* तदेव रूपं आत्मा यस्य तत् तद्रूपं तस्मिन्। पृथग्योगात् किमपि नानुवर्त्तते, प्रकरणबलात् स्याद्यन्तादेव। विष्ण्वात्मकमिति विष्णुरात्मा यस्य तत् विष्णुमयं जगत्, एवं वागात्मकं वाङ्मयं शास्त्रं। "एकाचो नित्यम्" इति वार्त्तिकेन वाङ्मयमिति। हिरण्यात्मकं हिरण्मयमिति निपातनात् यलोपः। टित्त्वादीपि तेजोमयी। पाणिनौ बहुभ्याऽर्थेभ्यो मयट् दृश्यते। यथा, आगतार्थे—४।३।८२ ; विकारार्थे अवयवार्थे च—४।३।१४३,१४४,१४९ ; इदमर्थे गोशब्दात् पुरीषे—४।३।१४५ ; विकारार्थे—४।३।१४६, १४८ ; षष्ठ्यर्थे—५।२।४७ ; प्रकृतवचने स्वार्थे—५।४।२१,२२ ; विकारार्थे निपातः—६।४।१७४।

† स्याद्यन्तात् जातीयः स्यात् प्रकारे। प्रकारशब्दः सादृश्यवाची पुंलिङ्गः, तद्युक्तार्थे इत्यर्थः। "सामान्यस्य भेदको विशेषः प्रकारः" इति पाणिनिटीका। तार्किक्याः प्रकारः तार्किकजातीया, (३५०) पुंवद्भावः, तार्किकतुल्या स्त्रीत्यर्थः। एवं पटुजातीयो जनः, मृदुजातीयं फलं। किन्तु विदुष्याः प्रकारः विदुषीजातीया, अत्र जातीयस्य प्रसन्नतरादिभिन्नत्वात् (३२७) न पुंवद्भावः। पाणिनिः ५।३।६९।

‡ स्याद्यन्तात् ("तृतीयान्तात्" इति तु पाणिनिः) चुञ्चु-चणौ स्यातां वित्ते (तेन ख्याते) अर्थे। चुञ्चुः पञ्चमस्वरद्वयवान्, चणो मूर्द्धन्यवान्। विद्यया ख्यातः इति वाक्यं। पाणिनिः ५।२।२६।

§ भावविहितकृदन्तात् इमः स्यात् निर्वृत्ते (तेन निष्पन्ने) अर्थे। पाकेन निष्पन्नः पाकिमः, (१५८) अकारलोपः। पचनमिति भाववाच्ये (११३४) घञ्, पाकः। "वर्मम्

**४९० । पशुभ्यः स्थानद्विषट्के गोष्ठगोयुग-षड्गवं ।**

(पशुभ्यः ५॥, स्थान द्वि षट्के ७।, गोष्ठ-गोयुग-षड्गवं १।) ।

गोगोष्ठं गोगोयुगं गोषड्गवं । *

**४९१ । शुण्डोच्चेभ्योऽपकर्षे रष्टरौ ।**

(शुण्डोच्चेभ्यः ५॥, अपकर्षे ७।, र-ष्टरौ १॥) ।

अपकृष्टा शुण्डा शुण्डारः शमीरः कुटीरः, उच्चतरी । †

**४९२ । पीलुतिलोमाकर्णादेः कुणतैलकट-जाहं पाकस्नेहरजोमूले ।**

(पीलु—कर्णादेः ५।, कुण—जाहं १।, पाक—मूले ७।) ।

पीलुकुणः, तिलतैलं, उमाकटः, कर्णजाहं । ‡

---

नित्यम्" इति पाणिनिसूत्रे (४।४।२०) "एवं तर्हि भाव इति प्रकृत्य इमब्वक्तव्यः" इति वार्त्तिकम् ।

* स्थानञ्च द्वौ च षट्कञ्च तस्मिन् । गोष्ठञ्च गोयुगञ्च षड्गवञ्च तत् । पशुवाचकेभ्यः—स्थाने वाच्ये गोष्ठः, द्विकमित्यर्थे गोयुगः, षट्कमित्यर्थे षड्गवः स्यात् । गवां स्थानं गोगोष्ठं, एवं महिषगोष्ठं । गोद्विकं गोगोयुगं, एवं हरिणगोयुगं । गवां षट्कं गोषड्गवं, एवं हरिणषड्गवं । एषां क्लीवत्वं स्वभावात् । "गोष्ठजादयः स्थानादिषु पशुनामभ्यः" "द्वित्वे गोयुगच्" "षट्त्वे षड्गवच्" इति वार्त्तिकत्रयम् ।

† शुण्डाश्च उच्चाश्च ते तेभ्यः । उभयत्र बहुवचनं गणार्थं । रश्च ष्टरश्च तौ । शुण्डादेः रः, उच्चादेः ष्टरः स्यात् अपकर्षेऽर्थे (ह्रस्वत्वे, तनुत्वे इति पाणिनिः) । शुण्डा मदिरास्थानं । अपकृष्टा शुण्डा शुण्डारः, एवं अल्पा शमी शमीरः, अल्पा कुटी कुटीरः । सर्व्वत्र पुंस्त्वमभिधानात् । अपकृष्टा (गतयौवना) उच्चा उच्चतरी, एवं अपकृष्टा (बालिका) वत्सा वत्सतरी इत्यादि । पाणिनिः ५।३।८८,९१ ।

‡ पीलुश्च तिलश्च उमा च कर्णश्च ते आदयो यस्य तस्मात् । कुणश्च तैलश्च कटश्च जाहश्च तत् । पाकश्च स्नेहश्च रजश्च मूलश्च तत्तस्मिन् । पील्वादेः कुणः पाके, तिलादेस्तैलः

## ४९३ । क्षेत्रे शाकटशाकिनौ ।

(क्षेत्रे ७।, शाकट-शाकिनौ १॥) ।

इक्षुशाकटं इक्षुशाकिनं । *

## ४९४ । इतोऽस्य जाते ।

(इत: १।, अस्य ६।, जाते ७।) ।

फलितं । †

---

स्नेहे, उमादे: कटो रजसि, कर्णादेर्जाहो मूले स्यादित्यर्थ:। पीलो: पाक:, तिलस्य स्नेह:, उमाया (अतसिना) रज: कर्णस्य मूलं इति क्रमेण वाक्यानि। कुणकटान्तयो: पुंस्त्वं, तिलशाहाम्नयो: क्लीवत्वञ्चाभिधानात्। पाणिनि. ५।२।२४। "स्नेहे तैलच्" "कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम्" इति वार्त्तिकद्वयञ्च।

* स्याद्यन्तादेतौ स: तस्य क्षेत्रमित्यर्थे। इक्षो: क्षेत्रमिति वाक्यं। यद्यपि सामान्येनोक्तं, तथापि इक्ष्वोरेवेति केचित्, इक्षुमूलकाभ्यामिति परे, "संभवने क्षेत्र शाकटशब्दश्च प्रत्ययो वक्तव्य:" "शाकिनशब्दश्च प्रत्ययोवक्तव्य." इति वार्त्तिकद्वये तु न तथा नियम: ; यथा, इक्षुशाकटं, मूलशाकटं, जीरशाकटं, वास्तुशाकटमित्यादि। एवं इक्षुशाकिनमित्यादि।

† स्याद्यन्तादित: स्यात् अस्य जातमित्यर्थे। फलमस्य जातं फलितं वनं, फलितो वृक्ष:, फलिता लता। फलादेरेवायं विधि:। फलादिस्तु (पाणिनिमते तारकादि:, जौमरमतेऽपि तथा)—

फल पुष्पाङ्कुरपल्लव गर्व्व कण्टक मुन्दर शर कल्लोलं।
हर्ष कुतूहल किसलय गर्भं हस्तक कञ्चुक सुख सीमन्तं।
तन्द्रा तिलकं शैवल रोगं कज्जल कुड्मल कोरक वेगं।
निद्रा मुद्रा मद गल रोषं कर्द्दम कन्दर कुसुम तरङ्गं।
संज्ञा तारक मूत्र पुरीषं पुलक विचारं व्रण शृङ्गारं।
स्तवक पिपासा लज्जा दोहं निष्क्रमण ज्वर दुःख द्रोहं।
श्रम दीक्षा वर्म्म मूर्च्छा रण पण्डा तृषा क्षुधा:।
ऋजीषाङ्गार रोमाञ्च प्रवाल व्याधि चन्द्रका:।
पिण्डीतृकर्ष बुभुक्षा च खरीतकण्ठे च मञ्जरी।

एतद्व्यतिरिक्ता अन्येऽपि गर्भादय: शब्दा सन्ति। बुभुक्षित-पिपासित-शब्दौ न ज्ञान्तौ सकर्म्मकत्वात्। पाणिनि: ५।२।३६।

## ४९५। च्विः कृभ्वस्स्वभूततद्भावेऽस्वावीर्घा-वव्यस्य।

(च्विः १।, कृ-भू-असमु ७।।।, अभूततद्भावे ७।, अ-स्वौ १।।, ईर्घौ १।।, अव्यस्य ६।)।

अभूततद्भावेऽर्थे कृभ्वस्तिषु परेषु च्विः स्यात्, तस्मिंश्चावर्ण-स्वयोरीकार-घौं स्तः न तु व्यस्य।*

## ४९६। व्यो वमात्रो लोप्यः।

(व्यः १।, वमात्रः १।, लोप्यः १।)।

वकारमात्रस्त्यो लोप्यः स्यात्।

अकृष्णं कृष्णं करोति कृष्णीकरोति, कृष्णीभवति कृष्णीस्यात्।†

---

* कृश्च भूश्च अस् च ते तेषु। अभूतस्य अजातस्य तद्रूपेण भाव उत्पत्तिरभूततद्भावः। "प्रागवस्थावर्त्तोऽवस्थान्तरेणाभूतस्याजातस्यानन्तरं तदात्मनोलाभोऽवस्थान्तरेण जन्म अभूततद्भावः" इति तद्धितपरिशिष्टे गोयीचन्द्रः। काष्ठं भस्म करोति इति तु न अभूततद्भावः, किन्तु अभस्म भस्म करोति इत्येव। ("अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति पाणिनिः।) कृधातौ भूधातौ असधातौ वा परे अभूततद्भावेऽर्थे स्याद्यन्तात् च्विः स्यात्, च्वौ परे प्रकृतेरन्त-स्थितयोः अवर्ण ह्रस्वयोः क्रमेण ईकार-दीर्घौ स्तः, नतु अव्ययस्य ईकार-दीर्घौ, अव्ययात् च्विप्रत्ययस्तु स्यादेव अव्यस्येति षष्ठ्यन्त निर्देशात्। च्विप्रत्ययस्य इकारश्चिह्नार्थः, चकारेत अव्ययार्थः। पाणिनिः ५।४।५०; ७।४।३२।

† व चासौ मात्रश्चेति वमात्रः। वकारमात्रावशिष्टप्रत्ययो लोप्यः स्यात्। तेन च्वि, (१०२८) विण्, (१०३०) विट्, (१०३२) विच् क्विप् इति पञ्चानां लोपः। अकृष्णं कृष्णं करोतीति वाक्ये कृष्ण-शब्दात् च्विः अनेन अवशिष्टस्य वकारस्य लोपे, पूर्ववर्त्तिनः अकारस्य ईकारः। एवं कृष्णीभवति कृष्णीस्यात्। अत्र अस्तीति पदं हित्वा स्यादिति कथनात् स्वोविभक्त्यन्ते असधातौ परे च्विः स्यादिति सूचितं। अतएव, "अस्तेर्लिङन्तस्यैव प्रयोगेऽभूततद्भावस्य प्रतीतिः शब्दशक्तिस्वभावात्" इति तद्धितपरिशिष्टे गोयीचन्द्रः। वक्ष्यमाणसूत्रेष्वपि अस्तेः प्रयोगे एवं व्याख्येयं। एवं अमालां मालां करोति, मालीकरोति—आकारस्य ईकारः। अशान्तिं शान्तिं करोति शान्तीकरोति—इकारस्य दीर्घः। अवर्णह्रस्वभिन्नस्थले तु अमहान्तं महान्तं करोति महत्करोति इत्यादि। अकार्ष्णं कार्ष्णं

## ४९७। यङ्ङ्यक्ये चर्द्री।

(यङ्-ङ्य-क्ये ७।, च ।१।, ऋत् ।१।, री ।१।)।

ऋकारो री स्यात् यङि ङ्ये क्ये च्वौ च। मात्रीकरोति। *

## ४९८। मनश्चक्षुश्चेतोऽरूरजोरहोऽन्तलोपश्च्वौ।

(मनः—रहः ६।, अन्तलोपः ।१।, च्वौ ७।)।

मनीकरोति। †

## ४९९। कार्त्स्न्यायत्तयोः सम्पद्यकादौ चसाद्वा।

(कार्त्स्न्यायत्तयोः ७।, सम्पद्य-कादौ ७।, चसात् ।१।, वा ।१।)।

साकल्ये अधीनत्वे च सम्पद्यति कृभ्वस्तिषु परेषु च चसात् स्याद्वा। कृत्स्नं लवणं जलं सम्पद्यते—जलसात् सम्पद्यते। राजायत्तं सम्पद्यते—राजसात् सम्पद्यते। ‡

---

करोति कर्म्मीकरोति, अज्ञानिनं ज्ञानिनं करोति ज्ञानीकरोति, इत्यादौ (११८) नस्य लुपि, नञोऽल्पार्थत्वात् तदादिविधिनिषेधाभावे, अकारस्येरोकारघौ स्याताम्। अव्ययस्य तु अन्यथा न्यथा कृत्वा इति वाक्ये न्यथाकृत्य इत्यादौ च्विप्रत्ययान्तस्य (५४८) समासे, (११७६) क्त्वाचो यबादेशः। साचीकृत इति तु नञा निर्द्दिष्टमनित्यमिति न्यायात् दीर्घः। पाणिनिः ५।४।५० ; ७।४।२६,३२, "अव्ययस्य च्वावीत्वं नेति वाच्यम्" इति वार्त्तिकञ्च।

* अमातरं मातरं करोति—मातृशब्दात् च्विप्रत्यये ऋकारस्य री। यङि—चेक्रीयते। ङ्ये क्ये, (८४८) मातेवाचरति मात्रीयते, पितरमिवाचरति (८४७) पित्रीयति। पाणिनिः ७।४।२७।

† मनश्च चक्षुश्च चेतश्च अरुश्च रजश्च रहश्च तत्तस्य। एषाम् अन्तस्य लोपः स्यात् च्वौ परे। अमनो मनः करोति मनीकरोति, स-लोपे अकारस्य ई। एवं चक्षूकरोति, ष-लोपे दीर्घः। चेतीकरोति, अरूकरोति, रजीकरोति, रहीकरोति। पाणिनि. ५।४।५१।

‡ कृत्स्नं सकलं तस्य भावः कार्त्स्न्यं। आयत्तिरधीनत्वं। कार्त्स्न्यञ्च आयत्तिश्च कार्त्स्न्यायत्ती तयोः। संपद्यः संपूर्व्वक-दैवादिक-पदधातुः, सम्पद्यश्च कादिश्च तत्

## ५००। देये त्रा च। (देये ७।, त्राच् ।१।, च ।१।)।

देयेऽर्थे त्राच् चसाच्च स्यात् सम्पद्यादौ।
देवाय देयं करोति—देवत्रा करोति देवसात् करोति। *

## ५०१। नैकाचोऽव्यक्तानुकरणात् डाच् वानितौ द्विश्च। (नैकाचः ५।, अव्यक्तानुकरणात् ५।, डाच् ।१।, वा ।१।, अनितौ ७।, द्विः १।, च ।१।)।

अनेकाचोऽव्यक्तानुकरणात् सम्पद्यादौ डाच् स्याद्वा, नवितौ, तस्मिंश्च द्विर्भावः। †

## ५०२। न लोप्योऽतष्टिस्त्वितौ ह्रस्वन्तो वा।

(न ।१।, लोप्यः १।, अतः ६।, टिः १।, तु ।१।, इतौ ७।, हे: ६।, तु ।१।, अन्तः १।, वा ।१।)।

---

तस्मिन्। सम्पदे च इत्यनेनैवेष्टसिद्धौ पुनः क्रादिग्रहणं परत्र अनुवर्त्तनार्थं, चानुकृष्टं नोत्तरत्र इति न्यायेन अनुवर्त्तनबाधात्। चसात्प्रत्ययस्य चकारोऽव्ययार्थः। कृत्स्नं लवणं जलं करोति जलसात् करोति, एवं जलसात् भवति, जलसात् स्यात्। पचे तद्रूपेण स्थितिः। पाणिनिः ५।४।५२,५३,५४।

* दानार्थ-दाधातोः कर्मणि वाच्ये यप्रत्यये देयं तस्मिन् अर्थे। चकारोऽव्ययार्थः। देवत्रा सम्पद्यते देवसात् सम्पद्यते इति च। सम्पद्यादीनां परस्थित्यन्वयेऽपि स्यात्, तेन "अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्" इति। पाणिनिः ५।४।५५।

† एकोऽच् यस्य स एकाच्, न एकाच् नैकाच् तस्मात्। अव्यक्तो ध्वन्यात्मक-शब्दः, तस्य अनुकरणम् अव्यक्तानुकरणं तस्मात्। न इति अनिति तस्मिन्। इतौ—तस्मिंश्चेति डाचि सति पूर्वस्य द्वित्वञ्च स्यादित्यर्थः। वाशब्दस्य व्यवस्थया इतौ परेऽपि तस्य द्विर्भावो वाच्यः। पाणिनिः ५।४।५७; ६।१।९९।

तस्यादन्तस्य त लोप्यो डाचि, इतौ तु टिर्लोप्यः, द्वेस्तु अन्तो लोप्यो वा । *

पटपटाकरोति । एकाचस्तु—स्रक् करोति ।

इतौ तु पटदिति करोति—पटिति, पटत्पटेति पटत्पटदिति । +

**५०३ । तीय सम्ब वीज सङ्ख्यादिगुणात् कृञि कर्षौ ।** (तीय—गुणात् ५।, कृञि ७।, कर्षौ ७।) ।

एभ्यः करोतौ डाच् स्यात् कर्षौ ।

द्वितीयं कर्षणं करोति द्वितीयाकरोति सम्बाकरोति, वीजेन सह कर्षणं करोति वीजाकरोति, द्विगुणाकरोति । ‡

**५०४ । समय निष्कुल दुःख शूल सत्यात्—यापन निष्कोष प्रातिकूल्य पाकाशपथे ।**

(समय—सत्यात् ५।, यापन—श शपथे ७।) ।

---

* तस्यादन्तस्येति तस्य अनेकाचोऽव्यक्तानुकरणस्य, अदन्तस्य अत-भागान्तस्य पटत् भनत् इत्यादेस्तकारो लोप्यः स्यात् डाचि परे, इतिशब्दे परे तु तादृशस्यैव शब्दस्य टिर्लोप्यः स्यात्, एवं इतौ द्विर्भूतस्य तस्यैव शब्दस्य अन्तवर्णो लोप्यो वा स्यादित्यर्थः । पाणिनिः ६।१।९८ ।

+ पटत्शब्दात् डाचि, अनेन तकारलोपे पटइत्यस्य द्वित्वे पटपटाकरोति । अनेन टिलोपे पटिति, स्थानिवत्त्वात् न (५८) चपो जस् । द्वेस्तु अन्तो वा लोप्यः पटत्पटेति पटत्पटदिति । पाणिनिः ६।१।१०० ।

‡ तीयः प्रत्ययः, तेन द्वितीयः तृतीयश्च । सङ्ख्या आदिर्यस्य स सङ्ख्यादिः, स चासौ गुणश्चेति सङ्ख्यादिगुणः । तीयश्च सम्बश्च वीजश्च सङ्ख्यादिगुणश्च तस्मात् । कृञि परे एभ्यो डाच् स्यात् कर्षणेऽर्थे । द्वितीयाकरोति द्विवारं क्षेत्रं कर्षतीत्यर्थः, एवं सम्ब कर्षणं करोति । द्वौ एकार्थौ । द्विगुणं कर्षणं करोति द्विगुणाकरोति, एवं त्रिगुणाकरोतीत्यादि । पाणिनिः ५।४।५८,५९ ।

एभ्यः क्रमादेतेष्वर्थेषु डाच् स्यात् कृञि परे। समयाकरोति निष्कुलाकरोति दुःखाकरोति शूलाकरोति सत्याकरोति। *

**५०५। सपत्रनिष्पत्रात् प्रियसुखात् मद्रभद्रात् पीड़ानुकूल्यवपने।**

(सपत्र-निष्पत्रात् ५।, प्रियसुखात् ५।, मद्रभद्रात् ५।, पीडानुकूल्यवपने ७।)।

एभ्यः क्रमादेतेष्वर्थेषु डाच् स्यात् कृञि। सपत्राकरोति निष्पत्राकरोति मृगं। प्रियाकरोति सुखाकरोति। मद्राकरोति भद्राकरोति। †

---

* समयश्च निष्कुलश्च दुःखश्च शूलश्च सत्यश्च तस्मात्। यापनञ्च निष्कोषश्च प्रातिकूल्यश्च पाकश्च अशपथश्च तस्मिन्। समयात् यापने, निष्कुलात् निष्कोषे, दुःखात् प्रातिकूल्ये, शूलात् पाके, सत्यात् अशपथे अर्थे डाच् स्यात् कृञि परे। समयाकरोति समयं यापयतीत्यर्थः। निष्कुलाकरोति, दाडिमं निष्कोषयतीत्यर्थः। अन्तरवयवस्य वहिष्करणं निष्कोषः। निष्कोषभिन्नार्थे शत्रुं निष्कुलं करोति। दुःखाकरोति, शत्रुं पीड़यतीत्यर्थः, अत्र प्रातिकूल्यं। शूलाकरोति मांसं शूलेन पचतीत्यर्थः। सत्याकरोति मुनिः सत्यं कथयतीत्यर्थः, अत्र न शपथः। शपथे तु सत्यं दिव्यं करोति। पाणिनिः ५।४।६०,६२,६४,६५,६६।

† सपत्र निष्पत्राभ्यां पीडायां, प्रियसुखाभ्यां आनुकूल्ये (चित्ताराधने), मद्रभद्राभ्यां वपने (मुण्डने) डाच् स्यात् कृञि। सपत्राकरोति मृगं, व्याधः सपत्रं शरं मृगशरीरे प्रवेशयतीत्यर्थः; निष्पत्राकरोति मृगं, मृगशरीरात् शरमपरपार्श्वे निष्क्रामयतीत्यर्थः। "सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः। सपुङ्खस्य शरस्य अपरपार्श्वे निर्गमनात् निष्पत्रं करोतीत्यर्थः." इतिभट्टोजिदीक्षितः। अन्यत्र सपत्रं (पत्रयुक्तं) करोति प्रावृट, निष्पत्रं (पत्ररहितं) करोति ग्रीष्मः, उभयत्र वृक्षमिति शेषः। प्रियाकरोति सुखाकरोति सखायं, सख्युरानुकूल्यं करोतीत्यर्थः। मद्र भद्रौ मङ्गलार्थौ, मद्राकरोति भद्राकरोति बालं नापितः, मङ्गलपूर्वं वपतीत्यर्थः। पाणिनिः ५।४।६१,६३,६७, "मद्रात्सेति वक्तव्यम्" इति वार्त्तिकञ्च।

## ५०६ । दघ्नमात्रद्वयसट् माने ।

(दघ्न-मात्र-द्वयसट् ।१।, माने ७) ।

परिमाणार्थे एते स्युः ।

गजपरिमाणः—गजदघ्नः गजमात्रः गजद्वयसः । *

## ५०७ । सङ्ख्याशन्शतो डिन् ।

(सङ्ख्या—शन्-शतः ५।, डिन् ।१।) ।

दशी, त्रिंशी । †

## ५०८ । कति यति तति यावत्तावदेतावत्-किय‌दियन्तः ।

(कति—इयन्तः १।।।) ।

किं-यत्-तदां डत्यन्तानां यत्-तत्-एतत्-किम्-इदमां वत्वन्तानां एते क्रमात् निपात्यन्ते माने । ‡

## ५०९ । दशादेर्डो युते शतादौ ।

(दशादेः ५।, डः १।, युते ७।, शतादौ ७।) ।

---

* दघ्नश्च मात्रश्च द्वयसश्च समाहारे, तस्मात् ट । टकारस्य प्रत्येकेन सम्बन्धः, दघ्नट् मात्रट् द्वयसट् । परिमाणमिह ऊर्द्धपरिमाणं । गजः ऊर्द्धपरिमाणमस्य गजपरिमाणः—एतमर्थे एते प्रत्ययाः । टित्त्वादीप् च । पाणिनिः ५।२।३७ ।

† शन् च शत् च, शन्शत्, सङ्ख्या चासौ शन्शत् चेति तस्मात् । शन्शतोः केवलयोरसम्भवात् तदन्तयोर्ग्रहणम् । सङ्ख्यावाचकात् शन्नन्तात् (दशन् आदेः) शत्-अन्तात्र (त्रिंशत् आदेः) डिन् स्यात् परिमाणार्थे, ड इत् । दश परिमाणमस्य दशी, एवं त्रिंशी (मासः), डिन् (१२६) टिलोपः । "शन्शतोर्डिनिर्वक्तव्यः" इति वार्त्तिकम् ।

‡ किं परिमाणमेषां कति, (का संख्या परिमाणमेषामिति तु पाणिनिः), एवं सर्व्वेषां वाक्यानि । पाणिनिः ५।२।४१ ।

एकादशं शतं, विंशं शतं । *

**५१० । किंयत्तदेकान्यात् द्विबहूनामेकनिर्द्धारे डतरडतमौ ।**

(किं—अन्यात् ५।, द्वि-बहूनां ६।।।, एकनिर्द्धारे ७।, डतरडतमौ १।।) ।

अनयोः कतरो वैष्णवः, एषां कतमः शैवः । †

**५११ । तस् क्तेः ।** (तस् ।१।, क्तेः ६।) ।

क्तेः स्थाने तस् स्यात् । कृष्णतः सर्व्वतः अमुतः । ‡

---

* दश आदिर्यस्य स दशादिस्तस्मात् । अत्र अतद्गुणसंविज्ञानबहुव्रीहिणा दश हित्वा एकादशादीनां ग्रहणं । (अतएव पाणिनौ दशान्तादित्युक्तम्) । एवं उभयत्र आदिशब्दयोर्व्यवस्थावाचित्वात् दशादेरिति षष्टिपर्य्यन्तानामेव, शतादाविति शतसहस्रयोरेव ग्रहणं । तेन, एकादशादेः षष्टिपर्य्यन्तात् डः स्यात् युते (अधिके इति पाणिनिः) अर्थे, शते सहस्रे च वाच्ये इत्यर्थः । एकादशभिर्युतं एकादशं शतं, (एकादशाधिका अस्मिन् शते इति पाणिनिः), डित्वात् (१२६) टिलोपः । एवं विंशत्या युतं विंशं शतं, अत्र (१२६) विंशतेस्तिर्लोपे, (२५८) अकारलोपः । पाणिनिः ५।२।४५,४६ ।

† कश्च यश्च सश्च एकश्च अन्यश्च तत्तस्मात्, द्वौ च बहवश्च ते तेषां । जातिगुणक्रियादिभिर्व्यवच्छेदो निर्द्धारः, एकस्य निर्द्धार एकनिर्द्धारः तस्मिन् । डतरश्च डतमश्च तौ । एभ्यो द्वयोर्म्मध्ये एकस्य निर्द्धारणे डतरः, बहूनां मध्ये एकस्य निर्द्धारणे डतमः स्यात्, डिति टिलोपः । अनयोर्म्मध्ये कः कतरः, एषां मध्ये कः कतमः । एवं यतरः यतम इत्यादि । पाणिनिः ५।३।९२,९३,९४ ।

‡ पृथग्योगात् पूर्व्वात् किमपि नानुवर्त्तते । सर्व्वस्मात् लिङ्गात् सर्व्वविभक्तेः स्थाने तस् आदेशः स्यात्, इति सामान्येन उक्तेऽपि शिष्टप्रयोगानुसारेण प्रयोक्तव्यमेव । अतएव "सार्व्वविभक्तिकस्तसिः" इति भाष्ये । कृष्ण इति, कृष्णमिति, कृष्णेन इति, कृष्णाय इति, कृष्णादिति, कृष्णस्येति, कृष्णे इति वा कृष्णतः । एवं सर्व्वतः । अमुतइति तसो विभक्तिस्थानभूतत्वात् सर्व्वं सामान्यविभक्तिनिमित्तं कार्य्यं स्यादेव, तेन (१३३) टेः स्थाने अः, (२०४) दस्थाने मः, (२३५) अस्थाने उः । विभक्तिविशेषविहितन्तु साक्षात् विभक्तावेव, तेन असादेः स्थाने तसि कृते हरित इत्यादौ (१२२) गुणादिर्न्न स्यात् । एवञ्च विभक्तिस्थाने तसादयो ये आदेशास्तदन्तानामव्ययत्वमिति प्राञ्चः ।

## ५१२। देवादेर्द्वीम्प्योस्त्राच्।

(देवादेः ५।, द्वीम्प्योः ६॥, त्राच् ।१।)।

देवत्रा वन्दे रमे वा। *

## ५१३। त्रिबह्वोस्त्रोऽद्व्यादेः म्प्याः।

(त्रि-बह्वोः ५।, त्रः १।, अद्व्यादेः ५।, म्प्याः ६।)।

त्रिबह्वोश्च परस्याः म्प्यास्त्रः स्यात्, नतु द्व्यस्मद्युष्मदः।
सर्व्वस्मिन् सर्व्वत्र, तत्र बहुत्र। †

## ५१४। सर्व्वैकात् काले दा।

(सर्व्वैकात् ५।, काले ७।, दा ।१।)।

सर्व्वस्मिन् काले सर्व्वदा। ‡

---

(पाणिनिः "तद्धितश्चासर्व्वविभक्तिः" १।१।३८ ।) त्राच् थाच् भिन्नानामव्ययत्वं नास्तीत्येके। पाणिनिः ५।३।७,१४।

* देवादेः परयोर्द्वितीया-सप्तम्योस्त्राच् स्यात्। देवं देवौ देवान् वा वन्दे देवत्रा वन्दे। देवे देवयोः देवेषु वा रमे देवत्रा रमे। देवादिर्यथा—देवो मनुः पुरुमर्त्त्यो मनुष्यः पुरुषश्च षट्। पाणिनिः ५।४।५५,५६।

† त्रिश्च बहुश्च तत्तस्मात्। बहुत्रार्थबहुशब्दस्य ग्रहणं। द्विरादिर्यस्य स द्व्यादिः न द्व्यादिरद्व्यादिस्तस्मात्। द्व्यादिश्च (८६) त्यदादिगणसमाप्तिपर्य्यन्त इत्यत आह किमद्युष्मदः। सर्व्वस्मिन् सर्व्वयोः सर्व्वेषु वा सर्व्वत्र। सर्व्वस्यां सर्व्वयोः सर्व्वासु इत्यत्रापि सर्व्वत्र, (१२०) प्रत्यये परे पुंवद्भावः। तस्मिन् तयोः तेषु, तस्यां तयोः तासु इति वा तत्र, (१२२) टेः स्थाने अः। बहुषु बहुत्र। "इतराभ्योऽपि दृश्यन्ते" इति पाणिनिसूत्रात् (५।३।१४) स भवान्, ततोभवान्, तत्रभवान्; [illegible] भवान् [illegible]। पाणिनि. ५।३।१०।

‡ सर्व्वस्य एकस्य च तस्मात्। काले वर्त्तमानाभ्यामाभ्यां परस्याः सप्तम्या दा स्यात्। एकस्मिन् काले एकदा। पाणिनिः ५।३।१५।

## ५१५ । किमन्ययत्तदोर्हिञ्च ।

(किमन्ययत्तदः ५।, र्हिं १।, च ।१।) ।

एभ्यः स्या र्हिं दा च स्यात् । कस्मिन् काले कर्हि कदा । *

## ५१६ । तदो दानीँ वा ।

(तदः ५।, दानीँ ।१।, वा ।१।) ।

तदानीँ तर्हि तदा । †

## ५१७ । पूर्व्वान्यान्यतरेतरापराधरोत्तरोभया-देद्युसह्नि ।

(पूर्व्व—उभयात् ५।, एद्युस् ।१।, अह्नि ७।) ।

पूर्व्वस्मिन्नह्नि पूर्व्वेद्युः । ‡

## ५१८ । दिक्शब्दाद्दिग्देशकाले स्तात् प्रौपौम्नौ ऽञ्चो लुक् ।

(दिक्-शब्दात् ५।, दिग्-देश-काले ७।, स्तात् ।१।, प्रौ-पौ-म्नौ १।॥, अञ्चः ५।, लुक् ।१।) ।

---

* कस्य अन्यस्य यस्य तस्य तत्स्यात् । अन्यस्मिन् काले अन्यर्हि अन्यदा, यर्हि यदा, तर्हि तदा । पाणिनिः ५।३।२१ ।

† काले वर्त्तमानात् तच्छब्दात् सप्तम्या दानीँ वा स्यात् । पाणिनिः ५।३।१९ ।

‡ पूर्व्वस्य अन्यस्य अन्यतरस्य इतरस्य अपरस्य अधरस्य उत्तरस्य उभयस्य तत्स्यात् । एभ्योऽष्टभ्यः परस्याः सप्तम्याः एद्युस् स्यात् अह्नि वाच्ये । पूर्व्वेद्युरिति अत्र, (५१७) आदिसूत्रेणैव तद्धितप्रकरणोक्तादेशानामपि तद्धितसंज्ञा-विधानात (२५८) अकार-लोपः । पाणिनिः ५।३।२२, "पूर्व्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसच्" इति "द्युश्चोभयात्" इति उभयद्युः इति च वार्त्तिकम् ।

परस्तात्, प्राक्। *

५१९। वैनोऽपी। (वा ।१।, एनः १।, अ-पी ।१।)।

पूर्व्वेण। †

५२०। दक्षिणोत्तरादाहि।

(दक्षिणोत्तरात् ५।, आ-आहि ।१॥)।

दक्षिणा दक्षिणाहि। उत्तरा उत्तराहि। ‡

५२१। वाधराच्चात्ताः।

(वा ।१।, अधरात् ५।, च ।१।, आत् ।१।, ताः १॥)।

अधरात् अधरस्मात्, दक्षिणात् दक्षिणस्मात्। §

---

* दिशि वर्त्तमानः शब्दो दिक्शब्दः, सच पूर्व्वादिः प्रागादिश्च। दिशि देशे काले च वाच्ये दिग्वाचकशब्दात् परासां प्रथमा-पञ्चमी सप्तमीनां स्थाने स्तात् स्यात्, अञ्च धातोः क्विप्प्रत्ययेन साधितात् अधः परस्य स्तातो लुक् स्यादित्यर्थः। ग्रन्थकारेण तिसृणां विभक्तीनामेकमुदाहरणं प्रयुक्तं परस्तादिति, परा दिक् परो देशः परः कालः, परस्या दिशः परस्मात् देशात् परस्मात् कालात्, परस्यां दिशि परस्मिन् देशे परस्मिन् काले, इति वाक्यानि। प्राक् इति प्राची दिक्, प्राक् देशः, प्राक् कालो वा इति प्रथमा स्थाने स्तात् तस्य लुक्। मनीषादित्वात् पुंवत्। एवं पञ्चमीसप्तम्योरपि बोध्यं। पाणिनिः ५।३।२७,३०।

† दिग्देशकाले वर्त्तमानेभ्यो दिक्शब्देभ्यः प्रोक्तयोरेनः स्याद्वा। पूर्व्वेणेति पूर्व्वः पूर्व्वस्मिन् वा इत्यर्थः। पाणिनिः ५।३।३५।

‡ आश्च आहिश्च तौ आही, द्विवचनं यथासङ्ख्यनिरासार्थं। दिग्देशकाले वर्त्तमानाभ्यां दक्षिणोत्तराभ्यां प्रथमा-सप्तम्योः स्थाने आ आहिश्च स्यात्। विशेषत्वात् स्तातो बाधकावेतौ। दक्षिणः दक्षिणस्मिन् वा, उत्तरः उत्तरस्मिन् वा इति वाक्यं। पाणिनिः ५।३।३६,३७,३८।

§ ताः प्रोक्तोक्ताः। अधरशब्दात् चकारात् दक्षिणोत्तरशब्दाभ्यां दिग्देशकाले प्रथमा-पञ्चमी-सप्तमीस्थाने आत् स्यात् वा। अधरः अधरस्मात् अधरस्मिन् वा अधरात्।

**५२२ । पूर्व्वाधरावराः पुराधावाः स्तादसोः ।**

(पूर्व्वाधरावराः १।।।, पुराधावाः १।।।, स्तादसोः ७।।) ।

पुरस्तात् पुरः, अधस्तात् अधः, अवस्तात् अवः । अतएव अस् ।*

**५२३ । चवत् थाच् प्रकारे ।**

(चवत् ।१।, थाच् ।१।, प्रकारे ७।) ।

येभ्यस्त्र उक्तास्तेभ्यः प्रकारे थाच् स्यात्, सच तद्वत् । सर्व्वप्रकारं सर्व्वथा । †

**५२४ । कुतः क्व कुह कुत्रेतोऽत्रेहात्रेह सदैतर्ह्यधुनेदानीं पश्चादुपर्य्युपरिष्टात् परेद्यवि सद्योऽद्यैषमः परुत्परारीत्यं कथम् ।** (कुतः—कथम् ।१।।।) ।

---

दक्षिणः दक्षिणस्मात् दक्षिणस्मिन् वा दक्षिणात् एवं उत्तरात् । विकल्पपक्षे अधरस्मात् दक्षिणस्मादिति । पञ्चम्यन्तोदाहरणं बहुलप्रयोगदर्शनात् । पाणिनिः ५।३।३४ ।

* पूर्व्वस्य अधरस्य अवरस्य ते । पुरस्य अधस्य अवस्य ते । स्तात्र अस् च तौ तयोः । पूर्व्वस्य पुरः अधरस्य अधः अवरस्य अवः स्यात् स्तादसोः परयोः । पुरस्तादिति पूर्व्वशब्दात् (५१८) प्रथमादेः स्तात् आदेशे, अनेन पुर आदेशः । अस् परे पुर आदेशे, (२५८) अकारलोपे पुरः । एवं अधरशब्दात् अधस्तात् अधः, अवरशब्दात् अवस्तात् अवः, अतएव, अस्विधायकसूत्राभावेऽपि अनेन अस् परे आदेशविधानादेव, एतेभ्यः प्रथमादेः स्थाने अस् स्यादिति वक्तव्यं । पाणिनिः ५।३।३९,४० ।

† चन्द्रवत् मुखमित्युक्ते यथा चन्द्रस्य आह्लादकत्वेन साम्यं गृह्यते न तु धावल्यादिना, तथापि चवदित्युक्ते (५१३) अहादिस्थितबहुलान्तरगणत्वेनैव साम्यं ग्राह्यं, न तु केवलं सप्तमीस्थानजातत्वेन । अतएव—अहादिस्थितबहुभ्यां परासां (उदाहरणज्ञापकात्) द्वितीयादिविभक्तीनां स्थाने थाच् स्यात् प्रकारे । प्रकारः सादृश्यं । चकारः अव्ययार्थः । सच तद्वदित्यनेन, (१२०) प्रत्यये परे पुंवद्भावादिकं स्यादिति सूचितं । सर्व्वं प्रकारं, सर्व्वेण प्रकारेण, सर्व्वस्मै प्रकाराय, सर्व्वस्मात् प्रकारात्, सर्व्वस्य प्रकारस्य, सर्व्वस्मिन् प्रकारे—सर्व्वथा इति । तृतीयाया एव थाच् इति पाणिनिः ५।३।२३ ।

एते निपात्यन्ते।

कस्मात्—कुतः, कस्मिन्—क्व कुह कुत्र, अस्मात्—इतः, एतस्मात्—अतः, एतस्मिन्—अत्र, अस्मिन्—इह, सर्व्वदा—सदा, अस्मिन् काले—एतर्हि अधुना इदानीं, अपरस्मिन्—पश्चात्, ऊर्द्ध—उपरि उपरिष्टात्, परस्मिन् अह्नि—परेद्यवि, समानेऽह्नि—सद्यः, अस्मिन्नह्नि—अद्य, अस्मिन् वर्षे—ऐषमः, पूर्व्वस्मिन् वर्षे—परुत्, पूर्व्वतरस्मिन् वर्षे—परारि, इदम्प्रकारं—इत्थं, किम्प्रकारं—कथम्। *

**५२५। त्यत्राद्य चिर दक्षिणाद्यादे—त्य-ट्न-त्न-त्यण्-मा भवादौ।** (त्यत्र—आद्यादेः ५।, त्य—माः १॥, भवादौ ७।)।

एभ्य एते क्रमात् स्युः भवाद्यर्थे। त्यत्रत्यः तत्रत्यः, अद्यतनी ह्यस्तनी; चिरत्नः परुत्नः, दाक्षिणात्यः पाश्चात्यः, आदिमः मध्यमः। †

---

* कस्मादिति। एषा तावत् टीका, सर्व्वेष्वेव पुस्तकेषु तु मूलमध्ये सन्निविष्टा दृश्यते। पाणिनिः ५।३।५,७,१२,१३,१०,२,५.११,६,१६,१७,१८,२२,२१,२२,२४,२५—७।२।१०४,१०५।

† त्यत्रश्च अद्यश्च चिरश्च दक्षिणश्च आदिश्च ते आदयोः यस्य स तस्मात्। त्यश्च ट्नश्च त्नश्च त्यण् च मश्च ते। अत्र विभक्तिमनाहृत्य शब्देरेव क्रमग्रहणं, त्यट्नत्नत्यण्मं इति पाठो वा। त्यत्रादेः त्यः, अद्यादेः ट्नः (तनट् इति कौमराः), चिरादेः त्नः, दक्षिणादेः त्यण्, आद्यादेः मः स्यात्, तत्र भव इत्याद्यर्थे। त्यत्र भवः त्यत्र वसति वा इत्यर्थे त्यत्रत्यः, एवं तत्रत्यः। अद्यभवा अद्यतनी, (२५७) विस्वादीप्, एवं ह्यः (पूर्व्वदिने) भवा ह्यस्तनी। अद्यादित्वात्—श्वस्तनः, चिरन्तनः, दिवातनः, दोषातनः, सायन्तनः, सदातनः, सनातनः, पुरातन इत्यादि। ("पुराश्चट्नाश्नट्" इति क्रमदीश्वरः। पुराणः।) चिरे भवः चिरत्नः, परुत् भवः परुत्नः (अत्र तकार-लोपः), एवं परारित्नः, दक्षिणा भवः

## ५२६। किमः क्वान्तात् चिच्चनौ।

(किमः ५।, क्वान्तात् ५।, चित्-चनौ १॥)।

कस्यचित् कदाचित्, कस्यचन कदाचन। *

## ५२७। आदिस्तः। (आदिः १।, तः १।)।

(३२३) घेक्याच्छुट्घ्णोऽः इत्येतमकारमारभ्य यस्य उक्तः स तसंज्ञः स्यात्। †

इति तपादः।

### इति स्याद्यन्ताध्यायः।

स्याद्यन्ताधिकारः समाप्तः।

---

दाक्षिणात्यः, दक्षिणा इति (५२०) आः। णित्त्वात् (४१६) वृद्धिः। एवं पश्चात् भवः पाश्चात्यः। आदिना पौरस्त्य इत्यादि। आदौ भवः आदिमः, मध्ये भवः मध्यमः। "अग्रान्तपश्चातो डिमः" इति क्रमदीश्वरः। तेन अग्रिमः, अन्तिमः, पश्चिमः। "अग्रादि-पश्चात् डिमच्" "अन्ताच्च" इति वार्त्तिकद्वयम्। पाणिनिः ४।२।९८,१०४, ४।३।८,२३।

* 'असाकल्ये तु चिच्चन' इत्यमरोक्तयोः चित्-चन-इत्यव्ययशब्दयोर्योगेन कश्चित् कौ-चित् केचित् काचित् किञ्चिदित्यादिपदे सिद्धेऽपि एतत्सूत्रकरणं कश्चित् कदाचिदि-त्यादेरेकपदत्वनिर्व्वाहार्थं, तेन कादाचित्कमित्यादौ (४१६) पूर्व्वपदस्य वृद्ध्यादि स्यादिति।

† अ आदिर्यस्य स आदिः। प्रधानेन व्यपदेशा भवन्तीति न्यायात्, तद्धित-प्रकरणोक्त-विभक्तिस्थानजातानामादेशानामपि तद्धित-संज्ञा स्यादिति, तेन (५१९) पूर्व्वेण इत्यादौ (२५८) णौ परं अकारलोपादि सिद्धं।

# त्याद्यन्ताधिकारः।

## ५मः। आख्याध्यायः।

### १म पादः—संज्ञा।

५२८। घोः—

तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस्—
ते आते अन्ते से आथे ध्वे ए वहे महे (की)

यात् यातांम् युस् यास् यातम् यात याम् याव याम—
ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि (खी)

तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप्—
ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐप् आवहैप् आमहैप् (गी)

दिप् ताम् अन् सिप् तम् त अम्प् व म—
त आताम् अन्त थास् आथाम् ध्वम् इ वहि महि (घी)

दि ताम् अन् सि तम् त अम् व म—
तन् आताम् अन्त थास् आथाम् ध्वम् इ वहि महि (टी)

णप् अतुस् उस् थप् अथुस् अ णप् व म—
ए आते इरे से आथे ध्वे ए वहे महे (ठी)

ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस्—
ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे (डी)

यात् यास्ताम् यासुस् यास् यास्तम् यास्त यासम् यास्व यास्म—
सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि
सीमहि (ढौ)

स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस्—
स्यते स्येते स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे(तौ)

स्यत् स्यताम् स्यन् स्यस् स्यतम् स्यत स्यम् स्याव स्याम—
स्यत स्येताम् स्यन्त स्यथास् स्येथाम् स्यध्वम् स्ये स्यावहि स्यामहि
(धोः ५।, तिप्—स्यामहि ।१॥)। (थौ) *

एतानि साशीतिशतसङ्ख्यकानि धोः पराणि प्रयुज्यन्ते । †

**५२९ । कौ खौ गौ घौ टौ ठौ डौ ढौ तौ थ्यो ऽष्टादशशः ।** (कौ—थ्यः १॥, अष्टादशशः ।१॥) ।

तान्यष्टादशाष्टादश क्रमादेतत्संज्ञानि स्युः । ‡

---

* "प-न-णा द्विर्योरिकारश्चेतः" इति वार्त्तिकसूत्रम् । पाणिनिः ३।४।७८। अत्र सूत्रे अष्टादशानामेव विभक्तीनामुल्लेखः । पश्चात् लकारस्थाने आदेशा भवन्ति । यथा, ३।४।८५, ३।४।८२, १०२, १०८ इत्यादि ।

† धोरिति पञ्चम्यन्तं तिबादीनां प्रत्ययत्वज्ञापनार्थं । सह अशीत्या वर्त्तते यत् तत् साशीति, तच्च तत् शतञ्चेति साशीतिशतं, तत् सङ्ख्या येषां तानि साशीतिशतसङ्ख्यकानि वचनानीत्यर्थः ।

‡ अष्टादश अष्टादश इति वीप्सायां (४८३) शस्, अष्टादशशः । तानि तिबादीनि अष्टादश अष्टादश भूत्वा, क्रमात् कौ-आदिसंज्ञकानि स्युरित्यर्थः । भगवता पाणिनिना तु यथाक्रमं लट् (३।२।१२३), विधिलिङ् (३।३।१६१), लोट् (३।३।१६२), लङ् (३।२।१११), लुङ् (३।२।११०), लिट् (३।२।११५), लुट् (३।३।१५), आशीर्लिङ् (३।४।११६), लृट् (३।३।१३), लृङ् (३।३।१३९), एतत्संज्ञकानि कृतानि ।

## ५३० । पञ्च रः शिच्च ।

(पञ्च १॥, रः १।, शित् ।१।, च ।१।) ।

ताः पञ्च रसंज्ञाः स्युः, शिच्च । *

## ५३१ । नवशः पमे ञितोऽन्यङिद्‌भ्यां घे ।

(नवशः ।१॥, पमे १॥, ञितः ५।, अन्य ङिद्‌भ्यां ५॥, घे ७।) ।

तानि नव नव क्रमात् प-म-संज्ञानि स्युः, ते च ञितो धोः परे स्तः, तदन्य-ङिद्‌भ्यान्तु क्रमेण स्तो घे । †

## ५३२ । ङिद्‌पिद्रः । (ङित् ।१।, अपित् ।१।, रः १।) ।

अपित् रो ङित् स्यात् । ‡

## ५३३ । कित् ठौ ढौपं । (कित् ।१।, ठौ ।१।, ढौपं १।)

अपित् ठौ क्याः प ञ्च कित्संज्ञं स्यात् । §

---

* ताः पञ्च कौ खौ गौ घौ टौ इति पञ्च, प्रथमोपस्थितपरित्यागे प्रमाणाभावात् । व्या र-संज्ञाफलन्तु अभूदित्यादौ (५५४) वसोऽरस्येत्यनेन न इम्, अपिद्रत्वेन ङित्त्वात् (५३२) न गुणश्च (५४२) । शकारेत्प्रत्ययस्य रसंज्ञया (तदौ ञ श व्यथे) तुदतोत्यादौ न गुणः, भवन् दीव्यन् इत्यादिषु शतृप्रत्यये परे शपश्यनादिश्च । पाणिनिः ३।४।११३, ११४ । रः = सार्व्वधातुकम्, अरः = आर्द्धधातुकम् ।

† नव नव इति (४८३) नवशः । पञ्च मञ्च पमे, पं परस्मैपदं, परोद्देश्यकफल-बोधनस्वरूपयोग्य, मं आत्मनेपदं आत्मोद्देश्यकफलबोधनस्वरूपयोग्यं । ञ इत् यस्य स ञित् तस्मात् ञितः । ङ इत् यस्य स ङित्, अन्यश्च ङिच्च अन्यङितौ ताभ्यां । तानि तिबादीनि । ते च पमे आनुबन्धधातोः स्तः, तदन्यस्मात् आनुबन्धभिन्नात् धातोः पं स्यात्, ङानुबन्धात्तु मं स्यात्, कर्त्तरि वाच्ये इति सर्व्वत्रान्वयः । ङानुबन्धात् ममिति विशेषा-भिधानात् अन्य इह आनुबन्ध-ङानुबन्धाभ्याम अन्यो बोध्यः । पाणिनिः १।४।९९,१०० ।

‡ ङ इत् यस्य स ङित्, प इत् यस्य स पित्, न पित् अपित् । अपिदिति भिन्नं पदं परत्र अनुवृत्त्यर्थं । पाणिनिः १।२।४ ।

§ क्याः पं ढौपं, यात् यास्तामित्यादि नव । पाणिनिः ३।४।१०४, वार्त्तिकञ्च ।

## ५३४। दा-धा दा। (दा धा ।१।, दा ।१।)।

अपित् दा धा च दासंज्ञः स्यात्। *

## ५३५। यलोऽचेक् जिः।

(यलः ६।, अचा ३।, इक् ।१।, जिः १।)।

अचा युक्तस्य यलस्य स्थाने इक् क्रमात् जिसंज्ञः स्यात्। †

## ५३६। सकृत्, द्विस्तु वा।

(सकृत् ।१।, द्विः १।, तु ।१।, वा १।)।

जिः पुनर्न स्यात्, द्विस्तु वा स्यात्। ‡

---

* दा धा इत्युभयं स्वरूपं, तेन—दा ल् लुनौ, दा न् दाने, डु दा ञ् लि च, डु धा ञ् लि च इति चतुर्णां. एवं देङ् पालने, दो य छेदे, धे ट पाने इति चयाणा एचोऽशित्या (६०८) इति आकारे कृते दा-संज्ञा, शिति परे आकाराभावात् दासंज्ञा नाप्नोति। अपिदित्यनेन दे प शोधने इत्यस्य दासंज्ञा-निषेधः। दासंज्ञाफलन्तु (५४९, ५५२,६१२,८११) एतेषु सूत्रेषु द्रष्टव्य। पाणिनिः १।१।२०। अत्र दा—घु।

† अचा स्वरवर्णेन युक्तानां य व र ल इत्येषां स्थाने क्रमेण इ उ ऋ ऌ इत्यादेशाः जिसंज्ञाः स्युरित्यर्थः। फलन्तु (६५१,६६१) इत्यादिषु द्रष्टव्य। लकारस्य जिर्न सम्भवति, यलसंज्ञानुरोधादन्तःपतनं। पाणिनि. १।१।४५। अत्र जिः—सम्प्रसारणम्।

‡ सकृत एकवारं, जिरित्यनुवर्त्तते। यावत् सम्भवस्तावद्विधिरिति न्यायात् पुनः सामग्रीसमाधानेऽपि, जिः पुनर्न स्यात्। तेन, व्यय व्यध व्यच व्य इत्यादि धातूना एकवारं य स्थाने इ कृते पुनः वि इत्यस्य स्थाने उर्न स्यादिति। द्विस्तु वा इति वाशब्दः समुच्चयार्थः, द्वित्वञ्च पुनर्न स्यादित्यर्थः। तेन, कितप्रभृति-धातोः सनि कृते द्वित्वे चिकित्स धातोः,चिकित्सितुमिच्छतीति पुनः सनि कृते चिकित्सिषतीत्यादौ पुनर्द्वित्वं न स्यादिति। एवं क्रुधातोर्यङि द्वित्वे चेक्रीयधातोः सनि चेक्रीयिषते [illegible]दावपि पुनर्न द्वित्वमिति दुर्गादासः। वस्तुतस्तु (पाणिनौ "अनभ्यासस्य" इति लिखनात) द्विस्तु वेति वाशब्दस्य व्यवस्थितविभाषा अर्थः, तेन कृतद्वित्वानां पुनर्द्विर्न स्यात्, सघादेस्तु (१७४) द्वित्वसंज्ञायां सत्यामपि पुनर्द्विः स्यादित्यर्थ। पाणिनिः ६।१।२७—६।१।८,९।

## ५३७। प्रागच्कार्य्यादचि द्विः।

(प्राक् ।१।, अच्कार्य्यात् ५।, अचि ७।, द्विः १।)।

अचि परे अच्-कार्य्यात् प्राक् द्विः स्यात्। *

## ५३८। द्विः पूर्व्वः खिः। (द्विः ५।, पूर्व्वः १।, खिः १।)।

द्विर्धोः पूर्व्वो भागः खिसंज्ञः स्यात्। †

## ५३९। स्वघौ घुरू। (स्व-घौ १॥, घु-रू १॥)।

स्वो घुसंज्ञो घौ रूसंज्ञः स्यात्। ‡

## ५४०। स्वः स्ये रूः। (स्वः १।, स्ये ७।, रूः १।)।

स्ये परे स्वो रूसंज्ञः स्यात्। §

इति संज्ञा-पादः।

---

* अचः कार्य्यं अच्कार्य्यं तस्मात्, प्राक्शब्दयोगे (३००) पञ्चमी। यत्र स्वरवर्णे परे स्वरवर्णस्थाने कश्चित् आदेशः सम्भविष्यति, द्वित्वञ्च सम्भविष्यति, तत्र प्रथमं द्वित्वं स्यात्, पश्चात् स्वरकार्य्यं स्यादित्यर्थः। यथा—निनाय जुहाव इत्यादौ आदौ द्वित्वं पश्चात् वृद्धिसन्धी। यत्र एकदा अच्कार्य्यद्वित्वयोः प्रसक्तिस्तत्रैवायं नियमः। नियमश्चायं प्रायिकएव, तेन अरिरिषतीत्यादौ आदौ गुणे सन्धौ पश्चात् द्वित्वमिति। पाणिनिः १।१।५९।

† द्विरिति धोरित्यस्य विशेषणं, धोरिति अधिकारप्राप्तम्। स्मारं स्मारं नमतीत्यादौ धातुत्वाभावात् पूर्व्वभागस्य न खित्वं। पाणिनिः ६।१।४। अत्र खिः=अभ्यासः।

‡ लघुगुरुसंज्ञयोः फलं (५८२,६२९) इत्यादौ द्रष्टव्यं। पाणिनिः १।४।१०,१२।

§ स्ये रूरित्यनेनैवेष्टसिद्धौ स्व इति कथनं कदाचित् छन्दसि संयोगे परे गुरुर्न स्यादिति सूचनार्थं, अतएव प्रह्रेवेति पिङ्गलसूत्रम्। पाणिनिः १।४।११।

## २य पादः—पवत्।

### (१) भू सत्तायाम्।

भू-तिप् इति स्थिते—

**५४१। घे शप् रे।** (घे ७।, शप् ।१।, रे ७।)।

रे परे धोः शप् स्यात् घेऽर्थे।*

**५४२। गुर्घुङश्चाकङिति।**

(गुः १।, घुङः ६।, च ।१।, अ-कङिति ७।)।

अन्त्यस्य घुसंज्ञोङश्च गुः स्यात्, नतु किति ङिति।

भवति भवतः।†

---

* घे अर्थे कर्त्तरि वाच्ये। शपः शप् इत्, अकार स्थितिः। शित्त्वात् (५९७) स्थादानित्यादिना तिङाद्यादेशः। (९२१) ढ-भावयो र्यका बाधितावशिष्टे सुतरां कर्त्तर्य्येव शप् स्यात्, तेनात्र घे इति व्यर्थमिति चेत् उच्यते,—कर्म्मकर्त्तरि वाच्ये (९२७) ढवद्ढघ इत्यनेन यगाद्यतिदेशात् शबादेर्बाधे, चिकीर्षत इत्यादौ (९३१) सन्श्रन्थे-त्यादिना पुनर्यगादिनिषेधे, शाब्दिककर्त्तृवाच्यत्वात् शबादयः स्युरिति। नच शबादे र्बाधकस्य यगादेर्निषेधे सुतरां शबादिना भाव्यमिति वाच्यं, सकृद्गतौ विप्रतिषेधो यद्बाधित तद्बाधितमेवेति न्यायात् पुनः शप्प्रसङ्गाभावात्। अतएव अगूढ इत्यत्र (६५७) सर्कोऽप्राप्तिपक्षे सेर्निषेधे शबपि न स्यादिति। पाणिनिः ३।१।६८।

† गुर्गुणः, घुश्चासौ ङश्चेति घुङ् तस्य। क च ङ च कङौ, कङौ इतौ यस्य स कङित्, न कङित् अकङित् तस्मिन्। लघोरङः (९१) चकारात् (८) अन्त्यस्य इङश्च गुणः, यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् कित्ङित्-प्रत्ययाभ्यां भिन्ने अन्यस्मिन् प्रत्यये परे इत्यर्थः। निमित्ताव्यवहित पूर्व्ववर्त्ति-धातुना, धातूत्तरजातयोः श्नुशपोश्च गुणः स्यात्। एवं (८४२) काम्यकप्रत्ययस्य कित्त्वकरणात् कदाचित् लिङ्गस्यापि गुणः स्यादिति, यथा मृदमाचष्टे मोदयतीत्यादि। भू तिप् इति स्थिते, शप्, ऊकारस्य गुण ओकारः, (३५) अव्। एवं भवतः इत्यादि। पाणिनिः ७।३।८४,८६—१।१।५।

## ५४३। लोपोऽतोऽदेचोः।

(लोपः ११, अतः ६।, अत्-एचोः ७॥)।

अकारस्य लोपः स्यात् अकारे एचि च परे।

भवन्ति, भवसि भवथः भवथ।

(१०८) आ क्मिमभवि। भवामि भवावः भवामः। *

## ५४४। भुवः प्राप्तौ वा मं।

(भुवः ५।, प्राप्तौ ७।, वा ।१।, मं ११)।

प्राप्तौ भुवो मं स्याद्वा वे। भवते। †

## ५४५। यायातोऽतः।

(ई ।१।, आ ।१।, आथ-आतः ६।, अतः ५।)।

अकारात् परयोराथातोराकार ईः स्यात्।

भवेते भवन्ते, भवसे भवेथे भवध्वे, भवे भवावहे भवामहे। ‡

---

* अत्र अदेचोरिति प्रकरणबलात् धोः परत्र जातयोरेव ग्रहणं, 'यथा भवन्ति भवे भवन् बुभूर्षतीत्यादि, मुरारिः कृष्णैकत्वमित्यादौ न प्रसङ्गः। लोपोऽतोऽदेतोरित्यत्र पाठः साधुः, एकारभिन्नानामनावश्यकत्वात्, अदेचोरिति तु लिपिकरप्रमादागत इति। भवन्ति इत्यत्र अपोऽकारलोपः। पाणिनिः ६।१।९७।

† भू सत्तायामिति गणपाठात् भूधातोः सत्ता एव अर्थः, सत्ता च उत्पत्तिर्विद्यमानता च। अस्मिन्नर्थे (५३१) परस्मैपदमेव। यदा तु प्राप्तिरर्थः तदा आत्मनेपदमपि भवतीत्येतत्कथनार्थम् एतत् सूत्रं। "प्राप्तिसम्पन्नजन्मसु" इति भट्टमल्लः। आत्मनेपदमेवेति केचित्। घं कर्त्तरि वाच्ये इति मण्डूकप्लुताधिकारात् अनुवर्त्तते। आत्मनेपदप्रकरणं हित्वा अत्रैतत्सूत्रकरणं निरन्तरज्ञापनार्थं प्रथमप्रयुक्त भूधातोः पदसमुदायप्रदर्शनार्थञ्च। पाणिनिमते भूधातुः परस्मैपदी सत्तार्थश्च।

‡ ई आ इति भिन्न पदं। आथ च आत चेति तस्य। आथ आत इति केवलयोरसम्भवात् तदादि विभक्तीनां ग्रहणं, तेन आथे आते आथां आतां इत्येतेषां ग्रहणं। भवेते भवेथे—उभयत्र अनेन आत-आथयोराकार ई, (२३) गुणः। अत्र

## ५४६ । ख्या या-युस्-यामा-मीयुसीयम् ।

(ख्याः ६।, या-युस् यामाम् ६।।।, ई-ईयुस्-ईयम् ।१।।।) ।

अकारात् परेषां ख्याः या युस् याम् एषां स्थाने—
ई ईयुस् ईयम् एते क्रमात् स्युः । *

भवेत् भवेतां भवेयुः, भवेः भवेतं भवेत, भवेयं भवेव भवेम । भवेत भवेयातां भवेरन्, भवेथाः भवेयाथां भवेध्वं, भवेय भवेवहि भवेमहि । भवतु भवतां भवन्तु ।

## ५४७ । ह्लेर्लोपोऽस्योप्नोश्च ।

(ह्लेः ६।, लोपः १।, अस्योप्नोः ५।, च ।१।) ।

अकारा-दस्याभ्या-मुप्नुभ्याञ्च ह्लेर्लोपः स्यात् । †

भव भवतं भवत, भवानि ।

## ५४८ । व्यस्य ग्यनुकार डाच् च्वि कणेऽलं सन्मनोऽदोऽन्तःपुरो ऽस्तं तिरः कारिकोर्य्यादे र्धौ सः ।

(व्यस्य ६।, गि—उर्य्यादेः ६।, धौ ७।, सः १।) ।

एषां व्यानां धौ परदे सः स्यात् । ‡

---

इकारकरणेनापि पदसिद्धौ (५सूत्रे) द्विमात्रवर्णेन सह एकमात्रवर्णस्य साम्यमयुक्तमिति कृत्वा द्विमात्रकरणं ; एवं परत्रापि बोध्यम् । पाणिनिः ७।१।८१ । अत्र इय् इति ह्रस्वः ।

* ख्या इति ग्रहण मदन्तधातोर्ख्या मप्राप्त्यर्थं । पाणिनिः ७।२।८० ।

† स्यः संयोगः, नास्ति स्यो यत्र सोऽस्यः, उप् च नुश्चेति उप्नुः, अस्यश्चासावुप्नुश्चेति अस्योप्नुस्तस्मात् । चकारादकाराच्च । उप्नुभ्यां यथा—तनु हिनु । अस्याभ्यां किं, आप्नुहि । पाणिनिः ६।४।१०५,१०६ ।

‡ अनुकारी भ्रनत्पटदित्याद्यनुकरणशब्दः । गिश्च अनुकारश्च डाच् च च्विश्च कणे च अलम् च सत् च मनस् च अदस् च अन्तर् च पुरस् च अस्तम् च तिरस् च

**५४९। प्राग्वन्नो णोऽन्तरदुर्गे णादि हन मीना हिन्वानिप् शान्तनशो,-गद नद पत पद दा मा सो हन वा या द्रा प्सा वप वह शम चि दिहान्तने,-र्वा त्वन निंस निन्द निच्च मवान्त-हनो,-ऽकखाद्यषान्तान्त-नेः।**

(प्राग्वत् ।१।, नः ६।, णः १।, अन्तर्-अदुर् गेः ५।, णादि—नशः ६।, गद—नेः ६।, वा ।१।, तु ।१।, त्वन—हनः ६।, अक—नेः ६।)।

णादे र्धौ हन्ते र्मीनाते र्हिनोते रानिपः शान्त-नशो र्गदाद्यन्त-नेश्च नस्य अन्तरो दुर्वर्जगेश्च परस्य णविधिहेतौ सति णः स्यात्, अनादे र्मवान्त-हन्तेः कादि-खादि-षान्तवर्ज-ध्वन्त-नेश्च वा स्यात्। अन्तर्भवाणि प्रभवाणि। दुरस्तु दुर्भवानि। भवाव भवाम। भवतां भवेतां भवन्तां, भवस्व भवेथां भवध्वं, भवै भवावहै भवामहै।*

---

कारिका च उर्य्यादिश्चेति तस्य। डाच् च्वि इति द्वौ प्रत्ययौ (५०१,४९५), अत्र तदन्तानां ग्रहणं। अव्ययानामेषां शब्दानां धातौ परपदे सति समासः स्यादित्यर्थः। यथा—प्रणम्य, श्रुतत्कृत्य, पटपटाकृत्य, कृष्णीभूय। कणे मनस्-शब्दौ तृप्त्यर्थौ, कणेकृत्य मनःकृत्य, पयः पिबतीति शेषः। अलङ्कृत्य। सत् आदरे, सत्कृत्य। नञ्पूर्व्वत्वेऽपि असत्कृत्य। अदः अनुपदेशे—अदःकृत्य, अन्तर्गत्य पुरस्कृत्य। अस्तमित्युपलब्धौ, अस्तङ्गत्य। तिरोभूय। कारिका मर्य्यादा यत्न पीडासु, कारिकाकृत्य। उरीकृत्य, आदिना उररी ऊरी प्रभृतीनां ग्रहणं। एषु समासात् (११७६) क्त्वो यप्। अत्र समासः एकपदीभावमात्रं, द्वन्द्वादिसंज्ञा तु स्याद्यन्तानामेव, अतः समासप्रकरणे एतत् सूत्रं न कृतं। धातुप्रकरणघटित-णत्वविधेः पूर्व्वं समासकरणात् समासाभावे णत्वं न स्यादिति सूचितम्। पाणिनिः १।४।६१,६२,६३,६४,६५,६६,६७,६८,७०,७१।

* नास्ति दुर् यत्र सोऽदुः, अदुश्चासौ गिश्चेति अदुर्गिः। अन्तर् च अदुर्गिश्चेति तस्मात्। मूर्द्धन्य णादिश्च हन च मीनाश्च हिनुश्च आनिप् च तालव्य-शान्त-नशश्चेति तस्य,

## ५५०। घोटीयोष्वम् धोरमा।

(घो-टी-थीष ७॥, अम् ।१।, धोः ६।, अमा ।३।)।

**आसु परासु धोरम् स्यात् न तु मा योगे।**

**अभवत् अभवतां अभवन्, अभवः अभवतं अभवत, अभवं अभवाव अभवाम। अभवत अभवेतां अभवन्त, अभवथाः अभवेथां अभवध्वं, अभवे अभवावहि अभवामहि। ***

---

मूर्द्धन्यणादिरिति (५७०) णोपदेशं कृत्वा शेषः। (५६९) पुनर्दन्त्यत्वप्राप्तिः स्यादिति। गदश्च नदश्चेत्यादिद्वन्द्वे गद—दिहाः, ते अन्ते यस्य स गद—दिहान्तः, सचासौ निश्चेति गद—दिहान्तनिस्तस्य। मवौ अन्ते यस्य स मवान्तः, सचासौ हन चेति मवान्तहन, अनच निंसच निन्दच निवच मवान्तहन चेति तस्य। कखौ आद्यौ येषां ते कखाद्याः, मूर्द्धन्यषोऽन्ते येषां ते षान्ताः, कखाद्याश्च षान्ताश्च कखाद्यषान्ताः, न कखाद्यषान्ताः अकखाद्यषान्ताः, ते अन्ते यस्य सः अकखाद्यषान्तान्तः सचासौ निश्चेति तस्य।—

यथा—प्रणयति प्रहणिष्यति इत्यादि। मीना इति ग्रायुक्तस्य मीधातोः, हिनु इति ग्रुयुक्तस्य हिधातोर्ग्रहणं। आनिप् इति विभक्तिः। प्रणश्यति इति शान्तनशत्वात् णत्वं, प्रनष्ट इति न णत्वं। गदाद्यन्तनेर्यथा—प्रणिगदतीत्यादि। दाइति दासंज्ञकस्य ग्रहणं, तेन—प्रणियच्छति प्रणिददाति प्रणिदधाति। देङ् दो धेट इति त्रयाणां (६०८) आकारे प्रणिदास्यते इत्यादौ णत्वं स्यात्, शिति परे तु आकाराभावात् दासंज्ञाभावे न णत्वं। दीङ इत्यस्य (७४३) ङादेशे णत्वं स्यादेव। मा इति स्वरूपग्रहणं—तेन माङ्लि, मा ल, माङ्य, इत्येतेषां णत्वं स्यात्, मीञ् मीङ्य मीङ्ग इत्येषां (७४५) ङादेशे, एवं मेङ् इत्यस्य (६०८) आकारे च स्यादेवेति। अनादेस्तु वा—यथा—प्राणिति प्रानितीत्यादि। प्रनिकरोति प्रनिखादति प्रनिशिंषति इत्यादौ कादि-खादि-षान्तान्त-नित्वात् न णत्वं। तद्भिन्ननित्वात् प्रणिपचति प्रनिपचतीत्यादौ विकल्पः। अन्तर्भवाणीत्यादौ आनिपो नस्य णत्वं। पाणिनिः ८।४।१४,१५,१६,१७, १८,१९,२२,२३,२४।

* णादिहनमीनादीनामनुवृत्तिमाशङ्क्याह धीरिति। मा इत्यनेन माङ्-शब्दस्यापि ग्रहणं। योगस्तु अर्थेन, न तु अव्यवहितत्वेन। अम् इत्यागमः, स इत् (१७) आदौ स्यादिति। अभवदिति भू-धा दिप्, अनेन अम्, (५४१,५४२,३५,६४) शप्, गुणः, ओस्थाने अव्, इस्थाने त्। एवं सर्व्वत्र। पाणिनिः ६।४।७१,७४।

## ५५१। ष्यां सिः। (ष्यां ७, सिः १।)।

धोः सिः स्यात् ष्यां। *

## ५५२। भूस्थापिबदेनो लुक् पे।

(भू-स्था-पिब दा-इनः ५।, लुक् ।१।, पे ७।)।

एभ्यः सेर्लुक् स्यात् पे। अभूत् अभूतां। †

## ५५३। भुवो वन् टीव्यचि।

(भुवः ६।, वन् ।१।, टीव्यचि ७।)।

भुवो वन् स्यात् टीव्योरचि परे। अभूवन्। ‡
अभूः अभूतं अभूत, अभूवं अभूव अभूम।

## ५५४। वसोऽरस्येमनौदितः।

(वसः ६।, अरस्य ६।, इम् ।१।, अनौदितः ५।)।

अनौदितो धोः परस्य अरस्य वसस्य इम् स्यात्। §
अभविष्ट अभविषातां।

---

* अर्थगतविशेषात् निमित्तगतविशेषस्य बलवत्त्वात्, अय अप्ब्धमादीनां यकोऽपि बाधकः। तेन कर्त्तरि अभविष्ट, कर्म्मणि अभाविषातामित्यादि। पाणिनिः ३।१।४३,४४।

† भूश्च स्थाश्च पिबश्च दाश्च इन् चेति तस्मात्। पिब इति निर्देशात् पा ल रक्षणे पै शोषे इत्येतयोः अपासीत्। दा इति दासंज्ञकः, तेन दै प शोधने इत्यस्य अदासीदिति। अभूदिति ष्या रत्वात् (५५४) वसोऽरस्येति न इम्। ङित्त्वात् (५४२) न गुणः। लुक्करणात् (५७४) न वृद्धिः। पाणिनिः २।४।७७।

‡ भुव इति षष्ठ्यन्तस्य भूधातोर्वन्करणं धात्ववयवत्वात् तस्मिन् परे भूधातोः (५४२) गुणनिषेधार्थम्। वनोऽकार उच्चारणार्थः, न इत् (१७) अन्ते। भू-अन् (५५०,५५१, ५५२,५५३) अभूवन्। पाणिनिः ६।४।८८।

§ न रोऽरस्तस्य। नास्ति औत् इत् यस्य सः अनौदित् तस्मात्। वस इति अन्तःस्थवकारादिः प्रत्याहारः, अरस्येति (५२०) पश्च रः शिवेति सूत्रोक्तनिश्चय।

## ५५५। मान्तोऽदनतः।

(मान्तः ६।, अत् ।१।, अनत. ५।) ।

मस्यान्त इत्यस्य अत् स्यात् नत्वकारात् परस्य । *
अभविषत, अभविष्ठाः अभविषाथां ।

## ५५६। धे स-लोपो वा। (धे ७।, स लोपः १।, वा ।१।)।

धे परे सस्य लोपो वा स्यात् । †

## ५५७। टी ठी ढीं धो ढिचः सेमस्तु हलो वा।

(टी-ठी-ढी-धः ६।, ढ ।१।, इच. ५।, सेमः ५।, तु ।१।, हलः ५।, वा ।१।) ।

इचः परस्यासां धस्य ढः स्यात्, सेमहलात् परस्य तु वा स्यात् ।
अभविढ्ं अभविध्वं, (६४) झप्झसोरिति सस्य दः—अभविद्ध्वं, ‡ अभविषि अभविष्वहि अभविष्महि ।

---

न इत् (१७) आदौ । इमो वसस्थानजातत्वेन तत्तुल्यत्वात् वसो गुणित्वागुणित्वेन इमोऽपि गुणित्वागुणित्वं, तेन विवरिथ इत्यादौ गुणः, दुदुविव इत्यादौ न गुण । औदितस्तु कविकल्पद्रुमात् ज्ञेयाः । पाणिनिः ७।२।३५—७।२।१० । अत्र औदित्स्थाने अनुदात्तेत्कथनम् ।

* मस्य आत्मनेपदस्य अन्त् मान्त् तस्य । अन्त् इति हमन्तस्य ग्रहणं, तेन अन्त अन्ते अन्तां इत्येषामपि । अनत इति किं, एधन्ते, (५४२) लोपोऽतोऽदिचोरित्यकार-लोपस्य स्थानिवत्त्वाङ्गीकारात् । पाणिनिः ७।१।५ ।

† पाणिनिः ८।२।२५ ।

‡ टी-ठी ढीनां ध टीठीढीध तस्य । सह इमा वर्त्ततेऽसौ सेम् तस्मात् । आसां टी ठी-ढीनां । हल् प्रत्याहारः । भू—ध्वं (५५०, ५५१, ५५४, ५४२, ३५, ५५६), ततः अनेन धस्य वा ढ, अभविढ्ं अभविध्वं । सलोपाभावपक्षे सस्य द अभविद्ध्वमिति । पाणिनिः ८।३।७८ ।

**५५८। धुर्द्विष्ठ्यङ्ङि ।** (धुः १।, द्विः १।, व्यङ्ङि ७।)।

व्यां अङि च धुर्द्विः स्यात्। *

**५५९। झभ् खथ् ह र्घ कृणां जब् चप् ज ख चुवाः खेः ।** (झभ्—कु-ऋणां ६।।।, जब्—चु-वाः १।।।, खेः ६।)।

खे झभ् खथ् हकार घं कवर्ग ऋवर्णानां क्रमात् जब् चप् जकार ख चवर्गाकाराः स्युः। †

**५६०। भुवोऽड्व्यां ढ-भावे तु वा ।**

(भुवः ६।, अड् ।१।, व्यां ७।, ढ-भावे ७।, तु ।१।, वा ।१।)।

भुवः खे-रड् स्यात् व्यां ढ-भावयोस्तु वा। ‡

बभूव बभूवतुः बभूवुः, बभूविथ बभूवथुः बभूव, बभूव बभूविव बभूविम ; बभूवे बभूवाते बभूविरे, बभूविषे बभूवाथे बभूविढ्वे बभूविध्वे, बभूवे बभूविवहे बभूविमहे। ढे भावे च—बभूवे बुभूवे इति प्रयोगौ।

---

* ठी च अङ् च व्यङ् तस्मिन्। प्रकरणादेव धोः प्राप्तौ पुनरुपादानं, व्या अव्यवहितपूर्व्वधातोरेव द्वित्वं स्यादिति ज्ञापनार्थं, तेन इन्दाम्बभूव इत्यादौ इन्दादेर्न द्वित्वमिति। वीप्साद्यर्थे पदानां द्वित्वमपि वक्तव्यम् (सिद्धान्तकौमुदी-द्विरुक्तप्रकरणं द्रष्टव्यम्।) पाणिनिः ६।१।८,११।

† झभ् च खथ् च हश्च घंश्च कुश्च ऋश्च ते तेषां। जब् च चप् च जश्च खश्च चुश्च अश्च ते। क्रमश्च——झभ् खथ् ह घं कु ऋवर्ण
जब् चप् ज ख चु अ

पाणिनिः ८।४।५४,—७।४।५९,६२,६६।

‡ पाणिनिः ७४।७३। वार्त्तिकञ्च।

भविता भवितारौ भवितारः, भवितासि भवितास्थः भवितास्थ, भवितास्मि भवितास्वः भवितास्मः ; भविता भवितारौ भवितारः, भवितासे भवितासाथे भविताध्वे, भविताहे भवितास्वहे भवितास्महे ।

भूयात् भूयास्तां भूयासुः, भूयाः भूयास्तं भूयास्त, भूयासं भूयास्व भूयास्म ; भविषीष्ट भविषीयास्तां भविषीरन्, भविषीष्ठाः भविषीयास्थां भविषीढ्वं भविषीध्वं, भविषीय भविषीवहि भविषीमहि ।

भविष्यति भविष्यतः भविष्यन्ति, भविष्यसि भविष्यथः भविष्यथ, भविष्यामि भविष्यावः भविष्यामः ; भविष्यते भविष्येते भविष्यन्ते, भविष्यसे भविष्येथे भविष्यध्वे, भविष्ये भविष्यावहे भविष्यामहे ।

अभविष्यत् अभविष्यतां अभविष्यन्, अभविष्यः अभविष्यतं अभविष्यत, अभविष्यं अभविष्याव अभविष्याम ; अभविष्यत अभविष्येतां अभविष्यन्त, अभविष्यथाः अभविष्येथां अभविष्यध्वं, अभविष्ये अभविष्यावहि अभविष्यामहि ।

भवतकि भवतकः । प्रणिभवति प्रनिभवति । *

एवं चेततीत्यादयः । †

---

* बभूव इत्यादि, द्वित्वे, खेर्भस्य ब, अनेन अङ् । भविता इत्यादि (५५४, ५४१, ३५) । भूयादित्यादि किस्वात् न गुणः । भविषीढ्वमिति आसां धस्य ढः स्यादिति कथनेन व्यवधानेऽपि ढः । भविष्यतीत्यादीनि सुगमानि । भवतकीत्यादौ (२०८) टेः पूर्व्वं अक् । प्रणिभवतीत्यादि (५४६) अकखादाषान्तान्तेर्वा णत्वं ।

† एवं चेततीत्यादय इत्यनेन येषु विशेषकार्य्याणि न सन्ति ते एवमित्यर्थः । विशेषकार्य्यार्थं सूत्राण्याह रुदादयस्तीत्यादि ।

## (२) चिती संज्ञाने। *

* चित धातुः, ई अनुबन्धः, संज्ञाने प्रकृष्टज्ञाने (अर्थे) वर्त्तते इति।

---

## प्रसङ्गात् गणपाठोक्ता अनुबन्धास्तत्प्रयोजनानि च लिख्यन्ते।

अ—सुखोच्चारणार्थः। (४)

आ—निष्ठाभावादिकर्म्मं वेट्।
(१०७७, भावे क्रियारम्भे च वाच्ये क्त-क्तवतु-स्थाने वा इट्)।

इ—नुम्वान्। (५६८)

इर्—वा अङ्वान्।
(५६५, ङ इति स्मते)।

ई—अनिड्निष्ठः।
(१०७१, क्त-क्तवतुस्थाने न इट्)।

उ—क्त्वा वेट्। (११७२)

ऊ—वेट्। (५७३) वेम्।

ऋ—चङि अह्रस्वः। (६३८)

ॠ—चङि वा ह्रस्वः। (७१९)

लृ—अङ्वान्। (५६५, ङ)।

ए—सिचि अवृद्धिः। (५७६)

ऐ—यजादि.। (६५१)

ओ—निष्ठा त न।
(१०५२, क्त-क्तवत्वोः त-स्थाने न)।

औ—अनिट्। (५५४) अनिम्।

क—चुरादिः। (७७३)

कि—वा चुरादिः। (७७३)

ग—क्र्यादिः। (७३८)

गि—प्वादिरपि (७६९)।
पूधातुभिन्नश्चेत् ल्वादिश्च। (१०५२)

घ—कटादिः। (५६१,६९५)

ङ—तङ्वान्।
(५२१, कर्त्तरि वाच्ये आत्मनेपदी)।

ञ—ज्वलादिः। (१०००)

ञ—उभयपदी। (५२१)

ञि—अद्य-क्तः।
(१०९५, वर्त्तमानकाले क्तः)।

ट्—साणुः। (११४२)

डु—त्रिमक्युतः। (११४३)

ण—फणादिः। (५७९)

त—अदन्तः। अत्-अन्त। (७७५)

द—तनादिः। (६८८)

ध—रुधादिः। (७३८)

न—स्वादिः। (७३८)

प—मुचादिः। (७४१)

भ—भ्रमादिः। (७४०)

म—घटादिः। (७९८)

मि—णिचि इण्-धर्मा: वा ह्रस्व। (७९९)

य—दिवादिः। (७३८)

र—वैदिकः। (वेदोक्त धातुः।)

ल—अदादिः। (६७०)

लि—ह्वादिः। (७२६)

लु—स्वपादिः। (६६१)

व—वृतादिः। (६४८)

श—तुदादिः। (७३८)

शि—कुटादिः। (७५५)

ष—ह्रदङ्वान्।
(११५६, ह्रदन्तं ङ)।

स—जपादिः। (१७४)

## ५६१ । रुदाद्यस्तिसे-र्दिस्योरीम् ।

(रुदादि अस्ति-से: ५।, दि-स्यो: ६॥, ईम् ।१।) ।

एभ्यो दि-स्योरीम् स्यात् । *

## ५६२ । झस-स्वात् झसीम ईमि सेर्लोपः ।

(झस स्वात् ५।, झसि ७।, इमः ५।, ईमि ७।, से: ६।, लोप: १।) ।

झसात् स्वाच्च परस्य झसि, इमः परस्य ईमि, सेर्लोपः स्यात् । अचेतीत् अचेतिष्टां । †

## ५६३ । अनुस् सिद्धेरभुवः ।

(अन् ।१।, उस् ।१।, सि-द: ५।, अभुव: ५।) ।

सेर्द्वेश्च परस्य अन उस् स्यात् नतु भुवः । अचेतिषुः, अचेतीः । ‡

---

* रुदादिश्च अस्तिश्च सिश्चेति तस्मात् । दिश्च सिश्च तयो: । रुद स्वप श्वस प्र-अन जक्ष इति पञ्च रुदादिः । अस्तिरिति असधातुः, स्वरूपकथने तिप् । सिरिति (५५१) ज्यां सि: । एतेभ्य: परस्य दे: सेश्च ईम् स्यादित्यर्थ: । रुदाद्यस्तिभ्यां घ्या दि-स्योरेव, रुदादेर्ज्यां सि-व्यवधानेन असेर्भू इति आदेशेन च ज्या दिस्योरसम्भवात् । सेस्तु ज्या दिस्योरेव, घ्या असम्भवात् । पाणिनि: ७।३।९६,९८ ।

† झस् च स्वश्चेति तस्मात् । झस् प्रत्याहार: । अचेतीत्—चित—ज्या दि (५५०, ५५१, ५५४, ५४२, ५६१, ५६२) । अचेतिष्टां— अत्र इमः परस्य ईम्येवेति विशेषनियमात् झस्वात् परस्यापि सेर्न लोपः । अचेष्ट अस्तोष्ट इत्यादौ लोपस्वरादेशयोस्तु स्वरादेशविधिर्बलीति न्यायात् आदौ गुणे सिलोपो न स्यादिति । पाणिनि: ८।२।२६,२७,२८ ।

‡ सिश्च दिश्च सिदिस्तस्मात् । से: परस्य ज्या अन् उस्, देस्तु घ्याएव । यथा अचेतिषुः । अस्थुः अपुः अदुः अगुः एषु (५५२) सेर्लुकि, त्यलोपे त्यलक्षणमिति न्यायात् से: परत्वात् अन् उस् । देस्तु अजक्षुरित्यादि । पाणिनि: ३।४।१०९ ।

**५६४। खेराद्यचो लोप्योऽनु घसखपाद्यन्तान्यस्याद्यन्तौ।**

(खे: ६।, आद्यच: ५।, लोप्य: १।, अनु ।१।, घस—अन्तौ १॥)।

खेराद्यच: परो भागो लोप्य: स्यात्, पश्चात् घसादि-खपान्तो यदि स्थोऽवशिष्टस्तस्यादिर्लोप्य:, यद्यन्यादृशस्तस्यान्तो लोप्य:। चिचेत चिचिततु: चिचितु:। *

(३) च्युतिर् क्षरणे।

**५६५। घासुलिद्द्युतपुषादे ङष्टीपे—जॄ श्वि स्तन्भु विषु म्नुचु म्लुचु ग्रुचु ग्लुञ्चुरितस्तु वा।**

(घासु—पुषादे: ५।, ङ: १।, टीपे ७।, जॄ—इरित: ५।, तु ।१।, वा ।१।)।

घासो ऌकारेतो द्युतादे: पुषादेश्च ङ: स्यात् टीपे, आदेस्तु वा। अच्युतत् अच्योतीत्। चुच्योत। †

---

* आदिश्चासौ अच् चेति आद्यच् तस्मात्। आदिरत्र अचां मध्ये इत्यर्थ:। घस् च खप् च घसखपौ, आदिश्च अन्तश्च आद्यन्तौ, घसखपौ आद्यन्तौ यस्य स घसखपाद्यन्त:, स च अन्यश्च तौ घसखपाद्यन्तान्यौ, तौ च तौ स्थौ चेति घसखपाद्यन्तान्यस्थौ, तयोराद्यन्तौ घसखपाद्यन्तान्यस्याद्यन्तौ। अनु पश्चादर्थ:। पश्चात् आद्यच: परभागाभावे इत्यर्थ:। तेन यस्य खे: आद्यच: परभागो वर्त्तते तस्य तल्लोपानन्तरं, यस्य तु न वर्त्तते तस्य प्रथमतएव, घसादि-खपान्त-संयोगस्य आदिवर्णो लोप्य:, अन्यविधसंयोगस्य अन्तवर्णो लोप्य: स्यादिति। चिचेत इति चित—णप् (५५८) द्वित्वं, अनेन खे: तलोप:, (५४२) गुण:। पाणिनि: ७।४।६०,६१।

† ऌ इत् यस्य स लित्। द्युत् च पुष् च द्युतपुषौ, तौ आदी ययोस्तौ द्युतपुषादी। घासुश्च लिच्च द्युतपुषादी चेति तस्मात्। स्वमते लिदित्त्वेनैव सिद्धे द्युतपुषाद्योर्ग्रहणं प्राचामनुरोधात्। इर् इत् यस्य स इरित्। जॄश्च श्विश्च स्तन्भुश्च विषुश्च म्नुचुश्च म्लुचुश्च ग्रुचुश्च ग्लुञ्चुश्च इरिश्चेति तस्मात्। घासुप्रभृतीनां ऌकारेत् चिह्नार्थ:। द्युतादय आत्मनेपदिन:, अत्र तु टी-पे ङविधानसामर्थ्यात् द्या उभयपदिन: स्युरिति।

(४) मन्थ विलोड़ने ।

## ५६६ । स्यात् ठ्यपित् किद्वा ।

(स्यात् ५।, ठौ ।१।, अपित् ।१।, कित् ।१।, वा ।१।) । *

## ५६७ । हसुङ्नो लोपोऽणौ ।

(हसुङ्नः ६।, लोपः १।, अणौ ७।) ।

धोर्हस उङो नस्य लोपः स्यादणौ ।

ममथतुः ममन्थतुः । मथ्यात् । †

---

द्युतादयश्च द्युत श्वित ञिमिदा ञिष्विदा ञिक्ष्विदा रुच घुट रुट लुट लुठ शुभ क्षुभ नभ तुभ स्रन्भु ध्वन्सु भ्रन्सु भ्रन्शु स्रन्भु इति त्रयोविंशतिः । पुषादयश्च पुष शुष तुष दुष श्लिष शक क्रुध क्षुध शुध षिध रधादि (=रध नश तृप दृप द्रुह मुह ष्णुह ष्णिह) शमादि (=शम तम दम श्रम भ्रम क्षम क्लम मद) असु जसु यसु तसु दसु वसु वस व्युस व्युष प्लुष वुस लुष बिस कुस मुस मस समी उच भृशु वृश क्रुश तृष हृष रुष रिष डिप कुप गुप युप रुप लुप लुभ क्षुभ नभ तुभ क्लिद इति । वोपदेवेन तु गणपाठे सर्व्वे इरित्त्वेन निर्द्दिष्टा इति । अच्युतदिति इरित्त्वेन वा ङः । ङस्तु सेर्बा-धकः, तेन पक्षे ठ्यां सिरेव । ठ्या अपि क्ष्चोत इति । पाणिनिः ३।१।५५,५६,५७,५८ । ङ=अङ् ।

* संयोगात् परा अपित् ठी कित् स्याद्वा । परसूत्रे हसुङ्नो लोपोऽणौ ठ्यान्तु वा इति कृते, अपितठ्यां नलोपविकल्पे सिद्धे पृथक् एतत्सूत्रकरणं भ्रस्जधातोः (७५१) भ्रस्जोऽरे णौ भर्ज वेत्यनेन बभर्ज इत्यत्र भर्जादेशार्थं । असंयोगात्तु नित्यम् यथा— पाणिनिः १।२।५ ।

† उङ् धासौ न चेति उङ्न, हसो हसन्तधातोरुङ्न हसुङ्न तस्य । नास्ति णर्यस्मिन् (परे) सोऽणुस्तस्मिन् । मन्थधातोः अतुस् पूर्व्वेण कित्, अनेन न-लोपः । पक्षे कित्त्वाभावात् अगुणत्वाभावे न न-लोपः । मथ्यादिति (५३३) नित्यकित्त्वे नित्यं न-लोपः । पाणिनिः ६।४।२४ ।

(५) क्रुथि हिंसा-संक्लेशयोः ।

**५६८। नेदित्पूजार्थाञ्चोः ।**

(न ।१।, इदित्-पूजार्थाञ्चोः ६॥) ।

इदितो धोः पूजार्थस्याञ्चतेश्च न-लोपो न स्याद्णौ ।
अतएवेदितो नुण् । प्रनिकुन्थ्यगात् । (५४९) कादित्वान्न णः । *

(६) षिधु गत्यां ।

**५६९। भ्वाद्यादिष्णः स्नो ऽष्ठ्यैष्वक्कष्ठिवां ।**

(भ्वाद्यादिषणः ६।, स्नः १।, अ-ष्ठ्यै-ष्वक्क-ष्ठिवां ६॥) ।

भ्वादेरादौ स्थितयोः ष-णयोः स-नौ स्तः, नतु ष्ठ्यै-ष्वक्कष्ठिवां । †

**५७०। सेक सीक सृप सृ सृज**
**स्तृ स्त्यान्ये दन्त्याजन्तसादयः**
**षोपदेशा धवः, स्वक्क**
**स्वित् स्वत् स्वञ्ज स्वप स्मिङश्च ।**
**णोपदेशा स्वनृन्नर्द**
**नाथ नाध नन्द नक्क नृ नटः ।**

---

* इत् इकारः इत् यस्य स इदित्, पूजार्थश्चासौ अञ्च चेति पूजार्थाञ्च, इदिच्च पूजार्थाञ्च च तयोः । इकारानुबन्धधातोर्नकार एव नास्ति कथं तस्य लोपो निषिध्यते अतआह अतएवेत्यादि, (पाणिनिः ७।१।५८) अतएव न-लोपनिषेधादेव । पाणिनिः ६।४।२४,३० ।

† भूः आदिर्यस्य स भ्वादिः, भ्वादेरादिः भ्वाद्यादिः, षश्च णश्च ष्णं, भ्वाद्यादौ ष्ण भ्वाद्यादिष्ण तस्य । भ्वादिरिति भू सत्तायामित्यादिदंशगणात्मकः, तथाच—भ्वाद्यदादी जुहोत्यादि र्दिवादिः स्वादि-रेव च, तुदादिश्च रुधादिश्च तनक्र्यादिचुरादय इति । धोरधिकारेऽपि भ्वादिग्रहणं नामधातुनिरासार्थं । पाणिनिः ६।१।६४,६५ । वार्तिकञ्च ।

**ऽयङ्सिचा ऽनङ्स्तम्भा ऽन्नव्यवस्वन परि नि वि सेव सुम ऽनङ्सिवा ऽनोऽङ्सहां सः षो ऽभ्यपि दश स्यादेस्तु ह्रेश्च। ***

(गि-इकः ५।, सु—सुञां ६।॥, स्या—सहां ६।॥, सः १।, षः १।, अभि ७।, अपि ।१।, दश-स्यादेः ६।, तु ।१।, हेः ६।, च ।१।) ।

स्वादे-रस्यान्तसुञः स्यादे-रगत्यर्थ-सेधो ऽप्रतिपूर्व्व-सदो यङ्वर्ज-सिचो ऽङ्वर्जस्तम्भो ऽन्नार्थव्यवपूर्व्व-स्वनः पर्य्यादिपूर्व्व-सेव-सुम ऽङ्वर्ज-सिव ओऽङ्वर्ज-सहाञ्च गेरिकः परः सः षः स्यात् अभ्यन्तरेऽपि, दशानां स्यादीनान्तु हिरुक्तानाञ्च।

निषेधति न्यषेधत्। गतौ तु—गङ्गां व्यसेधत्। †

---

* गेरिक् गीक् तस्मात्। स्यः स्वरूपः (नतु संयोगः), स्योऽन्ते यस्य स स्यान्तः, न स्यान्तो ऽस्यान्तः, स चासौ सुञ् चेति अस्यान्तसुञ्। स्वश्च सुभश्च सोश्च सुवश्च अस्यान्त-सुञ् च तेषां। अगतौ सेधः अगतिसेधः, नास्ति प्रति यस्मिन् सोऽप्रतिः, स चासौ सदश्चेति अप्रतिसदः, नास्ति यङ् यस्मात् सोऽयङ्, स चासौ सिचश्चेति अयङ्सिचः, नास्ति अङ् यस्मात् सो ऽनङ्, सचासौ स्तम्भश्चेति अनङ्स्तम्भः, वि-अवाभ्यां स्वनः व्यवस्वनः, अन्ने (भक्षणे) व्यवस्वनः अन्नव्यवस्वनः; नास्ति अङ् यस्मात् सोऽनङ् स चासौ सिवश्चेति अनङ्सिवः, ओश्च अङ्च ओऽङौ, न विद्येते ओऽङौ यस्य सः अनोऽङ्, स चासौ सह चेति अनोऽङ्सह; सेवश्च सुमश्च अनङ्सिवश्च अनोऽङ्सहश्च ते सेव-सुमऽनङ्सिवाऽनोऽङ्सहः; परिश्च निश्च विश्च परिनिवयः, तेभ्यः सेवसुमऽनङ्सिवा-ऽनोऽङ्सहः परिनिविसेवसुमऽनङ्सिवाऽनोऽङ्सहः; पश्चात् स्याश्च सेनिश्च सनुजश्च स्वनुजश्च अगतिसेधश्च अप्रतिसदश्च अयङ्सिचश्च अनङ्स्तम्भश्च अन्नव्यवस्वनश्च परिनिवि-सेवसुमऽनङ्सिवाऽनोऽङ्सहश्च ते तेषां। दशानां स्यादीनां समाहारस्तस्य, तेन सिव-सहोर्न ग्रहणं।

† अत्र सुव इति तौदादिकस्य षू श्च क्षेपे इत्यस्य ग्रहणं, नतु षू ङ्ल षूयीङ् इत्येतयोः। सेनिरिति नामधातुः सेना-शब्दात् (८५८) ञिः। निषेधतीत्यत्र अगत्यर्थत्वात् षत्वं, व्या द्रिप न्यषेधदित्यत्र अमव्यवधानेऽपि षत्वं। गत्यर्थे तु व्यसेधदिति न षत्वं। सेध इति निर्द्देशात् दैवादिकस्य निसिध्यतीत्यादौ न षत्वं। अवष्वणतीत्यत्र व्यवस्वन-

(७) षिधू शास्त्रे माङ्गल्ये च।

**५७३। वेमूदित् स्वर चाय स्फाय प्याय सूति सूय धूञ रधादि निष्कुषोऽरवसो रुदुसुनोस्त्वक्त्याः।**

(वा ।१।, इम् ।१।, ऊदित्—निष्कुष: ५।, अरवस: ६।, रुदुसुनो: ५।, तु ।१।, अक्त्या: ६।)।

**एभ्यो वसस्यारस्य इम् स्यात्, वा, रौत्यादेस्तु ठीवर्जं। ***

**असेधीत्।**

**५७४। व्रजवदरलजनिमोऽजिश्विजागु त्रिः सौ पे।**

(व्रज-वद-अर्-अल्-अच्-अनिम: ६।, अजिश्विजागु: ६।, त्रि: १।, सौ ७।, पे ७।)।

---

इत्युक्तेः गीकभिन्नादपि षत्वं। सुम् इति सुम्-आगम: (७५३, ७६६)। (१११) किलादित्यनेन प्राप्तं उपसर्गनिमित्तकमेव षत्वं अनेन नियम्यते, तेन विस्नौति प्रतिस्नाति इत्यादौ न षत्वं ; तोष्टूयते इत्यादौ खि-निमित्तकं षत्वं स्यादेव। किलादित्यत्र यथा, तथा इहापि विसर्गव्यवधानेऽपि षत्वं स्यात्, यथा नि:ष्टौतीत्यादि। पाणिनि: ८।३।६५, ६६,६७,६८,६९, ७०,११२, वार्त्तिकानि च।

* ऊत् इत् यस्य स ऊदित्, रध आदिर्यस्य स रधादि:, निस: कुष निष्कुष ; ऊदिश्च स्वरश्च चायश्च स्फायश्च प्यायश्च सूतिश्च सूयश्च धूञ्च रधादिश्च निष्कुष चेति तस्मात्। रुश्च दुश्च सुश्च नुश्च तस्मात्। स्वर इति स्वृ ऊ शब्दोपतापयो:, सजातीयधात्वन्तराभावात् स्वृग्रहणेनैवेष्टसिद्धौ स्वरग्रहणं क्वचित् निषेधं बाधित्वा विकल्पोऽयं प्रवर्त्तते इति ज्ञापनार्थं,अतएव (६१६) नेमृतस्थप इत्यनेन इम्निषेधेऽपि सस्वरिथ सस्वर्थ इति अनेन वा इम्। सूति सूय इति अदादि-दिवाद्योर्ग्रहणात् षू श चेपे इत्यस्य असावीदिति नित्यमिम्। रधादिस्तु रध तृप दृप मुह द्रुह स्नुह स्निह नश इति अष्ट। स्वमते ऊदित्त्वेनैव सिद्धौ स्वृ-रधाद्योरिह पाठ: प्राचीनमतानुवादार्थ:। रुदुसनु इत्येतेषां ज्यां विकल्पस्यैव वर्जनं, (५८४) नेमसम इति नियमात् नित्यं इम् स्यादेव। पाणिनि: ७।२।४४,४५, वार्त्तिकं "किति तु नित्य: प्रतिषेध:। स्वृत्वा। सूत्वा। धूत्वा।" इति।

व्रजे र्वदे-ररन्तस्यालन्तस्याजन्तस्यानिमश्च सौ पे व्रिः स्यात्, न तु ञि-श्वि-जागृणां। असैत्सीत्, असेधिष्टां। *

## ५७५। ढभात् तथोर्धोऽधः।

(ढभात् ५।, त-थोः ६॥, धः १।, अधः ५।)।

ढभात् परयोस्तथयोर्धः स्यात् न तु धाञः। असैद्धां। †

(८) खद स्थैर्य्ये वधे च।

## ५७६। हसादेः सेमोऽह्मये दित्क्षणश्वस-वधो वाऽङतः सौ पे व्रिः।

(हसादेः ६।, सेमः ६।, अ-ह-म-य-एदित्-क्षण-श्वस-वधः ६।, वा ।१।, अङतः ६।, सौ ७।, पे ७।, व्रिः १।)।

हमयान्तादेकारेतः क्षणादेश्चान्यस्य सेमो हसादेरङ्गोऽकारस्य व्रिः स्यात् वा सौ पे। अखादीत्, खादित्वान्न णः (५४८), अखदीत्। ‡

---

* नास्ति इम् यस्मात् सोऽनिम्। व्रजश्च वदश्च अर् च अल् च अच् च अनिम् चेति तस्य। ञिश्च श्विश्च जागृश्चेति तत्, न तत् अञिश्विजागृ तस्य। अर् अल्— एतदन्तयोर्ग्रहणं। अच् इति स्वरवर्णाः। व्रजेर्वदेरिति, धातोः स्वरूपकथने इप्रत्ययो वक्तव्यः। अनिम् इति यदा इम् न स्यात् तदैव, तेन असैत्सीदिति, इमो विकल्पपक्षे अनिम्त्वात् षिध इकारस्य वृद्धिः ऐकारः(८) अचधारात्वैज् व्रिरिति नियमात्। व्रजसाहचर्य्यात् वद इति दन्त्यवकारादिः। (६८८) जागृोऽणबिति गुणप्राप्तावपि इह जागृवर्जनं विशेषविधानात् प्राप्ताया वृद्धेर्निषेधार्थं। पाणिनिः ७।२।१,२,३,४। निषेधस्तु ५म सूत्रे प्रदत्तः।

† ढभ इति प्रत्याहारः ढ ध घ भ इति। असैद्धामिति विकल्पपक्षे अनिम्त्वात् वृद्धौ, (५६२) भि-लोपे, अनेन तस्य धः। धाञस्तु धत्त इति। पाणिनिः ८।२।४०।

‡ हस् आदिर्यस्य स तस्य। सह इमा वर्त्तते यः स सेम् तस्य। एत् इत् यस्य स एदित्, हश्च मश्च यश्च एदिच्च क्षणश्च श्वसश्च वधश्च तत्, न तत् अह्मयेदित्क्षणश्वसवध

## ५७७ । अणित्यन्त्येजुङ्तोः ।

(अणिति ७।, अन्त्येजुङ्तोः ६॥) ।

धोरन्त्यस्येच उङ्तोऽकारस्य च त्रिः स्यात् ञिति णिति च । चखाद ।*

## ५७८ । णप्यन्त्ये वा । (णपि ७।, अन्त्ये ७।, वा ।१।) ।

चखाद चखद । †

(९) गद भाषे ।

प्रणिगदति । ‡

(१०) बद स्थैर्य्ये ।

## ५७९ । तृ फल भज त्रप श्रथ ग्रथ दभाद्यन्तास्यहसां क्याः कित्-सेमथप्यदेः खिलोपश्चा-भ्यश्च

---

तस्य । उङ् चासौ अश्चेति उङत् तस्य । हान्तादिस्तु अचहीत् अक्रमीत् अहयीत् अकटीत् अघणीत् अश्वसीत् अवधीत् एतेषु न वृद्धिः । अखादीत् अखदीत् अनेन वा वृद्धिः । पाणिनिः ७।२।५,७ ।

* अण च णश्च अणौ, अणौ इतौ यस्य स अणित् तस्मिन् । अन्त्यश्चासौ इच्चेति अन्त्येच्, उङ् चासावश्चेति उङत्, अन्त्येच्च उङच्च तौ तयोः । अत्र पुनः उङतो ग्रहणात् हसादेरिति नानुवर्त्तते । तेन धातुमात्रस्य अन्त्येच उङतश्च त्रिः स्यादिति । उङत इति येन केनापि उङतो ग्रहणं, तेन अभाजि अलाभि इत्यादौ (९२६) न-लोपे ततः उङतो वृद्धिः । अत्र वृत्तौ धोरिति ग्रहणात् त्वचयतीत्यादौ ञिसमेतस्य (६३१) धातुसंज्ञायामपि त्वच-शब्दस्य धातुत्वाभावात् उङतो न वृद्धिरिति । जागरयतीत्यादौ (६९९) गुणे, एकनिमित्तकं कार्य्यं कार्य्यान्तरस्य बाधकमिति न्यायात् पुनर्न वृद्धिरिति । चखाद इत्यत्र उङतो वृद्धिः । पाणिनिः ७।२।११५,११६ ।

† अन्त्ये (उत्तमपुरुषैकवचने) णपि परे धोरन्त्यस्येच उङतोऽकारस्य च त्रिः स्याद्वा इत्यर्थः । पाणिनिः ७।१।९१ ।

‡ प्रणिगदतीत्यत्र (५४९) गदाद्यन्तर्णत्वं ।

**दद् वाद्यन्यथा-खि णु नलोपिनां जॄ वम भ्रम त्रस फणादि वधार्थ-राधान्तु वा।**

(तॄ—हसां ६।।।, व्या: ६।, कित्-सेमथपि ७।, अत् ।१।, ए: १।, खि-लोप: १।, च ।१।, न-अश—नलोपिनां ६।।।, जॄ—राधां ६।।।, तु ।१।, वा ।१।)।

त्रादीनामाद्यन्तस्थितास्यहसानाञ्च अकार: व्या: किति सेमथपि च ए: स्यात् खिलोपश्च, न तु शशे ददे वकारादे रन्यथाभूतखे णुमतो नलोपिनश्च, जॄवमभ्रमत्रसफणादीनां हिंसार्थस्य राधेश्च वा स्यात्। बेदतु: बेदु: बेदिथ। अन्यथाभूतखेस्तु चखदतु:।*

(११) णद शब्दे।

(५६९) भ्वाद्यादीति णो न:। नदति। प्रणिनदति।†

---

* स्य: संयोग:, न स्योऽस्य:, अस्यश्चासौ हस चेति अस्यहस्, आद्यन्तयो: अस्यहस् येषां ते आद्यन्तास्यहस:। तॄश्च फलश्च भजश्च त्रपश्च श्रथश्च ग्रथश्च दभश्च आद्यन्तास्यहसश्च तेषां। सह इमा वर्त्तते य: स सेम्, सेम्चासौ थप् चेति सेम्थप्, किच्च सेम्थप्च तस्मिन्। अन्त:स्थ-वकार आदि र्यस्य स वादि:, अन्यथा अन्यप्रकारो जात: खिर्यस्य सोऽन्यथाखि:, णुश्च नलोपश्च तौ णुनलोपौ, तौ विद्येते ययोस्तौ णुनलोपिनौ ; शशश्च (पाणिनिमते तु दन्त्यान्त:) ददश्च वादिश्च अन्यथाखिश्च णुनलोपिनौ च ते, पश्चात् नञ् समासे तेषां। वधार्थश्चासौ राधचेति वधार्थराध, जॄश्च वमश्च भ्रमश्च त्रसश्च फणादिश्च वधार्थराध च ते तेषां।

तॄधातोर्णुमत्त्वात् फलभजोरन्यथाखित्वात् त्रप: संयोगादित्वात् श्रथग्रथो: संयोगादित्वात् नलोपित्वाच्च दभो नलोपित्वात् अप्राप्तौ पृथगुक्ति:। फणादिश्च फण राज भ्राज भाश भ्लाश स्यम स्वम इति। अत्र फणादिपाठसामर्थ्यादेव आकारस्यापि एत्वं, एवं वधार्थराधोऽपि।

बेदतुरित्यादि वर्ग्यबकारादित्वात् न निषेध:। दन्त्यादेस्तु ववजतु: ववनतुरित्यादि। चखदतुरिति (५५८) खस्यार्ने च-करणादन्यथाखित्वं। पाणिनि: ६।४।१२०,१२१,१२२, १२३,१२४,१२५,१२६, वार्त्तिकानि च।

† प्रणिनदति (५४८) गदाद्यन्तर्गत्वं।

(१२) अर्ह पीड़ायां।

५८०। स्यान्तादादृदाद्यश्नोः खेरान् क्यां वा त्वाञ्छेः।

(स्यान्तादादि-ऋदादि-अश्नोः ६।, खेः ६।, आन् ।१।, क्यां ७।, वा ।१।, तु ।१।, आञ्छेः ६।)।

स्यान्तो योऽकारादिस्तस्य ऋकारादेः अश्नोतेश्च खेरान् स्यात् क्यां आञ्छतेस्तु वा।　　आनर्ह।*

(१३) इदि परमैश्वर्य्ये।

५८१। भूयोऽमजादेः। (भूयः ।१।, अम् ।१।, अजादेः ६।)।

अजादेरमि कृते पुनरम् स्यात्।　ऐन्दत्।†

५८२। विजादि-दयायासत्यानेकाचोऽनृच्छूर्णोच्चामाम्।

(विजादि—अनेकाचः, ५।, अनृच्छूर्णोः ५।, क्यां ७।, आम् ।१।)।

---

* स्यः संयोगोऽन्ते यस्य स स्यान्तः। अत् आदिर्यस्य सः अदादिः। स्यान्तश्चासौ अदादिश्चेति स्यान्तादादिः। ऋत् आदिर्यस्य स ऋदादिः। स्यान्तादादिश्च ऋदादिश्च अश्नुश्चेति तस्य। अत्र ऋदादिरिति अन्तवर्त्ति-वर्णान्तरसहित-ऋकारादिरेव, तेन ऋधातोर्न ग्रहणं। आनर्ह इति अर्ह-णप्, द्वित्वं, खेः स्थाने आन्। पाणिनिः ७।४।७१,७२, वार्त्तिकञ्च।

† अच् (स्वरवर्णः) आदिर्यस्य सोऽजादिस्तस्य। अमि कृते इति (५५०) धीटीथीष्वम् इत्यनेन। ऐन्दत् इद अतएवेदितो नुण् इन्द, ध्या दिप् (५५०) अमि, अथ धातोरिकारेण सन्धौ, पश्चात् अनेन पुनरम्, ततः पुनः सन्धिः। अथ अमृद्वयस्य सन्धौ पुनरमकरणस्य वैयर्थ्यात्। (५०५) धीटीथीष्वम् धोरमा अजादेर्विश्व, इति कृते सिद्धौ पुनरेतत्सूत्रकरणं आदिष्टस्यापि अजादेः पुनरमविधानार्थं, तेन यजधातोः ऐज्यत, वश्चधातोः औष्टामित्यादि सिद्धं। पाणिनिः ६।४।७२।

कसंज्ञेजादेर्दय अय आस एभ्यस्त्यान्तादनेकाचश्च आम् स्यात्, नतु ऋच्छूर्णोः । *

**५८३ । भ्वस्क्रन्वामः ।** (भू-अस्-कृ ।१॥, अनु ।१।, आमः ५।) ।

भू अस् कृ एते आमन्तादनु प्रयुज्यन्ते ।

इन्दाम्बभूव इन्दामास इन्दाञ्चकार । †

**५८४ । नेम ऽसुमक्र सृ ट भृ स्तु द्रु श्रु स्रो-रेव थ्याः ।** (न ।१।, इम ।१।, असुमकृ—स्रोः ५।, एव ।१।, थ्याः ६।) ।

एभ्यएव थ्या इम् न स्यात्, अन्यस्मादनिमोऽपि स्यात् ।

---

* कर्गुरः । कश्चासौ इच् चेति किच, किच् आदिर्यस्य स किजादिः, किजादिश्च दयश्च अयश्च आसश्च त्यश्च अनेकाच्चेति तस्मात् । ऋच्छच ऊर्णुश्च ऋच्छूर्णु, न ऋच्छूर्णुः तस्मात् । त्यः प्रत्ययान्तः । त्यान्तानामनेकाचत्वेनैव प्राप्तौ पृथक् ग्रहणं स्मामास (८४८) इत्याद्यर्थम् । पाणिनिः ३।१।३५.३६,३७ ।

† भूश्च असच कृश्चेति भूसकृ । आम इति पञ्चम्या एव परतः प्रयोगे सिद्धे अनुग्रहणं क्रियाविशेषणोपसर्गव्यवधानेऽपि प्रयोगार्थं । तेन तं पातयाम्प्रथममास इति, उचाम्प्रचक्रुरिति च रघुभट्टी । (इदन्तु न पाणिनिसम्मतम्) । पूर्व्वतोऽनुवृत्तावपि पुनरामो ग्रहणं सामान्यामप्राप्त्यर्थं, तेन (६०७) दरिद्राञ्चकारेति, (७२८) पशाम् वेति आमोऽपि भ्वादेरनुप्रयोगः । अत्र आत्मनेपदिधातुभ्योऽसभुवो-रनुप्रयोगे कर्त्तरि क्रतस्य आत्मनेपदस्य स्थाने परस्मैपदादेशो वक्तव्यः, करोते-रनुप्रयोगे तु (कर्त्तृगेऽपि क्रियाफले) मूलधातोरेव परस्मैपदात्मनेपदे लिङ्गतः (पा. १।३।६३) । इन्दामासेति, असेः अनुप्रयोगविधानसामर्थ्यादेव (६९२) न भू-आदेशः । पाणिनिः ३।१।४०, अत्र सूत्रे "प्रयुज्यते इत्यनेनैव प्रयोगे लब्धे अनुपदोपादानं विपर्य्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्च इति वार्त्तिककाराशयः ; तेन तं पातयां प्रथममासेत्यादिकमपाणिनीयमिति मल्लिनाथः ।" "तं पातयां प्रथममास पपात पश्चाच्छिष्यसाधु" इति क्रमदीश्वरः । उषां प्रचक्रुरित्यत्र उषान् प्रचक्रुरिति केचित् समादधिरे इति गोयीचन्द्रः । "आमः कृञनुप्रयुज्यते" इति कातन्त्रसूत्रम् । "व्यवधानेऽपि दृश्यते, तं पातयाम्प्रथममास पपात पश्चात्" इति पद्मनाभः ।

इन्द्राश्वकर्थ । *

(१४) णिदि कुत्सायां ।

प्रणिन्दति प्रनिन्दति । †

(१५) उख गतौ ।

## ५८५ । खे यो रियुवणे ।

(खेः ६।, योः ६।, इयुव् ।१।, अणे ७।) ।

खेरिवर्णोवर्णयोः क्रमादियुवौ स्यातां अणे परे ।

उवोख । अणे किं, ऊखतुः । ‡

(१६) अञ्चु गतिपूजनयोः ।

(५६८) नेदितपूजार्थाञ्चोरिति, अञ्चात् । गतौ तु अच्यात् । §

(१७) म्रुचु इर् गत्यां ।

(५६५) शासुलिद्द्युदिति ङो वा, अम्रुचत् अम्रोचीत् । ¶

---

* नास्ति सुम् यस्य सः असुम्, असुम् चासौ क्त्वेति असुमक्त्वः. असुमक्त्वश्च स्तुश्च द्रुश्च भ्रुश्च स्नुश्च द्रुश्च गुश्च स्रुश्चेति तस्मात् । (५८७) नेमेकाजादित्यत्र ब्रुवर्जनात् प्राप्तस्य इमो निषेधार्थमिह श्रु-ग्रहणं । अन्येषां समानां एकाच्त्वेन अनिमामपि इह ग्रहणं नियमार्थं । नियमश्च अनिड्धातुमध्ये केवलं एभ्य एव क्त्वा इम् न स्यात्. सुतरां एवकारेण अन्यस्मादनिमोऽपि धातोः क्त्वा इम् स्यादिति । इन्द्राश्वकर्थ इत्यत्र असुमक्त्वादिमनिषेधः । पाणिनिः ७।२।१३, "क्रसोऽसुट." इति वार्त्तिकञ्च ।

† प्रणिन्दति प्रनिन्दतीत्यत्र (५४९) वा णत्वं ।

‡ इश्च उश्च यु तस्य योः । इयच उवच तत् । अणे असमानवर्णे परे । उवोख इति उख णप्, द्वित्वं, खलोपः, मूलस्य उकारस्य गुण ओकारः, (वर्णादाङ्गं बलीय इति न्यायात् आदौ न (२२) दीर्घः ।) ततः अनेन खे. उस्थाने उव् । ऊखतुरित्यत्र कित्ति गुणाभावे समानवर्णत्वात् न उव्, सन्धिः । पाणिनि ६।४।७८ ।

§ अञ्चात् अनृच द्वी-यात्, पूजार्थत्वात् न नलोपः । गत्यर्थे अच्यादिति न लोपः ।

¶ अम्रुचदिति म्रुच टी-दि, ञादित्वात् ङ,ङिति गुणाभावः । पक्षे क्त्वां सिरित्यादि ।

एवं (१८) ग्लुचु, गुचु, ग्लुञ्चु ।

(१९) आछि आयामे ।

आनाञ्छ आञ्छ ।

(२०) वज गतौ ।

ववजतुः, ववजिथ । (५७९) वादित्वान्न एः । *

(२१) व्रज गतौ ।

(५७४) व्रजवदेति वृिः । अव्राजीत् ।

(२२) अज गतौ क्षेपणे च ।

**५८६ । व्यजोऽरे वा त्वनवस्यघञलक्यपि ।**

(वी ।१।, अजः ६।, अरे ७।, वा ।१।, तु ।१।, अन-वसि ७।, अ घञ्-अल्-क्यपि ७।)।

अजते-र्रे वी स्यात्, अन-स्ये वसि च वा स्यात्, न तु घञादौ ।†

**५८७ । नेमेकाजाद्युदृतोऽग्वि स्मि डौ णौ युक् णुक् स्तुक् त्तुक् च्णुक् वुः ।**

(न ।१।, इम ।१।, एकाच्-आत्-इ-उत्-ऋतः ५।, अग्वि—वुः ५।) ।

---

* ग्लुचुप्रभृतयोऽपि वुरनुबन्धाः गत्यर्थाः । आनाञ्छ आञ्छ इति आञ्छ-णप् (५८०) वा खेरान् । वजधातुर्दन्त्यवकारादिः, अतएव न खेर्लोपः नच अकार एकारः ।

† अनश्च वस् च तस्मिन् । घञ् च अल् च क्यप् च घञल्क्यप् न घञल्क्यप् तस्मिन् । अन इति (११३४) प्रत्ययः । वस् प्रत्याहारः । घञ् अल् क्यप् एते च (११३४,११५०) प्रत्ययाः । 'वी' इति दीर्घोच्चारणं किं—प्रवीतः, वीत्वा, वीतिः इत्याद्यर्थम् । पाणिनिः २।४।५६,५७ ।

श्व्यादेरन्येभ्य एकाज्भ्य आदन्तेवर्णान्तोदन्त-ऋदन्तेभ्य इम् न स्यात्। अवैषीत् आजीत्। विवाय। *

## ५८८। ओध्वोरणचीयुवयो व्यौ त्वस्यान्नैकाचो व्यौः।

(ओ-ध्वोः ६॥, अणचि ७।, इयुव् ।१।, योः ६।, व्यौ १॥, तु ।१।, अस्मात् ५।, नैकाचोः ६॥, व्योः ६॥)।

ओर्धोश्च इवर्णोवर्णयोरणावचि इयुवौ स्तः, अनेकाचोस्तु अस्मात् परयोः क्रमादुवर्णेवर्णयो र्व-यौ स्तः। विव्यतुः विव्युः।†

---

* एकोऽच् यस्य स एकाच्। आच्च इश्च उच्च ऋत् चेति आदुदृत्, एकाच्चासौ आदुदृच्चेति एकाजादुदृत् तस्मात्। श्रिश्च श्विश्च डीश्च शीश्च युश्च रुश्च णुश्च स्नुश्च क्षुश्च क्ष्णुश्च वृश्च ते, न विद्यन्ते ते यत्र तत् अ-श्रि श्वि डी शी यु रु णु स्नु क्षु क्ष्णु वृ तस्मात्। सामान्यविधिप्राप्तस्य इमो निषेधकोऽयं, विशेषविधिना तु स्यादेव, यथा (५६८) यमरमेति अयासीत्, (६२३) स्नुक्रमोरिति अस्नावीत्, (६१७) स्यस्यर्दन इति करिष्यतीत्यादि। यु इति यु ल मिश्रणे युङ ग बन्धे इत्युभयोः, एवं वृ इति स्वादीय-क्र्यादीययोः उभयोरेव प्रतिप्रसवः। अत्र रु णु इति द्वयोर्ग्रहणं नित्येमप्राप्त्यर्थमिति केचित्। अवैषीदिति अज-टी दि, पूर्व्वेण वसे परे वी आदेशे, एकाजिवर्णान्तत्वात् इम्निषेधः, (५७४) अनिमत्वात् वृद्धिः। पक्षे आजीदिति न इम्निषेधः। विवाय इति णप्, अरे परे नित्यं वी-आदेशः, द्वित्वं, (५५९) ह्रस्वः, (५७७) वृद्धिः, सन्धिः। कारिका।

† ओश्च धुश्च ओधू तयोः। नास्ति णुर्यस्मिन् सोऽणुः, अणुश्चासावच्चेति अणच् तस्मिन्। इय् च उव् च तत् इयुव्। इश्च उश्च यु तस्य। वश्च यश्च तौ व्यौ। न स्तो-ऽस्यस्तस्मात्। न एको नैकः, नैकोऽच् ययोस्तौ तयोः नैकाचोरिति ओध्वोरित्यस्य विशेषणं। उश्च इश्च वौ तयोः व्योः। योरित्येकवचनान्तस्य इयुव इत्यनेनैव क्रमः, न तु ओध्वोरिति द्विवचनान्तेन, ओरिवर्णस्यासम्भवात्। तेनायं नियमः—अणावचि परे ओरुवर्णस्य उव् स्यात्, धातोरिवर्णोवर्णयोः क्रमेण इयुवौ स्त इति। एवं व्योरिति द्विवचनान्तस्य ओध्वोरिति द्विवचनान्तेन क्रमः, तेनायं नियमः—अनेकाचः ओरसंयोगात् परस्य उवर्णस्य वकारः, अनेकाचो धातोश्च असंयोगात् परस्य केवलं इवर्णस्य यकार इति। (३५) यलायवायावः इत्यस्य, धातुप्रकरणे अयं विशेषनियमः। पाणिनिः ६।४।७७,८२।

विव्यतुः विव्युः उभयत्र अनेन इस्थाने यः। एवं विव्यिथ विव्यिम।

## ५८९ । सृजदृशच्पाठात्वतो नित्यानिमतु-थपो वेमनृव्येऽदः ।

(सृज दृश अच्-पाठ-अत्वत: ५।, नित्य-अनिम्-तु: ५।, थप: ६।, वा ।१।, इम।१।, अन् ऋ व्ये ऽद: ५।) ।

सृजेर्दृशेरजन्तात् भ्वादिपाठे अकारवतो नित्यमिम्रहिततृत्यात् थप इम् वा स्यात्, नतु ऋ व्येञ अद एभ्य: ।

विवयिथ विवेथ । *

(२३) चि चये ।

## ५९० । घोऽज्य्यरे । (घ: ।१।, अच् ।१।, यि ७।, अरे ७।)।

अजन्तस्य घ: स्यात् अरे ये परे । चीयात् । †

---

* अत् अस्त्यस्य अत्वान्, पाठे (दशविधगणपाठे) अत्वान् पाठात्वान् । सृजश्च दृश च अच्च पाठात्वांश्चेति तस्मात् । नित्यम् अनिम तृ(प्रत्ययो) यस्मात् स नित्यानिमता तस्मात् । नित्यानिमतुरिति अजन्तस्य पाठात्वतश्च विशेषणं । ऋश्च व्येश्च अद चेति ऋव्येऽद, न ऋव्येऽद अनृव्येऽद तस्मात् । पाठकाले अकारवतो यथा पच—पेचिथ पपक्थ, वच—उवचिथ उवक्थ इत्यादि । पाठग्रहणं विना केवलं अत्वत इति कृते कृष धातोरपि (६०४) ऋकारस्य रेफे क्रष इति अकारवत्वात् चकर्षिथ चक्रष्ठ इत्याद्य-निष्टं स्यात् । नित्यानिमतु: किं—शिश्रयिथ पेठिथ इत्यादौ नित्यमिम् । ननु ऋव्येऽद इत्यत्र ऋशब्दस्य ऋवर्णान्तवाचित्वेऽपि, दीर्घऋदन्तानां तृ इत्यस्य च सेमत्वात् प्रसङ्गा-भावे, (६१६) नेमृतस्थपोऽवृस्कुरित्यनेन वृ ऋ स्कृ भिन्न-ऋदन्तात् थप इम्निषेधे, ऋ स्कृ इति द्वयोरेव नित्यानिमत्वात् अनेन विशेषविधानात् वेमप्राप्तौ निषेध:, (५८४) नेमसुभ इति नियमात् (५५४) वसोऽरस्येति नित्यमिम् स्यादेव । अजधातो: थप, वी आदेशे, अजन्तत्वादनेन वा इम्, गुणादिश्च । पाणिनि: ७।२।६१,६२,६३, ६५,६६, काशिका च ।

† न र: अरस्तस्मिन् अरे, यि इत्यस्य विशेषणं । अत्र सामान्याजन्तनिर्देशात् शिवइवाचरति, हरिरिवाचरति शिवायते हरीयते इत्यादौ लिङ्गान्तस्यापि दीर्घ: । धातो-रन्तस्थितस्य प्रकृतेर्विकृतेरपि अचो दीर्घ:, यथा, ह्वे—हूयात, श्वि—शूयादित्यादौ कौ कृतेऽपि दीर्घ: । स्रियात् क्रियादित्यादौ तु (६२०) ऋस्थाने ह्रस्वान्त-रि आदेशसामर्थ्यात् न दीर्घ: । चि—ढी-यात्, दीर्घ:, चीयात् । पाणिनि: ७।४।२५ ।

(२४) कटे वर्षावरणयोः।

अकटीत्, एदित्त्वान्न वृद्धिः (५७६)। *

(२५) गुपू रक्षणे।

## ५९१। कम ऋतो गुपू धूप पण पनो ञिङीयङायाः धुः।

(कमः ५।, ऋतः ५।, गुपू-धूप-पण पनः ५।, ञिङ्-ईयङ्-आयाः १।।।, धुः १।)।

कमो ञिङ्, ऋतेरीयङ्, गुपादेरायः स्यात् स्वार्थे, तदन्तश्च धुसंज्ञः। गोपायति। †

## ५९२। वारे। (वा ।१।, अरे ७।)।

एभ्य एते वा स्युः अरे विषये।

अगोपायीत् अगोपीत् अगौप्सीत्। गोपायामास जुगोप। ‡

---

* कट—ए इत् सिचि अवृद्धिः, वर्षणे आवरणे च वर्त्तते। अकटीत् टी-दि, (५७६) एदित्त्वात् न वृद्धिः।

† गुपूश्च धूपश्च पणश्च पन चेति तस्मात्। ञिङ् च ईयङ् च आयश्च ते। ञिङो ञकारो वृद्ध्यर्थः, ङकार आत्मनेपदार्थः। ईयङो ङकार आत्मनेपदार्थः अगुणार्थश्च। अर्थविशेषानभिधानात् स्वार्थे एव स्युः। गुपधातोः आयप्रत्यये, गुणे, धुसंज्ञायां, गोपाय-धातोस्तिप्। आय इति अदन्तनिर्द्देशात्, गोपायधातोर्ञौ कृते, (७७५) अकारलोपे, गोपायि-धातोः ड्या दि, अजुगोपायदिति अग्लोपित्वात् (६३८) न ह्रस्वः। पाणिनिः ३।१।२८,२९,३०।

‡ अरे इति विषयसप्तमी, तेन, ड्यामिव सिप्रभृतिप्रत्ययः सम्भाव्यते इति टीप्रभृत्युत्पत्तेः प्रागेव आदेशाः, ततो धातुसंज्ञायां टीप्रभृतिविभक्त्युत्पत्तिः। अगोपायीदिति आयान्तत्वेन धातुसंज्ञायां धात्वन्तरत्वात् (५५४) नित्यमिम्। पक्षे ऊदित्त्वात् (५७३) वा इम् अगोपीत्, अगौप्सीदिति अनिमत्वात् (५७४) वृद्धिः। गोपायामास इति (५८२) प्रत्ययान्तत्वादनेकाच्त्वाद्वा आम्। पाणिनिः ३।१।३१।

एवं (२६) धूप तापे । *

(२७) तपी सन्तापे ।

(५५४) ओदित्त्वात् नेम् । अतापीत् ।

(२८) चमु अदने । †

**५९३ । ष्ठिवुक्लमाचमोऽपि घं: ।**

(ष्ठिवु-क्लम-आचम: ६।, अपि ७।, घं: १।) ।

एषां घं: स्यादपि । आचामति । आङ: किं, चमति विचमति । (५७६) मान्तत्वात् न त्रि:, अचमीत् । ‡

(२९) क्रमु पादविक्षेपे ।

**५९४ । क्रम क्लम भ्रम भ्रास भ्लास त्रस त्रुट लष यंस संयस: श्यन् वा रे घे ।**

(क्रम—संयस: ५।, श्यन् ।१।, वा ।१।, रे ७।, घे ७।) ।

एभ्यो घेऽर्थे श्यन् स्यात् वा रे परे । क्रम्यति । §

---

* धूपधातोरुदित्त्वाभावात् टी दि अधूपागीत् अधूपीदिति (५५४) नित्यमिम् ।

† चम-धातु: उकारानुबन्ध: क्त्वा-वेट् (११७२) ।

‡ ष्ठिवुश्च क्लमश्च आ-चमश्च तस्य । अपि इति (५४१) श्रप् परे । आङ्पूर्व्वस्यैव चमो दीर्घ:, नतु केवलस्य अन्योपसर्गपूर्व्वस्य च । पाणिनि: ७।३।७५, "दीर्घत्वे आङि चम इति वक्तव्यम्" इति वार्त्तिकञ्च ।

§ क्रमश्च क्लमश्चेत्यादि द्वन्द्वे तस्मात् । अत्र भ्रास भ्लासौ दन्त्यान्तौ तालव्यान्तौ च । तालव्यान्तौ इति क्रमदीश्वर: । पाणिनिस्तु भ्राश भ्लाश इति पठति । संयसो ग्रहणं अन्योपसर्गनिरासार्थं । श्यन: श न इतौ यकारस्थिति: । श्रपो बाधकोऽयं । शित्त्वात् (५३०) र-संज्ञायां, (५३२) ङित्त्वात्, त्रुट्यतीत्यत्र न (५४२) गुण: । नकारस्तु त्रुट्यन्तौ इत्यादौ (२४५) नुमर्थ: । श्यनि परेऽपि दीर्घ इति गोविन्दभट्ट:, तन्मते क्राम्यतीत्यादि । श्यनो विकल्पपक्षे तत्तद्गणीय: प्रत्यय इति । पाणिनि: ३।१।७०,७१,७२ ।

## ५९५ । क्रमः पेऽपि घं: ।

(क्रमः ६।, पे ७।, अपि ७।, घं: १।) ।

क्रामति । *

## ५९६ । स्नु-क्रमोऽमे ऽरवस इम् ।

(स्नु-क्रमः ५।, अमे ७।, अरवसः ६।, इम् ।१।) ।

आभ्यां वसस्यारस्य इम् स्यान्नतु मे । अक्रमीत् । †

(३०) औ यमु उपरमे ।

## ५९७ । स्था दान पा घ्रा ध्मा म्ना-र्त्ति दृश शत् सद् गमिष् यम जनां—तिष्ठ यच्छ पिब जा जिघ्र धम मनर्च्छ पश्य शीय सीद गच्छेच्छ यच्छ जाः शिति । (स्था—जनां ६।।।, तिष्ठ—जाः १।।।, शिति ७।) ।

एषामेते क्रमात् स्युः शिति परे । यच्छति । ‡

---

* क्रमो घं: स्यात् पे अपि परे । पे किं, विक्रमते, अपि किं, क्रमिष्यति । पाणिनिः ७।३।७६ ।

† स्नुक्रमाभ्यामिम् (५५४) सिद्धेऽपि पुनरिम्विधानं, सिद्धे सत्यारम्भो नियमाय इति न्यायात् आत्मनेपदे न स्यादिति नियमार्थं, तेन कर्म्मणि वाच्ये क्रमधातोस्तनि अक्रामि इत्यत्र, सेमत्वाभावात् (७४४) न ह्रस्वः । यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् स्नुधातोः परस्मैपदे एव अनेन इमि सिद्धे, पुनः (५८७) नेमेकाजित्यत्र स्नुधातोः प्रतिप्रसवः स्नविता स्नुवितवानित्यादौ इम्प्राप्त्यर्थः । पाणिनिः ७।२।३६ ।

‡ स्था च दा-न चेत्यादि द्वन्द्वे तेषां । तिष्ठच यच्छचेत्यादि द्वन्द्वे ते । दान इति नकारेत्-दाधातुग्रहणं अन्य-दाधातूनां प्रयच्छादेशनिवृत्त्यर्थं । पा इति पानार्थ-ना-ग्रहणं । अर्त्तीति ऋ गतौ ऋ लिं गत्यामित्युभयोः । इष इति तौदादिकस्यैव ।

## ५९८ । यम-रम-नमातः पे सेरिम् सन् चैषां ।

(यम—आतः ५।, पे ७।, सेः ६।, इम् ।१।, सन् ।१।, च ।१।, एषां ६।।।) ।

यमादेरदन्ताच्च सेरिम् स्यात् पे, तेषाञ्च सन् ।

अयंसीत् अयंसिष्टां ।*

(५८९) सृजदृशेति वेम्, येमिथ ययन्थ ।

एवं (३१) णमौ शब्दनत्योः ।

(३२) हय गतौ ।

अहयीत् (५७६) यान्तत्वान्न वृः ।

(३३) दल मि भेदे ।

(५७४) व्रजवदेति वृः, अदालीत् ।

(३४) ञि फला विसरणे ।

फेलतुः फेलुः फेलिथ ।†

---

मन इति दैवादिकस्यैव । अथ रै इति भोक्ता श्रितीति कथं, इयर्त्तीत्यत्र (६७०) अपोल्लुकि, रै परे ऋच्छादेशनिवृत्त्यर्थं । क्रमस्तु—

| स्था | दाण | पा | ज्ञा | घ्रा | ध्मा | म्ना | ऋ |
|---|---|---|---|---|---|---|---|
| तिष्ठ | यच्छ | पिब | जा | जिघ्र | धम | मन | ऋच्छ |
| दृश | शद | सद | गम | इष | यम | जन | |
| पश्य | शीय | सीद | गच्छ | इच्छ | यच्छ | जा | |

पाणिनिः ७।३।७७,७८,७९ ।

* यम च रम च नम च आत् च तस्मात् । तेषां यमादीनां स्थाने सन् स्यात्, अ इत् यस्ते । पे किं, अयंस्त अदास्त इत्यादि । पाणिनिः ७।२।७३ ।

† फल धातुः, ञिः अयमः (१०९५), आ निष्ठाभावादिकर्म्म वेट् (१०७२), विस्तरणं उत्पादनं । फेलतुरित्यादि (५७९) खिलोपः, अकारस्य एकारः ।

(३५) त्सर छद्मगतौ।

अत्सारीत्।

(३६) ष्ठिवु निरसने।

(५९३) ष्ठिवुक्लमेति दीर्घः, ष्ठीवति।

# ५९९। ष्ठिवजाद्योः खेष्ठछोस्त वा।

(ष्ठिव्-अजाद्योः ६।, खेः ६।, ठ-छोः ६॥, त ।१।, वा ।१।)।

तिष्ठेव टिष्ठेव, ष्ठीव्यात्। *

(३७) जि जये।

# ६००। जेर्गिः सन्-ल्योः।

(जेः ६।, गिः १।, सन्-ल्योः ७।)।

जिगाय। †

(३८) रक्ष पालने।

अनिरक्षति, षान्तत्वान्न णः (५४९)।

(३९) अक्षू व्याप्तौ।

# ६०१। वाक्ष-क्षमार्थतक्षः श्नुर्घे रे।

(वा ।१।, अक्ष-क्षमार्थतक्षः ५।, श्नुः १।, घे ७।, रे ७।)।

---

* ष्ठिव च अजादिश्च तयोः। ठ च छ च तयोः। ष्ठिवधातोः खेः ठकारस्य अजादिधातोः खेः छकारस्य च तकारः स्याद्वा। यथा तिष्ठेव टिष्ठेव, उतिच्छिषति उचिच्छिषति। ष्ठीव्यादिति (२१८) दीर्घः। "अस्य द्वितीयस्यकारष्ठकारोवेति" वृत्तिः। "उच्छेः तुक्" इति च सिद्धान्तकौमुदी।

† जेर्गिः स्यात् सनि ल्याञ्च। वा-द्वयमध्यवर्त्तित्वादस्य नित्यता। यथा जिगाय, जिगीषतीत्यादि। जेस्तुमन्तोत्तिग्मीति वक्तव्य। जिय तोः तुम् स्थाने तिप्, अन्तु स्थाने च अन्ति भवतीत्यर्थः। पाणिनिः ७।३।५७।

आभ्यां रे परे नुः स्यात् वा चेऽर्थे । अक्ष्णोति अक्षति । *
(५८८) नुश्वोरित्युव्, अक्ष्णुवन्ति ।
(५७३) जदित्वादिम् वा, आक्षीत् । (२१३) स्वादेः सो लोपः ।

## ६०२ । षढोः कः से । (ष-ढोः ६॥, कः १।, से ७।) ।

षस्य ढस्य च कः स्यात् सकारे परे । आक्षीत्, आक्षिष्टां आष्टां, आक्षिषुः आक्षुः । †

एवं (४०) तक्षू कार्श्ये ।

कृशार्थः किं, निर्भर्त्सने सन्तक्षति ।

(४१) णिक्ष चुम्बने ।

(५४९) प्रणिक्षति प्रनिक्षति ।

(४२) कृषी विलेखने ।

## ६०३ । कृष म्टश स्पृश तृप दृप सृपः सिष्ट्यां वा।

(कृष—सृपः ५।, सिः १।, ष्यां ७।, वा ।१।) ।

एभ्यः सिर्वा स्यात् ष्यां । ‡

* कृशार्थश्चासौ तच चेति कृशार्थतच, अचस्य कृशार्थतच चेति तस्मात् । यथा तक्ष्णोति तक्षति काष्ठं तथा, तनूकरोतीत्यर्थः । कृशार्थः किं, सन्तक्षति चौरं साधुः, निर्भर्त्सयतीत्यर्थः । अक्ष्णोति अत्र नुप्रत्ययस्य उकारस्य गुणः । ष्यां आक्षीदिति (५७३) इम्पचे, अनिम्पचेऽपि आक्षीदिति वक्ष्यति । पाणिनिः ३।१।७५,७६ ।

† आक्षीदिति अनिमपचे, ष्यां सिः, (५६१) ईम्, (२१३) कलोपे, अनेन षस्य कः, (१११) षत्वं । आष्टामिति अनिमपचे, (५६२) सि-लोपे, (२१३) कलोपे, (४७) तस्य ट । आक्षुरिति अनिम्पचे कलोपे, षस्य कः, सेः सस्य षत्वे, (५६२) अन् स्थाने उस् । पाणिनिः ८।२।४१ ।

‡ कृष च म्टश चेत्यादि तस्मात् । पचे कृष म्टश स्पृशां (६०५) सक्-प्राप्तिः,

**६०४। वर्द्रोऽकिज्झसे इग्रस्डजोस्तु नित्यं।**

(वा।१।, ऋत्।१।, रः १।, अकित्-झसे ७।, इग्रसृजोः ६॥, तु।१।, नित्यं १।)।

क्षषादीनाम् ऋकारो रः स्यात् वा अकित्झसे, इग्रसृजोस्तु नित्यं। अक्राचीत् अकार्चीत्। *

**६०५। ह्य्रषोऽनिमिजुङोऽदृग्रः सक् च्यां श्लिषस्त्वालिङ्गने।** (ह-ग्र-षः ५।, अनिम्-इजुङः ५।, अ-दृग्रः ५।, सक् ।१।, च्यां ७।, श्लिषः ५।, तु।१।, आलिङ्गने ७।)।

अनिमिजुङो ह-ग्र-षान्तात् दृग्र-वर्जात् सक् स्यात् च्यां, श्लिषतेस्त्वालिङ्गनेऽर्थे। अक्रुक्षत्। †

(४३) दृष हिंसायां।

**६०६। वेम् सह लुभ भृ स्तु ग्रुच वस त्वग्र दृष रिषिषो स्तोऽरस्य।**

(वा।१।, इम्।१।, सह—इषोः ५।, तः ६।, अरस्य ६।)।

---

तृप दृप सृपां (५६५), ङ-प्राप्तिः। "स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः" इति वार्त्तिकम्। अत्र सृप् न दृश्यते।

* नास्ति कित् यस्मिन् सोऽकित्, स चासौ झस् चेति तस्मिन्। क्षषादयोऽनुवर्त्तन्ते। वाग्रहणं परत्वानुवृत्तिनिवृत्त्यर्थं। अकित्-झसे इत्यनेन सुपिनि झसे इत्यर्थः, तेन दिदृक्षते सिसृक्षति इत्यत्र अनिम्-सनि (८०४) अगुणत्वे, न ऋकारस्य रः। केचित्तु अकित्कथनं ङित्झसप्राप्त्यर्थं, तेन दृग्र-यङ्लुकि दरीदृष्ट इत्यादि। अक्राक्षीदिति क्षष-टीदि, सिः, इम्, अनेन प्रथमं ऋस्थाने रः, ततः (५७४) अकारस्य वृद्धिः, पक्षे ऋकारस्यैव वृद्धिः, अकार्क्षीदिति। उभयत्र (६०२) षस्य कः, षत्वं। पाणिनिः ६।१। ५८,५९।

† हश्च तालव्य-ग्रश्च मूर्द्धन्य-ष चेति तस्मात्। नास्ति इम् यस्मात् सोऽनिम्, इत् उङ् यस्य स इजुङ्, अनिम् चासौ इजुङ्चेति तस्मात्। अनिमिजुङ इति ह्यषो

एभ्यस्तस्तारस्य इम् स्याद्दा। रोषिता रोष्टा। *

एवं (४४) रिष हिंसायां।

(४५) उष दाहे।

## ६०७। दरिद्रा काश कास जागुषो वाम् ञ्यां।

(दरिद्रा—ङष: ५।, वा।१।, आम्।१।, ञ्यां ७।)।

एभ्य आम् वा स्यात् ञ्यां। (५८३) ञ्वसन्क्रन्वाम इति। ओषा-ञ्चभूव उवोष। †

(४६) ग्रग्र प्लुतगतौ।

(ग्रग्राग्र) ग्रग्रग्रतुः ग्रग्रग्रिथ। ‡

(४७) मिहौ सेचने।

(६०५) हग्रषोऽनिमिति सक्। (१७५) ह्रोढोभो। अमिक्षत्। (७७) ढ्रोढ्रिर्घश्चानुरिति, मेढ़ा। §

---

विशेषणं। नास्ति द्दश् यत्र भोऽद्दश् तस्मात्। अयं (५५१) सेर्गावक:। अक्षत्दिति (६०१) सेविंकल्प-पक्षे अनेन सक्, षस्य क:, षत्वं। पाणिनि: ३।१।४५,४६,४७।

* सहष लुभच भृश क्षुश ग्रुचच वसच तुश अमच रुषच रिषव इषुश तस्मात्। एषु केषाञ्चित् अप्राप्तौ केषाञ्चित् नित्ये प्राप्ते अयं वैकल्पिकविधि:। एभ्यो रभिन्नस्य तकारस्य इम् वा स्यादित्यर्थ:। इषु-ग्रहणात् इष य वाञ्छे इत्यस्यैव विकल्प:। इष गाभीक्ष्ण्ये इष्य सर्पणे इत्येतयोर्नित्यमेव। पाणिनि ७।२।४८।

† दरिद्रा जागृधात्वो: (५८२) नित्ये प्राप्ते, अत्र विकल्पार्थं ग्रहणं। आम्-विकल्प-पक्षे उवोष इति (५८५) ञ्वि: स्थाने उव्। पाणिनि: ३।१ ३८।

‡ ग्रग्रग्रतुरित्यादौ (५८९) ग्रग्रवर्जनात् न ञ्विर्लोपादि। अत्र ग्रग्राग्र इति पदं निरर्थकं पूर्व्वसूत्रेरेव तत्सिद्धि:।

§ अमिक्षदिति (६०२) ढस्य क:, षत्वं। मेढ़ा इति (५४२) गुण:, (१७५) हस्य ढ:, (५७५) तस्य ध:, (४७) धस्य ढ:, (७७) ढे परे ढलोप:। असंयुक्तत्वादादौ गुणे, पूर्व्वस्य ह्रस्वत्वाभावात् न दीर्घ:।

(४८) दह भस्मीकरणे।

(१७६) दादेर्घः। (१७७) झभान्तस्येति दस्य धः। अधाक्षीत्।

(४९) चह कल्कने।

अचहीत्, (५७६) ह्यन्तत्वात् न वृः।

(५०) शुच शोके।

(६०६) शोचिता शोक्ता।

(५१) ग्लै हर्षक्षये।

## ६०८। एचोऽशित्याः।

(एचः ६।, अशिति ७।, आः १।)।

धोरेच आः स्यात् अशिति। *

(५९८) यमरमेतीम्सनौ। अग्लासीत्।

## ६०९। णवातो डौ। (णप् ।१।, आत. ५।, डौः १।)।

आदन्तात् परो णप् डौः स्यात्। जग्लौ। †

---

* एच इति धातोरन्त्यावयवस्यैव, तेन अढौकीदित्यादौ न स्यात्। एवं अकृतस्यैव एच इति, तेन स्नोष्यतीत्यादौ न स्यात्। अशिति इति विषयसप्तमी, तेन आदौ आः, पश्चात् प्रत्ययोत्पत्तिः, अतएव सामग इत्यत्र आदन्तात् (९९७) ड प्रत्ययः। अत्र अरि इति नोक्ता अशितीति कथनं धे-धातोः ध्यादि अधादित्यत्र लोपविधिर्बलवत्त्वाद्दादौ सेर्लुकि रे परेऽपि आ-प्राप्त्यर्थं। ग्लेधातोः यङ्लुकि ग्लौ-यात् जाग्लायादित्यादौ च रे परेऽपि आ-प्राप्त्यर्थं। (६६५) व्येधातोस्तु ण्यां न स्यात्। पाणिनिः ६।१।४५।

† डौ इत्यस्य ड इत् (१२६) टि-लोपार्थं। औ इति न कृत्वा डौ-करणं क्वचिदेक-पदेऽपि सन्धिर्न स्यादिति सूचनार्थं, तेन तितउः (चालनी) असुमुईषौ अदमुईचौ इत्यादि सिद्धं। जग्लौ इति ग्लै-आ-णप्। पाणिनिः ७।१।३४।

## ६१० । उसेचीम्यणूराचि लोपः ।

(उसि ७, एचि ७, इमि ७, अणूराचि ७, लोपः १) ।

उसि एचि इमि अणोररस्याचि धोरातो लोपः स्यात् ।
जग्लतुः जग्लुः जग्लिथ जग्लाथ । *

## ६११ । स्यादेर्ङ्ःस्थो वा क्यणौ ।

(स्यादेः ६, ङ् ।१, अस्थः ६, वा ।१, क्यणौ ७) ।

स्यादेराद्न्तस्य स्थावर्जस्य ङे स्यात् वा क्यणौ ।
ग्लेयात् ग्लायात् । †

(५२) गै शब्दे ।

## ६१२ । दा मा गै हाक पिब सो स्थोऽरहसे त्वयपि ङी ।

(दा—स्थः ६, अरहसे ७, तु ।१, अयपि ७, ङी ।१) ।

एषां क्यणौ ङे स्यात्, अरहसे त्वणौ यप्वर्जे ङी स्यात् । गेयात् ‡

---

* न रोऽरः, नास्ति णुर्यस्मिन् सोऽणुः, अणुश्चासावरश्चेति अणूरः, तस्य अच् अणूराच् तस्मिन् । पृथक्पदकरणात् उस्यादौ अणानान्वयः । उसि यथा अमु, एचि—ददे दधे, इमि—जग्लिथ, अणूराचि—जग्लतुः, अन्तर्डिः (११४५) । ग्ले-थप् (५८६) वा इम् । पाणिनिः ६।४।६४ ।

† स्य आदिर्यस्य स स्यादिस्तस्य । क्या अण् क्यणस्तस्मिन् । ङे इत्यस्य ङ इत् (१७) अन्त्यस्य स्थाने । परसूत्रे स्थाग्रहणेनैव अत्र स्थाधातोरप्राप्तौ पुनरत्र स्थावर्जनं, परसूत्रे अरहसे त्वयपि ङीति शेषभागेनैव स्थाग्रहणस्य सार्थकत्वे, संयोगाद्याद्न्तत्वात् अनेन क्यणौ स्थाधातोः विकल्पापत्तिनिवारणार्थं । ग्लेयात् ग्लायादिति क्या यात् । पाणिनिः ६।४।६८ ।

‡ दाश्च माश्चेत्यादि द्वन्द्वे तस्य । अरश्चासौ हसश्चेति तस्मिन् । क्यणौ इत्यनुवर्त्तते, ततश्च विधिद्वयं । यप्वर्जनादेव अरहसे इत्यस्य अणौ इति विशेषणं लब्धं, यादृग्-जातीयस्येति न्यायात् । दा इति दासंज्ञकः । मा इति मास्वरूपं, तेन मा ल माने,

(५३) ध्यै संहती ध्वनी।

ध्यायति। *

(५४) दै-प शोधने।

(५३४) पित्त्वान्न दासंज्ञा। अदासीत्। दायात्। †

(५५) धे-ट पाने।

(२५७) ट ईबर्थः। ‡

६१३। ञि श्रि स्रु द्रु कमोऽङ् घे ध्यां श्विधेट ध्वन्येल्यर्द्दूनेस्तु वा। (ञि—कमः ५।, अङ् ।१।, घे ७।, ध्यां ७।, श्वि-धेट-ध्वनि-एलि-अर्द्दि-ऊनेः ५।, तु ।१।, वा ।१।)।

ञ्यन्तादिभ्यध्यां अङ् स्यात् घेऽर्थे, श्वादेस्तु वा। (५५८) धुर्द्दिष्ठरङीति, अदधत्। §

---

मा ङ्लि शब्दे, मा ङ् य च, मे ङ प्रतिदाने एषां ग्रहणं। गै—ढी-यात् गेयात्। पाणिनि, ६।४।६७,६९।

* ध्यायतीति (५६९) ध्यै वर्जनात् न षस्य सः।

† अदासीदिति (५९८) यमरमेति इम्सनौ। दायादिति दासंज्ञाभावात् न ङे।

‡ ट ईबर्थ इति, तेन मुञ्जन्धयी, स्तनन्धयीत्यादि (१०१७)।

§ ञिश्च श्रिश्च स्रुश्च द्रुश्च कम चेति तस्मात्। श्विश्च धेटश्च ध्वनिश्च एलिश्च अर्द्दिश्च ऊनिश्चेति तस्मात्, सूत्रत्वात् पुंस्त्वं। स्रुरिति दन्त्यादिः। ध्वन्यादिर्ञ्यन्तः, ध्वनिरिति घटादित्वात् (७९८) ह्रस्वः, अदन्तचुरादिश्च। अदधदिति धे-धातोः ध्या-दि, अनेन अङ्, (९०८) ए-स्थाने आ, (५५८) द्वित्वं, (६१०) आ-लोपः। घे किं, अकारयिषातां कटौ देवदत्तेन। (५४१) घं ग्रप् रे इति सूत्रे उक्तत्वेऽपि अत्र घे इति पुनः कथनं प्राचीनानुवादार्थं, "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" इति पाणिनिशासनात्। एवं (६१८) सूत्रेऽपि। पाणिनिः ३।१।४८,४९,५१।

## ६१४। धेघ्राच्छासाघ्रः सेः पे लुग्वा।

धे—घ्रः ५।, सेः ६।, पे ७।, लुक् ।१।, वा ।१।) ।

अघात् अधासीत्। *

(५६) पा पाने।

(५८७) स्थादानेति पिब। पिबति। (५५२) भूस्थापिबेति सेर्लुक्। अपात्, पेयात्। †

(५७) घ्रा गन्धोपादाने।

जिघ्रति। अघ्रात् अघ्रासीत्। ‡

(५८) ध्मा शब्दाग्निसंयोगयोः।

धमति। अध्मासीत्।

(५९) ष्ठा गतिनिवृत्तौ।

तिष्ठति। न्यष्ठात्। नितष्ठौ। स्थेयात्। §

(६०) म्ना अभ्यासे।

मनति।

---

* धे शो छो सो घ्रा इत्येतेभ्यः सेर्लुक् स्याद्वा पे। धे ग्रहणं (५५२) सेर्लुकि प्राप्ते विकल्पार्थं। अधादिति धञो विकल्पपक्षे ञ्यां सिः, अनेन सेर्लुक्, पक्षे (५८८) इमसनौ, अधासीदिति। पाणिनिः २।४।७८।

† पिबतीति पिबादेशस्य अदन्तत्वात् न गुणः। पेयात् (६१२) ङे।

‡ अघ्रादिति अनेन वा सेर्लुक्।

§ न्यष्ठादिति (५७२) अमागमव्यवधानेऽपि षत्वं। नितष्ठौ इति विकृतस्यापि षत्वं। स्थेयादिति (६१२) ङे।

## (६१) दा-म दाने ।

प्रणियच्छति । प्रण्यदात् । देयात् । *

## (६२) ह्वृ कौटिल्ये ।

## ६१५ । स्याद्यर्त्तृ‌तो गु यङ्-यक्-ठौण्यणौ स्कुस्तु ण्यां ।

(स्यादि अर्त्ति-ऋत: ६।, गु: १।, यङ्-यक्-ठौण्यणौ ७।, स्कु: ६।, तु ।१।, ण्यां ७।) ।

स्यादेरर्त्तेर् ऋकारस्य गु: स्यात् यङि यकि ठौण्योरणौ च, स्कुस्तु ण्यामेव । जह्वरतु: । †

## ६१६ । नेम्ऋतस्थपो ऽह्वृस्कृ: ।

(न ।१।, इम् ।१।, ऋत: ५।, थप: ६।, अ-ह्वृ-ऋ-स्कृ: ५।) ।

ह्वृ-ऋ-स्कृ-वर्जात् ऋकारान्तात् थप इम् न स्यात् । जह्वर्थ । ‡

---

* प्रणियच्छति प्रण्यदादिति (५४९) गदाद्यन्नेणत्वं ।

† स्य: संयोग आदिर्यस्य स स्यादि:, स्यादिश्च अर्त्तिश्च स्याद्यर्त्ती, तयो: ऋत् स्याद्यर्त्तृत् तस्य । संयोगादिधातो: ऋ-धातोश्च ऋकारस्य इत्यर्थ: । ऋसाहचर्य्यात् स्यादेरिति ऋदन्तस्यैव, तेन स्पृशप्रभृतीनां न प्राप्ति: । नास्ति णुर्यस्मिन् सोऽणु: ठौण्योरणु: ठौण्यणु:, यङ्‌च यक्‌च ठौण्यणुश्चेति तस्मिन् । ण्यणिति ढौ-परस्मैपदस्यैव ग्रहणं, तेन स्तृषीष्ट इत्यादौ आत्मनेपदे (६५९) कित्त्वेऽपि अनेन न गुण: । स्कुरिति (७६६) सुम्युक्त-कृञ इत्यर्थ: । पाणिनि: ७।४।१०,११,२९,३०, वार्त्तिकञ्च ।

‡ ह्वृश्च ऋश्च स्कृश्च ते, न विद्यन्ते ते यत्र स: अह्वृस्कृ तस्मात् । (५८४) नेमसुमित्यनेन वृधातोस्थपो नित्यस्य इम्निषेधेऽपि अत्र वृग्रहणात् थप इम्, तेन ववरिथ इति, अन्यत्र तु ववर्थ इत्यादि । स्वृधातोरुदित्त्वेऽपि (५७३) वेमूदिदित्यत्र स्वरग्रहणात् सस्वरिथ सस्वर्थ इति वा इम् स्यादेव । अत्र ह्वृ ऋ स्कृवर्जनादेकाच एव निषेधो मन्तव्य:, तेन जजागरिथ इति । जह्वर्थ इत्यत्र (५८४) नेमसुमित्यनेन अन्यानिमत्वादिम्प्राप्तौ अनेन निषेध: । पाणिनि: ७।२।६३ ।

## ६१७ । स्वस्यर्द्धनः । (स्वस्य ६।, ऋत्-हनः ५।) ।

ऋदन्त-हन्तिभ्यां स्वस्य इम् स्यात् । करिष्यति । *

(६३) स्वृ ञ शब्दोपतापयोः ।

(५७३) वेमूदितीम् वा । अस्वारीत् अस्वार्षीत् । † सस्वरिथ सस्वर्थ ।

(६४) स्तृ गतौ ।

## ६१८ । वक्त्यस्य ख्या लिप सिच ह्वा ङ घे व्यां स्वस्तु वा लिबभ्यस्तु मे ।

(वक्ति—ह्वः ५।, ङः १।, घे ७।, व्यां ७।, स: ५।, तु ।१।, वा ।१।, लिबभ्य: ५।॥, तु ।१।, मे ७।) ।

वक्त्यादेर्घेऽर्थे ङः स्यात् व्यां, स्वृऋभ्यान्तु वा, लिपादेस्तु मे वा स्यात् । ‡

---

* ऋच्च हनच तस्मात् । स्यस्य इति स्यस्वरूपस्य ग्रहणं, तेन स्यति स्यतस् स्यन्तीत्यादेरेव । इम: केवलस्य अनुवृत्ति:, नतु नञ्विशेषणस्य, स्वाभाविकानिम्-हन-धातोरिम्-निषेधवैफल्यात् । स्वृधातो-रुदित्त्वात् वेमत्वेऽपि, विशेषविधानादनेन नित्यमिम्, तेन स्वरिष्यतीत्येव । पाणिनि: ७।२।७० ।

† अस्वारीत् अस्वार्षीत् (५७४) अजन्तत्वादुभयत्र ऋ इत्यस्य वृद्धि: आर्, (१११) इलात् परस्य सस्य षत्वं ।

‡ वक्तिश्च असश्च ख्याश्च लिपश्च सिचश्च ह्वाश्च तत् तस्मात् । स्वश्च ऋश्च सृ तस्मात् स: । वक्तिरिति अदादिगणीय-वच-धातु: (ब्रुवो वचादेशेऽपीति केचित्) । अस इति दिवादीयोऽसधातु: । लिबभ्य: इति बहुवचनं गणार्थं, लिप सिच ह्वे इति । असधातो: इरित्त्वात् परस्मैपदे ङ: (५६५) सिद्ध एव, इह तु आत्मनेपदार्थ: । तेन (८७६) आत्मनेपदे निरास्यत इति । पाणिनि: ३।१।५२,५३,५४ ।

## ६१९। दृश्रोर्णुः। (दृश्रोः ६॥, णुः १।)।

दृशेर्ऋवर्णान्तस्य च णुः स्यात् ङे। असरत् असार्षीत्। *

## ६२०। ऋद्रिः शयक्ढीपे।

(ऋत् ।१।, रिः १।, श यक्-ढीपे ७।)।

स्त्रियात्। †

(६५) ऋ गतौ।

ऋच्छति। आरत् आर्षीत्। आर, आरतुः, आरिथ। अर्यात्। ‡

(६६) श्रु श्रवणे।

## ६२१। श्रोः शुर्घे रे जिश्च।

(श्रोः ५।, शु: १।, घे ७।, रे ७।, जिः १।, च ।१।)।

श्रुवो घेऽर्थे शुः स्यात् रे, श्रुवश्च जिः।

शृणोति शृणुतः शृण्वन्ति। §

---

* दृशश्च ऋश्च तौ तयोः। अर्थवशात् ङे इति सप्तम्यन्तत्वेनानुवृत्तिः। असरदिति ङ-पक्षे गुणः, ङाभावपक्षे असार्षीदिति (५७४) वृद्धिः। पाणिनिः ७।४।१६।

† शश्च यक्च ढीपश्च तस्मिन्। ह्रस्व-ऋकारो रिः स्यात् शे यकि ढी-पे च परे। स्रियादिति ह्रस्वान्त-रि-निर्द्देशादेव (५९०) न दीर्घः। पाणिनिः ७।४।२८।

‡ आरत: अर्यादित्युभयत्र (६१५) णुः। आरिथेति (५८९) ऋवर्जनात् न वेम्।

§ श्रु-धातोः श्नौ कृते शु इत्यस्य (५३५) जिः उकारयुक्त रेफस्य ऋः। शुः श्नपो बाधकः। श इत्, नुस्थितिः। श्रुधातुं स्वादिगणीयमकृत्वा भ्वादिषु पाठात् क्वचित् श्रवतीत्यपि। शृणोतीत्यत्र श्रोकारस्य गुणः। शृण्वन्तीत्यत्र (५८८) श्नुश्वोरिति व, (१०७) णत्वं। पाणिनिः ३।१।७४।

## ६२२। नुपोऽस्यस्योल्लोपो व्मि वा।

(नुपः ६।, अस्यस्य ६।, उल्लोपः १।, व्मि ७।, वा ।१।)।

अस्यस्य नो-रुपस्य उकारस्य वा लोपः स्यात् वमयोः परयोः। शृण्वः शृणुवः शृण्मः शृणुमः। (५४७) हेर्लोपोऽस्येति, शृणु। शुश्रुव।*

(६७) सु गतौ।

## ६२३। सुस्तुधोः सेरिम् पे।

(सु-स्तु-धोः ५।, सेः ६।, इम् ।१।, पे ७।)।

असावीत्। सुषविथ, सुषुविव। सविता सोता।†

(६८) स्रु गतौ।

(६१३) ञिश्रीत्यङ्। असुस्रुवत्। सुस्रोथ, सुस्रुव।‡

(६९) द्रु गतौ।

अद्रावीत् अद्रौषीत्, दुद्रुविव।§

---

* नुश्च उप् चेति नस्य। न स्योऽस्यस्तस्य। उतो लोपः उल्लोपः। व च म च वम तस्मिन्। नुरत्र श्नुः, उप् तनादिभ्य उक्तः (६८८) शुप्। शृणोमि तनी-मीत्यादौ, लोपस्वरादेशयोस्तु स्वरादेशविधिर्बलीति न्यायात आदौ गुण एव। शुश्रुव इति व्या व, (५८४) नेमसुम इति नियमात् न इम्। पाणिनिः ६।४।८७।

† सुश्च स्तुश्च धुश्च तस्मात्। सु स्तु धु धातुभ्यः सेरिम् स्यात् पे। सु धातोः (५७३) विकल्पे प्राप्ते नित्यार्थं ग्रहणं। स्तु धु इत्येतयोः (५८७) एकाजुदन्तत्वेन निषेधे ग्रहणं। पे किं, असविष्ट असोष्ट, अस्तोष्ट अधोषातां। (५७३) रुदुसुनो-स्वव्या इति नियमेन सुषविथ सुषुविव इत्यादौ नित्यमिम्। सविता सोता इति (५७३) वा इम्। पाणिनिः ७।२।७२।

‡ असुस्रुवदिति (५८८) उव। एवं अदुद्रुवत्। सुस्रोथेति नेमसुमिति नियमेन (५८९) सृजदृशेत्यस्य बाधितत्वात् न इम्।

§ अद्रावीत् अद्रौषीदिति (५७३) रुदुसुनोस्वव्या इत्युक्तेः वा इम्। दुद्रुविवेति नेमसुमिति नियमात अन्यत्र नित्यमिम्।

(७०) द्रु गतौ।

अदुद्रुवत्। दुद्रुव।

(७१) गम्लृ गतौ।

गच्छति। (५६५) लिदित्त्वात् ङः, अगमत्। जगाम। (२३०) हनगमेत्युङ्लोपः, जग्मतुः जग्मुः। जगमिथ जगन्थ।*

## ६२४। गमोऽमे स इम् मार्हात्तु वा।

(गमः ५।, अमे ७।, सः ६।, इम् ।१।, मार्हात् ५।, तु ।१।, वा ।१।)।

गमः परस्य सस्य इम् स्यात् न तु मे, मयोग्यात्तु वा। गमिष्यति।†

(७२) सृप्लृ गतौ।

असाप्सीत् असार्प्सीत् असृपत्।‡

(७३) स्कन्दिरौ गति-शोषणयोः।

## ६२५। विस्कभ्ना निर्वि-वि-सु-निर्दुःस्वपः सः षोः,-निनिर्विस्फुर-स्फुल परिविस्कन्दाऽप्राणिष-निपरिनिर्व्यभ्यनु-स्यन्दस्तु वा।

(विस्कभ्ना—स्वपः ६।, सः १।, षः १।, निनिर्—स्यन्दः ६।, तु ।१।, वा ।१।)।

---

* दुद्रुवेति नेमसुमिति नियमात् न इम्। जगमिथ जगन्थ इति (५८६) वा इम्।

† मं आत्मनेपदं अर्हतीति मार्हस्तस्मात्। (८७५) समोगमृच्छीत्यनेन आत्मनेपद-विधानात् समगंस्त संगंस्यते इत्यादौ न इम्। आत्मनेपदयोग्यस्थले तु संजिगमिषुः संजिगंसुरित्यादौ वा इम्। पाणिनिः ७।२।५८।

‡ (६०३) क्रषमृष इति, (६०४) वर्द्र इति असाप्सीत् असार्प्सीत्, सि-विकल्पपक्षे (५६५) लिदित्त्वात् ङः असृपत्।

विस्कभ्नाति वें-वर्ज-न्यादिपूर्व्वस्य स्वपश्च सः षः स्यात्, न्यादि-पूर्व्व-स्फुर-स्फुलोः परिवि-स्कन्दतेः अप्राणिघ-न्यादिपूर्व्वस्य स्यन्द-तेश्च स्याद्वा। परिष्कन्दति परिस्कन्दति। *

(७४) तॄ प्लवन-तरणयोः।

## ६२६। ऋतो णः कित्ठ्यां।

(ऋतः ६।, णः १।, कित्-ठ्यां ७।)।

तेरतुः। †

## ६२७। वॄतो वेमोघोऽठीढीपसेः।

(वॄ-ऋतः ५।, वा।१।, इमः ६।, घः १।, अ-ठी-ढी-पसेः ६।)।

वृङो वृञ ऋदन्ताच्च इमो घः स्यात् वा, न तु ठ्याः ढ्याः पसेश्च। तरीता तरिता। ठो ढी पसेस्तु तेरिथ, तरिषीष्ट, अतारिष्टां। ‡

---

* वेः स्कभ्नाः विस्कभ्नाः, निश्च सुश्च निर्‌च दुर्‌च तेभ्यः स्वप, निर्गतो वः यस्मात् स निर्वः, निर्वश्चासौ विसुनिर्दुःस्वप् चेति, पश्चात् विस्कभ्नाश्च निर्व्विसुनिर्दुःस्वप् च तस्य। निश्च निर्‌च विश्च ते, तेभ्यः स्फुर स्फुलौ, परि विभ्यां स्कन्दः परिविस्कन्दः, निश्च परिश्च निर्‌च विश्च अभिश्च अनुश्च ते, तेभ्यः स्यन्द निपरिनिर्व्यभ्यनुस्यन्द, अप्राणी घः (कर्त्ता) यस्य सः अप्राणिघः, सचासौ निपरिनिर्व्यभ्यनुस्यन्द चेति अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द, पश्चात् निनिर्वि-स्फुरस्फुलौ च परिविस्कन्दश्च अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द चेति तस्य। स्कभ्ना इति आन्तनिर्द्देशात् विस्कभ्नोतीत्यत्र षत्वं न स्यात्। निर्व इति यदा स्वपधातोः ञि स्यादित्यर्थः। अप्राणिघ इति स्यन्दविशेषणात् निस्यन्दते (मदं मुञ्चति) हस्तीत्यत्र न षत्वं। पाणिनिः ८।३।७२.७३,७४,७५,७६,७७,८८।

† कित्चासौ ठीचेति कित्ठी तस्यां। तेरतुरिति अनेन गुणे, (५७६) अकारः एकारः खिलोपश्च। दीर्घं ऋत इति किं, चक्रतुः। पाणिनिः ७।४।११।

‡ वॄश्च ऋश्च तस्मात्। पे सिः पसिः, ठीच ढीच पसिश्चेति, न ठीढीपसिः अठीढीपसिस्तस्य। वॄ इति वृङ्-वृञोर्ग्रहणं। तॄ-ता (५५४) इम्, (५४२) गुणः, अनेन इमो वा दीर्घः। तेरिथ इत्यत्र गुणादनन्तरं (५७६) अकार एकारः, खिलोपश्च। अतारिष्टामिति (५७४) अजन्तत्वात् वृद्धिः। व्युत्क्रमोदाहरणन्तु सूत्रोक्तनिषेधक्रमानुसारेण। पाणिनिः ७।२।३८,३९,४०।

## ६२८। ऋदिरणावुल्वौष्ठ्यात्।

(ऋत् ।१।, इर् ।१।, अणौ ७।, उर् ।१।, तु ।१।, ओष्ठ्यात् ५।)।

ऋकार इर् स्यादणौ, ओष्ठ्यात् परस्तु उर्। तीर्य्यात्। *

(७५) षन्जौ ञि सङ्गे।

## ६२९। षनज दन्श ष्वनजोऽपि नलोपः।

(षन्ज-दन्श-ष्वन्जः ६।, अपि ७।, न-लोपः १।)।

निषजति। न्यषाङ्क्षीत्। निषषञ्ज, ससजतुः सस्ञ्जतुः। †

(७६) दृशिरौ प्रेक्षणे।

पश्यति। अदर्शत्। (६०४) वर्द्धोऽकिदिति, अद्राक्षीत्। ‡ (५८९) सृजदृशेतीम् वा, ददर्शिथ दद्रष्ठ।

---

* अत्र पोः इति नोक्ता ओष्ठ्यादिति कथमं दन्त्यवकारस्यापि प्राप्त्यर्थं, तेन वृधातोः सनि वुवूर्षतीति (८०५) दीर्घं, अनेन ओष्ठ्यपरत्वादुर्। ओष्ठ्यादिति धात्ववयवादेव, तेन समपूर्वकस्य ऋधातोः समीर्य्यादित्येव। लाक्षणिकस्याप्यत्र ग्रहणं तेन मुचिकीर्षति (८०५) सूत्रं द्रष्टव्यम्। तीर्य्यादिति तृधातोः ढौ-यात् अनेन इर्, (२२८) दीर्घः। पाणिनिः ७।१।१००,१०२।

† षन्जश्च दन्शश्च ष्वन्जश्च तस्य। एषां नस्य लोपः स्यादपि। एभ्यः शप् कित् इति न कृत्वा नलोपविधानं, दशि कङ् दर्शे इति इदनुबन्ध-चुरादीय-दन्शधातोः ञि-विकल्पपक्षे दंशति इत्यत्र (५६८) नलोपनिषेधेऽपि, अनेन नलोपार्थं। निषजतीति (५७२) षत्वं। न्यषाङ्क्षीदिति (५७४) वृद्धिः, (२११) कुङ्, (५०,५१) नस्थाने अनुस्वारस्तस्य च ङ। (१११) कवर्गात् सः षत्वं। (५७२) अम्व्यवधानेऽपि षत्वं। निषषञ्ज इति द्वित्वेऽपि द्वयोः षत्वं। ससजतुः सस्ञ्जतुः (५६६) वा किद्भावः, (५६७) कित्पक्षे न-लोपः। पाणिनिः ६।४।२५।

‡ पश्यति (५९७) दृशस्थाने पश्य। अदर्शत् (५६५) ङः, (६१९) गुणः। ङ-विकल्पपक्षे अद्राक्षीदिति अनिमत्वात् (५७४) वृद्धिः, (१५४) षङ्, (६०२) षस्य कः, (१११) षत्वं।

(७७) दन्शी दंशने।

अदाङ्क्षीत्। *

(७८) कित निवासे रोगापनयने संशये च।

## ६३०। कित्तिज्गुपः सन्नेम् मान शान दान बधस्तु खेङ्गौ च। (कित—गुपः ५।, सन् ।१।, न ।१।, इम् ।१।, मान—बधः ५।, तु ।१।, खेः ६।, ङी ।१।, च ।१।)।

कितादेः सन् स्यात्, इम् न स्यात्, मानादेस्तु खेङ्गौ च।

क्रमादेतेऽत्र सन्देहे क्षान्ति-निन्दा-विचारणे।
निशानार्जवनिन्दासु रुग्जयेऽपि कितो मतः॥ †

## ६३१। सनाद्यादिर्धुः। (सन् आदिः ११, धुः ११)।

सनन्ता आद्यन्तश्च धुसंज्ञः स्यात्। ‡

---

* अदाङ्क्षीदिति दन्श-धातोः टी-दि, वृद्धि. षङादिकश्च।

† कित्च तिज्च गुप्च तस्मात्। मानश्च शानश्च दानश्च बधच तस्मात्। अनिर्दिष्टार्थत्वात् स्वार्थे एव सन् भवति। एतेषां सप्तानां धातूनामर्थान् निर्दिशति। क्रमादिति। अत्र सन्विधाने एते कितादयः सप्त क्रमात् सन्देहादिषु सप्तसु अर्थेषु मताः, कितः रुग्जयेऽपि मतः। तेन कित—सन्देह-रुग्जययोः, तिज ङ क्षान्तौ, गुप ङ निन्दायां, मान ङ विचारणे, शान ङ निशाने, दान ङ आर्जवे, बध ङ निन्दायामित्यर्थः। सन्देहः विरुद्धानेककोटिविषयकं ज्ञानं, अस्मिन्नर्थे अकर्मकः यथा—शास्त्रे चिकित्सति। रुग्जयो रोगप्रतीकारः। क्षान्तिः सहनं। निन्दा दोषवत्तयाख्यानं। विचारणं इदमित्थं न वेति प्रमाणानुसन्धानं। निशानं तीक्ष्णीकरणं। आर्जवं अकुटिलीभावः। एष्वर्थेषु सकर्म्मका एव। पाणिनिः ३।१।५,६।

‡ आदिश्च—णि (७७७) सन् (८०२) यङ् (८२०) काम्यक् (८४२) क्य (८४३) ञ्य (८४८) क्वि (८४८) इति सप्त। सनाद्यन्तानां धुसंज्ञाकरणं (५२८) तिबादिभवनार्थं। पाणिनिः ३।१।३२।

६३२ । सन्यङन्तो द्विः । (सन्-यङ् अन्त: १।, द्वि: १।)।

चिकित्सति । अचिकित्सीत् । चिकित्सामास । *

इति पवत्-पादः । †

३य पादः—भवत् ।

---

(७९) एध ङ वृद्धौ ।

एधते । ऐधिष्ट । एधाञ्चक्रे । ‡

(८०) दद ङ दाने ।

(५७९) अ-शशदद्देत्युक्तेः, ददद्दे ।

(८१) ष्वक्क ङ सर्पणे ।

(५६९) अ-ष्वैष्वक्केत्युक्तेः, ष्वक्कते । षष्वक्के ।

---

* सन् च यङ् च सन्यङौ, तौ अन्ते यस्य स सन्यङन्तः । तद्गुणसंविज्ञान-बहुव्रीहिणा सन् यङ् समेतो द्विः स्यादित्यर्थः । कदाचिदतद्गुणसंविज्ञान-बहुव्रीहौ केवलो धातुरपि द्विः, तेन मीमांसते इत्यत्र सनं हित्वा मुचधातोर्द्वित्वे, (८७५) मोचा-देशः । चिकित्सतीत्यादि, कित: सन्, इमनिषेधे, (८०४) गुर्नामिनोति वक्ष्यमाणात् गुणनिषेधे, द्वित्वे चिकित्स इति भागस्य धातुसंज्ञायां तिबादिकं । त्यान्तत्वादाम, तत: (५८३) असप्रयोग: । पाणिनि: ६।१।९ ।

† पवतां परस्मैपदवतां धातूनां पादः एकार्थावच्छिन्नसूत्रसमूहः इत्यर्थः ।

---

‡ एध-ते (५४१) शप् । एध तन् (५५०,२३,५५१,५५४,१११,४७) ऐधिष्ट । एध-ए (५८२,५८३) । आत्मनेपदित्वात् केवलं कृप्रयोग: ।

(८२) ऋज ङ आर्जवे।

आनृजे। *

(८३) तिज ङ क्षमा-निशानयोः।

तितिक्षते। †

(८४) ष्वन्जौ ङ सङ्गे।

निष्वजते। ‡

## ६३३। नि वि परि ष्वन्ज स्तु सुमादेः सः षो ऽमि वा।

(नि—सुमादेः ६।, सः ६।, षः १।, अमि ७।, वा ।१।)।

न्यष्वङ्क्त न्यस्वङ्क्त। सस्वजे सस्वञ्जे। §

## ६३४। सत्स्वञ्जोष्ठ्यां नाखेः।

(सद्-स्वञ्जोः ६॥, ष्ठ्यां ७।, न ।१।, अखेः ६।)।

खिवर्जस्यानयोः सः षो न स्यात् ष्ठ्यां। विषस्वजे विषस्वञ्जे।¶

---

* आनृजे इति ऋज-ए (५८०) ऋकारादित्वात् खिरान्।

† तितिक्षते इति तिज-(६३०,६३२,२११,६३१,) तितिक्ष इति धातुः। (६३६) आत्मनेपदं।

‡ निष्वजते (५६८,६२८,५७२)।

§ सुम आदिर्यस्य स सुमादिः, ष्वन्जश्च स्तुश्च सुमादिश्चेति। निश्च विश्च परिश्च ते, तेभ्यः ष्वन्जस्तुसुमादिः तस्य। सुमादिः (५७२) सुम, अनङ् सिव, अनोङ् सह इति। निविपरिभ्यः परेषामेषां सः षः स्यात् वा अमि सति। न्यष्वङ्क्त इति नि-ष्वन्ज-तन् (५५०,५५१,५६२) सेर्लोपः, (२११,५०,५१) अनेन वा षत्वं। सेः स्थानिवत्त्वात् (५६७) न नलोपः। सस्वजे सस्वञ्जे इति (५६६) वा कित्संज्ञायां, (५६७) नलोप-तदभावौ। पाणिनिः ८।३।७०।

¶ सदश्च स्वञ्जश्च तौ तयोः। न खिः अखिस्तस्य अखेः। विषस्वजे विषस्वञ्जे

(८५) त्रपू षङ् लज्जायां।

अत्रपिष्ट अत्रस्त। त्रेपे।*

(८६) जभ ङ् जम्भने।

## ६३५। नुण् जभोऽचि।

(नुण् ।१।, जभः ६।, अचि ७।)।

अजम्भिष्ट।†

(८७) ष्टुभ ङ् स्तम्भे।

विष्टोभते। व्यष्टोभिष्ट।‡

(८८) पण ङ् व्यवहारे स्तुतौ च।

(५८१) कमऋतेत्यायः। पणायते।

## ६३६। सनः पमे धो वा त्वायात्।

(सनः ५।, प-मे १॥, धोः ६।, वा ।१।, तु ।१।, आयात् ५।)।

पणायति। अपणायिष्ट अपणिष्ट। पणायाञ्चक्रे पेणे। §

---

इति अनेन निषेधात् मूलस्य न षत्वं खिलु (५७२) षत्वमेव। ष्यामिति किं, विषाष्व-ष्यते इत्यत्र उभयोरेव षत्वं। पाणिनिः ८।३।११८, काशिका वार्त्तिकानि च।

* अत्रपिष्ट इति (५७३) वा इम, पक्षे (५६२) सिलोपः अत्रस्त। त्रेपे इति (५७९) खिलोपः, अकार एकारश्च।

† जभो नुण् स्यादचि परे। णित्त्वादन्त्याचः परः। प्रकरणबलादात्मनेपदिन-एवेति बोध्यं, जभ जभने इत्यस्य तु जभतीत्यादि। अजम्भिष्ट इति इमि, अचि परं नुण्। एवं जम्भनमित्यादि। पाणिनिः ७।१।६१।

‡ विष्टोभते, स्तुभधातोः (५७२) षत्वं। व्यष्टोभिष्ट इति अभ्यपि षत्वं।

§ धोः मूलधातुसम्बन्धिनो प-मे सनः सनन्तात् सः, आयान्तात्तु वा। तथाच परस्मैपदिधातोः सनन्तात् पं, आत्मनेपदिधातोः सनन्तात् मं, उभयपदिनः सनन्ता-

## ६३७। विच्छास्तुतिपणो वायः।

(विच्छ-अस्तुतिपण: ५।, वा।१।, आय: १।)।

पणायते पणते। *

एवं (८८) पन ङीड़े।†

(८०) कमु ङ कान्तौ।

कामयते। (६१३) अप्नत्वादङ्। ‡

## ६३८। अङ्यङ: स्वो ऽनग्लोपिशास्वृदित:।

(अङि ७।, उङ: ६।, स्व. १।, अनग्लोपि-शासृ-ऋदित: ६।)।

अग्लोपिन: शासो ऋकारेतश्चान्यस्य उङ: स्व: स्यात् ञे: परे अङि परे। §

---

उभयपदमिति। आयात्तु वेति वा शब्दो व्यवस्थितविकल्पार्थ:, तेन आत्मनेपदिन-आयान्तात् पणे स्त:, परस्मैपदिनस्तु पणेव। अतो गुपधातो: गोपायतीत्येव। पणायतीति आयात्तु वेत्यस्य विकल्पपक्षे उदाहरणं। अपणायिष्ट अपणिष्ट (५९२) वारेत्यस्योदाहरणं। पाणिनि: १।३।६२।

* न स्तुतिरस्तुति:, अस्तुतौ पण अस्तुतिपण, विच्छश्च अस्तुतिपण चेति समास्। विच्छधातो: अस्तुत्यर्थात् पणश्च आय: स्याद्वा। स्तुतिवर्ज्जनात् व्यवहारार्थे भवतीत्यर्थ:। व्यवहारश्च क्रयविक्रयस्वरूप:। पाणिनि: ३।१।२८,३१।

† एवं पन इत्यनेन (५९१) आयप्रत्यये पनायते पनायति इत्यादि।

‡ कामयते इति (५९१) ञिङ् कृते, (५७७) वृद्धौ, कामि-धातोस्ते विभक्ति:।

§ ञे. परो ऽङ् ञाङ् तस्मिन्। अको लोप: अग्लोप:, सोऽस्यास्तीति अग्लोपी। ऋत् इत् यस्य स ऋदित्। अग्लोपी च शासश्च ऋदिच्चेति, पश्चात् नञ्योगे तस्य। ञे: परे अङि परे इति कथनात् ञे: पूर्व्ववर्त्तिभागस्यैव उङ: स्व: स्यादिति। अग्लोपि-शास-ऋदितान्तु—अचुकुटत् अशशासत् अडुढौकदित्यादि। पाणिनि: ७।४।१,२।

६३९। खेः सन्वद्घौ, घोर्हसादे र्घश्च, ल्यनेकाचोस्त्वकलिहले र्वा।

(खेः ६।, सन्वत् ।१।, घौ ७।, घोः ६।, हसादेः ६।, घः १।, च ।१।, ल्यनेकाचोः ६॥, तु ।१।, अकलिहलः ६।, वा ।१।)।

अनग्लोपिनः खेः घौ ध्वचरे परे सन्वत् कार्य्यं स्यात् ञाङि, घोश्च खेर्हसादेः घः स्यात्, कलि-हलि-वर्जस्य लेः अनेकाचश्च सन्वद्वा स्यात्। *

६४०। ख्यस्येत् सनि। (ख्यस्य ६।, इत् ।१।, सनि ७।)।

खेरवर्णस्य इत् स्यात् सनि परे। †

६४१। ञेर्लोपोऽनाल्विष्ण्वाय्यान्त्वित्नामिम्ग्शिति। (ञेः ६।, लोपः १।, अनालु—ग्शिति ७।)।

आलु इष्णु आय्य अन्त इत्नु आम् इम् ग्शित् एभ्योऽन्यत्र ञेर्लोपः स्यात्। ‡

* सन्इव सन्वत्, लिश्च अनेकाच्च तौ तयोः, कलिश्च हलिश्चेति कलि-हलि, न कलिहलिः अकलिहलिस्तस्य। अनग्लोपि-शास्वृदितामनुवर्त्तनेऽपि शास्वृदिता लघु-स्वरयुक्तधात्वचरपरत्वाभावादप्राप्तौ, अकास्ट च ल दीपौ इत्यस्य ऋदितोऽपि अनेकाच्-त्वात् विशेषेण बाधितत्वात्, केवल-मनग्लोपिनः इति व्याख्यातं। अनग्लोपिधातोः खेः सन्वत् कार्य्यं स्यात् ञाङि, लघुधात्वचरे परे। तत्रैव हसादेर्धातोः खिर्यदि लघु-र्भवति तदा तस्य दीर्घः स्यात्। कलि-हलि-भिन्न लिङ्गस्य अनेकाच-धातोश्च खेः सन्वत् वा स्यादित्यर्थः। पाणिनि. ७।४।९३,९४, वार्त्तिकानि च।

† खेः अः ख्यस्तस्य। पाणिनि: ७।४।७९।

‡ आलुश्च इष्णुश्च आय्यश्च अन्तश्च इत्नुश्च आम्च इमच ग्शिच ते, न विद्यन्ते ते यत्र स तस्मिन्। आल्वादौ तु—स्पृहयालुः, कारयिष्णुः, स्पृहयाय्यः, मण्डयन्तः, स्तनयित्नुः, कारयामास, कारयिष्यति, कारयतीत्यादि। (१०७०) सूत्रे सेमक्तादौ परे तु ञेर्लोपः। पाणिनि: ६।४।५१,५२,५३,५४,५५।

अचीकमत अचकमत । कामयाञ्चक्रे चकमे । *

(८१) अय ङ गतौ ।

आयिढ्वं आयिध्वं आयिद्ध्वं । अयाञ्चक्रे ।

(८२) एवं, दय ङ गतौ ।

(८३) स्फायी ङ वृद्धौ ।

अस्फायिष्ट । †

## ६४२ । य्वोर्लोपो हस्यये ।

(य्वोः ६॥, लोपः १।, हसि ७।, अये ७।) ।

अस्फास्त । ‡

(८४) ओ प्यायी ङ वृद्धौ ।

## ६४३ । पदस्तनीण् घे प्याय ताय दीप पूर जन बुधस्तु वा ।

(पदः ५।, तनि ७।, इण् ।१।, घे ७।, प्याय—बुधः ५।, तु ।१।, वा ।१।) ।

---

* अचीकमत इति कम धातोः (५९२) ञिङ्, (५७७) वृद्धिः, कामि इत्यस्य (६३१) धातुसंज्ञा, ततः तन्, (६१३) चङ्, (६३८) ह्रस्वः, कमि इत्यस्य द्वित्वे मि इत्यस्य लोपे, कस्य चकारे, खेः सन्वत्त्वात् (६४०) अकारस्य इकारे, लघुखदीर्घे, अनेन ञेर्लोपः । ञिङो विकल्पपक्षे, अङ् द्वित्वादिकञ्च । कामयाञ्चक्रे इति कामि धातोः (५८२) त्यान्तत्वादाम्, ततः कृप्रयोगः । ञिङोऽभावे चकमे ।

† आयिढ्वमिति (५५६,५५७) सलोपः, धस्य ढ. । अस्फायिष्टेति (५७३) वा इम्।

‡ यच वच य्वौ तयोः । वकारो दन्त्यः । यवयोर्लोपः स्यात् अ-ये हसि परे । अस्फास्तेति अनिमपक्षे य-लोपः । एवं स्फाता प्याता । दिवो यङ्लुकि ऊटोऽप्राप्ति-पक्षे देदेति अत्र वलोपः । हसि किं, स्फायते सेवते । अये किं, दीव्यति । वार्त्तिकम् ।

पद्दो घेऽर्थे इण् स्यात् तनि, प्यायादेस्तु वा। *

## ६४४। इणस्तन् लोप्यः।

(इणः ५।, तन् ।१।, लोप्यः १।)।

अप्यायि अप्यायिष्ट अप्यास्त। †

## ६४५। प्यायः पी यङ्क्योः।

(प्यायः ६।, पीः १।, यङ्क्योः ७॥)।

पिप्ये। ‡

(८५) तायृ ङ सन्तानपालनयोः।

अतायि अतायिष्ट। §

(८६) ग्मल ङ चलने।

अग्मलिढ्वं अग्मलिध्वं अग्मलिड्ढं। ¶

---

* इणो ण इत् वृद्ध्यर्थः। सेर्बाधकोऽयं। पाणिनिः ३।१।६०,६१।

† इणः परः तन् लोप्यः स्यात्। इणः इति सामान्यार्थं, तेन (८२१) रतनोर्यंगिणावित्यनेन कृतादिणोऽपि तनो लोपः। पद्दस्तनोण् घे इत्यत्र तनः स्थाने इण् कृते लाघवेऽपि, क्यां सेरापत्तिः, तन्स्थानजातत्वेन इणो ङित्त्वात् अबोधीत्यत्र गुणाभावश्च स्यात्। अप्यायिष्ट इति इणो विकल्पपक्षे (५७३) वा इम्। अप्यास्तेति इमोऽभावपक्षे यलोपः। पाणिनिः ६।४।१०४।

‡ प्याय-स्थाने पीः स्यात् यङि क्याञ्च। पिप्ये इति (५८८) यः। पाणिनिः ६।१।२८।

§ अतायीति तायधातोः तनि (६४३) इण्। पक्षे (५५४) अतायिष्ट।

¶ अग्मलिढ्वमिति (५५६,५५७) वा-द्वयेन पदत्रयं।

(९७) षेव्रु ङ सेवने।

परिषेवते, न्यषेविष्ट, विषिषेवे। प्रतिसेवते। *

(९८) काशृ ङ दीप्तौ।

काशामास चकाशे। †

एवं (९९) कासृ ङ कुशब्दे।

(१००) ईह ङ चेष्टायां।

ऐहिढ्वं ऐहिध्वं ऐहिढ्वं। ‡

(१०१) रु ङ वधे गत्यां।

अरविष्ट अरोष्ट। रुरुविषे। §

(१०२) दे ङ पालने।

## ६४६। द्वे देङो दिगिष्ठ्यां।

(द्वे: ६।, देङ: ६।, दिगि: १।, थ्यां ७।)।

द्वित्वक्तस्य देङो दिगिः स्यात् थ्यां। दिग्ये। ¶

---

* (५७२) परिषेवते, न्यषेविष्ट इति अभ्यपि, विषिषेवे इति द्वेश्च षत्वं। परि-नि-वि-पूर्व्वत्वाभावात् प्रतिसेवते इति न षत्वं।

† काशामास इति (६०७) वा आम्।

‡ ऐहिढ्वं (५५६,५५७)।

§ अरविष्ट अरोष्ट (५७३) वा इम्। रुरुविषे इति ठीवर्जनात् (५८४) नेमसुमिति इम्। (५८८) उव्।

¶ दिग्ये इति द्वित्वक्तस्य देधातोः दिगि-आदेशः, (५८८) इ-स्थाने यः। पाणिनिः ७।४।९।

(१०३) ओ डी ङ नभोगतौ।

अडयिष्ट। *

(१०४) गुप ङ गोपन-कुत्सनयोः।

जुगुप्सते।

(१०५) मान ङ विचारे।

मीमांसते।

(१०६) बध ङ निन्दायां।

बीभत्सते। †

(१०७) द्युत ङ ऌ दीप्तौ।

(५६५) शासुलिद्द्युदिति ङः। तेनैव पं। अद्युतत्, अद्योतिष्ट। ‡

## ६४७। द्युत्-स्वाप्योः खेर्जिः।

(द्युत्-स्वाप्योः ६॥, खेः ६।, जिः १।)।

दिद्युते। §

(१०८) वृत ङ वृ ऌट वर्त्तने।

## ६४८। वृद्भ्यो नेम् पे स्यसनो र्वा त्वमे।

(वृद्भ्यः ५॥।, न ।१।, इम् ।१।, पे ७।, स्य-सनोः ६॥, वा ।१।, तु ।१।, अमे ७।)।

---

* अडयिष्ट इति (५८७) डी-वर्जनात् न इमनिषेधः।

† जुगुप्सते, मीमांसते, बीभत्सते, इति (६३०) मन्, मान-बधोः खेर्डी च। गुपधातोः (८०४) आनिमसनि न गु। (१७७) बध-धातोर्वस्य भः।

‡ तेनैव पं (५६५) टीपरस्मैपदे ङ-विधानसामर्थ्यात् द्युतधातोः व्यासुभयपद-मित्यर्थः।

§ द्युश्च स्वापिश्च तयोः। द्युतो ज्ञान्तस्वपश्च खेर्जिः स्यात्। दिद्युते इति खेः (५३५) यस्य इः। पाणिनिः ७।४।६७।

वृतादेः स्य-सनोरिम् न स्यात् पे, मादन्यत्र तु वा ।
अतएव पं । वर्त्स्यति । मे तु वर्त्तिष्यते । *

(१०६) स्यन्दू ङ वृ॒ क्षरणे ।

निष्यन्दते निस्यन्दते घृतं । निस्यन्दते हस्तीति प्राणिषत्वान्न षः । †

(११०) क्लृपू ङ वृ॒ कल्पने ।

## ६४६ । क्रपः क्लृपो ऽक्रपादौ ।

(क्रपः ६।, क्लृपः १।, अक्रपादौ ७।) ।

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ । कल्पते । ‡

## ६५० । नेम् पे ड्याः । (न ।१।, इम् ।१।, पे ७।, ड्याः ६।) ।

क्रपो ड्या इम् न स्यात् पे । अतएव पं । कल्प्ता ।
पे किं, कल्पिता कल्प्ता । कल्प्स्यति, मे तु कल्पिष्यते कल्प्स्यते । §

---

* वृद्भ्यः इति बहुवचनं गणार्थं । अतएव पमिति वृतादेरात्मनेपदिनः परस्मैपदे स्य सनोरिम्निषेधादेव स्य-सनोरुभयपदित्वमित्यर्थः । यथा वर्त्स्यति । सनि विवृत्सति । मे तु वर्त्तिष्यते, सनि विवर्त्तिषते । मादन्यत्र तु विवर्त्तिषा विवृत्सा इत्यादि । वृतादिश्च—वृतुर्वृधुः शृधः स्यन्दूः क्लृपूः पञ्च वृतादयः । पाणिनिः ७।२।५६. १।३।६२ ।

† घृतं निष्यन्दते द्रवीभवतीत्यर्थः, (६२५) अप्राणिषत्वात् वा षत्वं । हस्ती निस्यन्दते चीर्णो भवतीत्यर्थः, अत्र प्राणिषत्वात् न षत्वं ।

‡ क्रपा आदिः यस्य स क्रपादिः, नञ्योगे तस्मिन् । क्रपः स्थाने क्लृपः स्यात् नतु क्रपा-प्रभृतिषु । क्रपादिर्यथा—क्रपा क्रपाणः क्रपणः क्रपीटश्च (कर्पटश्च) क्रपः क्रपो इति । कल्पते इति क्लृप आदेशे अपि लृकारस्य गुणः अल् । पाणिनिः ८।२।१८ । "क्रपणादीनां प्रतिषेधः" इति वार्त्तिकञ्च ।

§ अत्रापि अतएव पं । ततश्च—द्युतादेः व्यास्तुभयपदित्वं । वृतादेः द्युताद्यन्त-

(१११) व्यथ षङ् पीड़ायां।

६५१। व्यथ ग्रह ज्या वय व्यध वश व्यच प्रच्छ वृश्च भ्रस्ज स्वप वच यजादेः खेर्जिष्ठ्यां।

(व्यथ—यजादेः ६।, खेः ६।, जिः १।, ठ्यां ७।)।

एषां खेर्जिः स्यात् ठ्यां। विव्यथे।*

(११२) ञि त्वरा षङ् स्वदे।

अत्वरिढ्वं अत्वरिध्वं अत्वरिड्वं। †

इति भवत्-पादः।

---

गणत्वात् ष्यां स्य-सनोश्च उभयपदित्वं। क्लपस्तु द्युतादित्वात् वृतादित्वात् नेम् पे डा-इत्यनेन च, ष्यां स्यसनोः डास्त्र उभयपदित्वमिति, अन्यत्र सर्व्वे एवात्मनेपदिनः। कल्प्ता परस्मैपदे अनेन इम्निषेधः। कल्प्स्यतीति वृद्भ्यो नेम् पे इत्यनेन निषेधः। आत्मनेपदे तु (५७३) वा इम्। पाणिनिः ७।२।६०,१।३।९३।

* व्यथश्चेत्यादि—यजादिश्चेति द्वन्द्वे तस्य। वय इह वेञ स्थाने (६६३) वयादेशः। तस्य च वेञस्थानजातत्वेनैव यजादित्वात् जौ सिद्धे पुनरिह ग्रहणं (६६२) ठ्यां न वेप्रच्छामिति जिनिषेधस्य बाधनार्थं। ग्रह प्रच्छ व्रश्च भ्रस्ज इति चतुर्णां खेर्जौ कृते, (५५९) ऋकारस्य अकारे, जेः फलाभावेऽपीह ग्रहणं ग्रहादिगणार्थं, तेन गृह्यते पृच्छ्यते इत्यादौ (६६१) ग्रहादित्वात् जिः। यजादिस्तु—यजि ॰पि वंहिश्चैव वेञ् व्येञौ ह्वयतिस्तथा, वदि वैसिश्च श्वयतिश्चैते नव यजादयः। विव्यथे इति विधिबलात्, खे-राद्यचोलोपात् पश्चात् न स्यान्तलोपः। व्य इत्यस्य जौ कृते, सकृत् द्विस्तु वेत्यनेन विइत्यस्य पुनर्न जिः। पाणिनिः ७।४।६८,६।१।१७।

† अत्वरिढ्वमित्यादि (५५६,५५७) विकल्पद्वयं।

४र्थ पादः—मिश्रः।

---

(११३) पत ऌ ज गत्यैश्वर्य्ययोः।

## ६५२। वच्यस्य-श्वि-पतां वोचस्थ-श्व-पप्ता ङे।

(वचि-अस्य-श्वि-पतां ६॥, वोच-अस्थ-श्व पप्ताः १॥, ङे ७।)।

एषामेते क्रमात् स्यु ङे। प्रण्यपप्तत्। *

(११४) ण ज टु वम उद्गिरणे।

वेमतुः ववमतुः, वेमिथ ववमिथ।

(११५) भ्रमु ज ण चलने।

(५९४) क्रम क्लमेति श्यन् वा। भ्राम्यति भ्रमति। भ्रेमतुः बभ्रमतुः।

(११६) सह ज ङ शक्तौ।

व्यषहत व्यसहत। (६०६) वेमसहेतीम् वा। परिषहिता। †

## ६५३। सह-वहोऽदो ढि।

(सह-वहः ६।, अत्।१।, ओ।१।, ढि ७।)।

---

* वचिश्च अस्यश्च श्विश्च पतश्च ते तेषां—

वोच च अस्थश्च श्वश्च पप्तश्च ते स्युः। वचिरिति अदादिक एव, भौवादिकात् ङप्राप्त्यभावात्। अस इति दिवादिक एव, अन्यस्मात् ङप्राप्त्यभावात्। पाणिनिमते असधातोः थुक् आगमः। प्रण्यपप्तदिति प्र-नि-पत—टीदि, (५६५) ऌदित्वात् ङः, अनेन पप्तादेशः। (५४९) गदाद्यन्तने णत्वं। पाणिनिः ७।४।१७,१८,१९,२०।

† वेमतुरित्यादि (५७९) जृवमभ्रमेति वा खिल्लोपः अकारस्य एकारश्च। व्यषहतेति वि-सह—घी-त, (६३३) वा षत्वं। परिषहिता (५७२) नित्यं षत्वं।

सहवहोः अकार ओ स्यात् ढे परे। निसोढ़ा, (५७२) ओत्वान्न षः।*

(११७) षद्ऌ जौ विषादे गतौ।

निषीदति। न्यषदत्। निषसाद। प्रतेस्तु प्रतिसीदति।†

(११८) शद्ऌ जौ शाते।

## ६५४। शदोऽपि मं। (शदः ५।, अपि ७।, मं १।)।

शीयते। अशदत्।‡

(११९) फण मि ण गतौ।

फेणतुः पफणतुः, फेणिथ पफणिथ।

(१२०) राजृ ञ ण दीप्तौ।

रेजतुः रराजतुः, रेजे रराजे। (५७९) विधिबलादातोऽप्येत्वं।§

---

* निसोढा इति नि-सह—डी-ता, इमोऽभावपक्षे (१७५) हस्य ढः, अनेन अकारस्य ओकारः, (५७५) तस्य धः, (४७) धस्य ढः, (७७) ढलोपः। एवं सोढव्यः। वोढा, वोढव्यः। पाणिनिः ६।३।११२।

† निषीदति, नि-सद-तिप्, (५९७) सीदादेशः। (५७२) षत्वं। न्यषदत्—टीदि, (५६५) ऌदित्त्वात् ङः। अमव्यवधानेऽपि षत्वं। निषसाद—ठौ णप्, द्वित्वादिकं, (६३४) खिभिन्नस्य षत्वनिषेधः, खेस्तु षत्वं। (५७१) प्रतिवर्जनात् प्रतिसीदतीति न षत्वं।

‡ अप्विषये शदो मं स्यात्, यत्र यत्र शप् तत्र तत्रात्मनेपदमित्यर्थः। शीयते (५९५) शीयादेशः। अपि किं, अशदत्, अत्र टी-दि (५६५) ङः। पाणिनिः १।३।६०।

§ फेणतुरित्यादि (५७९) फणादित्वात् वा एत्वं, खिलोपश्च। विधिबलात् राजृ-अण प्रभृतीनां फणादिपाठबलादाकारस्यापि एत्वं खिलोपश्च।

एवं (१२१) टु भ्राशृ ङ ण दीप्तौ।

भ्राश्यते भ्राशते। भ्रेशे बभ्राशे।

एवं (१२२) टु भ्लाशृ ङ ण भासि। *

(१२३) ष्वन ण शब्दे।

विष्वणति अवष्वणति मांसं, व्यष्वणत्, विष्वेणतुः विषष्वणतुः। विस्वनति वीणा, निस्वनति अन्नं, (५७२) अन्नव्यवेत्युक्ते न षः। †

(१२४) खनु ञ विदारे।

(२३०) हनगमेत्युङ्लोपः, चख्नतुः चख्ने।

## ६५५। खन-सन-जनां ङा झसे, ये तु वा।

(खन-सन-जनां ६॥, ङा ।१।, झसि ७।, ये ७।, तु ।१।, वा ।१।)।

खायात् खन्यात्। ‡

---

* भ्राश्यते इति (५९४) श्यन् वा। भ्रेशे इति फणादित्वात् आतोऽप्येत्वं। भ्राश-भ्लाशौ दन्त्यसान्तौ च।

† सशब्दं मांसं भुङ्क्ते इत्यर्थः, अवष्वणतीति विधामन्त्वात् अकारात् परस्यापि षत्वं। व्यष्वणदिति घी-दिप्, अमव्यवधानेऽपि षत्वं। विष्वेणतुरिति फणादित्वात् वा एत्वं, खिलोपश्च, द्विरुक्तस्यापि षत्वं। वीणा विस्वनति शब्दायते, अन्नार्थभिन्नत्वात्; अन्नं निस्वनति भुङ्क्ते, वि-अवभिन्नपूर्व्वत्वात्, न षत्व।

‡ एषां ङा स्यात् झसे परे, ये तु वा, ङित्त्वादन्त्यस्य स्थाने। अत्र पिति झसे परे न स्यादिति बोध्यं, तेन यङ्लुकि चंखन्ति चंखंसीत्यादि। (अतएव क्ङिति झलादौ परे इति पाणिनिः)। एवं घ्यण्भिन्ने ये परे बोध्यं, तेन जन्यमित्यादि। पाणिनिः ६।४।४२,४३।

(१२५) चायृ ञ निशाने अर्च्चे ।

अचायीत्, (६४२) य्वोर्लोप इति, अचासीत् ।

(१२६) लष ञ स्पृहायां ।

लष्यति लषति । *

(१२७) गुहू ञ संवरणे ।

६५६ । गुहो गोरूः । (गुहः ६।, गोः ६।, ऊः १।) ।

गुहो गोरूः स्यात् । गूहति गूहते । अगूहीत् अघुचत् । †

६५७ । गुहदुहदिहलिहां टीमदन्त्ये न सिः सक् वा ।

(गुह-दुह-दिह-लिहां ६।।।, टीमदन्त्ये ७।, न ।१।, सिः १।, सक् ।१।, वा ।१।) ।

एषां टीमदन्त्ये परे सिर्न स्यात्, सक् च वा स्यात् ।

अगूढ़ अघुचत । ‡

---

* अचायीदिति (५७३) मा इम् । लष्यतीति (५६४) श्यन् वा ।

† क्वति (६८३) गुह्यं गोह्यमित्युदाहरता अचि परे एवायं विधिरिति सूचितं, तेन गूहित्वा गोढ़ा, गूहिष्यति घोच्यतीत्यादि । अगूहीदिति (५७३) वा इम् । पक्षे अनिमत्वात् (६०५) सक्, (१७५,१७७,६०२,१११) अघुचदिति । पाणिनिः ६।४।८६ ।

‡ ष्या मं टीमं, टीमे दन्त्यः टीमदन्त्यस्तस्मिन् । एषां सिर्न स्यादिति पञ्चमीं हित्वा षष्ठी-निर्द्देशेन, गुहधातोः सेम्पक्षे जातः सिः टीमदन्त्येऽचरे परे न तिष्ठेत्, सेर्जातत्वेन अपो न प्रसङ्गः । अनिम्पक्षे (६०५) हशष इत्यनेन जातः सक् च वा तिष्ठेदित्यर्थः, अतः सकोऽभावपक्षेऽपि अपो न प्रसङ्गः । तथा दुह-दिह-लिहां अनिमि-जुङ्हान्तत्वात् सिप्राप्तिरेव नास्ति, सक् तु वा स्यादेव, सकोऽभावपक्षे अपो न प्रसङ्गः, सकृद्गतो विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायादित्यर्थः । अगूढ़ इति गुह-

## ६५८। सकोऽल्लोपो ऽच्यव्वे।

(सकः ६।, अत्-लोपः १।, अचि ७।, अव्वे ७।)।

सकोऽकारस्य लोपः स्यादव्वे अचि परे।

अगूहिषि अघुक्षि। अगुह्वहि अघुक्षावहि। इव्वे किं, अगूहिष्महि अघुक्षामहि। अव्वे किं, अगूहिषत अघुक्षन्त। *

(१२८) हू ञ हृत्यां।

## ६५९। इगुङ् मढौस्यनिम् किद्गमस्तु वा।

(इगुङ: ५।, म-ढौसि ।१।, अनिम् ।१।, कित् ।१।, गमः ५।, तु ।१।, वा ।१।)।

---

टीतन्, अनेन सेरभावे, (१७५) हस्य ढः, (५७५) तस्थाने धः, (४७) धस्य ढः, (७७) ढलोपः पूर्व्वस्य च दीर्घः। अघुक्षत इति सक्, (१७५, १७७, ६०२, १११)। सको विकल्पपक्षे तु अगूढ़ इत्येव। मे किं, अघुक्षत्। (दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते, तेन अगुह्वहि अघुक्षावहि इति सिद्धान्तकौमुदी)। पाणिनिः ७।३।७३।

* अतो लोपः अल्लोपः। न व्वं अव्वं तस्मिन्। बहुवचनभिन्ने अचि विषये इत्यर्थः। अगूहिषि—टी इ, (५७३) इम्। इम्-विकल्पपक्षे अघुक्षि (६०५) सक्, अनेन सकः अकारलोपः, (१७५) हस्य ढः, (१७७) गस्य घः, (६०२) ढस्य कः, (१११) षत्वं। वहि—अगुह्वहि सेर्निषेधः, वकारस्य दन्त्यत्वेन झमत्वाभावात् ढोढ़ीभावित्यस्याप्राप्तिः। सक्पक्षे (१०८) अकारस्य आकारः। अगूहिष्महीति मकारस्य दन्त्यत्वाभावात् न सिनिषेधः। इमो विकल्पपक्षे सक्। अगूहिषत इत (५५५) मान्तोऽदनत इति अन्त-स्थाने अत्। अघुक्षन्त इति इम्विकल्पपक्षे सक्, अत्र व्व-वर्जमादनेन न अकारलोपः, परन्तु (५४३) लोपोऽतोऽदेचोरित्यकारलोपः, तस्य स्थानिवत्त्वात न अन्तस्थाने अत्। अकारलोपे अवश्यम्भाविन्यपि अव्वे इति कथनं ज्ञापयति—(२६) लोपोऽस्योमाङोरिति, (५४३) लोपोऽतोऽदेचोरिति, (७७५) इसाल्लोपोऽश्नित्यदयोरित्येतेभ्योऽन्यसूत्रेण अकार-लोपस्य स्थानिवत्त्वं नाप्नोति। तेन (६७०) लुगदूभ्योऽप इत्यादिना अकारलोपे स्थानि-वत्त्वानङ्गीकारात्, (५५५) मान्तोऽदनत इत्यस्य प्रवृत्तौ दुहते दिहते लिहते इत्यादि सिद्धं। पाणिनि: ७।३।७२।

इगुङ ऋवर्णान्ताच्च परा मे स्थिता अनिम् ढी सिश्च कित् स्यात्, गमस्तु वा। अहृत अहृषातां। हृषीष्ट। *

(१२९) टु डु भृ ञ भृतिपुष्ट्योः।

बभूव। †

(१३०) दान ञ आर्जवे छिदि।

दीदांसति, दीदांसते। ‡

एवं (१३१) शान ञ तेजे।

शीशांसति।

(१३२) भजी ञ भागसेवयोः।

भेजे, भेजिथ बभक्थ।

(१३३) श्रि ञ सेवायां।

(६१३) जिश्रीत्यङ्, अशिश्रियत्। श्रयिता। §

---

* इक् उङ् यस्य स इगुङ्—भिद बुध सृज प्रभृतिः। इगुङ् च ऋश्च इगुङृ तस्मात्। ढी च सिश्चेति, मे (आत्मनेपदे) ढीषि, मढीसि। नास्ति इम् यस्य सोऽनिम् इति मढीमेर्विशेषणं। गमस्तु आत्मनेपदे (८७५) समगत समगंस्त। अहृत इति तन्, सिः, अनेन कित्, (५६२) सेर्लोपः। पाणिनिः १।२।११,१२,१३।

† बभूव इति (५८४) नेमसुम इति इमनिषेधः।

‡ दीदांसतीत्यादि (६३०) सन्, खेडौ च।

§ भेजे इति (५७९) षः एः, खिलोपश्च। भेजिथ इति (५८९) वा इम्। पक्षे बभक्थ (२११) कुङ्। अशिश्रियदिति अङ् द्वित्वादिकं, (५८८) इगः। श्रयिता (५८७) श्रिवर्जनात् इम्।

(१३४) रन्जौ ञ रागे ।

**६६०। रन्जो ऽपषकानास्घिणनौ न-लोपो ञौ तु मृगरमणे।** (रन्जः ६।, अप्-षक-अन-अस्-घिणनौ ७।, न-लोपः १।, ञौ ७।, तु ।१।, मृगरमणे ७।) ।

रजति रजते । ररजतुः ररञ्जतुः । *

(१३५) लिषी ञ कान्तौ ।

अलिक्षत् । लिक्षीष्ट । †

(१३६) यजैं ञौ देवार्चा-दान-सङ्गतौ ।

(६५१) व्यथग्रहेति जिः, इयाज ।

**६६१। ग्रहस्वपाद्योः कङित्-कितो र्जिः ।**

(ग्रह-स्वपाद्योः ६॥, कङित् कितोः ७॥, जिः १।) ।

ग्रहादेः किति ङिति, स्वपादेः किति, जिः स्यात् ।

ईजतुः ईजुः, इयजिथ इयष्ठ । ‡

---

* अप् च षकश्च अनश्च अस् च घिणनिश्चेति तस्मिन् । एतेषु प्रत्ययेषु परेषु रन्जः न-लोपः स्यात्, ञौ परे तु मृगरमणेऽर्थे । घिणिनिरिति कृत्प्रत्ययो वक्तव्यः, तस्मिन् रागीति । रञ्जनमिति तु ञान्तस्यैव । रजति रजते इति अपि नलोपः । ररजतुः ररञ्जतुरिति (५६६) वा कित्संज्ञायां, (५६७) किति नलोपः । पाणिनिः ६।४।२६, ३।२।१४२, "रजकरजनरजःसूपसंख्यानं कर्त्तव्यम्", "घिनुणि च रञ्जेरुपसंख्यानं कर्त्तव्यम्", "रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम्" इति वार्त्तिकानि च ।

† अलिक्षदिति (६०५) सक् । लिक्षीष्ट (६५८) कित्त्वात् न गुणः ।

‡ ग्रहश्च स्वपश्च ग्रहस्वपौ, तौ आदी ययोस्तौ तयोः । कङौ इतौ यस्य स कङित्, कङिच्च किच्च कङित्कितौ तयोः । (६५१) व्यथग्रहेति सूत्रे पठिताः ग्रहादयः स्वपादयश्च ज्ञेयाः । यज—अतुस् द्वित्वादि, व्यथग्रहेति खेर्जिः, अनेन मूलस्य जिः । एवं ईजुः । इयजिथ (५८६) वा इम् । पक्षे (२५४) षड्, (४७) थस्य ठः । पाणिनिः ६।१।१५,१६ ।

(१३७) डु वपौ ञ मुण्ड-बीजोप्तयोः ।

प्रण्युवाप ।

(१३८) वहे ञौ प्रापणे ।

प्रण्यवाचीत्, अवोढ़ । उवाह, ऊहे । *

(१३९) वे ञे स्यूतौ ।

## ६६२ । थ्यां न वे-प्रच्छां ।

(थ्यां ७।, न ।१।, वे-प्रच्छां ६॥)।

वेञ प्रच्छि व्रश्चि भ्रस्जीनां जिर्न स्यात् थ्यां । ववौ, ववतुः । †

## ६६३ । वेञो वय् वा । (वेञः ६।, वय् ।१।, वा ।१।) ।

वेञो वय् स्याद्वा थ्यां । उवाय ऊयतुः । ‡

---

* प्रण्युवाप प्र-नि-वप-णप्, द्वित्वादिकं, (६५१) खेर्जिः । (५४९) गदाद्यन्तनेर्णत्वं । प्रण्यवाचीत् प्र-नि-वह-टीदि, (१७५) हस्य ढः, (६०२) ढस्य कः, (५७४) अनिमत्वात् वृद्धिः, गदाद्यन्तनेर्णत्वं । अवोढ़ वह-टीतन, (५६२) सिलोपः, हस्य ढः, (६५३) अकार ओकारः, (५७५) तस्य धः, (४७) धस्य ढः, (७७) ढलोपः । उवाह वह-ठी-णप्, द्वित्वादिकं, (६५१) खेर्जिः । ऊहे खेर्जिः, (६६१) मूलस्य जिः ।

† प्रच्छां इति बहुवचनं गणार्थं । वेञो जिनिषेधेऽपि तदादेशस्य वयो न जिनिषेधः, अन्यथा तत्र (६५१) वयोग्रहणस्य वैयर्थ्यात् । वे-ठीणप् (६०८) एकार आकारः, द्वित्वादि, (६०९) णप् डौः, ववौ, अत्र खेर्न जिः । एवं ववतुः, अत्र खेर्मूलस्य च जिनिषेधः । पाणिनिः ६।१।४०, वार्त्तिकञ्च ।

‡ उवाय इति अनेन वयादेशे, (६५१) खेर्जिः । ऊयतुरिति खेर्मूलस्य च जिः । पाणिनिः २।४।४१,६।१।३८ ।

## ६६४ । य वः किति । (य ।१।, वः १।, किति ७।) ।

वेञो यस्य वः स्यादृ्यां किति । ऊवतुः । *

### (१४०) व्ये ञे वृतौ ।

## ६६५ । ना व्येष्ठ्यां । (न ।१।, आ ।१।, व्येः ६।, ठ्यां ७।)।

वेञ आ न स्यात् ठ्यां । विव्याय । †

## ६६६ । ञिं वान्त्यः किति ।

(ञिं १।, वा ।१।, अन्त्यः १।, किति ७।) ।

द्विर्व्येञोऽन्त्यो भागो ञिं वा प्राप्नोति ठ्यां किति ।
विव्यतुः विव्ययतुः, विव्ययिथ । ‡

---

'* वेञो यस्य असम्भवात् तदादेशस्य वयएव यकारस्येत्यर्थः । ऊवतुरिति ऊयतुरितिवत् साध्यं, केवलमनेन यकारस्य वकारः । पाणिनिः ६।१।३९ ।

† व्येञै वृताविव्यस्य ठ्यां विभक्तौ (६०८) आ न स्यात् । अनुवृत्तावपि ठ्यामित्युपादानं, कितीत्यस्य वा इत्यस्य च निवृत्त्यर्थं । विव्याय इति आ-निषेधे (६५१) यजादित्वात् खेर्ञिः, (५७७) वृद्धिः, (३५) ऐ स्थाने आय् । पाणिनिः ६।१।४६ ।

‡ (६६१) ग्रहस्वपाद्योरित्यनेन प्राप्तस्य ञेर्विकल्पविधानं । ञिं वा कितीति कृते आदौ ञि-विधाने पश्चात् वि इत्यस्य द्वित्वे,, यजादित्वात् (६५१) खेर्ञि-विधाने उव्यतुरित्यनिष्टरूपं स्यात्, (५३६) ञिः पुनर्न स्यादित्यस्य नात्र विषयः द्विर्भूतस्य वेः प्रकृत्यन्तरत्वात् । विव्यतुरिति व्ये व्ये इति द्वित्वे, (६५१) खेर्ञिः, अनेन मूलस्य ञिः, (५८८) इस्थाने य । विव्ययतुरिति अनेन मूलस्य ञेर्विकल्पपक्षे (३५) ए-स्थाने अय् । विव्ययिथ इति (५८९) व्यंज-वर्जनात्, (५५४) नित्यमिम् सर्व्वत्र (५३६) पुनर्ञिविधाननिषेधात् वि इत्यस्य न उ. । "उभयेषां ग्रहणसामर्थ्यात् इत्वादिः शेषं बाधित्वा सम्प्रसारणम्" इति वृत्तिः ।

(१४१) ह्वे ञ् स्पर्धायां शब्दे च ।

अह्वत्, अह्वत अह्वास्त । *

### ६६७ । ह्वो हुर्जिः । (ह्वः ६।, हु. ६।, जि: १।) ।

ह्वेञो जि: स्यात् । जुहाव जुहुवतुः । †

(१४२) ए वसौ निवासे ।

### ६६८ । स त् स्वरे । (स ।६।, त् ।१।, स्वि ७।, स्वरे ७।) ।

सस्य त स्याद्रे से परे । अवात्सीत् अवात्तां, उवास ऊषतुः । ‡

(१४३) वदे वाचि ।

अच्छ-वदति । (५७४) व्रजवदेति व्रिः । अवादीत् । उवाद ऊदतुः । §

---

* अह्वदिति ह्वि-टी-दि, (६१८) ङः, (६१०) आ-लोपः । अह्वत अह्वास्त इति, (६१८) लिब्भ्यस्तु मे वा इत्यनेन वा ङः ।

† जेः पुनरुपादानात् व्यां, किति, वा, इति त्रयाणां नानुवृत्तिः । ह्वे धातो र्यत्र द्वित्वं तत्र खेर्मूलस्य च जि: स्यादित्यर्थः । यथा अजूहवत् जुहूषति इत्यादि । जुहाव इति अनेन उभयत्र जि:, (५७०) वृद्धिः, (३५) औस्थाने आव् । जुहुवतुरिति (५८८) उस्थाने उव् । पाणिनिः ६।१।३३ ।

‡ अवात्सीत्, अनिमत्वात् वृद्धिः, अनेन सस्य त । अवात्तामिति अन्तरङ्गत्वात् निरवकाशत्वाच्च आदौ सस्य तकारे पश्चात् सिलोपः । उवास ऊषतुः (६५१) यत्नादित्वात् खेर्जिः । (६६१) किति परे मूलस्य जि: । पाणिनिः ७।४।४९ ।

§ अच्छ-वदति (५८१) समासः, सम्मुखे वदतीत्यर्थः। उवाद ऊदतुः, यत्नादित्वात् जि: ।

(१४४) टु ओ श्वि इर् गति-हद्ध्योः।

(५६५) श्वासुलिट्युदिति ङः वा। अश्वत्।

(६१३) जिश्रीत्यङ् वा। अशिश्वियत् अश्वयीत्। *

## ६६६। श्वेर्जि र्वा यङ्-ण्यो र्जेऽङ्सनोः।

(श्वेः ६।, जिः १।, वा।१।, यङ्ण्योः ७॥, जेऽङ्सनोः ७॥)।

श्वेर्जि र्वा स्यात् यङि ण्यां जेः परे अङि सनि च।

शुशाव शिश्वाय, शुशुवतुः शिश्वियतुः। श्वयिता। शूयात्। †

इति भिन्नपादः।

इति भ्वाद्यध्यायः।

---

* अश्वत् श्वि टीदि, ङः, (६५२) श्विस्थाने श्व। ङ-विकल्पपक्षे अङ्, द्वित्वादि, (५८८) श्नुभ्वोरिति इय् अशिश्वियत्। अङ्-विकल्पपक्षे ण्यां सिः, (५५४) इम, गुणः, (३५) एस्थाने अय् अश्वयीत्।

† यङ् च ठी च तौ तयोः। अङ् च सन् च अङ्सनौ, जेः परौ अङ्सनौ, तयोः। शुशाव इति आदौ जिः पश्चात् द्वित्वादिकं। पक्षे शिश्वाय। एवं अतुसि (५८८) यथा-योग्यं उव् इय्। शूयादिति (६६१) जिः। (५६०) दीर्घः। पाणिनिः ६।१।३०,३१।

## ६४। १म-चतुर्गणाध्यायः।

### १म पादः—अदादिः।

(१४५) अद लौ भक्षणे।

**६७०। लुगद्भ्यो ऽपः।** (लुक् ।१, अद्भ्यः ५॥, अपः ६।)।

अदादेः परस्यापो लुक् स्यात्। अत्ति। *

**६७१। ह्रुझसो हे धिः।** (ह्रु-झसः ५।, हेः ६।, धिः १।)।

ह्रो झसाच्च परस्य हे र्धिः स्यात्। अद्धि। †

**६७२। हसाद्भ्यां दिसे लौपामौ।**

(हस-अद्भ्यां ५॥, दि-सेः ६।, लौपामौ १॥)।

हसात् परयो र्दिस्यो र्लोपः स्यात्, अदः परयोरम् स्यात्। ‡ आदत् आदः।

---

* अद्भ्य इति बहुवचनं गणार्थं। घे शप् रे इत्यत्र अदादिवर्जनं न कृत्वा अत्र लुक्करणं कदाचित् शपः स्थित्यर्थं, तेन अहनदित्यादि। अपिच, (१०६९) अप्-विशिष्ट-धातोर्गुणविकल्पे, अदादिगणीयरुदधातोः रोदितं रुदितमित्यादि सिद्धं। लुक्करणात् युतः युवन्तीत्यादौ (९३) लुकि न तत्रेति निषेधात् न गुणः। पाणिनिः २।४।७२।

† हु—जुहुधि। अद—अद्धि। रुध—रुन्धि। वश—उड्ढि। चकास—चकाद्धि इत्यादि। (९५६) विशेषविधानात् तातङादेशस्थले न स्यात्, तेन त्वं अत्तं अत्तात् अद्धि वा। पाणिनिः ६।४।१०१।

‡ दि-सेरित्येकवचनं क्रमनिरासार्थं। दि-सेरिति व्या एव, व्यान्तु सि-व्यवधानादसम्भवः। पाणिनिः ६।१।६८,७।३।१००।

## ६७३। घस्लृदः सन्‌घ्यल्‌घञि।

(घस्लृ ।१।, अदः ६।, सन्-टौ अल् घञि ७।)।

अदो घस्लृ स्यात् सनि ट्यामलि घञि च। (५६५) लित्वात् ङः। अघसत्।*

## ६७४। ण्याँ वा। (ण्याँ ७।, वा ।१।)।

जघास आद। (२३०) हनगमेत्युङ्लोपः। जक्षतुः आदतुः, जघसिथ आदिथ।†

(१८६) प्सा ल भक्षणे।

प्रणिप्साति।‡

## ६७५। द्विषविदातो ऽनुस् वा।

(द्विष विद-आतः ५।, अन् ।१।, उस् ।१।, वा ।१।)।

द्विष्टे वेत्ति रादन्ताच्च परोऽन् उस् स्याद्वा। अप्सुः अप्सान्।§

---

* सन् च टौ च अल् च घञ् चेति तस्मिन्। सनि जिघत्सति। ट्यां अघसत्, (२३०) ङ-वर्जनात् न उङ्-लोपः। अलि घञि च प्रघसः घासः। (पाणिनिः ३।३।६०) न्याद इत्यादौ तु न घसादेशः। पाणिनिः २।४।३७,३८।

† अदो घस स्यात् वा ण्यां। जक्षतुः उङ्लोपे (६४) घस्य कः, (१११) शास-वसघसेति षत्वं। अद घस इति द्वाभ्यां धातुभ्यां आद जघास इत्यादि सिद्धावपि एतत्सूत्रकरणं घसधातोस्थपि अदतुल्यत्वज्ञापनार्थं, तेन (५८८) अदवर्जनादेव घसवर्जने सिद्धे, घसधातोः जघसिथ इत्यत्र (५८४) नित्यमिम्। पाणिनिः २।४।४०।

‡ (५४८) गदनदेति णत्वं।

§ अत्र अन् इति ण्या एव, ण्यान्तु द्विषः सक्व्यवधानात् न प्रसङ्गः, तेन ण्यां अद्विषन्। विदातोस्तु सिव्यवधानात् अनेनाप्राप्तौ, (५६३) नित्यमुस् अवेदिषुः, अप्साषिषुः। पाणिनिः ३।४।१०९,११०,११२।

(१४७) वश ल कान्तौ। *

वष्टि। (६६१) ग्रहिज्यापाद्योरिति जि:। उष्ट: उशन्ति। अवट्। उवाश। †

(१४८) हन लौ हिंसा-गत्यो:।

## ६७६। वनतनाद्यनिमां अम्लोपो झस्-यप्यतिक्यणौ।

(वन-तनाद्यनिमां ६॥, अम्-लोप: १।, झस्-यपि ७।, अतिकि ७।, अणौ ७।)।

एषां अम्लोप: स्यात्, अणौ झसे यपि च, नतु तिकि।
प्रणिहत:। (१८९) हनो क्ङो घ्न:। घ्नन्ति। प्रहण्व: प्रहन्व:, प्रहण्म: प्रहन्म:। ‡

## ६७७। जह्येधि-शाधि हन्यस्ति-शास्ति हिना।

(जहि-एधि-शाधि ।१।, हनि अस्ति-शास्ति ।६।, हिना ३।)।

एषां हियुक्तानां क्रमादेते स्यु:। जहि। §

---

* कान्ति: कामना, इच्छेति यावत्।

† वश-तिप्, (१५४,४७) षङ्, तस्य ट:। अवट् इति घौ-दिप् (६७२,१५४,६४)। ठौ-णप् उवाश (६५१) खि-जि:।

‡ तन आदिर्यस्य स तनादि:। नास्ति इम् यस्मात् स:। वनश्च तनादिश्च अनिम् चेति तेषां। अम् झस् च प्रत्याहारौ। यप् इति (११७६) क्त्वा-स्थानजात:। तिक् (१००७) प्रत्यय:। नास्ति णुर्यस्मिन्, स तस्मिन्, अणौ इति झसो विशेषणं। एषामिति वनधातोस्तनादेरनिमाञ्च। प्रणि हत इति अनेन म-लोप:; (५४९) गदाद्यन्तनेर्णत्वं। एवं प्रहण्व इत्यादि म-वान्तहनो वा णत्वं। पाणिनि: ६।४।३७,३८,३९।

§ जहिश्च एधिश्च शाधिश्च तत्। हनिश्च अस्तिश्च शास्तिश्च तस्य। पाणिनि: ६।४।३५,३६,११९।

## ६७८। हनो वधष्टीख्यलि टीमे तु वा।

(हन: ६।, वध: १।, टीख्यलि ७।, टीमे ७।, तु ।१।, वा ।१।)।

हनो वध: स्यात् ख्यां ख्यामलि च, टी-मे तु वा। अवधीत्। *

## ६७९। खे र्हो घो ञ्णिति च।

(खे: ५।, ह: ६।, घ: १।, ञ्णिति ७।, च ।१।)।

खे: परस्य हनो हस्य घ: स्यात्, ञिति णिति च।
जघान, जघ्नतु:। हन्ता। वध्यात्। प्रहणिष्यति। †

(१४९) द्यु लभिसर्पणे।

## ६८०। रपिद्धस्युतो ऽद्वेर्व्रि:।

(र-पित्-हसि ७।, उत: ६।, अद्वे: ६।, व्रि: १।)

अद्वे र्धो रकारस्य व्रि: स्यात् पिति हसे रे।
द्यौति द्युत: द्युवन्ति। ‡

---

* टी च ढी च अल् चेति तस्मिन्। अल् इति (११३४) प्रत्यय:। ख्यादौ हन्ते: प्रयोगं निषिध्य भौवादिक-वधधातु: प्रयुज्यते इति तात्पर्य्यम्। अवधीदिति हनो वधादेशे वधधातोरनीदित्त्वात् (५५४) इम्, तत: (५६१,५६२) ईम, सिलोपश्च। एवं वध्यात्, (अल्) वध:। टीमे तु—आवधिष्ट आहत इत्यादि। (पाणिनि: ३।३।८४) परिघ इत्यादौ तु न वधादेश:। पाणिनि: २।४।४२,४३,४४।

† चकारादर्थद्वयं, खे: परस्य हनो हस्य घ: स्यादिति, ञिति णिति च परेऽपि घ: स्यादिति च। खे: परत्वात् जघनिथ जिघांसतीत्यादि। ञिति घातयति, णिति घातक इत्यादि। जघ्नतुरिति (२३०,१८९) उङ्लोपौ घादेशश्च। प्रहणिष्यतीति (६१७) इम्। (५४९) नादिहनमीनेति णत्वं। पाणिनि: ७।३।५४,५५।

‡ रश्चासौ पिच्चासौ हस् चेति तस्मिन्। न द्विरद्विस्तस्य। यथा द्यौति यौति रौति। अद्वे: किं, जुहोति। द्युवन्ति (५८८) उव्। पाणिनि. ७।३।८९।

(१५०) यु ल मिश्रणे अमिश्रणे च।

यौति। यविता।*

(१५१) णु ल स्तुतौ।

अनावीत् अनौषीत्। नुनुविव।*

(१५२) क्ष्णु ल तेजने।

क्ष्णविता।

(१५३) ष्णु ल प्रस्नुत्यां।*

(५८६) स्नुक्रमोऽमे इति इम्। अस्नावीत्।

(१५४) इ-न ल गतौ।†

**६८१। यिनोऽच्यणौ।** (य ।१।, इनः ६।, अचि ७।, अणौ ७।)।

इनो यः स्यादणावचि।‡ यन्ति।

**६८२। गा ग्यां।** (गा ।१।, ग्यां ७।)।

इनो गा स्यात् ग्यां। अगात्। इयाय।§

---

* यविता, क्ष्णविता इति (५८७) प्रतिप्रसवात् (५५४) इम। अनावीदिति (५७३) वा इम्। अजन्तत्वात् (५७४) ब्रिः। नुनुविव, (५७३) अथ्या इत्युक्तेः, नेमस्रमिति (५८४) नियमात्, नित्यमिम्। गणपाठे ष्णु इति षोपदेशनिर्द्देशः। (५६९) ष्वाद्यादीति षस्थाने सः, स्नु इति धातुः।

† इ-न धातौ नकारः (५५२) भुस्थापिवेत्यादिषु विशेषज्ञापनार्थः।

‡ (५८८) अभ्वोरिति प्राप्तव्यस्य इयो बाधकः। पाणिनिः ६।४।८१।

§ इ-णप्, द्वित्वं, (५७७) मूलस्य वृद्धिः। (५८५) खे. स्थाने इय। पाणिनिः २।४।४५।

६८३। खेः क्विति घँः। (खेः ६।, क्विति ७, घँः १।)।

इनः खेः घँः स्यात् क्विति थ्यां। ईयतुः। *

६८४। अगे थ्यां। (अगेः ६।, थ्यां ७)।

अगेरिनो घँः स्यात् क्विति थ्यां। ईयात्। अगेः किं, अन्वियात्। †

(१५५) अधीक ल स्मरणे। ‡

६८५। इन्वदिकः। (इन्वत् ।१।, इकः ६।)।

इन इव इकः कार्य्यं स्यात्, रूपञ्च तद्वत्। §

(१५६) या ल गतौ।

प्रणियाति। ¶

एवं (१५७) वा ल गमन-हिंसयोः।

---

* द्विर्भूतस्य इन धातोः थ्या अन्यत्र क्वितोऽसम्भवात् वृत्तौ थ्यामिति व्याख्यातम्। ईयतुरिति, (६८१) यकारे, अनेन दीर्घः। पाणिनिः ७।४।६९।

† (५९०) घौँऽजथ्यरे इत्यनेन दीर्घे सिद्धेऽपि, अयं नियमार्थः, तेन थ्यां क्विति अगेरिन एव दीर्घः न तु सगेरिति। पाणिनिः ७।४।२४।

‡ इ-कः ककारश्चिह्नार्थः। अधिग्रहणं अन्यपूर्व्वस्य केवलस्य च प्रयोगनिरासार्थं।

§ इनधातोरिव इकधातोः कार्य्यं स्यात्, रूपञ्च तद्वदित्यनेन सर्व्वत्रैव स्यादिति स्पष्टं, तेन (८०६) गमीनिङोरित्यत्रापि ग्रहणं, अतएव इक-धातोरपि अधिजिगमिषतीति। स्मरीतयो राघवयोरधीयन्निति भट्टौ, आतिदेशिकस्यानित्यत्वेन इनतुल्यत्वाभावात् (६८१) य आदेशं बाधित्वा, (५८८) इय आदेशः। "इण्वदिक इति वक्तव्यम्" इति वार्त्तिकम्।

¶ प्रणियाति (५४९) गदनदेति णत्वं।

(१५८) द्रा ल स्वप्ने पलायने च ।

(१५९) ख्या ल ख्यातौ कथने ।

अख्यत् । *

(१६०) मा ल च माने ।

प्रणिमाति । मेयात् । *

(१६१) विद ल ज्ञाने ।

## ९८६ । वेत्तेः कीपं ठीपं वा ।

(वेत्तेः ५।, कीपं १।, ठीपं १।, वा ।१।) ।

विदः परस्य क्याः पस्य ठ्याः पं स्याद्वा ।

वेद विदतुः विदुः, वेत्थ विदथुः विद, वेद विद्व विद्म । पक्षे सुगमं । †

## ९८७ । ङाम् वा ठ्यां ग्यान्तु क्रन्तु ।

(ङाम् ।१।, वा ।१।, ठ्यां ७।, ग्यां ७।, तु ।१।, क्र ।१।, अनु ।१।) ।

वेत्तेष्ठ्यां ङाम् वा स्यात्, ग्यान्तु कृञ एवानुप्रयोगः । ‡

---

* अख्यदिति (९१८) ङः, (९१०) आलोपः । प्रणिमाति (५४९) गदनदेति णत्वं । मेयादिति (९१२) ङे ।

† स्थानिवदादेश इति न्यायात् ठीपस्य कीप-तुल्यत्वात् न द्वित्वं, (९८७) न ङाम्, नवा वेत्थ इत्यादाविम् । केवलं कीपरस्मैपदविभक्तीनामाकारभेद इति । पाणिनिः ३।४।८३ ।

‡ ग्यान्तु इत्यनेन गीपरेऽपि ङाम् वा स्यात्, तस्मात् कृञ एवानुप्रयोगः नतु अस्भुवोरिति । ङइत् अगुणः । पाणिनिः ३।१।४१ ।

## ६८८। तनभ्य: शुप् रे घे।

(तनभ्य: ५॥, शुप् ।१।, रे ७।, घे ७।) ।

विदाङ्करोतु वेत्तु । *

## ६८९। कञो ऽह्वणौ रे।

(कञ: ६।, अत् ।१।, उ ।१।, अणौ ७।, रे ७।) ।

कञो ऽकार उ: स्यात् अणौ रे। विदाङ्कुरुतां वित्तां। अविदु: अविदन्। †

## ६९०। घ्यां सौ र वा दधो:।

(घ्या ७।, सौ ७।, र ।१।, वा ।१।, द-धो: ६॥) ।

दधो रेफ: स्याद्वा सौ घ्यां। अवे: अवेत्, अवित्तं अवित्त। विदाम्बभूव विवेद। ‡

---

* तनभ्य इति बहुवचनं गणार्थं, तनादिभ्य इत्यर्थ:। शुप: शपावितौ उकारस्थिति:, शपो बाधकोयं। विदाङ्करोत इति कृ-प्रयोगे, कृञस्तनादित्वात् शुप्, शुपि परे (५४२) कञो गुण:, पुन: तुप् परे शुप उकारस्य गुण:। पाणिनि: ३।१।७९।

† नास्ति ण: (गुणी प्रत्यय:) यस्मात् सोऽणुस्तस्मिन्, अणौ इति रे इत्यस्य विशेषणं। अगुणिप्रत्ययपूर्व्ववर्त्तिनि रे परे इत्यर्थ:। विदाङ्कुरुतामिति शुपि परे कृ इत्यस्य गुणे, विदाङ्कर् इति स्थिते, अनेन अकार उकार:। अविदुरिति घ्या अन्, (६७५) द्विष-विदेति उस् वा। पाणिनि: ६।४।११०।

‡ अवेरिति विद-घो-सिप्, (६७२) सिपो लोप:, त्यलोपे त्यलक्षणमिति न्याया-दनेन दस्य रेफ:, (१०२) रस्य विसर्ग:। विदाम्बभूव (६८७) विकल्पेन ङाम् (५८३) भू-प्रयोग:। एवं विदामास, विदाञ्चकार। पक्षे विवेद। पाणिनि: ८।२।७५।

(१६२) अस ल भुवि।

## ६९१। लोपो ऽस्त्यसो ङिद्रसो रघ्यां।

(लोपः १।, अस्ति-अ-सोः ६॥, ङित-र-सोः ७॥, अघ्यां ७।)।

अस्तेरकारस्य ङिति रे, सस्य च से, लोपः स्यात्, नतु घ्यां। स्तः सन्ति, असि, एधि, आसीत् आस्तां।*

## ६९२। भूररे। (भूः १।, अरे ७।)।

अस्ते र्भूः स्यादरे। अभूत्।†

## ६९३। प्रादुर्गीकः सः षो ऽच्ये।

(प्रादुर्-गि-इकः ५।, सः ६।, षः १।, अच्-ये ७।)।

प्रादुःषन्ति, प्रादुःष्यात्। निषन्ति।‡

---

* अश्च सश्च असौ, अस्तेरसौ अस्त्यसौ तयोः। ङिच्चासौ रश्चेति ङिद्रः ङिद्रश्च सश्च तौ तयोः। स इत्यनकारान्तग्रहणात् सि से स्व इति त्रयाणां ग्रहणं। अरे परे (६९२) भू-आदेशेन अस-स्थित्यसम्भवात्, केवलं ङित्ग्रहणेन सिद्धे, रग्रहणं अरे परे "लावण्य उत्पाद्य इवास यत्नः" इत्यादौ कदाचि-दसधातोर्भू-आदेशनिषेधार्थं। स्तः सन्ति उभयत्र ङिति रे परे अ-लोपः। असि इति से परे स-लोपः। ध्या हि (६७७) एधि। ध्या दिप् (५६१) ईम्। पाणिनिः ६।४।१११,७।४।५०।

† अरविषये असधातुस्थाने भूधातुरादिश्यते, तेन भूधातु-निमित्तं सर्व्वं कार्य्यं स्यादिति। पाणिनिः २।४।५२।

‡ गेरिक् गीक्, प्रादुश्च गीक्च तस्मात्। प्रादुर्शब्दात् गेरिकश्च परस्य अस-धातोः सस्य षः स्यात् अचि ये च परे। अचि ये च किं, प्रादुःस्तः इत्यादौ न षत्वं। पाणिनिः ८।३।८७।

(१६३) मृजू ल म शुद्धौ ।

### ६९४। मृजो ऽकङिति ञि र्वा त्वच्यणौ।

(मृज: ६।, अकङिति ७।, ञि: १।, वा ।१।, तु ।१।, अचि ७।, अणौ ७।) ।

अकङिति मृजो ञि: स्यात् अणावचि तु वा। मार्ष्टि मृष्ट:, मार्जन्ति मृजन्ति । *

(१६४) वच लौ वाचि । †

(६५२) वच्यस्विपतामिति वोच । अवोचत् । उवाच ऊचतु: ।‡

(१६५) रुदिर् ल घ रोदने ।

### ६९५। रुद्भ्यो ऽयो हसस्येम्।

(रुद्भ्य: ५।।।, अय: ६।, हस् रस्य ६।, इम् ।१।) ।

रुदादे: परस्य अयस्य हसस्य रस्य इम् स्यात् । §
रोदिति रुदित: । अय: किं, रुद्यात् ।

---

* क-ङौ इतौ यस्य स कङित्, न कङित् अकङित् तस्मिन् । मृज इति अदादीय-चुरादीययो र्द्वयो र्ग्रहणं। मृजो णौ ञिरित्युक्ते णिङ्गो अकङितीति कथनं मिमार्जतीत्यत्र अनिमि सनि (८०४) अगुणेऽपि वृद्धिप्राप्त्यर्थं। मार्ष्टि अनेन वृद्धि:, (१५४) षड् । पाणिनि: ७।२।११४। वार्त्तिकञ्च ।

† एतस्मात् धातो: अन्ति-अन्तु-प्रयोगो नास्ति ।

‡ अवोचदिति (६१८) ङ: । उवाच (६५१) जि: । ऊचतु: (६५१,६६१) जि: ।

§ रुद्भ्य इति रुदादिगणेभ्य इत्यर्थ:, गणस्तु (५६१) सूत्रे उक्त: । हस् चासौ रश्चेति हसरस्तस्य । रविषये अप्राप्तौ विधिरयं, तेन रोदिष्यतीत्यादौ (५५४) इम् स्यादेव । पाणिनि: ७।२।७६ ।

**९८६। दिस्योरम् वा।** (दि-स्योः ६॥, अम् ।१।, वा ।१।)।

रुदादेः परयो र्दिस्योरम् स्याद्वा। अरोदत् अरोदीत्, अरोदः अरोदीः। *

(१६६) ञि ष्वपी घ लु स्वप्ने।

विस्वपिति, (६२५) सवत्वान्न षः। विसुष्वाप, दुःषुषुपतुः, (६२५) निर्व्वत्वात् षः। †

(१६७) अन घ लु प्राणने।

प्राणिति प्रानिति। ‡

(१६८) श्वस घ लु प्राणने।

श्वसिति। अश्वसीत् (५७६) घणादित्वान्न वृिः।

(१६९) जक्ष क्ष लु घ भक्ष-हासयोः।

जक्षिति।

**९८७। अन्तोऽद्दुः।** (अन्तः ६।, अत् ।१।, दुः ५।)।

---

* दिस्योरिति ध्या एव, ध्यान्तु सि-व्यवधानादसम्भवः। अमो म इत् आदौ। अरोददिति अम्, पक्षे (५६१) ईम् अरोदीत्। एवं ध्याः सिपि। ध्यान्तु, (५६५) वा ङे अरुदत् अरोदीदिति। पाणिनिः ७।३।९८।

† विसुष्वाप इत्यत्र (५७२) दमस्यादेरिति नियमात्, अत्र खे न षत्वं, खिनिमित्तकं मूलस्य षत्वं (१११) क्विलादित्यनेन स्यादेव। दुःषुषुपतुरित्यत्र बलवत्त्वादादौ (६६१) णौ कृते, षत्वे च कृते, पश्चात् द्वित्वमिति।

‡ प्राणितीति (५४९) अमनिसेति वा णत्वं।

द्वेः परस्यान्तोऽत् स्यात्। जक्षति। *

(५६३) अनुस्सिद्वेरिति। अजक्षुः।

(१७०) जागृ च लु जागरणे।

## ६६८। गुरुस्यत्र्यां। (गुः ११, उसि ७।, अत्र्यां ७।)।

द्वेरुसि परे गुः स्यात्, न तु त्र्यां। अजागरुः, अजागः। अजागरीत्। जागरामास जजागार। †

## ६६९। जाग्रो ऽणब्वीण्ङिति कसुकाने तु वा।

(जाग्रः ६।, अ-णप्-वि-इण्-ङिति ७।, कसु-काने ७।, तु ।१।, वा ।१।)।

जागर्त्तेर्गुः स्यात्, न तु णपि वौ इणि ङिति च, कसौ काने तु वा। जजागरतुः। ‡

---

* अन्त् इति हसन्तनिर्देशात् अन्ति अन्तु अन्तामित्यादीनां ग्रहणं। द्वेरिति (१७४) सूत्रे कथितात्। जक्ष-अन्ति जक्षति, एवं ददति। चिकीर्षन्तीत्यादौ, (५४३) अपो लोपे स्थानिवत्त्वान्न अन्तोऽत्। पाणिनिः ७।१।४।

† अजागरुरिति जागृ-ध्या अन्, (५६३) अन उस्, अनेन गुणः। त्र्यान्तु जुहवुः। अजागः—ध्याः सिप्, (५४२) गुणः, (६७२) सिपो लोपः, र विसर्गः। अजागरीत् (५७४) न वृद्धिः। जागरामास (६०७) वा आम्। पाणिनिः ७।३।८३।

‡ जाग्र इति सूत्रत्वात् न ङः (१४१)। णप् च विश्च इण् च ङिच्चेति तत्, पश्चात् नञ्योगे तस्मिन्। णप्प्रभृतिषु गुणनिषेधात् अन्यत्र सर्व्वत्रैव गुणः स्यादित्यर्थः। ञौ जागरयति, घञि जागरः, यकि जागर्य्यते, यपि प्रजागर्य्य, ढी-यात् जागर्य्यादित्यादि। णबादौ तु जजागार, जागृविः (११३१), अजागारि, जागृतः जाग्रतीत्यादि। कसुकाने (घि) जजागर्व्वान् जजागृवान्, (ढे) जजागराणः जजाग्राणः। पाणिनिः ७।३।८५।

## (१७१) दरिद्रा च लु दुर्गत्यां ।

### ७०० । दरिद्रो ङिः हसे ऽणौ हागभ्योस्तु वा ।

(दरिद्रः ६।, ङिः १।, हस्-रे ७, अणौ ७, हाक्भ्योः ६॥, तु ।१।, वा ।१।) ।

दरिद्राते ङिः स्यात् अणौ हसे रे परे, हाग्भ्योस्तु वा । दरिद्रितः ।*

### ७०१ । आद्द्योरा लोप्यो ऽणौ हसे त्वदः ।

(आ-द्द्योः ६॥, आ ।१।, लोप्यः १।, अणौ ७।,हसे ७।, तु ।१।, ई ।१।,अदः ६।)।

आ इत्यस्य द्विश्च आ लोप्यः स्यात्, अणौ हसे तु दावर्ज-मी स्यात् । दरिद्रति । †

### ७०२ । दरिद्र आलोपोऽसनकानेऽरे ध्यान्तु वा ।

(दरिद्रः ६।, आलोपः १।, अ-सन्-अक-अने ७।,अरे ७।, ध्यां ७।,तु ।१।,वा ।१।)।

दरिद्र आलोपः स्यादरे, नतु सनि अके अने च, ध्यान्तु वा । अदरिद्रीत् अदरिद्रासीत् । दरिद्रामास ददरिद्र । दरिद्रयात् ।‡

---

* हाक्च भीश्च तयोः । ङ इत् (१७) अन्त्यस्य आकारस्य स्थाने । पाणिनिः ६।४।११४,११५,११६ ।

† आश्च द्विश्च तौ तयोः । अत्र अणौ रे इति वक्तव्यं, तेन ध्याधातौ यङि चाध्या-यते इत्यादौ न प्रसङ्गः । अणौ हसे तु क्रीणीते जहीते इत्यादि । दा-धा-धात्वोस्तु दत्ते, धत्ते । दरिद्रति (६८७) अन्त् अत, अनेन आलोपः । पाणिनिः ६।४।११२,११३ ।

‡ सन् च अकश्च अनश्च तत्, न तत् असनकानं तस्मिन् । यथा दिदरिद्रासति, दरिद्रायकः, दरिद्राणं । णपि दरिद्रामास (६०७) वा आम्, पक्षे अन्तरङ्गत्वादादौ आ-लोपे ददरिद्र, पाणिन्यादयस्तु डौ आदेशं बलवन्तं मत्वा ददरिद्रौ इत्युदाहरन्ति । "यत्तु णलि ददरिद्रेति तन्निर्मूलमेव" इति सिद्धान्तकौमुदी । वार्त्तिकद्वयम् ।

(१७२) चकास्ट च लु दीप्तौ ।

(६७१) हुझसो हेर्धिः । चकाधि । (६४) झपझसोरिति सस्य दः । चकाद्धि । *

**७०३ । घ्यां दौ त सः ।** (घ्यां ७।, दौ ७।, त ।१।, सः ६।)।

घ्यां दौ परे सस्य त स्यात् । अचकात् । †

**७०४ । सौ वा ।** (सौ ७।, वा ।१।) ।

अचकात् अचकाः । ‡

(१७३) शास च लु शासने ।

**७०५ । शासुङ्ङिङ्इसङे ऽणौ क्वौ त्वाशासश्च ।**

(शास-उङ् ।१।, इत् ।१।, हस-ङे ७।, अणौ ७।, क्वौ ७।, तु ।१।, आशास ६।, च ।१।) ।

शास्ते रुङ इत् स्यात् अणौ हसे ङे च, क्वौ तु आशासश्च । शिष्टः । शाधि । अशिषत् । §

---

* चकाधि (५५६) सलोपः, पक्षे चकाद्धि ।

† विभाषाद्वयमध्यवर्त्तित्वान्नित्यं । अचकात् (६७२) दिपो लोपः । अनेन सस्य त । पाणिनिः ८।२।७३ । तन्मते सस्य दः ।

‡ सस्य त स्याद्वा घ्यां सौ परे । अचकात् अचकाः (६७२) सिपो लोपः । पाणिनिः ८।२।७४ ।

§ शास उङ् शासुङ् तत् । हस् च ङश्च तस्मिन् । अणौ इति सुतरां हसौ विशेषणं । शास इति शास च लु शासने इत्यस्यैव । क्वौ तु आशासश्च इति आपूर्व्वक-शास ङ ल आशिषि इत्यस्य क्विपि एव, अणौ हसे तु आशास्ते इत्यादौ आत्मनेपदीयस्य इत् न स्यात् । क्विपि यथा, मित्रं शास्तीति मित्रशीः, आशास्ते इति आशीः (१०३३) । शिष्ट इति आकारस्य इः, (१११) शासवमिति षत्वं । शाधि (६७७) । ण्या दि, (५६५) अशिषत् । पाणिनिः ६।४।३४ । वार्त्तिकानि च ।

(१७४) चक्ष ङ ल वदे।

चष्टे। *

## ७०६। चक्षः क्साञ् ख्याञ् ऽरेऽत्यागोसमने।

(चक्षः ६।, क्साञ्-ख्याञ् ।१।, अरे ७।, अत्यागोसमने ७।)।

चक्षः क्साञ् ख्याञ् स्यादरे, नतु वर्जने उसि असि अने च। अक्सासीत् अक्सास्त, अख्यत् अख्यत। त्यागे तु समचचिष्ट। †

## ७०७। ठ्यां वा। (ठ्यां ७।, वा ।१।)।

चक्सौ चक्से, चख्यौ चख्ये, चचक्षे। ‡

(१७५) ईड ङ ल स्तुतौ।

ईट्टे। §

## ७०८। सध्वो रस्येम् जनीड़ीशः। (स-ध्वः ६।, रस्य ६।, इम् ।१।, जन-ईड़-ईशः ५।)।

---

* वदः कथनं। चष्टे इति चक्ष् ते (२१३) क-लोपः।

† क्साञ् च ख्याञ् च तत्। न रोऽरस्तस्मिन्। त्यागश्च उसश्च असश्च अनश्च तत्, नञ्योगे तस्मिन्। क्साञ् ख्याञ् इत्युभयो ञानुबन्धादुभयपदं, अरे इति विषय-सप्तमी, तेन विभक्त्युत्पत्तेः पूर्व्वं एतौ स्यातामिति। वर्जनेऽर्थे उसादौ प्रत्यये च न स्यात्। क्साञ् इति तालव्यमध्य इति पाणिनि-क्रमदीश्वरौ। मतान्तरानुरोधात् लोपदेवेन दन्त्यमध्यः कथितः। दन्त्यवदादेशविधानसामर्थ्यात् षत्वं न स्यादिति। अक्सासीदिति (५९८) इमसनौ। अक्सास्त (५८७) एकाजादन्तत्वान्नेम। अख्यत् अख्यत इति (६१८) ङः, (६१०) आलोपः। समचचिष्ट त्यक्तवानित्यर्थः। उसादौ तु नृचक्षुः, नृचक्षाः, विचक्षणः। पाणिनिः २।४।५४। वार्त्तिकानि च।

‡ चक्षः क्साञ् ख्याञ् च स्याद्वा ठ्यां। विषयसप्तमीयं, तेन आदावादेशे ञानु-बन्धादुभयपदं। पाणिनिः २।४।५५।

§ ईड़ ते, (४७) तस्य टः, (६४) ड़स्य टः।

एभ्यः परस्य सस्य ध्वस्य च रस्य इम् स्यात् । ईड़िषे ईड़िध्वे । *

(१७६) आस ङ ल उपवेशने ।

आस्ते । (५८२) व्विंजादीत्याम् आसाञ्चक्रे ।

(१७७) वस ङ ल आच्छादने ।

वसितः वस्ता । †

(१७८) निसि ङ ल चुम्बने ।

प्रणिंस्ते प्रनिंस्ते । ‡

(१७९) सू ङ ल प्रसवे ।

सूते ।

**७०९ । सूते र्न णु ग्यां ।** (सूतेः ६।, न ।१।, णुः १।, ग्यां ७।) ।

सुवे । § (५७३) वेमूदितीम् वा । असविष्ट असोष्ट ।

(१८०) शी ङ ल शयने ।

**७१० । शीङो रे णुः ।** (शीङः ६।, रे ७।, णुः १।) ।

---

* जन इति १९९संख्यकस्य जुहोत्यादेरेव, न तु २३४संख्यकस्य दैवादिकस्य, तस्य श्यना व्यवधानात् । अप्राप्तौ विधिरयं न तु नियमः, तेन जनिता ईड़िता इत्यादौ (५५४) वर्मोऽरस्यतीम स्यादेव । ईड़िषे ईड़िध्वे इति क्याः से ध्वे अनेन इम् । एवं ईशङ ऐश्वर्य्ये, ईष्टे इत्यादि । पाणिनि. ७।२।७७,७८ । तन्मते ध्याः ध्वमि ऐड़िध्वम ऐड़्ध्वम इत्युभयम् । इति सिद्धान्तकौमुदी ।

† वसिता वस्ता इति (६०६) वा इम् ।

‡ प्रणिंस्ते प्रनिंस्ते इति (५४९) अन निंस निन्देति वा णत्वं ।

§ सूङ ल धातो र्णु र्न स्यात् ग्यां । सुवै सू-ऐप् अनेन अगुणत्वे (५८८) उव् । पाणिनिः ७।३।८८ ।

शेते अयाते। *

## ७११। मान्तो रम् विदस्तु वा।

(मान्तः ६।, रम् ।१।, विदः ५।, तु ।१।, वा ।१।)।

शीङः परस्य मस्यान्तो रम् स्यात्, वेत्तेस्तु वा। शेरते। अशयिष्ट। †

(१८१) अधी ङ् ल अध्ययने। ‡

अधीते।

## ७१२। गीङः टीप्यो र्वा।

(गी ।१।, इङः ६।, टी-प्योः ७॥, वा ।१।)।

इङो गी स्यात् वा टी-प्योः परयोः। घंत्वान्न णः। अध्यगीष्ट अध्यैष्ट। §

## ७१३। ठ्यां गा आङ्सनोस्तु वा।

(ठ्यां ७।, गा ।१।, आङ्-सनोः ७॥, तु ।१।, वा ।१।)।

---

* शीङो णः स्यात् रे परे, गुणनिमित्ते अगुणनिमित्ते चेत्यर्थः। पाणिनिः ७।४।२१।

† मस्यान्त् मान्त तस्य। विद इति शीङ-साहचर्य्यात् अदादिपठितस्यैव ग्रहणं। शेरते इति शी-अन्ते, अनेन अन्तस्थाने रम्, मित्त्वादादौ, एकदेशविकृतमनन्यवत् भवतीति न्यायात् पूर्व्वेण गुणः। विदस्तु संविद्रते संविदते, (८०५) आत्मनेपदं। अशयिष्ट शी-टी-तन् (५८७) सूत्रस्य प्रतिप्रसवात् (५५४) इम्। पाणिनिः ७।१।६,७।

‡ गणपाठे अधिपूर्व्वकस्य इङ-धातो र्निर्द्देशात् अधिपूर्व्वकस्यैव प्रयोगः न तु केवलस्य। आते अधीयाते (५८८) इय।

§ घंत्वान्न णः, गी इति दीर्घनिर्देशान्न गुण इत्यर्थः। अध्यगीष्ट, अधि-इ-टी-तन्, गी-आदेशः, एकाजिवर्णान्तत्वात् न इम्। गी-आदेशस्य विकल्पपक्षे (५८१) पुनरमागमे अध्यैष्ट। पाणिनिः २।४।५०।

इङो गा स्यात् ण्यां, ञेः परे अङि सनि च वा । अधिजगे । अध्यगीष्यत अध्यैष्यत । *

(१८२) दीधी ङ॑ च लु देवने दीप्तौ ।

## ७१४ । दीधीवेव्यो न गुः । (दीधी-वेव्यः ६।,न ।१।,गुः १।)।

दीध्ये । †

## ७१५ । लोप्यो ऽन्तो य्योः । (लोप्यः १।,अन्तः १।,य्योः ७॥)।

दीधी-वेव्यो-रन्तो लोप्यः स्यात् यकारेवर्णयोः । अदीधिष्ट । ‡

(१८३) एवं वेवी ङ॑ च लु ई-ल-वत् ।

(१८४) द्विषी ञ ल वैरे ।

(६७५) द्विषविदातो ऽनुस् वा । अद्विषुः अद्विषन् । अद्विष्ट । अद्विक्षत् । §

---

* अङ् च सन् च अङ्सनौ, ञेः अङ्-सनौ ञ्यङ्-सनौ तयोः । अधिजगे अधि इ-ण्या ए, गा-आदेशे द्वित्वादौ, (६१०) आलोपः । धी-स्यत, (७१२) गी-आदेशे अध्यगीष्यत, विकल्पपक्षे अध्यैष्यत । ञ्यङ्-सनोस्तु अध्यजीगपत् अध्यापिपत् अधिजिगापयिषति अध्यापिपयिषति । पाणिनिः २।४।४८,५१ ।

† दीधी च वेवी च समाहारे तस्य, द्विवचनान्तत्वे परसूत्रे अनुवर्त्तमानयो र्यथासङ्ख्यत्वप्रसङ्गः स्यात् । एतयो र्गु र्न स्यात् सर्व्वत्र । गी-एप् (५८८) दीध्ये, एवं दीध्यनीयमित्यादि । पाणिनिः १।१।६ ।

‡ य च इश्च तौ यी तयोः य्योः । ध्या-स्तनि सेरिम्, अनेन ईलोप अदीधिष्ट । पाणिनिः ७।४।५३ ।

§ अद्विषुरिति ध्या अन्, उस्विकल्पपक्षे अद्विषन् । अद्विष्ट ध्या-त । अद्विक्षदिति ट्या दि, (६०५) सक्, (६०२,१११) ।

(१८५) दुहौ ञ ल दोहने ।

अधुक्षत्, अधुक्षत अदुग्ध । *

(१८६) एवं दिहौ ञ ल लेपने ।

प्रणिदेग्धि । † अधिक्षत् ।

(१८७) ऊर्णु ञ ल आच्छादने ।

७१६ । वोर्णोः पिङ्हसे णुः ।

(वा ।१।, ऊर्णोः ६।, पित्-हस् रे ७।, णु १।) ।

ऊर्णोर् णुः स्याद्वा पिति हसे रे । ‡ ऊर्णोति, ऊर्णौति ।
(६८०) रपिङ्हस्युत इति वृिः ।

७१७ । घ्यां । (घ्यां ७।) ।

ऊर्णोर् णुः स्यात् पिति हसे घ्यां । और्णोत् । §

७१८ । णुवत्रि घ्यां । (णु-उव् त्रिः १।, घ्यां ७।)

---

* अधुक्षत् दुह-टौ दि, (६०५) सक्, (१७५) हस्य ढः, (१७१) दस्य धः, (६०२, १११) ढस्य कः, षत्वञ्च । टास्तन् अधुक्षत अदुग्ध (६५७) गुहदुहेति न सिः सक् वा ।

† प्रणिदेग्धि (५४९) गदाद्यन्त-नेर्णत्वं ।

‡ पिच्चासौ हसचासौ रश्चेति तस्मिन् । (६८०) रपिङ्हस्युत इति प्राप्तवृद्धेर्विशेषोऽयं, विकल्पपक्षे वृद्धिरेव । पाणिनिः ७।३।९० ।

§ नित्यार्थं पृथक् विधानं । पाणिनि. ७।३।९१ ।

ऊर्णों णुः उव् त्रिः एते स्यु-र्घ्यां । और्णवीत् और्णुवीत् और्णावीत् । *

## ७१९ । नाजन्तादेरादि द्विः ।

(न ।१।, अजन्तादेः ६।, आदिः १।, द्विः १।) ।

अन्तादिस्थिताचो धो-रादि द्विं नं स्यात् । †

## ७२० । स्यादौ नवद्राऽये ।

(स्यादौ ७।, न-व-द र: १।।।, अये ७।) ।

स्यादौ स्थिता न व द रा द्वि र्न स्यु र्न तु ये । ऊर्णुनाव । ‡

## ७२१ । ङिदिम् वोर्णोः ।

(ङित् ।१।, इम् ।१।, वा ।१।, ऊर्णोः ५।) ।

ऊर्णोः पर इम् ङित् स्याद्वा । ऊर्णुविता ऊर्णविता । §

---

* णुश्च उव्च त्रिश्च, समाहारे पुंस्त्वं सौत्रात् । गुणे और्णवीत्, उवि और्णुवीत, वृद्धौ और्णावीत् । पाणिनि: १।२।३,७।२।६ ।

† अन्तश्च आदिश्च तौ अन्तादौ, अचौ अन्तादौ यस्य स तस्य । यस्य धातोरादौ अन्ते च स्वरवर्णः, तस्य आदिवर्णं हित्वा द्वित्वं स्यादित्यर्थः । पाणिनि: ६।१।२ ।

‡ स्यः संयोगस्तस्यादिस्तस्मिन् । न च व च द च र च ते । अये इति परस्थित-यकारेण संयुक्ताः पूर्ब्ववर्त्तिनो न व द राः द्विः स्युरेवेत्यर्थः । अत्रापि अजन्तादेर्धो-रित्यनुवर्त्तते, अन्यथा दुद्राव दद्रौ इत्यादौ दकारस्य द्वित्वनिषेधापत्तिः । ऊर्णुनाव इति ऊर्णुधातोः, सूत्रद्वयेन ऊकारं रकारञ्च हित्वा, नु इत्यस्य द्वित्वं । पाणिनि: ६।१।३ । वार्त्तिकद्वयञ्च ।

§ ऊर्णुविता इति अनेन इमो ङित्त्वे (५८८) उव् । पक्षे गुणः । पाणिनि: १।२।३ ।

(१८८) ष्टु ञ ल स्तुतौ ।

## ७२२ । पिद्धलस्येम् ब्रुवो यङ्लुग्‌रुतुस्तोस्तु वा ।

(पित्-हल-रस्य ६।, ईम् ।१।, ब्रुवः ५।, यङ्लुक्-रु-तु-स्तोः ५।, तु ।१।, वा ।१।)।

ब्रुवः परस्य पितो हलो रस्य ईम् स्यात् यङ्लुगादेस्तु वा । स्तवीति स्तौति, अभिष्टौति । न्यष्टावीत् न्यस्तावीत् । अस्तोष्ट । तुष्टुव । स्तविता स्तोता । *

(१८९) टु क्षु ल क्षुते ।

क्षविता । †

(१९०) रु ल ध्वनौ ।

रवीति रौति । रविता रोता । †

(१९१) तु ल वृत्ति-हिंसा-पूर्त्तिषु ।

तवीति तौति । तविता तोता । †

---

* पिच्चासौ हल्चासौ रश्चेति पिद्धलस्तस्य । यङ् लुक् यस्मात् स यङ्लुक्, स च रुश्च तुश्च स्तुश्चेति तस्मात् । स्तवीति स्तु-तिप्, शप्, तस्य लुक्, अनेन ईम्, उकारस्य गुणः, ओ-स्थाने अव् । पक्षे (६८०) वृद्धिः स्तौति । अभिष्टौति (५७२) षत्वं । न्यष्टावीदिति (६२३) इम्, अजन्तत्वात् (५७४) वृद्धि', (६३३) निविपरीति वा षत्वं । अस्तोष्ट इति आत्मनेपदे (६२१) न इम्, आदौ गुणे, ह्रस्वपरत्वाभावात् न (५६२) सिलोपः । तुष्टुव इति ण्वा व, (५८४) नेमसुमिति न इम् । स्तविता स्तोता (६०६) वा इम । पाणिनिः ७।३।९३,९४,९५ । एतन्मते पुनः सार्व्वधातुकग्रहणात् अपित्स्वपि वा भवति । तेन रवीतः रुतः इत्यादि ।

† क्षविता इति (५८७) प्रतिप्रसवात् (५५४) इम । रविता रोता (५७३) रुदुसुनो-रुठ्याः इति वा इम् । तविता तोता इति (६०६) वा इम् ।

(१८२) ब्रूञ ल उक्तौ।

ब्रवीति।

## ७२३। पञ्च तिप् पञ्च णबवाहश्च।

(पञ्च ।१॥, तिप् ।१॥, पञ्च ।१॥, णप् ।१॥, वा ।१।, आहः १।, च ।१।)।

ब्रुवः परेषां पञ्चानां तिबादीनां पञ्च णबादयो वा स्युः, ब्रुव-श्चाहः स्यात्। आह आहतुः आहुः। *

## ७२४। हस्त थि। (हः ६।, त ।१।, थि ७।)।

आहो हस्य तः स्यात् थे परे। आत्थ आहथुः। पक्षे सुगमं। †

## ७२५। वचोऽरे। (वचः १।, अरे ७।)।

ब्रुवो वचः स्यादरे। अवोचत्। उवाच, ऊचे। ‡

---

* तिप् णप् च एतयो र्बहुवचनान्तत्वं गणार्थं, तिबादयः पञ्च, णबादयः पञ्च इत्यर्थः। आहादेशो णबाद्यादेशपक्षे एव। तिबादि-स्थाने णबादिकरणात् न द्वित्वं, न इम, नापि अतीतकालप्रतीतिः। (कविभिस्तु "किमिच्छसीति स्फुटमाह वासवः" इत्यादौ वामनमतेन आहादिकं भूते प्रयुज्यते।) तिपो णप्, तसोऽतुस्, अन्तेः उस्, सिपस्थप्, थसोऽथुस् इति क्रमः। आह इति ब्रू-तिप्, णप् आहश्च आदेशौ, एवं आहतुरित्यादि। पाणिनिः ३।४।८४।

† आह इत्यस्य विभक्तिव्यत्ययेन अनुवृत्तिः। आत्थ इति सिपः स्थाने थप्, आह आदेशः, अनेन हस्य तः। (७२२) पिद्वसर्वेमित्यत्र ब्रुवः स्वरूपग्रहणात् अत्र न ईम्। पाणिनिः ८।२।३५।

‡ विभक्तिव्यत्ययेन ब्रू इत्यस्यानुवृत्तिः। अरे इति विषयसप्तमी, तेन वाच्यं इत्यत्र ब्रूधातोः वच्-आदेशं सम्भाव्य (६७१) हसन्तत्वात् घ्यण्। एवं ध्यां (६१८) वक्ष्यस्य-र्थेति ङप्रत्ययो भविष्यतीति सम्भाव्य ङप्रत्ययात् पूर्व्वमेव वचादेशः। एवं सर्व्वत्र अरसम्भावनायामेव वचादेशः। ततः सर्व्वत्र ब्रूञो आनुबन्धात् उभयपदं, तेन अवोचत् अवोचत इत्यादि, (६१८) ङप्रत्यये, (६५२) वोचादेशः। उवाच इति णप्, (६५१) खेर्ञिः। ऊचे इति (६५१) खेः, (६६१) मूलस्यापि ञिः। पाणिनिः २।४।५३।

## ह्वादि:।

—-o—

(१८३) हु लि होमे।

**७२६। ह्वादौ रे द्विः।** (ह्वादि: ११, रे ७।, द्वि: ११)।

ह्वादि द्वि: स्यात् रे परे। जुहोति। *

**७२७। ह्वो वच्यणौ।** (ह्व:६।, व् ।१।, अचि ७।, अणौ ७।)।

ह्वोरुकारस्य व् स्यात् अणावचि रे। जुह्वति। जुहुधि। †

**७२८। पश्चाम् वा भी-ह्री-भृ-हो थ्यां।**

(पश्चाम् ।१।, वा ।१।, भी-ह्री भृ-ही: ५।, थ्यां ७।)।

एभ्य: पश्चाम् वा स्यात् थ्यां। जुहवामास जुहाव। ‡

---

* हु: (धातु:) आदिर्यस्य स ह्वादि:। गणपाठे लि-इतां धातूनां अदादित्वं ह्वादित्वञ्च। जुहोति हु-तिप्, (५४१) शप्, (६७०) तस्य लुक्, द्वित्वं, (५५९) खे हस्य ज:, (५४२) मूलस्य गुण:। (६८०) रपिद्वस्युत इत्यत्र द्वित्ववर्जनात् न वृद्धि:। पाणिनि: २।४।७५,६।१।१०।

† ह्वोर्हु: तस्य ह्व:। (५८८) श्नुभ्वोरिति उवप्राप्तेर्बाधकोऽयं। जुह्वति, अन्ति (६९७) अन्तीऽत्, अनेन व्। अणौ किं, जुहवानि। रे किं, जुहवतु:। जुहुधि (६७१) हे धिः। पाणिनि: ६।४।८७।

‡ पश्चाम: पित्वात् गुण:, श्रित्वात् रसंज्ञायां (७२६) द्वित्वं, आम-स्थिति.। जुहयामास इति हु-णप्, पश्चाम्, द्वित्वादि, (५८३) असप्रयोग:। एवं भू क्र प्रयोगेऽपि। आमो विकल्पपक्षे जुहाव। पाणिनि: ३।१।३९।

(१९४) ञि भी लि भीत्यां।

बिभेति। (७००) दरिद्री ङिरिति, बिभितः बिभीतः, बिभ्यति। बिभयामास बिभाय। *

(१९५) ह्री लि लज्जायां।

जिह्रयामास जिह्राय। *

(१९६) पॄ लि पालने।

## ७२९। पॄभ्रादे ङिः खे रे।

(पृ-ऋ-भृ-आदेः ६।, ङिः १।, खेः ६।, रे ७।)।

पॄ-ऋ-भृ-माङ्-हाङां खे ङिः स्यात् रे। पिपर्त्ति। †

## ७३०। पुर्वौ वा। (पुः ६।, र्वः १।, वा ।१।)।

पिपूर्त्तः पिपृतः; पपरतुः पप्रतुः, (५७९) गुणत्त्वान्न एः। ‡

---

* बिभेति भी तिप्, द्वित्वादिकं। तस् बिभितः, ङी कृते ङित्त्वादन्त्यस्य ईकारस्य स्थाने इः, पक्षे बिभीतः। अन्ति बिभ्यति (६९७) अन्त अत्, (५८८) ईस्थाने य। णप् बिभयामास, पक्षाम् असप्रयागश्च, पक्षे बिभाय। एवं ह्री-णप् जिह्रयामास जिह्राय।

† पॄ लि पूर्त्तौ इति पाठस्तु कविकल्पद्रुमविरोधित्वात् न गृहीतः। पॄश्च ऋश्च भादिश्च तत्तस्य। भादिस्तु २०५-२०७ संख्यक भृ-प्रभृति ह्रादिगणसमाप्तिपर्य्यन्तः इत्यतः आह ऋ माङ् हाङामिति। यथा—पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते इति। रे किं, पपार बभार इत्यादि। पिपर्त्तीति द्वित्वे खः स्थाने ङिः, ङ इत् खेरन्त्यस्य स्थाने इः। पाणिनिः ७।४।७६,७७।

‡ पृधातो र्दीर्घः स्याद्वा। अनिष्टत्वात् खेः रे इति च नानुवर्त्तते। ञि पॄ लि तु पालने इति दीर्घान्त पॄ धातौ स्थितेऽपि एतत्सूत्रकरणं ऋस्वान्तस्यापि दीर्घान्तवत् पदसाधनार्थं। पिपूर्त्त इति दीर्घे कृते (६२८) उर्, (२२८) दीर्घः। अतुस् पपरतुरिति दीर्घपक्षे(६२६) गुणः। (५७९) गुणवत्त्वात् न द्विलोपः अकारस्थाने एश्च। पाणिनौ दीर्घान्तग्रहणात् नास्य सूत्रस्यावसरः। "ऋस्वान्तोऽयमिति केचित्" इति तु सिद्धान्तकौमुदी।

(१८७) ओ हा-क लि त्यागे।

जहाति, जहितः जहीतः, जहति। *

## ७३१। हाकोऽन्तलोपः ख्यां।

(हाकः ६।, अन्तलोपः १।, ख्यां ७।)।

जह्यात्। †

## ७३२। ह्यौ ङा वा। (ह्यौ ७।, ङा ।१।, वा ।१।)।

हाको ङा स्यात् वा ह्यौ। जहाहि जहिहि जहीहि।
हेयात्। ‡

(१८८) ऋ र्लि गत्यां।

इयर्त्ति। §

(१८९) जन म लि ङ जनौ।

जज्ञिषे, जज्ञिध्वे। ¶

---

* जहितः हा-तस् (७००) दरिद्रीङिरिति वा ङिः, पक्षे (७०१) आहग्रीरिति ई।
अन्ति जहति, आहग्रीरिति आ-लोपः, (६८७) अन्त अत्।

† हाक-धातोरालोपः स्यात् ख्यां। हाको ह्ख्यामिति कृते सिद्धावपि, आदौ
द्वित्वं पश्चादन्तलोप इति ज्ञापनार्थं अन्तलोपः इति कथितं, तेन जह्यादिति आदौ
द्वित्वे पश्चात मूलस्य आलोपः, अन्यथा (५३७) प्रागच्कार्य्यादचि द्विरिति नियमेन
ह्मे परे पश्चात् द्वित्वे खिरदन्तत्वव्याघातः स्यात्। एवं जहित इत्यादौ आदावेव द्वित्वं।
पाणिनिः ६।४।११८।

‡ जहाहि इत्यादि आदौ द्विः पश्चात् ङा, ङिः, ईश्च। ख्या-यात् हेयात् (६१२) ङे।
पाणिनिः ६।४।११७।

§ इयर्त्ति, (७२८) पृभादेरिति खे ङिः, (५८५) इयः, मूलधातो र्गुणः। एवं
इयृतः इयृति। ख्या दिप् तां अन्, ऐयः ऐयृतां ऐयरु इत्यादि।

¶ जज्ञिषे जन क्याः से, (७०८) इम्, (२३०) उङ्लोपः, (४६) नस्य ञ। ध्वे
जज्ञिध्वे।

(२००) निजिरौ ञ लि पोषणे शोधने च ।

**७३३ । निजां खे रे णुः ।** (निजां ६॥। खे: ६।, रे ७।, णु: १।) ।

निज-विज-विषां खे णुः स्यात् रे । नेनेक्ति नेनिक्तः । *

**७३४ । न ह्युङोऽचि ।** (न ।१।, ह्युङ: ६।, अचि ७।) ।

हेरुङो णु र्न स्यादचि परे । नेनिजानि । †

एवं (२०१) विजिरौ ञ लि विवेके ।

(२०२) विषि लिं ञौ व्याप्तौ ।

अविषत् अविक्षत् । ‡

(२०३) डु दा ञ लि दाने ।

प्रणिददाति । अद इत्युक्ते-रालोपः । दत्ते । §

---

* निजामिति बहुत्वं गणार्थं, गणश्च गणपाठे ह्वाद्युभयपदिसमापकपर्य्यन्तः इत्यत-आह निज-विज-विषामिति । निज-तिप् नेनेक्ति (२११) कुङ् । एवं विज वेवक्ति, विष वेवेष्टि इत्यादि । अत्र विच-धातोरपि स्वर्णुरिति वक्तव्यं । पाणिनि: ७।४।७५ ।

† हेरुङ् ह्युङ् तस्य । अत्र अचि इति र विषये एव । निज आनिप् द्वित्वादिकं, अनेन मूलस्य गुणनिषेधे नेनिजानि, एवं वेविजानि । यङ्लुकि लेलिहीति मोमुचीति इत्यादि । उङः किं, जुहवानि । रे किं, निनेज । अचि किं, नेनेक्ति । पाणिनि: ७।३।८७ ।

‡ विष-टौदि, (५६५) इरित्वात् वा ङः । पक्षे (६०५) सक्, अविषत् अविक्षत् ।

§ प्र-नि-दा-तिप्, (५४६) गदाद्यन्त-ने णत्वं । ते दत्ते (७०१) आ-लोपः दा-वर्जनात् न ई. ।

## ७३५। द्यो दा-धो दे-धे ह्यौ।

(द्योः ६॥, दा-धोः ६॥, दे-धे ।१॥, ह्यौ ७)।

द्वे दाञो द्वे धाञो दे धे च स्यात् ह्यौ। देहि। *

## ७३६। स्यादो ङि ष्टीमे न णुः।

(स्यादोः ६॥, ङिः १, टीमे ७, न ।१।, णुः १)।

स्या-दो ङिः स्यात् टीमे, तस्य च न णुः। अदित अदिषातां। †

(२०४) डु धा ञ् लि धारणे।

प्रणिदधाति।

## ७३७। धो द धो ऽन्तलोपे तथि।

(धः ६, द ।१।, धः १, अन्तलोपे ७, त-थि ७)।

धाञो दस्य धः स्यात् तथयोः परयोः, अन्तलोपे सति। धत्ते। धेहि। अधित। ‡

---

* दाश्च धाश्च तौ तयोः दाधोः। देश्च धेश्च इति लुप्तप्रथमा-द्विवचनं क्रमार्थं। अत्र डु दा ञ् लि, डु धा ञ् लि इति द्वयोरेव ग्रहणं, अन्येषां दासंज्ञकानां ह्यौ परे द्वित्वासम्भवात्। दा-हि द्वित्व, द्विरुक्तस्यैव दे-आदेशः देहि, एवं धेहि। पाणिनिः ६।४।११९।

† स्याश्च दाश्च तौ तयोः। ङ इत् अन्त्यस्य स्थाने। अत्र दा इति दासंज्ञकः। दा-टीतन् अदित (५६२) झस्वात् झसि सि-लोप.। आतां अदिषातां झसपरत्वाभावात् सिलोपाभावः। पाणिनिः १।२।१७।

‡ धाञो दकारसम्भावना द्वित्वे एव। अन्तलोपे (७०१) आलोपे सति। धत्ते इति धा-ते द्वित्वं (५५९) स्वर्धस्य दः, (७०१) मूलस्य आलोपः, अनेन स्वे दस्य धः। एवं धत्तः धत्थ इत्यादि। धत्से धद्ध्वे इत्यादौ तु (१७७) झभान्तस्येति दस्य धः। अत्र अणौ तथि इति कृते सिद्धावपि अन्तलोपे इति कथनं, यङ्लुकि त्रा त्रवत्वोः दाधीतः दाधीतवान् इत्यत्र (६१२) ङी आदेशे दस्य धकारापत्तिवारणार्थं। पाणिनिः ८।२।३८।

(२०५) टु डु भृ ञ लि भृति-पुष्ट्योः।

बिभृतः, बिभ्रति। बिभरामास बभार। *

(२०६) मा ङ लि शब्दे।

प्रणिमिमीते मिमाते मिमते। *

एवं (२०७) ओ हा-ङ लि गतौ। *

इति अदादि-पादः।

---

२य पादः—दिवादिः।

(२०८) दिवु क्रीड़ायां

७३८। दिव-सु-तुद-रुध-क्र्यादे र्यन्न्वनण्नाः श्रिद्घे रे। (दिव-क्र्यादेः ५।, यन्—नाः १।।।, श्रित् ।१।।।, घे ७।, रे ७।)।

एभ्यो घेऽर्थे यन् नु अ नण् ना एते रे परे क्रमात् स्युः, ते च श्रितः। दीव्यति। *

---

* बिभ्रति भृ-अन्ति (६६७) अन्त अत्। णप् बिभरामास, (७२८) वा पश्चाम्, (७१६) खेर्डिः। माङ्-ते मिमीते खेर्डिः, (७०१) ईः, आते अन्ते (७०१) आलोपः मिमाते मिमते इति। एवं हा-ङ—जिहीते जिहाते जिहते।

---

* दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति, ते आदयो यस्य तस्मात्। आदि शब्दस्य प्रत्येकेन सम्बन्धः। यन् च नुश्च अश्च नण् च नाश्च ते। श इत् येषां ते श्रित् इति बहुवचनान्तं। ते च श्रितः इत्यनेन दिवादेः श्यन्, स्वादेः श्नुः, तुदादेः शः, रुधादेः श्नण्, क्र्यादेः श्ना इति। श्रित्करणात् (५३०) रसंज्ञायां, अपिद्‌त्वात् (५३२)

(२०९) षिव्‌ु तन्तुसन्तती ।

निषीव्यति । न्यषेवीत् न्यसेवीत् । *

(२१०) नृती य नर्त्तने ।

**७३९। नृत् क्षत् चृत् कृत् तृदो ऽरसो ऽसेरिम् वा।** (नृत्—तृदः ५।, अरसः ६।, असेः ६।, इम् ।१।, वा ।१।) ।

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम् स्याद्वा। नर्त्तिष्यति नर्त्स्यति । सौ तु अनर्त्तीत् । †

(२११) त्रसी य भये ।

(५९४) क्रमक्लमेति श्यन् वा। त्रस्यति त्रसति। तत्रास त्रेसतुः तत्रसतुः । ‡

---

ङित्त्वे, श्यनादौ परे (५४२) न गुणः । एते शपो बाधकाः । अण् इति णकारानुबन्धात् (१७) रुधादेरन्त्याचः परो भवन्नपि शपं बाधते । अपिच रुधादेरिति षष्ठ्यन्तत्वेन अर्थो बोध्यः, विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वमिति न्यायेन च पञ्चम्यन्तत्वेन प्रयुक्तः । दीव्यति दिव-तिप्, श्यन्, (२२८) दीर्घः । पाणिनिः ३।१।६९, ७३,७७,७८,८१ ।

* निषीव्यति (५७२) षत्वं । न्यषेवीत् (६३३) वा षत्वं ।

† नृत् इत्यादि द्वन्द्वः । अरश्चासौ असश्चेति तस्य अरसः । नृत्-स्यति वा इम् । अनर्त्तीदिति टौदि, (५५४) नित्यमिम् । पाणिनिः ७।२।५७ ।

‡ त्रसति श्यन्विकल्पपक्षे शप् । त्रस-अतुस् (५७९) वा स्त्रिलोपः, अकार एकारस्य । पक्षे तत्रसतुः ।

(२१२) जॄ इर्ष जरायां ।

जीर्य्यति । अजरत् अजारीत् । जेरतुः जजरतुः । जरीता जरिता । *

(२१३) शो य निशाने ।

## ७४० । यन्योश्शमादिमिदो लोपर्घ्णु ।

(यनि ७।, श्रो शमादि मिदः ६।, लोप-र्घ णु १।) ।

ओकारस्य लोपः शमादेर्घो मिदे र्णुः स्यात् यनि । †

श्यति । अशात् अशासीत् । ‡

एवं (२१४) छो य लूनौ ।

(२१५) षो य नाशे ।

प्रणिष्यति । न्यषात् न्यषासीत् । सेयात् । §

---

* जीर्य्यतीति जॄ-तिप्, श्यन्, (६२८) इर्, (२२८) दीर्घः । अजरत्, टी-दि, (५६५) वा ङः, (६१९) गुणः । पक्षे अजारीत् सौ पे (५७४) वृद्धिः । जेरतुः जजरतुः, (६२६) गुणः, (५७९) वा णिलोपः अ एश्च । जरीता इति (६२७) इमो वा दीर्घः ।

† ओश्च शमादिश्च मिद च तस्य । लोपश्च र्घश्च णुश्च तत् । उभयत्र समाहारे क्रमान्वयः । गणपाठे भ इत् शमादिः, सच—शम श्रम दम चम तम भ्रम मद क्लम इति अष्ट । पाणिनिः ७।३।७१,७४,८२ ।

‡ श्यति, शो-तिप्, श्यन्, ओलोपः । अशात् टौ दि, (६०८) औस्थाने आ, (६१४) वा सेर्लक् । पक्षे (५९८) इम्सनौ अशासीत् ।

§ प्रणिष्यति प्र-नि षो तिप् (५४९) गदाद्यन्त-ने णत्वं । न्यषात् न्यषासीत् (५७२) अभ्यपि षत्वं । सेयात् ढौ-यात् (६१२) ङे ।

(२१६) दो य च्छेदे ।

प्रण्यदात् । देयात् । *

(२१७) राध्यौ ण हिंसे ।

रेधतुः रराधतुः । वधार्थः किं, आरराधतुः । *

(२१८) व्यध्यौ ताड़े ।

विध्यति । विव्याध, विविधतुः । †

(२१९) पुष्यौ ऌ पोषणे ।

(५६५) पुषादिद्युतादिति ङः । अपुषत् । †

(२२०) श्लिष्यौ ञि ऌ श्लेषे ।

अश्लिषत् । आलिङ्गने तु अश्लिक्षत् । †

(२२१) रध्यू ऌ पाकहिंसयोः ।

**७४१ । नुण् रधो मुचां नश्मस्जो रभलभो ऽनठीमच्ये झस्यरत्यचि ।** (नुण् ।१।, रधः ६।, मुचां ६॥, नश्मस्जः ६।, रभ-लभः ६।, अनठीमचि ७।, ए ७।, झसि ७।, अरत्यचि ७।) ।

---

* प्रण्यदात्, प-नि दो-टी दि, (६०८) घोस्थाने आ,(५५२) मे लंक् दासंज्ञकत्वात्, (५४९) गदाद्यन्त-ने णत्वं । देयात, (६१२) ङे । रेधतः, राध (वधार्थ) ठी अतुस, द्वित्वं, (५७९) विधिबलात् वा खिलोपः आ एश्च । पक्षे रराधतुः । आराधनार्थे तु आरराधतुः अत्र न एः ।

† विध्यति, व्यध-तिप् (६६१) जिः । णप् विव्याध (६५१) खेर्जिः । अतुस् विविधतु. खे. मूलस्य च जिः । अश्लिषत, पुषादित्वात् (५६५) ङः । अश्लिक्षत (६०५) सक् ।

रधष्ठीवर्जेम्वर्जेऽचि, मुचादेरत्ये, नश्-मस्जो झसे, रभ-लभो रठीवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। व्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म।*

(२२२) तृप्यू ञि ष्ट प्रीणने।

अतर्पीत् अत्राप्सीत् अतार्प्सीत् अतृपत्।†

एवं (२२३) दृप्यु इ ञि हर्षाहङ्कारयोः।

(२२४) मुह्यू ञि ष्ट वैचित्ते।

मोहिता। (१७८) मुहां घङ्गिति, मोग्धा मोढ़ा।‡

---

* न ठी अठी, अव्या इम अठीम्, नास्ति अठीम् यत्र सः अनठीम्, अनठीम् चासौ अच्चेति अनठीमच् तस्मिन्। रश्च ठी च रठ्यौ, न रठ्यौ अरठ्यौ, तयोरच् अरठ्यच् तस्मिन्। रधधातोः व्या इमि सामान्ये अचि च परे नुण् स्यात्, व्या इम्भिन्ने अन्यस्मिन् इमि न स्यादिति तात्पर्य्यम्। ठीमचि इति कृते तु ररन्धतुरित्यादौ व्या अचि नुणोऽप्राभिरूपमनिष्टं स्यात्। मुचामिति बहुवचनं गणार्थं, तेन मुचादेरिति, मुचादिश्च—षकारानुबन्धा धातवः—मुच सिच लिप लुप कृत विदादयः। अत्ये इति तुदादित्वाज्जाते अ प्रत्यये परे इत्यर्थः, तेन घञि मोक इति। झसे इति झस्-प्रत्याहारे। रठीवर्जेऽचीति रभिन्न ठीभिन्ने अचि परे इत्यर्थः। अरन्धदिति, रध-टीदि पुषादित्वात् (५६५) ङः, तस्मिन् अचि परे अनेन नुण्, णित्वात् (१७) अन्त्याचः परे, न-स्थितिः, उकारः स्थित्यर्थः। नुण्करणादेव (५६७) अमुङ् न इत्यनेन न नलोपः। रधिता इति रध-डीता, (५७३) रधादित्वात् वा इम। ठी-व ररन्धिव, अत्र व्या इमि नुण्। इमो विकल्पपक्षे (५७९) खिलोपः, अकारस्य एकारः। एवं ठी म। पाणिनिः ७।१।५९, ६०, ६१, ६२, ६३, ६४।

† तृप-टीदि, (६०३) वा सिः (५७३) वा इम्, अतर्पीत्। इमोऽभावपक्षे (६०४) ऋस्थाने वा रः, अनिमत्वात् (५७४) अकारस्य वृद्धिः अत्राप्सीत्। रस्य विकल्पपक्षे, ऋकारस्य वृद्धिः अतार्प्सीत्। सेर्विकल्पपक्षे (५६५) ङः अतृपत्।

‡ मोहिता, मुह-डी-ता, (५७३) वा इम्। इमो विकल्पपक्षे मोग्धा, घङ्-विकल्पपक्षे मोढ़ा, अन्तरङ्गत्वादादौ गुणे, (१७५) हस्य ढ, (५७५) तस्य धः, (४७) धस्य ढः, (७७) ढलोपः।

(२२५) णश ष्ठ यू नाशे ।

**७४२। नश नेश वा ङे।**(नश ।१।, नेश ।१।, वा ।१।, ङे ७।)।

प्राणेशत् प्राणशत् । नशिता प्रनंष्ठा प्रनंष्टा, अशान्तत्वात् (५४८) न णः । *

(२२६) शमु श्य इर् उपशमे ।

प्रणिशाम्यति । †

(२२७) क्लमु भिर् ग्लानौ ।

क्लाम्यति क्लामति । †

(२२८) असु इर् क्षेपे ।

आस्थत् । †

(२२९) यसु इर् यत्ने ।

यस्यति यसति, संयस्यति संयसति । अन्यत्र प्रयस्यति । ‡

(२३०) लुभ्य इर् गार्द्ध्ये ।

लोभिता लोब्धा । ‡

(२३१) जीर् मिदा स्नेहे ।

मेद्यति । ‡

(२३२) सू यो ङ सूतौ ।

असविष्ट असोष्ट । ‡

---

* नश धातो र्नेश स्यात् वा ङे । नश-टीदि (५६५) ङः, वा नेश-आदेशः । (५४८) शान्तत्वात् नस्य णत्वं । डी-ता (५७३) वा इम् नशिता । इमो विकल्पपक्षे प्रपूर्व्व नश-डी-ता (७४१) नुण्, (१७८) षङ् । षङो विकल्पपक्षे (१५४) षङ्, (४७) तस्थाने टः । "नशिमन्योरलिट्येत्वं वक्तव्यम्" इति काशिका ।

† प्रणिशाम्यति, (७४०) शमादित्वात् दीर्घः, (५४८) गदाद्यन्त-ने णत्वं । क्लाम्यति (५९४) वा श्यन्, शमादित्वात् दीर्घः । विकल्पपक्षे शप् (५९३) ष्ठिवुक्लमेति दीर्घः, क्लामति । आस्थत् अस-टीदि, (५६५) ङः, (६५२) थस्यादेशः । पक्षे आसीदिति ।

‡ यस—संपूर्व्वक यस धातोः (५९४) श्यन् वा, संपूर्व्वकादन्यत्र (७३८) नित्यं श्यन् प्रयस्यति । लुभ डी-ता, (६०६) वा इम् लोभिता लोब्धा । मिद-तिप् श्यन् (७४०) मिदेर्गुणः मेद्यति । सू—तन्, (५७३) वा इम्, असविष्ट असोष्ट ।

(२३३) धो दी ङ य क्षये ।

### ७४३ । दीङश्ठ्यां यन् यब्णौ ङा सनि तु वा ।

(दीङ: ६।, ष्ठ्यां ७।, यन् ।१।, यप्-णौ ७।, ङा ।१।, सनि ७।, तु ।१।, वा ।१।)।

दीङ ष्ठ्यां यन्, यपि णौ च ङा, सनि तु वा स्यात् ।

अदास्त । दिदीये । *

(२३४) जनी स्य ङं प्रादुर्भावे ।

जायते । †

### ७४४ । जनवधः सेममो ऽकमवमाचमो ञ्णित्-कृदिणि स्वो ऽमयमविश्रमस्तु वा ।

(जन-वध: ६।, सेमम ६।, अ-कमवमाचम: ६।, ञ्णित्-कृदिणि ७।, स्व: १।, अम-यम विश्रम: ६।, तु ।१।, वा ।१।) ।

जनो वधः सेमोऽमन्तस्य च कमवमाचम-वर्जस्य स्वः स्यात् ञ्णिति कृति इणि च, अम-यम-विश्रमस्तु वा । अजनि अजनिष्ट । जज्ञे । ‡

---

* यप् च णुश्च समाहारे तस्मिन् । यप् इह (११७६) क्त्वाचस्थाने जातः प्रत्ययः । णुरिह गुणप्राप्तियोग्य इत्यर्थः । सनि तु ङा वा स्यादिति । अदास्त इति दी-टीतन्, सिः, अनेन गुणिनि परे ङा, ङित्त्वादन्त्यस्य स्थाने । ष्ठ्या ए, द्वित्वं, अनेन यन् नित्त्वादन्ते । णौ (गुणयोग्ये) दापयति । यपि प्रदाय । ष्ठौ किं, दीयते । सनि दिदासते दिदीषते । पाणिनिः ६।४।६३, ६।१।५० ।

† जायते, जन-ते, श्यन्, (५८७) जादेशः ।

‡ जनश्च वधश्च तत्तस्य । इमा सह वर्त्तमानः सेम्, सेम् चासौ अम् चेति तस्य । कमश्च वमश्च आ-चमश्च ते, न सन्ति ते यत्र स तस्य । ञश्च णश्च ञ्णौ, तौ इतौ यस्य स ञ्णित्. ञ्णिच्चासौ कृच्चेति ञ्णित्कृत्, ञ्णित्कृच्च इण् च तत्तस्मिन् । अमश्च यमश्च विश्रम च तत्तस्य । अकमवमाचम इति सेमम इत्यस्य विशेषणं । ञ्णिति कृति, ञ-इत् ण-इत् कृत्प्रत्यये परे इत्यर्थः । यथा—घ्यण्, जन्यं वध्यं । णक, जनकः

(२३५) दीपी ङ्य ऋ दीपने ।

अदीपि अदीपिष्ट । *

एवं (२३६) पूरी ङ्य प्यायने ।

(२३७) पद्यौ ङ गतौ ।

(६४३) पदस्तनीण् चे इति । प्रण्यपादि, अपत्सातां । *

(२३८) बुध्यौ ङ अवगमने ।

अबोधि अबुद्ध । *

(२३९) नहीं ञ बन्धे ।

(२३७) नहो धङ् भौ । अनात्सीत्, अनद्ध । *

इति दिवादि-पादः ।

---

## ३य पादः—स्वादिः ।

(२४०) षु ञ न बन्धे ।

सुनोति, अभिषुणोति, सुनुतः सुन्वन्ति ।

(६२३) सुसुधोरितीम् । व्यषावीत् । असविष्ट असोष्ट । सुषुविव।

विसविष्यति विसोष्यति, (५७२) स्यान्तत्वान्न षः । †

---

वधक इत्यादि । अजनि, जन् टीतन्, (६४७) इण्, (६४४) तन्लोपः, (५७७) वृद्धिः, अनेन ह्रस्वः । पक्षे व्यां सिः, अजनिष्ट । ठौ ए, जश्चि द्वित्वं, (२३०) उङ्लोपः, (४६) नस्थाने ञ । पाणिनि: ७।३।३४,३५ । वार्त्तिकं भाष्यञ्च ।

* दीप-टीतन् (६४३) इण् वा, (६४४) तन्लोपः, अदीपि । इणो विकल्पपक्षे अदीपिष्ट । प्रण्यपादीति (५४९) णत्वं । अबुद्ध इति बुध-तन्, इणो विकल्पपक्षे सिः, (५६२) सिलोपः । अनात्सीदिति अनिमत्वात् (५७४) वृद्धिः ।

† सु-तिप्, (७३८) स्वादेः श्नु, (५४२) गुणः, सुनोति । अभिषुणोति, (५७२) षत्वं, (१०७) णत्वं । सुनुतः ङित्त्वान्न गुः । सुन्वन्ति, (५८८) उकारस्य वः । व्यषावीत, वि-सु टौ दि (५७२) अभ्यपि षत्वं । टी-तन् (५७३) वा इम्, असविष्ट असोष्ट । ठौ-व सुषुविव, (५७३) वदुसुनोस्त्वठा इति इम् विकल्प निषेधात् (५८४) नेमसुमिति नियमेन नित्यमिम्, (५८८) उव्, (१११) षत्वं ।

(२४१) ष्णु मि ञ न क्षेपे ।

## ७४५। मिम्यो र्यब्णौ ङाऽखललि लियस्तु वा।

(मिम्योः ६॥, यप्-णौ ७, ङा ।१।, अ-खल्-अलि ७, लियः ६।,तु ।१।, वा ।१।)।

अमासीत् । प्रणमास्त । *

(२४२) चि ञ न चित्यां ।

## ७४६। चेः कि र्वा सन्ठ्योः ।

(चेः ६।, किः १।, वा ।१।, सन्-ठ्योः ७॥) ।

चिकाय चिचाय । चिक्ये चिच्ये । †

(२४३) स्तृ ञ न स्तृतौ ।

## ७४७। स्यादृदृदु-रस्कु र्वेम् सन्मढीसेः ।

(स्यादि-ऋत-ॠत्-वुः ५।, अस्कुः ५।, वा ।१।, इम् ।१।, सन्-मढीसेः ६।) ।

स्कुवर्ज-स्यादृदन्ता-ॠदन्ताच्च वृञो वृङश्च सनो मे स्थितयो-ढींस्योश्च इम् स्याद्वा । अस्तरिष्ट अस्तृत । स्तरिषीष्ट स्तृषीष्ट । ‡

---

* मि ञ न, मी ङ य, मी ञ ग, मी कि, एषां ङा स्यात् यपि गुणसाधन-णौ च, नतु खलि अलि च, लीधातोस्तु वा, ङ इत् अन्त्यस्य स्थाने । अमासीत्, टीदि, सि, अनेन ङा, आदन्तत्वात् (५९८) इम्सनौ । प्रणमास्त, मदाद्यन्त-ने णत्वं । पाणिनिः ६।१।५०,५१ । वार्त्तिकञ्च ।

† सनि—चिकीषति चिचीषति । पाणिनिः ७।३।५८ ।

‡ स्य आदि र्यस्य स स्यादिः, स्यादिश्चासौ ऋश्चेति स्यादृत्, स्यादृच्च ॠच्च वुश्चेति तस्मात् । नास्ति स्कु र्यस्मिन् सोऽस्कुस्तस्मात् । ढी च सिश्च ढीसिः, मे (आत्मनेपदे) ढीसिः मढीसिः, सन् च मढीसिश्च तस्य । स्कुवर्ज-संयोगादि-ऋदन्तात्, दीर्घ-ॠदन्ताच्च, उभयपदि-वृञः, आत्मनेपदि-वृङश्च इत्यर्थः । अस्तरिष्ट इति स्तृ-टीतन्, अनेन सेरिम्, पश्चात् गुणः । इमो विकल्पपक्षे अस्तृत, (६५९) सेः कित्वात् न गुणः, (५६२) सिलोपः । एवं ढौ सीष्ट । पाणिनिः ७।२।४१,४२,४३ ।

(२४४) वृ ञ न वृतौ।

अवारीत्। अवरीष्ट अवरिष्ट अवृत। ववरिथ, ववृव।

वरिषीष्ट वृषीष्ट। *

(२४५) धु ञ न कम्पे।

(६२३) सुसुधोरितीम्, अधावीत्।

(२४६) हि न वर्द्धने गतौ।

प्रहिणोति। †

## ७४८। हेः खेरनङि घिः।

(हेः ६।, खेः ५।, अनङि ७।, घिः १।)।

खेः परस्य हे र्घिः स्यान्न तु अङि। जिघाय। ‡

(२४७) कृवि न कृतौ हिंसे।

## ७४९। कृविधिव्योः कृधौ ञौ।

(कृवि-धिव्योः ६॥, कृ-धौ १॥, ञौ ७।)।

कृणोति। अकृणवीत् (५६८) अतएवेदितो नुण्। चकृणव।

कृणविता। कृणव्यात्। §

* अवारीत्, वृ-टीद्दि, (५८७) वृ इत्यस्य प्रतिप्रसवात् (५५४) इम्। अवरीष्ट, वृ-टीतन्, सिः, अनेन वा इम्, (६२७) इमो वा दीर्घः, दीर्घ-विकल्पपक्षे अवरिष्ट, इमो विकल्पपक्षे अवृत, (६५९) सेः कित्त्वात् न गुणः, (५६२) सिलोपः। ववरिथ, वृ-ठी-थप् (६१६) प्रतिप्रसवात् (५५४) इम्। ववृव ठी-व, (५८४) इमनिषेधः। ढी-सीष्ट वरिषीष्ट वृषीष्ट, अनेन वा इम्। इमोऽभावपक्षे (६५९) कित्संज्ञा।

† (५४९) हनमीनाहिन्वानिविति णत्वं।

‡ अङि तु, अजीहयत्। पाणिनिः ७।३।५६।

§ कृवि-धिव्योरिकारानुबन्धात् विभक्त्युत्पत्तेः पूर्व्वं नुण् कृते कृन्व धिन्व इत्येतयोः ञौ परेऽक्र धि आदेशौ स्यातामित्यर्थः। अकृणवीदित्यादौ वकारस्य दन्त्यत्वेन झसत्वा-भावात् तस्मिन् परे (५०) म नस्यानुस्वारः।

(२४८) दन्भु न दम्भे ।

देभतुः ददम्भतुः । *

## ७५० । श्रन्थ-ग्रन्थ-दन्भां थपि न-लोपो वा । †

(श्रन्थ-ग्रन्थ-दन्भां ६॥, थपि ७।, नलोपः १।, वा ।१।) ।

देभिथ ददम्भिथ ।

(२४९) धिवि न प्रीतौ ।

धिनोति ।

(२५०) अशू ङ न व्याप्ति-संहत्योः ।

(५८०) स्वान्तादिति खेरान् । आनशे ।

इति स्वादि-पादः ।

४र्थ पादः—तुदादिः ।

(२५१) तुदौ ञ श व्यथे ।

तुदति तुदते ।

(२५२) भ्रस्जौ ञ श पाके ।

भृज्जति । अभ्राक्षीत् । ‡

## ७५१ । भ्रस्जो ऽरे णौ भर्ज वा ।

(भ्रस्जः ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१।)

---

* देभतुरिति (५६६) वा कित्संज्ञायां, (५६७) नलोपे, (५७९) दम्भग्रहणात् खिलोपः, अकार एकारश्च ।

† अत्र थप् किद्वा इति कृते, दभि ग्रथि इत्येतयोरिदनुबन्धयोः थप्-विभक्तौ (५६८) नलोपनिषेधापत्तिः स्यात् । "श्रन्थिग्रन्थिदम्भिसञ्जीनां लिटः कित्त्वं वेति व्याकरणान्तरम्" इति भट्टोजिदीक्षितः ।

‡ तुदतीत्यादि (७३८) श प्रत्ययः, तस्य ङित्त्वात् न गुणः । भृज्जति (६६१) जिः, अर्थात् रस्य ऋः । अभ्राक्षीत्, भ्रस्ज-टौदि अनिम्त्वात् (५७४) वृद्धिः, (२१३) स्वादेः सलोपः, (१५४) षङ्, (६०२) षस्य कः, (१११) सेः सस्य षत्वं ।

बभर्ज बभ्रज्ज, बभ्रज्जे बभर्ज्जे । *

(२५३) मुच ली ञ श प मोक्षे ।

(७४१) नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त । †

(२५४) । ञि लिपौ ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । ‡

(२५५) षिचौ ञ श प उक्षणे ।

निषिञ्चति । न्यषिचत् । न्यषिचत न्यषिक्त । निषिषेच । ‡

(२५६) कृती श प च्छिदि ।

(७३९) नृत्कृदितीम् वा । कर्त्तिष्यति कर्त्स्यति ।

(२५७) षू श क्षेपे ।

विषुवति । व्यषावीत् । §

---

* नास्ति रो यस्मात् सः अरस्तस्मिन् । भस्जो भर्ज वा स्यात् अरे णौ गुणसाधनयोग्ये इत्यर्थः । अरे इति कथनात् अभाक्षीदित्यत्र सिरूप गुणिनि परेऽपि तदुत्तरं टीदिरूप-रस्य विद्यमानत्वात् न भर्जादेश । बभर्ज बभ्रज्ज इति ठौ णप्, वा भर्जादेशः, (६४) सस्य दः, (४६) दस्य जः । बभ्रज्जे, ठौ ए (५६६) कित्त्वेऽपि (६६२) ध्यां न वेप्रच्छामिति ञिनिषेधः। 'कित्त्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेशः। पाणिनिः ६।४।४७ ।

† अमुचत्, मुच-टीदि (५६५) लिदित्त्वात् ङः । अमुक्त इति आत्मनेपदे ङस्याप्राप्तौ सिः, औदित्त्वादिमोऽभावे (६५९) सेः कित्त्वात् न गुणः, ततः (५६२) सेर्लोप. ।

‡ लिप-टीदि, (६१८) ङः, अलिपत् । टीतन्, आत्मनेपदे तेनैव वा ङः । पक्षे सिः (६५९) कित्संज्ञा, (५६२) सेर्लोपः । निषिञ्चति, नि-सिच-तिप् (७४१) नुण्, (५७२) षत्वं । टीदि, टीतन्, लिपवत् साध्यं, अम्व्यवधानेऽपि षत्वं । ठौणप् निषिषेच, (५७२) द्वित्वस्यापि षत्वं ।

§ विषुवति, वि-सू तिप् (५८८) उव्, (५७२) षत्वं। व्यषावीत् (५७३) वेसूदिति सूत्रे सूति सूय ग्रहणात् अस्मात् (५५४) नित्यमिम्, (५७४) अजन्तत्वात् वृद्धिः, अम्यपि षत्वं ।

(२५८) व्रश्‌ू श च्छेदे।

वृश्चति। अव्रश्चीत् अव्राक्षीत्। वव्रश्च वव्रश्चतुः। *

(२५९) ऋच्छ श गमनमोहकाठिन्येषु।

## ७५२। ऋच्छो गुण्व्यां। (ऋच्छः ६।, गुः १।, व्यां ७।)

आनर्च्छ। †

(२६०) कॄ श विक्षेपे।

(६२८) ऋदिरणाविति इर्। किरति। चकरतुः। करीता करिता। ‡

## ७५३। प्रत्युपोपात् क्रः सुम् हिंसाच्छेदे।

(प्रति-उप-उपात् ५।, क्रः ६।, सुम् ।१।, हिंसा-च्छेदे ७।)।

प्रत्युपाद्धिंसायां उपाच्छेदे किरतेः सुम् स्यात्। प्रतिस्किरति उपस्किरति। §

(२६१) तृन्प श प्रीणने।

---

* व्रश्च-तिप् (६६१) जिः, वृश्चति। टीदि (५७३) ऊदित्त्वात वा इम्। पक्षे (५७४) अनिमत्वात् व्रृद्धिः, (१५४) षङ्, निमित्तस्यापाये नैमित्तिकस्याप्यपाय इति न्यायेन चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे (२१३) स्यादेः स-लोपः; (६०२) षस्य कः, (१११) कवर्गात् षत्वं। वव्रश्चतुः (६६२) जिनिषेधः।

† ऋच्छो गः स्यात् व्यां। ऋच्छ-धातौ लंघङ्गोऽभावात्, अतुसादिविभक्तौ च कित्त्वात् गुणाप्राप्तौ विधिरयं सामान्यठीविषयः। तेन आनर्च्छ आनर्च्छतुरित्यादि, (५८०) खेः स्थाने आन्। पाणिनिः ७।४।११।

‡ चकरतुः (६२६) गुणः। करीता करिता (५५४) इम्, (६२७) इमो वा दीर्घः।

§ प्रतिश्च उपश्च प्रत्युपं, प्रत्युपश्च उपश्च प्रत्युपोपं तस्मात्। हिंसा च छेदश्च हिंसाच्छेदं तस्मिन्। प्रतिस्किरति हिनस्ति, उपस्किरति हिनस्ति छिनत्ति वा इत्यर्थः। (५७२) परि नि वि सेव सुमित्युक्तेः अत्र प्रतिपूर्व्वस्य न षत्वम्। पाणिनिः ६।१।१४०,१४१।

## ७५४ । तृन्पां न-लुक् वा श-णौ ।

(तृन्पां ६।।।, न ।१।, लुक् ।१।, वा ।१।, श-णौ ७।) ।

तृन्प तुन्प तृन्फ तुन्फ रिन्फ गुन्फ दृन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च । तृपति तृम्पति । *

(२६२) चृती श प हिंसे ।

चर्त्तिष्यति चर्त्स्यति । †

(२६३) प्रच्छी श ज्ञीप्से ।

पृच्छति । अप्राक्षीत् । पप्रच्छ पप्रच्छतुः । ‡

(२६४) सृजी श विसर्गे ।

अस्राक्षीत् । ससर्जिथ सस्रष्ठ । §

(२६५) टु मस्जौ श स्नाने ।

मज्जति । अमाङ्क्षीत् । ¶

(२६६) स्पृशौ श स्पृशि ।

अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । ‖

---

* बहुवचनं गणार्थम् । गणश्च वृत्तौ नवमद्रोकः स्वयं स्पष्टीकृतः । णौ इति गुण-साधनयोग्यप्रत्यये इत्यर्थः । यथा, तर्पयति तृम्पयतीत्यादि । तृपतीति शे परे न-लुक् । विकल्पपचे (५०) नस्यानुस्वारः, (५१) अनुस्वारस्य मः । वार्त्तिकम्, नात्र तृन्पः ।

† (७३९) वा इम् ।

‡ पृच्छतीति (६६१) जिः । अप्राक्षीदिति (१५४) षङ्, (६०२) षस्य कः, (५७४) अनिम्त्वात् वृद्धिः, (१११) षत्वम् । पप्रच्छतुरित्यत्र (६६२) न जिः ।

§ सृज-टीदि, सिः, (५६१) सिस्थाने इम, (६०४) नित्यं ऋस्थाने रः, (५७४) अकारस्य वृद्धिः, (१५४) षङ्, (६०२) षस्य कः, (१११) षत्वं । ठी-थप्, (५८९) वा इम । इमविकल्पपचे षङ्, (४७) थस्य ठः ।

¶ मस्ज-तिप् (६४) सस्थाने द, (४६) दस्थाने ज । टीदि, (७४१) नुम्, (२१३) सलोपः, (५०) नस्यानुस्वारः, (५१) अनुस्वारस्य ङः ।

‖ स्पृश-टीदि, (६०३) सिः, (६०४) ऋ रः, ततः वृद्धिः, षङ्, सस्य कः, षत्वं । र-विकल्पपचे ऋकारस्य वृद्धिः । सि-विकल्पपचे (६०५) सक् ।

(२६७) विच्छ श गतौ।

विच्छायति विच्छति। अविच्छायीत् अविच्छीत्। *

(२६८) मृशी श मृशि।

अम्राक्षीत् अमार्क्षीत् अमृक्षत्। †

(२६९) इषु श वाञ्छे।

इच्छति। (६०६) वेमसहेतीम् वा, एषिता एष्टा। †

(२७०) कुट शि कौटिल्ये।

## ७५५। कुटां गुव्री ञ्णिति।

(कुटां ६॥, गु-व्री १॥, ञ्णिति ७।)।

कुटादे र्गुर्वृ श्च स्यात् ञिति णिति च, नान्यत्र। अकुटीत्। चुकोट। ‡

(२७१) व्यच शि व्याजे।

विचति। विव्याच, विविचतुः। §

---

* विच्छ-तिप् (६३७) आयः, (६३१) धातुसंज्ञा, ततः भ्वादित्वात् तिप्शपौ। आय-विकल्पपक्षे तुदादित्वात् शः। टौदि स्पष्टं।

† मृश टौदि, स्पृशवत्। इष-ति (५६७) इच्छ-आदेशः।

‡ ञ च ण च ञ्णौ, तौ इतौ यस्य स ञ्णित् तस्मिन्। ञित्-णितोः परयोः गुणवृद्धी: सिद्धौ पुनर्विधानं नियमार्थं, तेन कुटादीनां ञित्णिद्भ्यामन्यत्र गुणवृद्धी न स्तः इति नियमः। ञित्-णितोस्तु गुणसामग्र्यां गुणः, वृद्धिसामग्र्यां वृद्धिरित्यर्थः। अतएव, अकुटीत् कुटिष्यति कुटनमित्यादौ न गुणः। नू शि स्तवने इत्यादीनां अनुवीदित्यादौ न गुणो नच वृद्धिः, अगुणत्वादुव् च। एवं नुविष्यतीत्यादि। कुटादिश्च—कुट पुट कुच गुज गुड डिप कुर स्फुट मुट त्रुट तुट चुट छुट लुड कड लुट कुड कुड पुड घुट तुड थुड स्थुड खुड कुड स्फुर (फुल) स्फुल (स्फर) स्फुड चुड व्रुड क्रुड भुड गुर नू धू गु ध्रु (ध्रुव) कु (कू)। लिख मिल इति द्वौ विकल्पेन कुटादिमध्यगतौ भवत इति प्राचीनाः। पाणिनिः १।२।१।

§ विचति (६६१) जिः।

## ७५६। व्यचो ञि-रञ्णिदसि।

(व्यचः ६।, ञिः १।, अञ्णिदसि ७।)।

विचिता। *

(२७२) त्रुट श्नि च्छेदे।

त्रुट्यति त्रुटति। †

(२७३) स्फुर श्नि स्फूर्त्तौ।

निष्फुरति निस्फुरति। ‡

एवं (२७४) स्फुल श्नि स्फूर्त्ति-चलनयोः।

(२७५) नू श्नि स्तवने।

अनुवीत्। नुनाव। §

(२७६) मृ ङ श्न मृतौ।

## ७५७। मृङ टीढ्ये मं। (मृङः ५।, टीढ्ये ७।, मं १।)।

त्यां ढ्या-मत्ये च मृङो मं स्यात्। ¶ (६२०) ऋद्रिः शयक्ढीगे।

---

* ञश्च णश्च ञ्णौ, तौ इतौ यस्य स ञित, ञिश्च असश्च ञ्णिदस्, तत्र योगे तस्मिन्। व्यचो ञिः स्यात् न तु ञिति णिति असि च। यथा विचिता विचिष्यति विच्यते विव्याच विविचतुरित्यादि। ञिति णिति असि तु व्याचयति व्याचक. उरु-व्यचाः (१०३२)। (पाणिनिमते तु किति ङिति परे एव ञिः नान्यत्र)।

† (५६४) क्रमक्लमेति श्यन् वा।

‡ (६२५) विस्कभ्नेति ना षत्वं।

§ अनुवीदिति कुटादित्वात गुणवृद्धी निषेधे, (५८८) भ्वोरित्युव्।

¶ टीच ढीच अश्च टीढ्यं तस्मिन् विषयसप्तमी। मृङो ङित्त्वेऽपि त्यां क्यात् अप्रत्यये च विषये म स्यादिति नियमः, अन्यत्र तु परस्मैपदमेव। आत्मनेपदमिष्यन्ति परस्मैपदिनां क्वचिदिति न्यायेन कदाचिदन्यत्रापि स्यादिति केचित्। पाणिनिः १।३।६१।

म्रियते, अमृत, मृषीष्ट। एषु किं, ममार, मरिष्यति। *

(२७७) ओ विजी ङ ञ भी-कम्पे।

७५८। विजे र्णु र्नैमि। (विजेः ६।, णुः १।, न ।१।, इमि ७।)।

विजे र्णु र्न स्यादिमि। अविजिष्ट। †

इति तुदादि-पादः।

१म चतुर्गणाध्यायः।

---

## ७मः। २य-चतुर्गणाध्यायः।

### १म पादः—रुधादिः।

(२७८) रुधिरौ ध ञि आवरणे।

रुणद्धि। *

७५९। नणो न् ऽणौ। (नणः ६।, न् ।१।, रे ७।, अणौ ७।)।

नणो नकारः स्यादणौ रे। रुन्धः रुन्धन्ति। †

---

* म्रियते (५८८) इस्थाने इय। अमृत मृषीष्ट, उभयत्र (६५९) कित्संज्ञा।

† विजेः किदिम् इति कृते सिद्धावपि स्पष्टार्थमेवं कृतं। पाणिनिः १।२।२।

---

* रुध-ति (७३८) श्नण्, णकारेत्त्वात् (१७) अन्त्याचः परे, अदन्तनकार-स्थितिः; (१०७) णत्वं, (५७५) तस्थाने धः, (६४) धस्य दः।

† अरे नणो ऽसम्भवात् अत्र र इति स्पष्टार्थं। एवं परसूत्रेऽपि। अदन्त-न-स्थाने न् स्यादित्यर्थः। रुन्ध इत्यादौ, त्रयो यत्रैकवर्गीया मध्यमस्तत्र लुप्यते इति प्रमाणात् मध्यवर्त्ति-धकारस्य लोपः। तवर्गयुक्त-नकारस्य णत्वाभावः। पाणिनिः ६।४।१११।

अरुणत्, अरुण: अरुणत् । अरुधत् अरौत्सीत् । *

(२७९) क्षुदु ञ धिर् देवने ।

(७३९) छर्दिष्यति छर्त्स्यति ।

एवं (२८०) तृदु ञ धिर्नादरे ।

(२८१) तृह ध हिंसे ।

**७६० । तृह इण् पिद्धस्व ।** (तृह: ६।, इण् ।१।, पित्-हस्-रे ७।) ।

तृहो नण इण् स्यात् पिति हसे रे । तृणेढि तृण्ढः तृंहन्ति । अतर्हीत् अतृचत् । †

(२८२) हिंसि ध कि हिंसे ।

**७६१ । नणो न लोप्यः ।** (नण: ५।, न ।१।, लोप्य: १।) ।

हिनस्ति । ‡

(२८३) अन्जू ध जि व्यक्ति-गति-म्रक्षणे ।

अनक्ति । ‡

---

* अरुणदिति ध्या दिप्, (६७२) देर्लोप:, (६४) धस्य त (द वा) । ध्या: सिप्, (६६०) धस्य रेफे, रस्य विसर्ग. ; रेफविकल्पे (६४) धस्य त् । ध्या-दि, (५६५) इरित्त्वात् ङ: । ङविकल्पे अनिमत्वात् (५७४) वृद्धि:, अरौत्सीत् ।

† पिच्चासौ हस्चासौ रश्चेति तस्मिन् । इणो णित्त्वात् नण: अन्त्याच: परे स्थिति: । तृह-तिप्, (७३८) नण्, तृनह्, अनेन इण्, तृनेह इति स्थिते, (१७५) हस्य ढ:, (५७५) तस्य ध:, (४७) धस्य ढ:, (७७) ढलोप:, (१०७) णत्वं, तृणेढि । तृह-तस् तृण्ढ:, (७५६) नणो नकारे (४७) नस्य णकार:, अन्यत् पूर्ववत् । अन्ति तृंहन्ति, (५०) नस्यानुस्वार: । टीदि, (५७३) ऊदित्त्वात् इम् अतर्हीत्, इमो विकल्पपक्षे (६०५) अनिमत्वात् सक्, (१७५) हस्य ढ:, (६०२) ढस्य क:, (१११) षत्वं । तृहधातो-स्तुदादिगणीयस्यैव ऊदित्त्वमिति कातन्त्रा: । पाणिनि: ७।३।९२ ।

‡ नणो न: परो नकारो लोप्य: स्यात् । हिंस-तिप्, अतएवेदितो नुण् हिन्स, तत: रुधादित्वात् नण् हिननस इत्यस्य अनेन नण: परो न लोप्य, हिनस्ति । एवं अन्ज अनक्ति, भन्ज भनक्ति । पाणिनि, ६।४।२३ ।

## ७६२ । अनजः से रिम् पे ।

(अनुजः ५।, सेः ६।, इम् ।१।, पे ७।) ।

अनजः परस्य सेरिम् स्यात् पे । आञ्जीत्, आनञ्ज । *

(२८४) ञि इन्धी ङ ध दीप्तौ ।

इन्धाञ्चक्रे । †

इति रुधादि-पादः ।

---

२य पादः—तनादिः ।

(२८५) तनु ञ द विस्तृतौ ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः । *

## ७६३ । से लुक् त-थासो स्तनभ्यो ऽकुर्व्वा ।

(सेः ६।, लुक् ।१।, त-थासोः ७॥, तनभ्यः ५॥, अकुः ५।, वा ।१।) ।

कुवर्जात् तनादेः सेर्लुक् स्याद्वा त-थासोः परयोः ।

अतत अतनिष्ट, अतथाः अतनिष्ठाः । †

---

* अनुजधातोरुदित्त्वादिमत्वे नित्यार्थं विधानं । सेरन्यत्र, अञ्जिता अङ्क्ता, अञ्जिष्यति अङ्क्ष्यति इत्यादि । आनञ्जेति (५८०) स्थान्तादिति खेरान् । पाणिनिः ७।२।७१ ।

† (५८२) ञ्विंजादीत्याम्, (५८३) कृप्रयोगः ।

---

* तनोति (६८८) गुप्, (५४२) गुप उकारस्य गुण । तन्वन्तीत्यादौ (२५) उस्थाने व । तन्व इत्यादौ (६२२) उकारलोपो वा ।

† तश्च थास् च तौ तयोः । थास्साहचर्य्यात् त इति आत्मनेपदस्यैव । अन्यथा परस्मैपदस्य तां तं त एषु अतानिष्टां अतानिष्टं अतानिष्ट एष्वपि प्रसक्तिः । तयो-रित्युक्ते द्वित्वावपि थास्ग्रहणं स्पष्टार्थं । अतत अतथाः इति, अनेन सेर्लुकि, लुक्

(२८६) षनु ञ द दाने ।

सनोति । असात असनिष्ट, असाथाः असनिष्ठाः । सायात् सन्यात् । *

(२८७) क्षणु ञ द वधे ।

अक्षणीत् । †

(२८८) क्षिणु ञ द हिंसायां ।

## ७६४ । नोप्युङो णु र्वा त्वृतः ।

(न ।१।, उपि ७।, उङः ६।, णुः १।, वा ।१।, तु ।१।, ऋतः ६।) ।

क्षिणोति । ‡

(२८९) ऋणु ञ द गतौ ।

ऋणोति अर्णोति । ‡

(२९०) डु कृ ञ द करणे ।

करोति । ‡

## ७६५ । कुरुब्लोपो व्म्ये । (कुः ५।, उब्-लोपः १।, व्म्ये ७।) ।

कुर्व्वः कुर्म्मः, कुर्य्यात् । चकृव । §

---

करणात् (९३) त्यल्लोपे त्यल्लक्षणमिति न्यायेन गुणि-सौ परे कार्य्यनिषेधे, अगुणिनोः तथामोः परयोः (६७६) अमल्लोपः । अकुः किं, अकृत अकृथाः उभयत्र (६५९) सेः कित्त्वात् गुणाभावे, (५६२) नित्यं सिलोपः । पाणिनिः २।४।७९ ।

* असातेत्यादि अनेन सेर्लुकि, (६५५) खनसनेति ङा, पक्षे (५५४) सेरिम् । सायात् सन्यादिति विकल्पेन ङा ।

† अक्षणीदिति (५७६) क्षणवर्जनात् न वृद्धिः ।

‡ उपि उङो णु र्न स्यात्, उङ ऋकारस्य तु वा । क्षिणु-ति, (६८८) उप्, तस्मिन् परे क्षिणु उङ इकारस्य न गुणः, तिपि परे उप उकारस्य (५४२) गुणः । ऋणोति अर्णोति इत्यत्र उङ ऋकारस्य वा गुणनिषेधः, एवं तृणोति तर्णोति इत्यादि । उङः किं, कृ-तिप् करोति, अत्र अन्त्य-ऋकारस्य नित्यं गुणः । पाणिनौ मतभेदः ।

§ वश्च मश्च यश्च व्म्यं तस्मिन् । कृञः परस्य उपो लोपः स्यात् वे मे ये च परे । कुर्व्वः इत्यादि व म य परेषु उपो लोपः, (२२८) र्व्यंनच्तयोक इत्यत्र कुर्वर्जनात् न

## ७६६ । समपरेः सुम्पात्तु भूषा-सङ्घ-प्रतियत्न-विकृताध्याहारे ।

(सम्-परेः ५।, सुम् ।१।, उपात् ५।, तु ।१।, भूषा-सङ्घ-प्रतियत्न-विकृताध्याहारे ७।) ।

आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे । संस्करोति, समस्कृषातां, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात्, संस्कृषीष्ट । परिष्करोति, पर्य्यष्कार्षीत् पर्य्यस्कार्षीत्, उपस्करोति ।*

## ७६७ । हस्ते पाणौ प्राध्वं जीविकोपनिषदो व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्युरस्युपाजेऽन्वाजे साक्षादादेस्तु वा ।+

(हस्ते—उपनिषदः ६।, व्यस्य ६।, कृञि ७।, सः १।, तिरस्—साक्षादादेः ६।, तु ।१।, वा ।१।) ।

हस्तेकरोति, तिरस्करोति करोति-तिरः ।

इति तनादि पादः ।

---

दीर्घः । करोमीत्यत्र, लोपस्वरादेशयोस्तु स्वरादेश-विधि र्बलीति न्यायेन गुणएव । ठी व चकृव (५८४) नेमसुमिति निषेधात् न इम् । पाणिनिः ६।४।१०८,१०९ ।

* सम्-परिभ्यां कृञः सुम् स्यात्, सुम उकारित् चिह्नार्थः, मकारेत् (१७) कृधातोरादौ मकारस्थितिः । अर्थानभिधानेऽपि पाणिनिमतैकवाक्यत्वात् भूषासङ्घयोरेव ; "सम्पूर्व्वस्य क्वचिद्भूषणेऽपि सुट्" इति सिद्धान्तकौमुदी । उपात् भूषादावर्थे । भूषा अलङ्करणं । सङ्घ समूहः । प्रतियत्नो गुणान्तराधानं । विकृतं स्वरूपस्यान्यथाभावः । अध्याहारो वाक्यस्य अश्रुताकाङ्क्षित-शब्दोपादानं । समस्कृषातां टी-आतां, (७४७) स्कृवर्जनात् न इम् । (६५९) कित्संज्ञायां न गुणः । सञ्चस्करिथ ठी-थप्, (६१६) स्कृवर्जनात् इम् । सञ्चस्करिव ठी-व, (५८४) असुमिति कथनादिम् । संस्क्रियादिति टी-यात् (६१५) स्कुम्तु व्यामेवेति उक्तः गुणनिषेधः । (६२०) ऋस्थाने रिः । संस्कृषीष्ट (६५९) कित्संज्ञायां न गुणः । परिष्करोति (५७२) षत्वं । टी-दि (६३३) विकल्पेन षत्वं । पाणिनिः ६।१।१३७,१३८,१३९ ।

+ हस्ते इत्यादेः उपनिषदन्तस्य अव्ययस्य कृञ धातौ परपदे नित्यं समासः स्यात्

(२९१) डु क्री ञ ग द्रव्यविपर्य्यये।

क्रीणाति। (७०१) आद्वयोरिति, क्रीणन्ति।

(२९२) स्कु ञ ग न उद्धृतौ।

**७६८। स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे।** (स्कु—स्तुन्भुभ्यः ५।॥, श्नु-श्नौ १॥, घे ७।, रे ७।)।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे।*

स्कुनोति स्कुनाति, विस्कभ्नोति (६२५) विस्कभ्नेति षः—विष्कभ्नाति। एवं विस्कुभ्नोति विस्कुभ्नाति, विष्टभ्नोति विष्टभ्नाति, व्यष्टभत् व्यष्टभ्नीत्, वितष्टम्भ। स्तुभ्नोति स्तुभ्नाति।†

(२९३) मी ञ ग वधे।

(७४५) मिम्योरिति ङा, अमासीत् अमास्त।

---

तिरःप्रभृतिस्तु वा। एष समासः एकपदीभावमात्रं नतु द्वन्द्वादेरन्यतमः। समासकरणञ्च (२६६) पूर्व्वनिपात-नियमार्थं क्वाचो यवर्थञ्च। हस्ते पाणौ स्वीकारे। प्राध्वं बन्धनानुकूल्ये। जीविकोपनिषदौ उपमायां। तिरोऽन्तर्धाने। मध्ये पदे निवचने मनसि उरसि इति पञ्च अनुपश्लेष एव, उपश्लेषे तु उरसि कृत्वा हस्तं शेते, पदे कृत्वा मस्तकं शेते श्वा, इत्यादौ न समासः। उपाजे अन्वाजे बलाधानार्थे। साक्षादादेरभूततद्भावे। आदिना—मिथ्या अद्धा नमस् आविस् प्रादुस् बहिस् वशे इत्यादि। पाणिनिः १।४।७१—७९, वार्त्तिकञ्च।

* स्कन्भ स्कुन्भ स्तन्भ स्तुन्भ ग्नु रोधने इति चत्वारः सौत्रा धातवः। पूर्व्वधातुपाठे ये न दृश्यन्ते पदविशेषसाधनार्थं सूत्रे तु दृश्यन्ते ते सौत्राः। स्कु आदयः पञ्च स्वादिगणीयाः क्र्यादिगणीयाश्च। पाणिनि ३।१।८२।

† विस्कभ्नोति सूत्रे श्ना-प्रत्ययस्य ग्रहणात् विस्कभ्नोतीत्यत्र न षत्वं। विष्टभ्नोति विष्टभ्नाति उभयत्र (५७२) णीक इति षत्वं। व्यष्टभदित्यादि (५६५) डी वा, उभयत्र अभ्यपीति षत्वं। वितष्टम्भेति स्विव्यवधानेऽपि षत्वं।

(२८४) पूञ गि शोधने।

## ७६९। प्वादेः स्वो ने व्यादेस्तु वा।

(पू-आदेः ६।, स्वः १।, ने ७।, व्री-आदेः ६।, तु।१।, वा।१।)।

प्वादीनां स्वः स्यात् ना-न्ये परे व्यादेस्तु वा। पुनाति।*

(२८५) कॄञ गि हिंसे।

अकरीष्ट अकरिष्ट अकीर्ष्ट। करिषीष्ट कीर्षीष्ट।†

(२८६) धूञ गि कम्पे।

धुनाति। अधावीत् अधोषीत्।‡

(२८७) ग्रह ञ गादाने।

गृह्णाति।‡

## ७७०। हसान्नानो हौ।

(हसात् ५।, ना।१।, आनः १।, हौ ७।)।

हसात् परो ना आनः स्यात् हौ परे। गृहाण। अग्रहीत्। जग्राह जगृहतुः जग्रहिथ।§

---

* ने स्नाप्रत्यये परे इत्यर्थः। प्वादिस्तु—पू लू धू कॄ स्तॄ वॄ शॄ स्तॄ मॄ पॄ बॄ दॄ धॄ नॄ भॄ मॄ गॄ जॄ ऋ ज्या री ली ल्पी (ली) व्री ल्वी (ची) भ्री इति। ज्या गि जरायामित्यस्य प्वादिफलन्तु—जीन, जीनवानित्यत्र ल्वादित्वात् (१०५२) तस्थाने न। पाणिनिः ७।३।८०।

† अकरीष्टेत्यादि (७४७) इम्, (६२७) वा इमो दीर्घः, इमो विकल्पपक्षे (६५९) कित्सञ्ज्ञायां, (६२८) ऋकारस्य इर्, (२२८) दीर्घः। एवं ढौ-सीष्ट वा इम्, पक्षे ऋ इर्, तस्य दीर्घः।

‡ (५७३) वेमूदिति वा इम्, पक्षे (५७४) अनिम्त्वात् वृद्धिः। गृह्णाति (६६१) जिः, रस्थाने ऋ।

§ ग्रह-नी-हि (६६१) जिः, अनेन ना स्थाने आन, (५४७) अकारात् हेर्लोपः। एवं बधान पुषाण मुषाण इत्यादि। हसात् किं, जानीहि। अग्रहीदिति (५७६) ह्रान्तत्वात् न त्रिः। जगृहतुः (६६१) जिः। पाणिनिः ३।१।८३।

## ७७१ । ग्रहेरिमो घोऽथ्यां ।

(ग्रहः ५।, इमः ६।, घः १।, अथ्या ७।) ।

ग्रहेः परस्य इमो घः स्यात्, न तु थ्यां । ग्रहीता ।*

(२९८) गॄ ञ गि हिंसे ।

## ७७२ । गॄपॄद्रां स्वो वा किट्थ्यां ।

(गॄ-पॄ-द्रां ६।।।, स्वः १।, वा ।१।, कित-थ्यां ७।) ।

एषां स्वः स्यात् किति थ्यां वा । जग्रतुः जगरतुः ।†

एवं (२९९,३००) ञि पॄ गि पालने, दॄ गि विदारे ।

(३०१) ज्या गि जरायां ।

जिनाति, जिज्यौ ।‡

(३०२) व्री गि वृत्यां ।

व्रिणाति व्रीणाति ।‡

(३०३) ज्ञा ग बोधे ।

जानाति ।‡

(३०४) ग्रन्थ ग मोचे ।

ग्रथ्नाति । ग्रेथतुः जग्रन्थतुः, ग्रेथिथ जग्रन्थिथ ।‡

---

* एवं ग्रहीतुं ग्रहीष्यति इत्यादि । ठ्यान्तु जग्रहिथ जग्रहिव । पाणिनिः ७।२।३७।

† जग्रतुरिति ह्रस्वाभावपक्षे (६२६) गुणः । एवं पप्रतुः पपरतुः, दद्रतुःददरतुः । पाणिनि. ७।४।१२ ।

‡ जिनातीत्यादि (६६१) जिः या स्थाने इः । व्रिणातीत्यादि (७६९) वा ह्रस्वः । जानातीति (५९०) जा-आदेशः । ग्रथ्नातीति (५६७) न-लोपः । ग्रेथतुरित्यादि (५६६) कित्पक्षे न-लोपः, (५७९) खिलोपादिश्च । थप् (७५०) जग्रन्थग्रन्थेति न-लोपः पक्षे खिलोपादि ।

एवं (३०५) ग्रन्थ ग दर्भे।

(३०६) कुष ग निष्कोषे।

(५७३) वेमूदितीम् वा। निरकोषीत् निरकुचत्।*

(३०७) अश ग भोजने।

अशिता अष्टा।†

(३०८) वृ ञ ग वरणे।

अवरीष्ट अवरिष्ट अवृत। वव्रषे। वरिषीष्ट वृषीष्ट।‡

इति क्र्यादि-पादः।

---

४र्थ पादः—चुरादिः।

(३०९) चुर कि स्तेये।

## ७७३। चुर्भ्यो ञि र्वा। (चुर्भ्यः ५।।।, ञिः १।, वा।१।)।

चुरादे र्ञिः स्यादा स्वार्थे। चोरयति चोरयते। अचूचुरत्। चोरयामास। चोर्य्यात्। पक्षे चोरतीत्यादि।*

---

* निरकुचदिति अनिम्पक्षे (६०५) सक्, (६०२) षस्य कः, (१११) षत्वं।

† अशिता अष्टा (६०६) वेमसहेतीम् वा, (१५४) षङ्, (४७) तस्थाने ट।

‡ अवरीष्टेत्यादि (७४७) वा इम्, (६२७) इमो वा दीर्घः, अनिम्-पक्षे (६५९) सेः कित्त्वं, (५६२) मिलोपः। ठौ से वव्रषे, (५८४) नेमसृमिति इम्-निषेधः। वरिषीष्टेत्यादि (७४७) इम्, पक्षे (६५९) कित्संज्ञायां न गुणः।

---

* वा शब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यः, चुराद्यन्तर्गणात् (किकारानुबन्धात्) युजादेर्ञिर्वा स्यादित्यर्थः। पक्षे गणान्तरनियमाभावात् सामान्यगणो भ्वादिरित्यर्थः। यत्तु चुरधातोः कि-कारानुबन्धकरणं पक्षे चोरतीत्युदाहरणञ्च तत् कदाचित् चुरादेर्ञेरनित्यत्वज्ञापनार्थं। अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् चुरादेः

(३१०) कॄत क संशब्दे ।

## ७७४ । कीर्त्तः कृतः । (कीर्त्तः ११, कॄतः ६।) ।

कॄतः कीर्त्तः स्यात् ञौ । कीर्त्तयति । *

(३११) गण त् क सङ्ख्याने ।

## ७७५ । हसाल्लोपोऽशित्यद्योः ।

(हसात् ५।, लोपः ११, अशिति ७।, अत्-योः ६॥) ।

हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति । गणयति । †

## ७७६ । वेङ् गणकथः खेञ्जाङि ।

(वा ।११, ईङ् ।११, गण-कथः ६।, खेः ६।, ञाङि ७।) ।

---

स्वार्थे ञिः । चुरादिभ्यो ञे ञित्वेऽपि उभयपदं न स्यात्, अन्यथा ष्मम ञ क् वितर्के इत्यादेर्ञानुबन्धो व्यर्थः स्यात्, तेन ङितश्चुरादे-रात्मनेपदं, ञितश्चुरादेरुभयपदं, उभय-भिन्नचुरादेः परस्मैपदमिति । यत्तु अत्र उभयपदोदाहरणं तत् कदाचिदात्मनेपदसिद्ध्यर्थं। चोरयतीत्यादि चुर-ञिः, (५४२) गुणः, चोरि इति (६३१) धातुसंज्ञायां, तिप् शप् गुणाः । चोरि-टौदि, (५५०) अमागमः, (६१३) ञिश्रीत्यङ्, (५५८) चोरि इत्यस्य द्वित्वे, (५६४) खेराद्यचः परभागस्य रि इत्यस्य लोपः, (५५९) खेः ओकारस्य उकारे, (६३८) ञाङ्युङः स्व इति मूलधातोरोकारस्य ह्रस्वे, (६३९) खेः सन्वदिति खेरुकारस्य दीर्घे, (६४१) ञेर्लोपः, अचूचुरदिति । ठौ-णप्, (५८२,५८३) आम्, अस्-प्रयोगश्च । ढौ-यात्, ञेर्लोपे, त्यलोपे त्यलक्षणमिति न्यायात् गुणस्थितौ चोर्य्यादिति । पाणिनिः ३।१।२५ । तन्मते आधृषीयगणात् विभाषा ।

* सर्व्वत्र कीर्त्तादेशे, गणपाठे कॄतधातुकरणं कदाचित् कीर्त्तादेशो न स्यादिति ज्ञापनार्थं, तेन अचीकृतदित्यपि । पाणिनिः ७।१।१०१,८।२।७८ ।

† अत् च यश्च तौ तयोः । प्रकरणबलात् धातुसंज्ञकस्यैव अकार-यकारयो र्लोपः, तेन हसतीत्यादौ न स्यात् । हसात् किं, बोभूयिता । अशिति किं, ईर्ष्यति । अरे इति नीक्त्वा अशितीति कथनं, मव्य बन्धे इति धातोर्यङ्लुकि खौ यात् ममव्यात् इत्यत्र यकारलोपार्थम् । गणयतीति ञौ अनेन अकारलोपे, लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धिः, एवं कुण त् काभाष-मन्त्रयोरित्यादीनां कुण-यतीत्यादौ न गुणः । पाणिनिः ६।४,४८,४९ ।

गण-कथयो: खेरीङ् स्यात् वा ञाङि। अजीगणत् अजगणत्, (६३८) अग्लोपित्वान्न इ:। *

(३१२) कथ त् क वाक्यप्रबन्धे।

अचीकथत् अचकथत्। *

इति चुरादि-पाद:।

२य-चतुर्गणाध्याय:।

---

## ८म:। ३य-चतुर्गणाध्याय:।

### १म पाद:—ञान्त:।

## ७७७। ञि: प्रेरणे। (ञि: ११, प्रेरणे ७।)।

धो र्ञि: स्यात् प्रेरणेऽर्थे। *

---

* ईङ: ङानुबन्धात् अन्त्यवर्णस्थाने भवति। अजीगणदित्यादि गण ञि: पूर्व्वसूत्रेण अकारलोपे गणिधातो: टी-दि, (६१३) अङ्, तत: द्वित्वादि, अनेन खे: स्थाने ईङ, ततो (६४१) ञे लोप:। ईङो विकल्पपक्षे अजगणदिति। (६३८) खे: सन्वदिति सूत्रे अग्लोपि-वर्जनात् खे: स्थाने न इ:। एवं अचीकथत् अचकथदित्यादि। पाणिनि: ७।४।९७। अत्र सूत्रे गणधातुरेव पठित: नतु कथधातु:।

---

* त्वयैतत् क्रियतामित्यादि क्रियासु नियोजनं प्रेरणं। यथा भृत्यं कर्म्म कारयतीत्यादि। अचेतने तूपचार:। यथा परिश्रम: क्षुधां वर्द्धयतीत्यादि। धोरिति व्याख्यानं सर्व्वप्रकारधातुप्राप्त्यर्थं, तेन भवन्तं प्रेरयति भावयति, कामयमानं प्रेरयति कामयति, चिकित्सन्तं प्रेरयति चिकित्सयति, चोरयन्तं प्रेरयति चोरयति, चिकीर्षन्तं प्रेरयति चिकीर्षयति, चेक्रीयमाणं प्रेरयति चेक्रीययति, चरीकुर्व्वन्तं प्रेरयति चरीकारयति, पुत्रकाम्यन्तं प्रेरयति पुत्रकाम्ययतीत्यादि। प्रेरणार्थञे: परोऽपि ञि:, यथा पिता पुत्रेण शिष्यं वेदं पाठयतीत्यादि, अत्र पुत्र: पाठयतेरेव कर्त्ता नतु पठते:, तेन (२८४) पुत्रस्य कर्म्मत्वं न स्यात्। ञे र्ञित्वात् ञान्तधातोरुभयपदप्राप्ति:। पाणिनि: ३।१।२६।

कुर्व्वन्तं प्रेरयति कारयति। अचीकरत्। *
अशशासत् अडुढौकत्। अशूशवत् अशिश्वयत्।
व्यतस्तम्भत्,पर्य्यसीसिवत्,व्यसीसहत्। (५७२) साङ्त्वान्न षः। †
अचीचकासत् अचचकासत्। औन्दिदत् औञ्जिजत् आड्डिडत्
आर्च्चिचत्। अररम्भत् अललम्भत्। अजीहयत्, (७४८)
अनङ्गीत्युक्तो न घिः। अदिध्वनत् अध्वनयीत्, ऐलिलत् ऐल-
यीत् आर्द्दिदत् आर्दयीत्, औनिनत् औनयीत्। ‡

---

* कारयतीत्यादि, कृ त्रि (५७७) अन्त्येचो वृद्धिः, कारि इति (६३१) धातुसंज्ञा, ततस्तिप् शपादि। कुर्व्वन्तं प्रेरितत् अचीकरत्, (५३७) प्रागचकार्य्यादचि द्विरिति सूत्रात् (८१६) अतएव ञौ द्वित्वे विरिति वक्ष्यमाणनियमेन, कृड इति धातुसंज्ञायां, टीदि, (५५०) अमागमः, (६१३) ञिश्रीत्यङ्, (५५८) कृड इत्यस्य द्वित्वे, (५६४) खेराद्यच इति खेरिकारस्य लोपे, (५५९) ऋकारस्य अकारे ककारस्य च चकारे, ततः (५७७) वृद्धिः, अचकारि इति स्थिते, (६३८) आकारस्य ह्रस्वे, (६३९) सन्वत्त्वे, (६४०) खेरकारस्य इकारे, पुनः (६३९) लघुत्वे दीर्घे, (६४१) ञे लोपः। एवं सर्व्वत्र साधनप्रकारः।

† शासतं प्रेरितत् अशशासदित्यत्र (६३८) शासवर्जनात् न ह्रस्वः। ढौकमानं प्रेरितत् अडुढौकदित्यत्र (६३८) ऋदिद्वर्जनात् न ह्रस्वः। श्वयन्त प्रेरितत् अशूशवदित्यत्र श्विञि, (५३७) प्रागचकार्य्यादिति नियमात् आदौ द्वित्वे, (६६९) श्वर्जिर्वेति वा-शब्दस्य व्यवस्थया खेर्मूलस्य च ञिः इयुक्त-वस्थाने उः, ततो वृद्ध्यादिकं। ञि विकल्प पक्षे अशिश्वयदिति। विष्टम्भमानं प्रेरितत् व्यतस्तम्भत्, परिषीव्यन्तं प्रेरितत् पर्य्यसीसि-वत्, विषहमानं प्रेरितत् व्यसीसहत्, एषु (५७२) साङ्त्वात् न षः। पर्य्यादिनिमित्तकं खेः षत्वं न स्यात्, खिनिमित्तकन्तु मूलधातोः षत्वं (१११) क्विलादित्यनेन स्यादेवेति श्रीपतिदत्तः।

‡ चकासतं प्रेरितत् अचीचकासत् अचचकासत्, ऋदित्त्वात् (६३८) उङो न ह्रस्वः, अनेकाच्त्वात् (६३९) वा सन्वद्भावः। उन्द धी क्लेदे, उब्ज आर्जवे, अट्ड अभियोगे, अर्च्च ज् पूजे—इति चतुर्णां धातूनां—उन्दन्तं, उब्जन्तं, अट्डन्तं, अर्च्चन्तञ्च प्रेरितदिति वाक्ये, ञौ उन्दि उब्जि अट्डि अर्च्चि इति स्थिते, (७१९) नाजन्तादेरिति आद्यक्षरं द्वित्वा, (७२०)स्यादौ नवद्र इति न व द रांश्च द्वित्वादि जि डि चि एषां द्वित्वं,

**७७८। स्मृदृत्वरप्रथम्रदस्तॄस्पशोऽङ् खे ञ्रङि चेष्टवेष्टोस्तु वा।**

(स्मृ—स्पश: ६।, अङ् ।१।, खे ६।, ञ्रङि ७।, चेष्टवेष्टो: ६॥, तु ।१।, वा ।१।)

एषां खेरङ् स्यात् ञ्रङि चेष्ट-वेष्टोस्तु वा।

असस्मरत् अदद्रत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत्, अचचेष्टत् अचिचेष्टत्, अववेष्टत् अविवेष्टत्। *

**७७९। भ्राज भ्रास भास भाष दीप जीव मील पीड कण वण भण श्रण लप लुप लुट हेठां वोङ: स्व:।** (भ्राज—हेठां ६॥, वा ।१।, उङ: ६।, स्व: १।)।

---

(५८१) पुनरमागमश्च, औन्दिदत् औञ्जिजत् आड्डिडत् आर्चिचदिति। रम्भमाणं लम्भमानञ्च प्रैरिरत् अररम्भत् अललम्भत्, (६३९) गुरुधात्वन्तरपरत्वात् न सन्वद्भाव:। हिन्वन्तं प्रैरिरत् अजीहयत्। मि ध्वन रवे, इल श शये, अर्ह पीडायां, ऊन तक परिहाणे—इति चतुर्णां—ध्वनन्तं, इलन्तं, अर्हन्तं ऊनयन्तं प्रैरिरदिति वाक्ये ञौ कृते ध्वनि एलि अर्हि ऊनि इति चतुर्भ्य: (६१३) वा अङ्, एलि ऊनि इति द्वयो: (७१९) आद्यच् द्वित्वा द्वित्वं, अर्हि इत्यस्य (७१९,७२०) आद्यचं रञ्च हित्वा दि इत्यस्य द्वित्वं। अङोऽभावपक्षे (५५१) द्यां सि:, इमादिकं, इमि परे न ञिलोप:, (५७४) निषेधात् न वृद्धि:। ध्वनि इत्यत्र (५७७) वृद्धौ, (७६८) घटादित्वात् ह्रस्व:।

† स्मृ इत्यनेन स्मृ स्मृतौ, स्मृ म औत्के इति द्वयं; दॄ य गि विदारे; ञि त्वर षङ् स्पदे; प्रथ म षङ् ख्यातौ; म्रद म षङ् चोदे; स्तॄ ञ गि छादने; स्पश उ ग्रन्थ-बाधयो:; एषां समानां खेरङ्विधानात् (६४०) ख्यस्थेत् समीति इ र्न स्यात् (६३९) धीय खि ह्रसादे धर्श्चेत्यपि न स्यादित्यर्थ:। चेष्ट-वेष्टोस्तु खेरङोऽप्राप्तिपक्षे गुर्वच्चरपरत्वात् (६३९) सन्वद्भावस्याप्राप्तौ खे दीर्घो न स्यात्। असस्मरदित्यादि—स्मरन्तं, दीर्यन्तं, त्वरमाणं, प्रथमानं, म्रदमानं, स्तृणन्तं, स्पशन्तं स्पशमानं वा, चेष्टमानं, वेष्टमानं प्रैरिरदिति वाक्यानि। अत्र दृ ङ शादरे इति ह्रस्वान्त-दृधातोर्ग्रहणमिति कश्चित्, द्रियमाणं प्रैरिरदिति वाक्यं। स्तृ ञ न स्तृतौ इति ह्रस्वान्त स्तृधातुरत्र न गृहीत:, तस्य तु अतिस्तरदित्येव पदं। पाणिनि: ७।४।९५,९६।

एषामुङः स्वः स्यात् वा आङि। अबिभ्रजत् अबभ्राजत्। *

## ७८०। वर्दुङो धुः।

(वा ।१।, ऋदुङः ६।, धुः १।)।

ऋदुङो धो धुरेव स्यात् वा आङि। अवीवृतत् अववर्तत्। †

## ७८१। स्वपो जिः।

(स्वपः ६।, जिः १।)।

स्वपो जिः स्यात् आङि। असूषुपत्। ‡

## ७८२। शा च्छा सा ह्वा व्ये वे पां ञौ यन्।

(शा—पां ६।, ञौ ७।, यन् ।१।)।

एषां ञौ परे यन् स्यात्। शाययति पाययति। §

---

* टु भ्राजृङ ण भासि, टु भ्रासृ ङ ण भासि, भामृ ङ दीप्तौ, भाषृ ङ वाचि, दीपी ङ ऋ दीपने, जीव ऋ प्राणने, मील ऋ निमेषे, पीडृक बाधे, कणृ आर्त्तस्वरे, ऋ वण शब्दे, ऋ भण शब्दे, श्रण क दाने, ऋ लप भाषे, लुप ऋ श प ल ञौ छेदे, लुण्ठ ऋ विलोड़ने, हेठृ ञ बाधे, षीड़शेति। टु भ्राशृ ङ ण भासि इति तालव्यान्तोऽपि अत्र गृहीतः। इह द्विधातुमपि न्यासकारः पठति। अत्र वाग्रहणं वाद्वयमध्यवर्त्तित्वेन नित्यत्वनिवारणार्थम्। एतेषु गणपाठे भासधातोर्ऋकारानुबन्धः श्रणधातोश्च ऋदनुबन्धाभावः कस्यचिदनुरोधादिति दुर्गादासः, वस्तुतस्तु प्रामादिक-एवेति। अबिभ्रजदित्यादि, भ्राजमानं प्रैरिरदित्यादि वाक्यं। पाणिनिः ७।४।३, वार्त्तिकञ्च। अत्र भासधातुर्न दृश्यते, भाष्ये च रणधातुरधिकोऽस्ति।

† ऋत् उङ् यस्य स ऋदुङ् तस्य। आन्तस्य वृतप्रभृति ऋदुङधातोः टीविभक्तौ, गुणनिवृत्तिर्वा स्यादित्यर्थः। कृपधातोः (६४९) कॢपादेशेऽपि ऋदुङ्प्रकृतिकत्वात् अचीकॢपत् अचकल्पदिति द्वयमेव स्यात्। अत्र वाग्रहणं परत्रानुवृत्तिनिवृत्त्यर्थम्। अवीवृतदिति वर्त्तमानं प्रैरिरत्। पाणिनिः ७।४।७।

‡ असूषुपदिति स्वपन्तं प्रैरिरत्, स्वप-ञिः स्वापि धातुः, टीदि षङ् अनेन ञिः, सुपि इत्यस्य द्वित्वं, (६३९) धोश्च खेर्हसादेः घः, (१११) षत्वं। पाणिनिः ६।१।१८।

§ शो य निशाने, छो य लूनौ, षो य नाशे, ह्वे ञै स्पर्द्धे, व्ये ञै वृतौ, वे ञै स्यूतौ, पा पाने पै शोषे इति द्वयं। यनो न इत् अन्ते। श्यन्तं प्रेरयति शाययति, पिबन्तं पायन्तं वा प्रेरयति पाययति। पाणिनिः ७।३।३७।

**७८३ । इः पिबः पीप्यो ञ्राङि ।**

(इः ६।, पिबः ६।, पीप्यः १।, ञ्राङि ७।) ।

अपीप्यत् । *

**७८४ । ह्री व्ली री क्नूय्य् क्ष्माय्यातां पण् णश्च औ ।** (ह्री – आतां ६॥. पण् ।१।, णः १।, च ।१।, औ ७।) ।

ह्रेपयति व्लेपयति रेपयति क्नोपयति अर्पयति क्ष्मापयति स्थापयति । †

**७८५ । स्थोङो ञ्राङीः ।** (स्थोङः ६।, ञ्राङि ७।, इः १।) ।

तिष्ठतेरुङ इः स्यात् ञ्राङि । अतिष्ठिपत् । ‡

**७८६ । घ्रो वा ।** (घ्रः ६।, वा ।१।) ।

अजिघ्रिपत् अजिघ्रपत् । §

---

* हिवक्तस्य पा पाने इत्यस्य पीप्यः स्यात् ञ्राङि । पिबन्तं प्रैरिरत् अपीप्यत् । पिबः किं, पै अपीपयत्, पा ल रक्षणे अपीपलत् । पाणिनिः ७।४।४ ।

† ह्री ल्लि लज्जे, व्ली गि गत्यां, श्री री ङ य स्रवणे री गि रवे इति द्वयं, क्नूयी ङ दुर्गन्धे, ऋ र्न हिंसे ऋ ल्लि गत्यां ऋ प्रापे च इति त्रयं, क्ष्मायी ङ विधूनने इति षणां आदन्तानाञ्च औ पण् स्यात्, ण इत् अन्त्याचः परः, यथासम्भवं गुणश्च । ह्रेपयतीत्यादौ पणि कृते, पकारस्यापि धात्ववयवत्वात् लघूडीऽभावात् (५४२) अप्राप्तौ गुण-विधानं । क्नोपयति क्ष्मापयतीत्युभयत्र अन्त्याचः परं पकारस्थित्या तस्मात् परतया (७७५) इसा-श्रीप इति य-लोपः । आदिष्टा आदन्ता अपि, तेन दै ङ पालने (६०८) दापयति, ङ क्री ञ ग द्रव्यविपर्य्यये क्रापयतीत्यादि, (७९३) ईस्थाने आ । जिह्रियतं, व्लीनन्तं, रीयमाणं रीणन्तं वा, क्नूयमानं, ऋच्छन्त इयृतं ऋच्छन्तं वा, क्ष्मायमाणं, तिष्ठन्तञ्च प्रेरयतीति वाक्यानि । पाणिनिः ७।३।३६ ।

‡ स्था इत्यस्य उङ् स्थोङ् तस्य । पणि कृते स्थाप इत्यस्य उङः इः स्यात् ञ्राङी-त्यर्थः । अतिष्ठिपदिति स्थाप इत्यस्य आकार इकारे स्थिपि इत्यस्य द्वित्वादि, (१११) षत्वं । पाणिनिः ७।४।५ ।

§ घ्रा धातोः पणि कृते घ्राप-भागस्य उङ इः स्याद्वा ञ्राङि । अजिघ्रिपदिति

## ७८७। पाति-स्फायो र्लन्-वङौ णौ।

(पाति स्फायोः ६॥, लन् वङौ १॥, णौ ७।)।

पालयति स्फावयति। *

## ७८८। प्री-धूञो र्नन् वा। (प्री धूञो. ६॥, नन् ।१।, वा ।१।)।

प्रीणयति प्राययति, धूनयति धावयति। †

## ७८९। रुहः पङ् वा। (रुहः ६।, पङ् ।१।, वा ।१।)।

रोपयति रोहयति। ‡

## ७९०। शदोऽगतौ तङ्। (शदः ६।, अ गतौ ७।, तङ् ।१।)।

शातयति। गतौ तु, गाः शादयति गोपः। §

---

जिघ्रन्तं प्रेरितदिति वाक्ये णौ परे घ्राप इत्यस्य आ इः, ततः घ्रिपि इत्यस्य द्वित्वादि। इकाराभावपक्षे घ्रापि इत्यस्य द्वित्वादौ, (६३८) उङो ह्रस्वे, (६३९) सन्वद्भावे, (६४०) खेरित्वे, खर्गुरुत्वात् (६३९) दीर्घाभावे, (६४१) जेर्लोपे, अजिघ्रपदिति। पाणिनिः ७।४।६।

* पा ल रक्षणे इत्यस्य लन्, स्फायी ङ वृद्धौ इत्यस्य वङ् स्यात् णौ। लनौ नित्त्वादन्ते, वङौ ङित्त्वादन्त्यस्य स्थाने। पान्तं प्रेरयति, स्फायमानं प्रेरयतीति वाक्यद्वयं। पाणिनिः ७।३।४१, "पातेर्लुग्वचनम्" इति वार्त्तिकञ्च।

† प्रीश्च धूश्च प्रीधवौ, तौ च तौ ञौ (ञानुबन्धौ) चेति तयोः। प्री ञ तर्पणे प्री ग ञ कान्तौ इति द्वयोः, धू ञ गि कम्पे इत्यस्य च नन् स्याद्वा णौ। नित्त्वादन्ते। धूञ इति ञानुबन्धग्रहणात् नान्येषामित्यर्थः। प्रीणन्तं प्रीणन्तं वा प्रेरयति, धून्वन्तं प्रेरयति इति वाक्यद्वयं। ननोऽभावपक्षे (५७७) अन्त्यचो वृद्धिः। "णिच्प्रकरणे धूञ्-प्रीञोर्नुग्वचनम्" इति वार्त्तिकम्।

‡ जि ञ रुहौ जन्मा-मित्यस्य पङ् स्याद्वा णौ ङित्त्वादन्त्यस्य स्थाने। अत्र वा-ग्रहणं परत्रानुवृत्तिनिवृत्त्यर्थं। रुप-धातोः रोपयतीति सिद्धावपि, रोपयतीत्यस्य उत्-पादनार्थबोधनार्थं रुहः पङ्-विधानम्। रोहन्तं प्रेरयतीति वाक्यम्। पाणिनिः ७।३।४३।

§ शद् लृ णौ शाते इत्यस्य तङ् स्यात् णौ, न तु गतौ। शीयमानं प्रेरयति शातयति, पातयतीत्यर्थः। गत्यर्थस्य तु शादयति गमयतीत्यर्थः। पाणिनि. ७।३।४२।

## ७९१। लाल्यो र्लन्ननौ स्नेहद्रवे वा।

(ला-ल्योः ६॥, लन्-ननौ १॥, स्नेहद्रवे ७।, वा ।१।)।

लाते र्लन् लियो नन् स्यात् स्नेहद्रवे ऽर्थे ञौ वा। विलालयति विलापयति। विलीनयति, (७४५) मिम्योरिति ङा वा, विलापयति विलाययति घृतं। स्नेहद्रवे किं, लौहं विलापयति विलाययति। *

## ७९२। वो जन् धूतौ। (वः ६।, जन् ।१।, धूतौ ७।)।

वाते र्जन् स्यात् कम्पने ञौ। वाजयति। धूतौ किं, केशान् वापयति। †

## ७९३। क्रीजीङो ऽजा चि स्फुर प्रजनार्थवीनान्तु वा।

(क्री-जि-इङः ६।, अच् ।१।, आ ।१।, चि स्फुर-प्रजनार्थवीनां ६॥, तु ।१।,वा ।१।)।

एषामच आ स्यात् ञौ, च्यादेस्तु वा। क्रापयति जापयति अध्यापयति। ‡

---

* स्नेहस्य घृतादेर्द्रवीकरणं स्नेहद्रवः। "स्नेहविपातने" इति पाणिनिः। "स्नेहद्रव्यद्रावणे" इति क्रमदीश्वरः। ला ल च ग्रहे, लीं कि द्रावणे इत्येतयोर्ग्रहणं। "लीलोर्ङ्नीः" इति क्रमदीश्वरः (तिङन्तपादे ४५० सूत्रे)। विलान्तं प्रेरयति विलालयति, पक्षे (७८४) आदन्तत्वात् पण् विलापयति। विलाययन्तं प्रेरयति विलीनयति। उभयत्र घृतं द्रावयतीत्यर्थः। पाणिनिः ७।३।३९।

† वा ल गमन-हिंसयोरित्यस्य वान्तं प्रेरयतीति वाक्ये वाजयति कम्पयतीत्यर्थः। केशान् वापयति परिष्करोतीत्यर्थः। पाणिनिः ७।३।३८। अत्र वैधातुग्रहणं न तु वाधातुः, यतो वजधातोर्वाजयतीत्यादिसिद्धौ वै इत्यस्य पुक् (पण्) मा भूत्, इति पाणिनिटीका।

‡ क्रीश्च जिश्च इङ् च समाहारे तस्य। प्रजनो गर्भग्रहणम् अर्थो यस्य सः प्रजनार्थः, सचासौ वीश्चेति प्रजनार्थवीः, चिश्च स्फुरश्च प्रजनार्थवीश्च तेषां। वीनामिति (११०) नुमागमः सूत्रत्वात्। डु क्री ञ ग द्रव्यविपर्य्यये, जि जये, अधी इङ् न अध्ययने, एषामित्यर्थः। क्रापयतीत्यादि—क्रीणन्तं जयन्तम् अधीयानञ्च प्रेरयतीति वाक्यानि। अनेन अचः स्थाने आ, ततः (७८४) आदन्तत्वात् पण्। पाणिनिः ६।१।४८,५४,५५।

अध्यजीगपत् अध्यापिपत्। चापयति चाययति। चपयति चययति (७९८) मित्त्वात् ह्रस्व इति प्रक्रियारत्ने दृष्टं। स्फारयति स्फोरयति। वापयति वाययति, गाः पुरोवातो गर्भं ग्राहयतीत्यर्थः। *

### ८९४। स्मिभ्यो घात् ध्वर्थे मञ्च।

(स्मिभ्योः ६॥, घात् ५।, ध्वर्थे ७।, मं १।, च।१।)

अनयोरच आ स्यात् घात् ध्वर्थे ञौ मञ्च। विस्मापयते भापयते मुण्डः। घात् किं, कुञ्चिकयैनं विस्माययति भाययति। †

### ७९५। भी भीष् वा। (भीः १।, भीष्।१।, वा।१।)।

भियो घ-भये भीष् स्याद्वा ञौ मञ्च। भीषयते मुण्डः। ‡

---

* अध्यजीगपदिति अधि-इ-टी दि, (७१३) गा-आदेशे, पण्, ततः गापि इत्यस्य द्वित्वादि। गा आदेशस्य विकल्पपक्षे अनेन इ स्थाने आ, ततः पणि आपि इति स्थिते (७१९) पि इत्यस्य द्वित्वे अध्यापिपदिति। चापयतीत्यादि चिन्वन्तं प्रेरयति, चि-ञि, अनेन इस्थाने आ, ततः पण्; पक्षे (५७७,३५) वृद्ध्यादि। प्रक्रियारत्नं वैयाकरण-ग्रन्थविशेषः। स्फुरन्तं प्रेरयति अनेन वा उकारस्य आ। विनन्तं वियन्तं वा प्रेरयति वापयति, अनेन आ, ततः पण्। पक्षे वृद्ध्यादि। पुरोवातः पूर्व्वदिग्वायुः। वर्षासु पूर्व्ववायौ वाति गावो गर्भं गृह्णन्तीति प्रसिद्धिः।

† ष्मि ङ स्मिते, ञि भी ञि भीत्यां, अनयोरर्थो यदि आत्मकर्त्तृतः प्रतीयते तदा अच आ, आत्मनेपदञ्च स्यादित्यर्थः, अन्यत्र आ न स्यात् आत्मनेपदञ्च न स्यादिति। विस्मयमानं बिभ्यतञ्च प्रेरयति अनेन आ, ततः पण्, आत्मनेपदमेव। मुण्डः मुण्डित-मस्तको जन इति दुर्गादासः। एवं विस्मापयते भापयते व्याघ्रः इत्यादिषु कर्त्तृत एव धात्वर्थप्रतीतिः। अन्यत्र कुञ्चिकया मत्स्य-विशेषेण करणेन एनं जनं कश्चित् विस्माययति भाययति, एवं खड्गादिना विस्माययति भाययति इत्यादिषु करणकारकात् धात्वर्थनिष्पत्तिः नतु कर्त्तृतः, अतएव अचः स्थाने आ न स्यात्, आत्मनेपदञ्च न स्यात्। पाणिनिः ६।१।५६,५७, १।३।६८।

‡ घभये कर्त्तृतोभये निष्पन्न इत्यर्थः। पक्षे पूर्व्वसूत्रेण भापयते इति। एवं भीषयते भापयते व्याघ्रः। घात् किं, खड्गेन तं भाययति। पाणिनि. ७।३।४०।

## ७९६। दुषेरोदूः। (दुषेः ६।, ओत् ।१।, ऊः १।)।

दुषेरोकार ऊः स्यात् ञौ। दूषयति।*

## ७९७। चिद्विकारे वा। (चिद्विकारे ७।, वा ।१।)।

दूषयति दोषयति चित्तं।†

## ७९८। घटादि जनी जृष क्नस रञ्जाम मारतोषनिशान निशामार्थ-ज्ञां ह्रो ऽकमामचमो ञौणमोस्तु घेश्च जागुश्च।

(घटादि—ज्ञां ६॥, ह्र:१।, अकमामचमः ६।, ञौणमी: ७॥, तु ।१।, घें: १।, च ।१।, जागुः ६।, च ।१।।

घटाद्यादे-रमन्तस्य माराद्यर्थ-ज्ञस्य ञौ ह्रः स्यात् नतु कमामचमां, ञेः परयो रिणमोस्तु घंस्य जागुश्च ह्रो घंः।‡

---

* इर्दुष्यौ वैकृते इत्यस्य ञि-निमित्तके गुणे कृते दोषि इत्यस्य ओकारस्य ऊः स्यादित्यर्थः। दुषे घंः इति कृते तु, दोषः दोषणं इत्यादि पदं न सिध्यति। दूषण-मिति तु अन्तस्यैव। दुष्यन्तं प्रेरयतीति वाक्यं। पाणिनिः ६।४।९०।

† चित् मनः तस्य विकारश्चिद्विकारः, तस्मिन्नर्थे दुषि ञौ कृते ओकार ऊः स्याद्वा इत्यर्थः। दूषयति दोषयति चित्तं, क्रोध इति शेषः। पाणिनिः ६।४।९१।

‡ मारश्च तोषश्च निशानञ्च निशामश्च ते अर्था यस्य स मारतोषनिशाननिशामार्थः, स चासौ ज्ञश्चेति मारतोषनिशाननिशामार्थज्ञः। घटादिश्च जनीश्च जृषश्च क्नसश्च रञ्जश्च अमश्च मारतोषनिशाननिशामार्थज्ञाश्च ते तेषां। कम च अम च चम च कमामचम, न कमामचम अकमामचम तस्य। इण् (९२१) च णम् (११८३) च इणमौ, ञेः परौ इणमौ ञौणमौ तयोः। गणपाठे मकारानुबन्धो घटादिः, अतएव घट म ङ चेष्टे इत्यस्य ग्रहणं, नतु घट क हिंसे इत्यस्य। आदिना यावतीयानां मानुबन्धानां ग्रहणं। जनीग्रहणेन जनी य्यङ प्रादुर्भावे इत्यस्य प्राप्तिः, जन म लि च इत्यस्य मानुबन्धत्वेऽपि न प्राप्तिः। जृष ग्रहणात् जृ गि कि ज्याने इत्यस्याप्राप्तिः। अमः इत्यनेन अमन्त-मात्रस्य ग्रहणं, कम अम चम इति त्रयाणां तदन्तर्गतत्वात् वर्जनं। मारा मारणं, तोषः

घटयति व्यथयति प्रथयति, जनयति जरयति क्नसयति, रजयति मृगान् रमयति, ज्ञपयति । कमादेस्तु, कामयति आमयति चामयति । *

## ७९९ । ज्वल ह्वल ह्मल ग्ला स्ना वन रम नमो ऽगे र्व्वा ।

(ज्वल—नमः ६।, अगेः ६।, वा ।१।) ।

एषामगीनां स्वः स्याद्वा ञौ । ज्वलयति ज्वालयति, ग्लपयति ग्लापयति ।

अगेः किं प्रज्वलयति प्रग्लापयति । †

## ८०० । वा श्रम यम फण गिस्वदां ।

(वा ।१।, श्रम यम फण गि-स्वदां ६।।।) ।

---

परितोषणं, निशानं तीक्ष्णीकरणं, निशामो दर्शनप्रेरणं । क्रमेण यथा—ज्ञपयति शत्रुं वीरः, ज्ञपयति पुत्रं पिता, ज्ञपयति खड्गं कर्म्मकारः, ज्ञपयति रूपं कामिनी । निशामो ज्ञानप्रेरणमिति क्रमदीश्वरादयः, अतएव विज्ञापनार्थे विज्ञप्तिरित्यपि प्रयोगः । एतद्भिन्नेऽर्थे ज्ञापयति । पाणिनिः ६।४।९२,९३, ७।३।३४, वार्त्तिकञ्च ।

* घटमानं, व्यथमानं, प्रथमानं, जायमानं, जीर्य्यन्तं, क्नस्यन्तं, रजन्तं, रममाणं, जानन्तं, कामयमानं, अमन्तं, चमन्तञ्च, प्रत्येकं प्रेरयतीति वाक्यानि । रजयतीत्यस्य मृगान् रमयतीत्यर्थः, तेन (६६०) मृगरमणार्थे न-लोपः । रमयतीत्यनेन अमन्तोदाहरणञ्च दर्शितं । ञौ ञमीस्तु अघटि अघाटि, घटं घटं घाटं घाटमित्यादि । जागुस्तु—अजागरि अजागारि, जागरं जागरं जागारं जागारं ।

† ज्वल ज म बल-त्विषोः, ह्वल ह्मल म च चाले, ग्लै क्षमे, ष्णा ल शोधने, वनु म व्यापृतौ, रमु ङ जौ क्रीडे, नमौ शब्द नत्योः । पूर्व्वसूत्रे ग्ला-स्नोरप्राप्तौ अन्येषाञ्च नित्यप्राप्तौ विकल्पः । अतएव प्रज्वलयतीत्यादौ घटादित्वात् नित्यं ह्रस्वः, प्रग्लापयति प्रस्नापयतीत्युभयत्र न ह्रस्वः । ज्वलन्तं ग्लायन्तञ्च प्रेरयतीति वाक्यद्वयं । रम इत्यत्र वम इति क्वचित् पाठः । भाष्यम् ।

एषां स्वः स्याद्वा ञौ। शमयति शामयति, यमयति याम-यति, फणयति फाणयति, परिस्खदयति परिस्खादयति । *

## ८०१ । हनस्तङ्-ऽणबिणि ञ्णिति ।

(हनः ६।, तङ् ।१।, अ-णप्-इणि ७।, ञ्णिति ७।) ।

ञिति णिति च परे हन्तेस्तङ् स्यात् नतु णपि इणि च । घातयति । †

## ८०२ । यिः सन् वेर्ष्यो द्विः ।

(यिः १।, सन् ।१।, वा ।१।, ईर्ष्यः ६।, द्विः १।) ।

ऐर्ष्यियत् । ‡

इति आन्त-पादः ।

---

* गेः स्खद गिस्खद, शम च यम च फण च गिस्खद् च तेषां । अत्र वाशब्दस्य व्यवस्थया शमुभिर्षं शमे इत्यस्य नित्यं ह्रस्वः, शम ङ कालोचे इत्यस्य नित्यं ह्रस्वाभावः । औ यमु उपरमे इत्यस्य नित्यं ह्रस्वः, यम क भि परिवेशने इत्यस्य तु विकल्पेन । एवं अव परि पूर्वकस्यैव स्खदस्य वा ह्रस्व इति कातन्त्राद्याः, अन्यपूर्वकस्य केवलस्य च घटादित्वात् नित्यमेव ह्रस्व इति । शाम्यन्तं शामयमानं वा, यमयन्तं, फणन्तं, परिस्खद-मानञ्च प्रेरयतीति वाक्यानि । भाष्यम् ।

† णप् च इण् च णबिण्, न णबिण् अणबिण् तस्मिन् । ञ च ण च ञ्णौ, तौ इतौ यस्य स ञ्णित् तस्मिन् । तङो ङ इत् अन्त्यस्य स्थाने । घ्नन्तं प्रेरयतीति वाक्ये हन-ञि, अनेन हनो नस्थाने त, (६७९) ह-स्थाने घ, (५७७) वृद्धिः, घाति इति (६३१) धातुः । णबिणोस्तु जघान, अघानि । पाणिनिः ७।३।३२ ।

‡ ञौ कृते द्वित्वहेतौ सति ईर्ष्यधातोः यिरेव द्विः स्यादित्येकोऽर्थः । सनि कृते तु यि र्वा द्विः स्यात्, सन् च वा द्विः स्यादित्यपरोऽर्थः । ईर्ष्यन्तं प्रेरितवानिति वाक्ये ईर्ष्य-ञि, (७७५) य लोपस्य नित्यत्वेऽपि येर्द्वित्वविधानज्ञापकात् यलोपाभावे ईर्ष्यि इत्यस्य (६३१) धातुसंज्ञायां टौ दि, (६१३) अङ्, ततः अनेन केवलं यि इत्यस्य द्वित्वे, (६४१) ञे लोपे ऐर्ष्यियदिति । सनि तु (५५४) इमि, यि इत्यस्य द्वित्वे ईर्ष्यियिषति, सनो द्वित्वे ईर्ष्यिषिषति । "ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्" इति वार्त्तिकम् ।

## ८०३। सन्निच्छायां। (सन् ।१।, इच्छायां ७।)।

**धोः परः सन् स्यादिच्छार्थे। अत्तुमिच्छति जिघत्सति। दिदासते दिदीषते, दिद्योतिषते, उतिच्छिषति उचिच्छिषति, अधिजिगापयिषति अध्यापिपयिषति, शुशावयिषति शिश्वाययिषति, जुह्वावयिषति।***

* यस्य धातो र्यो ऽर्थस्तद्विषयाया-मिच्छायां तस्मात् धातोः सन् स्यादित्यर्थः। अत्तु-मिच्छतीति वाक्येन, इच्छायां तुमुन्गर्भायामेव, न तु अदनमिच्छतीत्यादिरूपायां। "तुं-गर्भादिच्छायां" सन्निति क्रमदीश्वरः। इच्छासनन्तात् पुन र्न सन्, इच्छाया इच्छान्तरासम्भवात्। स्वार्थसनन्तात्तु स्यादेव, चिकित्सिषतीत्यादि। अचेतनस्य इच्छाया असम्भवेऽपि नदीकूलं पिपतिषतीत्यादौ विवक्षायां सन्। सन्प्रत्ययश्च वक्तुरिच्छया वैकल्पिक एव, पक्षे वाक्यस्यैव स्थितिरिति। सनो न इत् चिह्नार्थः, अदन्त-स-स्थितिः। जिघत्सतीत्यादि—अद-सन्, (६७३) घस-आदेशः, (६६८) सस्य त्, घत्स इति, ततः (६३२) द्वित्वादि, जिघत्स इति (६३१) धातुसंज्ञा, ततः तिप्, शप्, (५४३) सनो ऽकार-लोपः। सनन्तधातोः (६३६) सनः पमि इत्यनेन परस्मैपदादिनियमः। दातुमिच्छति दी-सन् (७४३) ङा वा, दास इत्यस्य द्वित्वादि, पक्षे दीस इत्यस्य द्वित्वादि। द्योतितुमिच्छति द्युत-सन्, (५५४) इम्, द्वित्वं, (६४७) खेर्जिः। उच्छितुमिच्छति उच्छ-सन्, इम् उच्छिष इति स्थिते, (७१८) उकारं हित्वा छिष इत्यस्य द्वित्वे, (५८८) खेश्छस्य वा त। अध्यापयितुमिच्छति अधि-इ-जि-सन्, (७१३) इङो वा गा-आदेशः, (७८४) आदन्तत्वात् पण्, गापि-धातुः, ततः (५५४) इम्, गुणः, एस्थाने अय्, गापयिष इत्यस्य द्वित्वं जिगापयिष धातुः ततः तिबादि। पक्षे (७८३) इ स्थाने आ, पण्, आपयिष इति स्थिते (७१८) आकारं हित्वा, पयिष इत्यस्य द्वित्वादि। श्वाययितुमिच्छति श्वि-जि-सन्, (६६८) श्विधातो र्विकल्पेन जिः, (५३७) प्रागच्कार्य्यादिति नियमेन शु इ स इत्यस्य द्वित्वे, ततः (५७७) वृद्ध्यादि, इमादि च। जि-विकल्पपक्षे श्वि इस इत्यस्य द्वित्वादि। ह्वाययितुमिच्छति ह्वे-जि-सन् (६०८) ए स्थाने आ, ह्वा इ स इत्यस्य द्वित्वे (६६७) द्वित्वक-ह्वे-धातो र्जिः, ह्वा-भागस्याभावात् (७८२) यनोऽभावे, वृद्ध्यादि, इमादि च। पाणिनिः ३।१।७। अत्र सूत्रे विकल्पः।

## ८०४ । णुर्नानिमि । (णु:।१, न ।१।, अनिमि ७।) ।

अनिमि सनि णु र्न स्यात्। विवृत्सति विवर्त्तिषते, निनृत्सति निनर्त्तिषति, तितरीषति तितरिषति तितीर्षति । *

## ८०५ । घाँ ऽज्झनिङ्गमां । (घँ: ।१, अजझनिङ्गमां ६।।।)

अजन्तस्य हन्तेरिङ: स्थाने जातस्य गमश्च घँ: स्यात् अनिमि सनि। दुध्रूर्षति दिध्वरिषति, वुवूर्षति विवरीषति विवरिषति सञ्चिस्कीर्षति, जिगीषति, चिकीषति चिचीषति, जिघांसति।†

## ८०६ । गमोनिङो: । (गमि ।१।, इन्-इङो: ६।।) ।

---

* नास्ति इम् यस्य स: अनिम् तस्मिन, सनि इत्यस्य विशेषणं । सन् इत्य विभक्तिव्यत्ययेन अनुवृत्ति: । यत्र गुणस्थानं सम्भवति तत्रैव सनोऽगुणित्वं, जिघांसतीत्यादौ (६७६) न अम् लोप: । वर्त्तितुमिच्छति विवृतस्मति (६४८) अत पम् इत्यनेन भाविपरस्मैपदे, (६४८) इङ्गो नेम् पे इति इमनिषेधे गुणनिषेध:, इत्यस्य द्वित्वादि । आत्मनेपदे तु इमि, गुण: । नर्त्तितुमिच्छति निनृत्सति निनर्त्तिषति (७३९) इमोऽभावपक्षे गुणाभाव:, इम्पक्षे गुणएव । तरीतुमिच्छतीति पद तृ-सन् (७४७) वा इम्, (६२७) इमो वा दीर्घ: । अनिम्पक्षे अगुणत्वात् (६ ऋस्थाने इर्, (२२८) तस्य दीर्घ: । पाणिनि: १।२।१० ।

† इङो गम इङ्गम्, अच् च हन् च इङ्गम् च तेषां । दुध्रूर्षतीत्यादि ध्वर्त्तुमिच्छ ध्वृ सन् (७४७) अनिम्पक्षे अनेन दीर्घे, अन्तरङ्गत्वादादौ (६२८) उर्, ततो द्वित्वा (२२८) दीर्घ:, दुध्रूर्ष धातोस्तिवादि । इम्पक्षे दिध्वरिषति । वरीतुमिच्छ वृ-सन् (७४७) इमो विकल्पपक्षे अनेन दीर्घे, ऋस्थाने उर्, ततो द्वित्वादिकं । इम (६२७) इमो वा दीर्घ: । संस्कर्त्तुमिच्छति संस्कृ-सन् (७४७) स्कृवर्जनात् न इम, दीर्घे, (६२८) ऋस्थाने इर्, तस्य दीर्घ: । जेतुमिच्छति जि-सन् (६००) गि-आदे अनेन दीर्घे गीष इत्यस्य द्वित्वादि । चेतुमिच्छति चि-सन्, (७४६) वा कि-आदे अनेन दीर्घ: । हन्तुमिच्छति हन-सन्, अनेन दीर्घ:, घांस इत्यस्य द्वित्वादि, (६ हस्य घ: । पाणिनि: ६।४।१६ ।

ইনিঙোঃ স্থানে গমিঃ স্যাৎ সনি। জিগমিষতি, অধিজিগাংসতে। *

**৮০৭। নেমুগুহগ্রহঃ।** (ন।১।, ইম্।১।, উ গুহ-গ্রহঃ ৫।)।

উবর্ণান্তাৎ গুহো গ্রহশ্চ সন ইম্ ন স্যাৎ। জুহূষতি, বুভূষতি, জুঘুক্ষতি। †

**৮০৮। গ্রহস্বপপ্রচ্ছাং জিঃ।** (গ্রহ-স্বপ-প্রচ্ছাং ৬।৩, জি:।১।)।

এষাং জিঃ স্যাৎ সনি। জিঘৃক্ষতি, সুষুপ্সতি। ‡

**৮০৯। স্মিঙ পূঙ-ঋ-অনূজ-অশূ কির গির দৃঙ ধিয় প্রচ্ছ ইম্।** (স্মিঙ পূঙ-ঋ-অনূজ-অশূ-- প্রচ্ছঃ ৫।, ইম্ ।১।)।

---

* গমিরিতি ইকারানুবন্ধেন গমধাত্বাদেশঃ স্যাদিত্যর্থঃ। গমধাতুনৈব পদসিদ্ধৌ ইনঃ স্থানে গমাদেশকরণং, গমনার্থস্য ইন-ধাতৌ গমাদেশঃ স্যাৎ, জ্ঞানার্থস্য ন স্যাদিতি জ্ঞাপনার্থং, তেন জ্ঞানার্থে প্রতীষিষতীতি (৮১৯) সনন্তশেষে স্বয়মুদাহৃতং। এতুমিচ্ছতি ই-সন্, গমাদেশে (৬২৪) গমোঽমে স ইম্ ইতি ইম্, গমিষ ইত্যস্য দ্বিত্বাদি। অধ্যেতুমিচ্ছতি অধি-ই-সন্, গমাদেশে (৮০৫) দীর্ঘে, ইঙঃ স্থানিবত্ত্বাদাত্মনেপদবিষয়ে, গমোঽমে স ইমিত্যত্র আত্মনেপদবর্জনাদিমোঽভাবে, গাংস ইত্যস্য দ্বিত্বাদি। পাণিনিঃ ২।৪।৪৭,৪৮। অত্র বক্তব্যম্--(২।৪।৪৬) ইতি পাণিনিসূত্রেণ ইনধাতোঃ সন্বৎ অন্যন্তেঽপি গমাদেশঃ, বোধনার্থে তু ন ভবতি। যথা গময়তীতি। বোধনার্থে তু প্রত্যায়য়তি।

† উশ্চ গুহশ্চ গ্রহশ্চ তস্মাৎ। উঃ উবর্ণান্তঃ। হোতুমিচ্ছতি হু-সন্, (৮০৫) দীর্ঘে হূষ ইত্যস্য দ্বিত্বাদি। এবং হ্বাতুমিচ্ছতি, হ্ব সন্, (৬০৭) এস্থানে উ, হূস ইত্যস্য দ্বিত্বে, (৬৬৭) দ্বিরুক্তস্য জিঃ, ততঃ দীর্ঘে জুহূষতি, অত্রাপি উদন্তত্বাদনেন ইম্-নিষেধঃ। ভবিতুমিচ্ছতি বুভূষতি দীর্ঘোদন্তত্বাদিমনিষেধঃ। গূহিতুমিচ্ছতি গুহ-সন্, অনেন ইমনিষেধঃ, (১৭৫) হস্য ঢ, (১৭৭) গস্য ঘ, (৫০২) ঢস্য কঃ, ঘুক্ষ ইত্যস্য দ্বিত্বাদি। পাণিনিঃ ৭।২।১২।

‡ গ্রহীতুমিচ্ছতি গ্রহ সন্, পূর্বসূত্রেণ ইমনিষেধঃ, অনেন জিঃ, হস্য ঢ, গস্য ঘঃ, ঢস্য কঃ, ঘৃক্ষ ইত্যস্য দ্বিত্বাদি। স্বপ্তুমিচ্ছতি স্বপ সন্ অনিট্ত্বাদিম, অনেন জি, সুপ্স ইত্যস্য দ্বিত্বাদি, (১১১) ষত্বং। পাণিনি ১।২।৮; ৬।১।১৬।

एभ्यः परस्य सन इम् स्यात्। सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशिषते चिकरिषति पिप्रच्छिषति। *

**८१०। भ्रस्ज श्रि स्वृ यु ऊर्णु भर दरिद्रा सन तन पत ज्ञपर्द्धिंदम्भिवो वा।** (भस्ज—इषः ५१, वा।१।)।

एभ्यः सन इम् स्याद्वा। बिभर्जिषति बिभ्रज्जिषति बिभ्रक्षति, शिश्रयिषति शिश्रीषति, सिस्वरिषति सुस्वूर्षति, यियविषति युयूषति, ऊर्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति, बिभरिषति बुभूर्षति, दिदरिद्रिषति दिदरिद्रासति, सिसनिषति सिषासति, तितनिषति तितंसति,—तितांसतीत्येके। पिपतिषति। †

---

* स्मिङ् च पूङ् च ऋश्च अनूज च अशूश्च किरश्च गिरश्च द्रियश्च धियश्च प्रच्छ च तस्मात्। स्मिङ्-पूङो ङकारः आत्मनेपदित्व-ज्ञापनार्थः। अशू इति ऊकारानुबन्धः। किर गिर द्रिय धिय इति कॄ गॄ दृ धृ इत्येषां ग्रहणं। स्मि ऋ दृ धृ एषां (५८७) एकाजिवर्णान्तत्वात् एकाजृवर्णान्तत्वाच्च, पू इत्यस्य (८०७) उवर्णान्तत्वात्, प्रच्छ इत्यस्य औदित्वाच्च इमोऽप्राप्तौ, अनूज अश एतयोरुदित्वात् (५७३), कॄ गॄ एतयोश्च (७४७) विकल्पप्राप्तौ, नित्यार्थं विधानं। स्मेतुं पवितुं अर्त्तुं अञ्जितुं अशितुं करीतुं प्रष्टुञ्च प्रत्येकमिच्छतीति वाक्यानि। सिस्मयिषते इत्यत्र (८१९) जिस्कोरिति नियमेन मूलधातोर्न षत्वं। पिपविषते इति पू इ स इत्यस्य (५२७) प्रागच्कार्य्यादचि द्विरिति नियमेन आदौ द्वित्वे, (८१६) वक्ष्यमाण-जयल्पोरित्यनेन स्वेरुकारस्य इः। अरिरिषति ऋ इ स इत्यस्य ऋकारस्य गुणे अरिष इत्यस्य (७१९) आद्यचं हित्वा रिष इत्यस्य द्वित्वं। अञ्जिजिषति अनूजिष इत्यस्य आद्यचं, (७२०) नकारञ्च हित्वा जिष इत्यस्य द्वित्वं। अशिशिषते इति अकारं हित्वा द्वित्वं। चिकरिषति इत्यत्र (६२७) इमो दीर्घे चिकरीषति इति च भवति। सिद्धान्तकौमुदीमते तु दीर्घो नेष्टः। एवं जिगरीषति जिगरिषति, दिदरिषति, दिधरिषति। पिपृच्छिषति (८०८) मूर्च्छसूत्रेण जिः। पाणिनिः ७।२।७४,७५।

† भ्रस्ज च श्रिश्च स्वृश्च युश्च ऊर्णुश्च भरश्च दरिद्राश्च सनश्च तनश्च पतश्च ज्ञपश्च ऋधिश्च दन्भ च इव च तत्तस्मात्। भ्रस्जी ज ष पाके, श्रि ञ सेवायां, स्वृ ऊ शब्दो-

## ८११। मि मी मा दा रभ लभ शक पत पद् हिंसार्थराधोऽचोऽनिमसनीस् खिलोपश्च।

(मि—राधः ६।, अचः ६।, अनिम्सनि ७।, इस् ।१।, खिलोपः १।, च ।१।)।

**एषामच इस् स्यात् खिलोपश्चानिमसनि। (२१३) स्यादेः सो लोपः। पित्सति। जिज्ञपयिषति।** *

---

पतापयोः, यु ल मिश्रणे, ऊर्णु ञ ल आच्छादने, भृ ञ भरणे इति भौवादिकस्य ग्रहणं नतु भृ लि भर्तिपुष्योरिति जुहोत्यादेः, अस्य तु बुभूर्षतीत्येव। दरिद्रा च लु दुर्गत्यां, षन दु ञ दाने, तनु ञ द विस्तारे, पत लृ ञ गत्यां, पत्य ङैश्ये इति द्वयं, ज्ञा कम मारणादौ, ऋध्यु निर्द्धौ, दन्भु न दम्भे, इव इति इवान्तः दिव षिव श्रिवादिः। स्तृ-धातौ वैमत्वेऽपि अत्र ग्रहणं, कृ दु सु नो स्तव्या इति (५७३) एषां वेमामपि सनि वेमत्वं नास्तीति ज्ञापनार्थं, तेन नेसुमुहयह इति इम्निषेधे चकृषति दुद्रूषति सुसूषति तुनूषतीत्येव। भ्रष्टुमिच्छति भस्ज-सन्, अनेन इम् (७५१) वा भर्जादेशे द्वित्वादि। पचे भस्ज इ स इति (६४) सस्य द, (४६) दस्य ज, मज्जिष इत्यस्य द्वित्वादि। इमो विकल्पपचे (२१३) स्यादेः स-लोपे, (१५४) षङ्, (६०२) षस्य क, भच इत्यस्य द्वित्वादि। श्रयितुमिच्छति इमोऽभावपचे (८०५) दीर्घ. श्रीष इत्यस्य द्वित्वादि। स्तरितुं स्तर्तुं वा इच्छति अनिमपचे ऋकारस्य दीर्घं, (६२८) उर्, (२२८) तस्य दीर्घं, स्तूर्ष इत्यस्य द्वित्वादि। यवितुमिच्छति यु इ ष इत्यस्य (५३७) प्रागच्कार्य्यादिति नियमेन आदौ द्वित्वे ततो गुणादौ युयविष इत्यस्य (८१६) खिरुकारस्य इः। ऊर्णवितुमिच्छति ऊर्णु इष इत्यस्य (७२१) इमो ङित्वे, (५८८) उकारस्य उव, ऊर्णुविष इत्यस्य, (७१९,७२०) र्नु रस्य द्वित्वा णुविष इत्यस्य द्वित्वादि। इमो ङित्वविकल्पपचे गुणः। अनिमपचे अनिम्सनि (८०५) दीर्घः। भर्त्तुमिच्छति, अनिम्पचे ऋकारस्य दीर्घः, ऋस्थाने उर्, तस्य दीर्घः, भूर्ष इत्यस्य द्वित्वादि। दरिद्रितुमिच्छति, अनेन इम्, (६१०) आ-लोपः, दरिद्रिष इत्यस्य द्वित्वादि। अनिम्पचे (७०२) सन्वर्जनान्नाकार-लोपः। सनितु-मिच्छति (८१९) जिस्वोरिति नियमात् न मूलस्य षत्वं। अनिम्पचे (६५५) ङा, सा स इत्यस्य द्वित्वादि। तनितुमिच्छति, अनिम्पचे (५०) नस्यानुस्वारे तंस इत्यस्य द्वित्वादि। (८०४) सूत्रेऽनिमोऽत्र गुणसम्भावनायामेव अनिम्सनोऽगुणत्व, अतएवात्र अगुणत्वाभावे (६७६) न अम्लोपः। एके इति पाणिनीय-जौमराः, तनोतेरनिम्सनि वा दीर्घ-मिच्छन्तीत्यर्थः (पाणिनिः ६।४।१७)। पतितुमिच्छति पिपतिषति। पाणिनिः ७।२।४९, वार्त्तिकञ्च।

* डु मि ञ न क्षेपे ; मी ञ ग बधे, मी कि गत्यामिति द्वयं ; मा इति मा ल च माने, मा ङ लि शब्दे, मा ङ य च, मे ङ प्रतिदाने, मे ङ य तु च इति पञ्च ; दा इति

## ८१२। ज्ञपर्द्धापामीर्य्यः। (ज्ञप-ऋध-आपां ६॥, ईर्य्यः १॥)।

एषामच ई ईर् ई एते क्रमात् स्युः खिलोपश्चानिम्सनि। ज्ञीप्सति। अर्द्धिधिषति ईर्त्सति। दिदभिषति।*

## ८१३। दम्भो यौ। (दम्भः ६।, यौ १॥)।

दन्भेरच इ ई च स्यादनिमि सनि खिलोपश्च। धिप्सति धीप्सति अनकारनिर्द्देशात्। दिदेविषति।†

## ८१४। क्वोः शूटावणौ असक्कौ यङ्लुग्वोस्तु वा।

(क्वोः ६॥, शूटौ १॥, अणौ ७।, अस् क्कौ ७।, यङ्लुक् वोः ७॥, तु ।१।, वा ।१।)।

---

दा-संज्ञकः, तेन दा-न लूनौ, दा त् दाने, डु दा ञ लि च, दे ङ पालने, दो य च्छेदे, डु धा ञ लि धारणे, धे ट पाने इति सप्त; रभौ ङ राभस्ये; लभौ ङ लाभे; शक ल् य शक न ऊ शक्तौ इति द्वयं; पत लृ न गत्या पत्य ङेश्च इति द्वयं; पद्लो ङ गतौ; राध्यौ सिद्धौ अत्र तु हिंसार्थ.। एषामच इस् स्यादित्यर्थः। शक-धातोः स्वमते ऊदित्वात् वेनत्वेऽपि बह्वादिना मते अनिम्त्व। पित्सतीत्यादि, पतितुमिच्छति पूर्व्वसूत्रेण अनिम्पक्षे पत स इत्यस्य द्वित्वे, अनेन खिलोपे, अकारस्य इस् पिसत्स इति स्थिते स्यादेः स-लोपः। ज्ञपयितुमिच्छति ज्ञपि सन् पूर्व्वेण इम्, गुणादौ ज्ञपयिष इत्यस्य द्वित्वादि। पाणिनिः ७।४।५४, वार्त्तिकञ्च।

* ज्ञपश्च ऋध च आप च तेषां। ईश्च ईर् च ईश्च ते ईर्य्यः। ज्ञप इत्यस्य अचः स्थाने ई, ऋधः ईर्, आपः ई इति क्रमः। ज्ञीप्सतीति (८१०) अनिम्पक्षे अनेन खिलोपः अस्थाने ईश्च, (६४१) ञें लोपः। अर्द्धितुमिच्छति ऋध सन् (८१०) भसञ्ज इति इम्, अर्धिष इत्यस्य अ रञ्च हित्वा धिष इत्यस्य द्वित्वादि। अनिमपक्षे (६४) ऋत्स इत्यस्य ऋं हित्वा त्स इत्यस्य द्वित्वे, अनेन खिलोपः, ऋस्थाने ईर् च। दम्भितुमिच्छति दम्भ सन् (८१०) भसञ्ज इति इम्। पाणिनिः ७।४।५५,५८।

† इश्च ईश्च ई, तौ यौ। धिप्सतीत्यादि, दन्भ-सन्, (८१०) भसञ्ज इत्यनेन इमो ऽभावपक्षे, अत्र सूत्रे दभ इति अ-नकारनिर्देशात् गुणसम्भावनाभावेऽपि अनिमि सनि न-लोपः, ततः (१७७) दस्य ध, (६४) भस्य प, धप्स इत्यस्य द्वित्वं, अनेन खिलोपः अकारस्य इ, ई च। देवितुमिच्छति दिव सन्, भसञ्ज इत्यनेन इवन्तत्वात् वा इम्। पाणिनिः ७।४।५६।

छकार-वकारयोः शकारोठौ स्याताम् अणौ जसे क्वौ च, यङ्-लुकि वे च वा स्तः । दुद्यूषति । *

मित्सति दित्सति धित्सति, रिप्सते लिप्सते, शिक्षति, पित्सते, प्रतिरित्सति, हिंसार्थः किं, आरिरात्सति । ईप्सति । †

## ८१५ । मुचोऽढे ह्रे मोच वा सनि ।

(मुचः ६।, अढे ७।, ह्रेः ६।, मोच ।१।, वा ।१।, सनि ७।) ।

अढस्य मुचो ह्रेः स्थाने मोच वा स्यात् सनि । मोक्षते मुमुक्षते ।‡

---

* छ च व च छ्वौ तयोः । श च ऊट् च तौ । जस् च क्विश्च तस्मिन् । यङ्-लुक् च व च यङ्लुग्वौ तयोः । जस् प्रत्याहारः । छ स्थाने शः, व स्थाने ऊट्—इति क्रमः । अणाविति पृथक्पदकरणात् यङ्लुकि तत्सम्बन्धाभावे गुणिन अगुणे च जसे वा स्तः, वकारे तु यङ्लुकि अन्यत्र च सर्व्वस्मिन् वकारे वा स्तः ; क्विपः पृथग्ग्रहणात् केवलं क्विपो वकारे नित्यमित्यर्थः । दुद्यूषतीति दिव-सन्, इमोऽभावपक्षे-अनिम् सनोऽगुणत्वे, अनेन वस्थाने ऊ, द्यूष इत्यस्य द्वित्वादि । पाणिनि ६।४।१९, भाष्यञ्च ।

† सम्जणीत्यस्योदाहरणान्युक्तानि, मिमीमादित्यस्य उदाहरणान्याह—मित्सतीत्यादि, मेतुं मातुं वा इच्छति मि मी मा एतेभ्यः सन्, अनिम्सनि अचः स्थाने इस् मिस्स इति (६६८) सस्य त, खिलोपः । आत्मनेपदिनान्तु मित्सते इत्येव । दातुमिच्छति दा-सन्, धातुमिच्छति धा-सन्, मित्सतिवत् साध्यं । रब्धुमिच्छति लब्धुमिच्छति रभ-लभाभ्यां सन्, अकारस्य इस् (२१३) स्यादेः सलोपः, (६४) भस्य प, रिप्स इति द्वित्वं, खिलोपः । शक्तुमिच्छति शक सन्, अचः स्थाने इस्, स्यादेः सलोपः, सनः सस्य (१११) षत्वं, शिक्ष इत्यस्य द्वित्वं, खिलोपः, शिक्षते इति च । पत्तुमिच्छति पद-सन्, इस्, स्यादेः सलोपः, पत्स इत्यस्य द्वित्वं, खिलोपः । प्रतिराद्धुमिच्छति, प्रतिराध-धातुः हिंसार्थः, अतएव अचः स्थाने इस् खिलोपश्च । आराध धातुराराधनार्थः अतो न इस्खिलोपौ । आप्तुमिच्छति आप सन् (८१२) आ स्थाने ई, ईप्स इत्यस्य द्वित्वं, खिलोपश्च ।

‡ ढस्याभावो ऽढं तस्मिन् । अकर्म्मके सतीत्यर्थः । वृत्तौ अढस्य इति मुचो विशेषणं । अढस्य ह्रेर्मुचो मोच वा स्यात् सनीति कथनात् सनं हित्वा केवलस्य मुचो द्वित्वमिति तात्पर्य्यं । मोक्तुमिच्छति अढविवक्षायां पापात् स्वयं मुक्तो भवितुमिच्छतीत्यर्थः, मुच-सन् औदित्वान्निम्, द्विरुक्तस्य मुचो मोचादेशे (२११) कुङ्, (१११) षत्व,

## ८१६। जयल्पोः ख्योर्य्यें।

(ज-यल्पोः ५।, ख्योः ६।, इ ।१।, ए ७।)।

खेरुवर्णस्य जकार-यल-पवर्गात् परे अवर्णे परे इः स्यात् सनि। जु गतौ, जिजावयिषति। रिरावयिषति, पिपावयिषति बिभावयिषति। जयल्पोः किं, नुनावयिषति। अतएव ञो द्वित्वे त्रिः। *

## ८१७। श्रुस्रुस्रुद्रुप्रुप्लुच्युङां वा।

(श्रु—च्युङां ६॥, वा॰।१।)।

शिश्रावयिषति शुश्रावयिषति। †

---

मोच इति धातुः, पक्षे मुमुक्ष-धातुः। कर्म्मकर्त्तृत्वादात्मनेपदं। षढि इति किं, मुमुक्षति वत्सं गोपः, अत्र न पदद्वयं नात्मनेपदञ्च। पाणिनिः ७।४।५७।

* जश्च यल् च पुश्च तस्मात्। खेरुः ख्युस्तस्य। ए इति अ-शब्दात् सप्तमी। जकारात् य व र लात् पवर्गाच्च परस्थितौ योऽवर्णं तस्मिन् परे खेरुवर्णस्य इः स्यात् अव्यवहितसनोऽसम्भवात् व्यवहिते सनीत्यर्थः। जु गताविति धातुपाठः। जावयितुमिच्छति जु-ञि-सन् (५३७) प्रागचकार्य्यादचि द्विरिति नियमेन जु इ ष इत्यस्य द्वित्वे पश्चात् वृद्ध्यादौ जुजावयिष इति स्थिते, अनेन जकारात् परे ऽवर्णे परे खेरुवर्णस्य इः। एवं रावयितुमिच्छति, पावयितुमिच्छति, भावयितुमिच्छतीत्यादि। नावयितुमिच्छतीत्यत्र नकारपरस्थितावर्णे परे न स्यादिति। एवं सुश्रावयिषति जुह्रावयिषतीत्यादिषु न स्यात्। जवन्तं प्रैरिरदित्यादि वाक्ये अजीजवदित्यादिष्वपि (६३९) खेः सन्वद्भावे अनेन खेरुवर्णस्य इः। अतएव ञौ, द्वित्वे, पश्चात् त्रिरिति प्रागचकार्य्यादित्यस्य स्मरणार्थः। पाणिनिः ९।३।८०।

† श्रुश्च स्रुश्च स्रुश्च द्रुश्च प्रुश्च प्लुश्च च्युङ् च तेषां। श्रु श्रवणे, स्रु गतौ, ष्णु स्रु प्रस्रुत्यां. द्रु प्रुङ् प्लुङ् च्युङ् च गतौ, एषां सप्तानां खेरुवर्णस्य इः स्याद्वा सनि, अव्यवहितावर्णस्यासम्भवात् वर्णद्वयव्यवहिते ऽवर्णे परे इत्यर्थः। श्रु प्रभृति धातुग्रहणात् जयल्पोरिति नानुवर्त्तते। श्रावयितुमिच्छति श्रु ञि सन् द्वित्वादौ खेरुवर्णस्य वा इः। एवं श्रवन्तं प्रैरिरदिति वाक्ये श्रु-ञि टी दि, अङ्, श्रु इ इत्यस्य द्वित्वादौ, खेः सन्वद्भावे, अनेन खेरुकारस्य वा इः अशिश्रवत् अशुश्रवदित्यादि। पाणिनिः ७।४।८१। अत्र सूत्रे स्रुधातुर्न दृश्यते।

**८१८। व्युङो ऽवो हसादेः सेमः क्त्वाच किद्वा रुद्विद्मुषस्तु नित्यं ।**

(व्युङः ५।, अ-वः ५।, हसादेः ५।, सेमः ५।, क्त्वाच् ।१।, च ।१।, कित् ।१।, वा ।१।, रुद-विद-मुषः ५।, तु ।१।, नित्यं १।) ।

हसादेः सेम उकारोङ इकारोङश्च वान्तवर्जात् सन् क्त्वाच कित् वा स्यात् रुदादेस्तु नित्यं । रुरुचिषते रुरोचिषते, लिलिखिषति लिलेखिषति । रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति । वान्तः किं, दिदेविषति । *

**८१९। ञिस्त्वोः खेः सः षः षण्यस्वित्स्वत्सहः ।** (ञि-स्त्वोः ६॥, खेः ५।, सः १।, षः १।, षणि ७।, अ-स्विद्-स्वद्-सहः ६।)।

खेः परस्य ञान्त-स्तौत्योः सस्य षत्वभूते षणि षः स्यात्, न तु स्विद्-स्वद्-सहां । सुष्वापयिषति तुष्टूषति । ञिस्त्वोः किं, सिसिक्षति । षणीति किं, तिष्ठासति । खेः किं,प्रतीषिषति ।†

इति सनन्त-पादः ।

---

* उश्च इश्च वौ, तौ उङौ यस्य स व्युङ तस्मात् । नास्ति व (वकारान्तः) यत्र सः अव तस्मात् । इकारोकारोङ्-अर्थ्यमकारान्त-धातोरभावात् अत्र व इति दन्त्य एव । हस-आदि र्यस्य तस्मात् । इमा सह वर्त्तमानः सेम् तस्मात् । क्त्वाच इति चकारेण प्रकरणवशात् सन् आकृष्यते । रोचितुमिच्छति रुच-सन्-इम, अनेन सनः कित्वे गुणाभावः, रुचिष इत्यस्य द्वित्वादि । पक्षे गुणे रोचिष इत्यस्य द्वित्वादि । एवं लेखितुमिच्छति । रोदितुमिच्छति वेदितुमिच्छति मोषितुमिच्छतीति त्रिषु नित्यं सनः कित्त्व ; क्त्वाचि रुचित्वा रोचित्वा इत्यादि । देवितुमिच्छतीत्यत्र वान्तत्वात् न कित्त्व । एवं देवित्वा । पाणिनिः १।२।८,२६ ।

† षत्वप्राप्तौ नियमोऽयं । षत्वभूते षणि खिनिमित्तकं मूलधातोः षत्वं ञान्त-स्तौत्योरेव स्यात् नान्यस्येत्यर्थः । अषत्वभूते सनि, तथा खेरन्यस्मात् षत्वभूते षण्यपि पूर्व्वनियमो बलवानिति । स्विद-स्वद-सहां ञान्तानामेव निषेधः । स्वापयितुमिच्छति,

## ३य पादः—यङन्तः।

**८२०। मूत्र सूत्र सूचाटश्चर्त्त्यूर्णु हसाद्येकाचो ऽशुभरुचो मुहुर्भृशार्थे यङ्।**

(मूत्र—एकाचः ५।, अशुभरुचः ५।, मुहुर्भृशार्थे ७।, यङ् ।१।)।

एभ्यः शुभरुचवर्जेभ्यो यङ् स्यात् पौनःपुन्ये अतिशये चार्थे। *

**८२१। गत्यर्थाद् गृ लुप सद चर जप जभ दनश दहो वक्रगर्हे।** (गत्यर्थात् ५।, गृ—दहः ५।, वक्रगर्हे ७।)।

गत्यर्थात् वक्रे, गादे गर्हायां, यङ् स्यात् नतु पूर्व्वोक्तौ, तद्युक्तौ तु स्यात्। †

---

स्वप-जि-सन्, स्वापयिस इत्यस्य द्वित्वं, (६४७) खे जिः, (१११) सनः सस्य मूलधातोश्च षत्वं। स्तोतुमिच्छति स्तु सन् (८०५) दीर्घः, स्तूस इत्यस्य द्वित्वं, उभयत्र षत्वं। सेक्तुमिच्छति सिच-सन् (२११) कुङ्, सिक्स इत्यस्य द्वित्वं, (१११) सनः सस्य षत्वं, ञ्यन्त-स्तु-भिन्नत्वात् मूलस्य न षत्वं। एवं सुसूषतीत्यादि। स्थातुमिच्छति स्था-सन् स्थास इत्यस्य द्वित्वादौ, निमित्ताभावात् सनः षत्वाभावं, एतन्नियमवहिर्भूतत्वात्, (१११) मूलस्य षत्वं। प्रत्येतुमिच्छति प्रति-इ-सन्, (७१९) इकारं द्वित्वा केवलं सन एव द्वित्वे, (६४०) खेरित्वे, सनः सस्य षत्वे, मूलधातुनिमित्तकं खेः सस्य षत्वं स्यादेव, अत्र खेः परस्थितमूलधात्वभावादेतन्नियमप्रवेशानवकाशः। स्विदादेस्तु सिस्विदयिषतीत्यादौ न षत्वं। पाणिनिः ८।३।६१,६२।

---

* हसादिश्चासौ एकाचेति हसाद्येकाच्। मूत्रश्च सूत्रश्च सूचश्च अटश्च अशश्च अर्त्तिश्च ऊर्णुश्च हसाद्येकाचेति तस्मात्। न विद्येते शुभरुचौ यत्र तस्मात्। मुहुश्च भृशश्च मुहुर्भृशौ तयोरर्थं तस्मिन्। हसाद्येकाच इति सामान्यग्रहणात्, मूत्रसूत्रसूचाना-मदन्तत्वेन अनेकाचत्वात् अट अश अर्त्ति ऊर्णूनाञ्च अजादित्वात् अप्राप्तौ पृथगुक्तिः। यङो ङानुबन्धः अगुणार्थ. आत्मनेपदार्थश्च, अदन्त-य-स्थितिः। पाणिनिः ३।१।२२, वार्त्तिकं भाष्यञ्च।

† गृश्च लुप च सद च चर च जप च जभ च दनश च दह च तस्मात्। वक्रश्च

## ८२२ । खेर्णुः । (खे: ६।, णु: १।) ।

यङि परे खेर्णुः स्यात् । पुनः पुनरतिशयेन वा मूत्रयति मोमूत्र्यते, सोसूत्र्यते सोसूच्यते । *

## ८२३ । र्घोऽनितः । (र्घ: १।, अ-नित: ६।) ।

अ-नकारेतः खेः र्घः स्यात् यङि । अटाट्यते अशाश्यते अरार्य्यते ऊर्णोनूयते ।† देदीयते मेमीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते । ‡

---

गर्हा च वक्रगर्हं तस्मिन् । गत्यर्थादिति गृलुपादेरिति च पृथक् पदकरणं वक्रगर्हाभ्यां यथासङ्ख्यार्थं, तेन गत्यर्थात् वक्रे गादे गर्हायामिति । न तु पूर्व्वोक्ते इति एभ्यो मुहुर्भृशार्थे न स्यात्, तद्युक्ते मुहुरर्थेन भृशार्थेन वा युक्तयो र्वक्रगर्हयोस्तु स्यादित्यर्थः । अत्र गत्यर्थादिति हसाद्येकाच एव, पूर्व्वसूत्रे सामान्यतो ग्रहणात् । पाणिनिः ३।१।२३,२४ ।

* पुनःपुनरतिशयेन वा इत्यत्र क्रियाविशेषणे तृतीया ।° मूत्रत् क प्रस्रावे, मूत्र-धातोश्चुरादित्वात् ञिः (७७५) अकारलोपे, मूत्रिधातो र्यङ् (६४१) ञिलोपः, मूत्र्य इत्यस्य (६३२) द्वित्वं, खेरादचो लोपे, अनेन गुणे, मोमूत्र्य इति (६३१) धातु-सज्ञायां, यङो ङित्त्वादात्मनेपदं घे शप्, (५४३) यङोऽकारलोपः मोमूत्र्यते इति । एवं सूत्रत् क सोसूत्र्यते, सूचत् क सोसूच्यते । पाणिनिः ७।४।८२ ।

† न इत् येषां ते नितः (नीन् नुन् रीन्), न विद्यन्ते नितो यस्य सोऽनित् तस्य, खेरित्यस्य विशेषणं । अटाट्यत इति, अट गतौ, पुनःपुनरतिशयेन वा वक्रं अटति, (केवलं) वक्रं अटतीति वा, इत्यर्थे अट-यङ् अट्य इति, (७१६) अकारं हित्वा ट्य इत्यस्य द्वित्वं, खेरादच इति यकारलोपे, अनेन अकारस्य दीर्घः । एवं पुनःपुनरश्नाति, अशाश्यते । पुनःपुनर्वक्रं ऋच्छति इयर्त्ति वा अरार्य्यते, ऋ-यङ् (६१५) गुणः, अर्य्य इत्यस्य अकारं हित्वा, (७२०) अ-ये इति कथनात् र्य्य इत्यस्य द्वित्वे, खेरादच इति य-लोपे अरर्य्य इत्यस्य अनेन खेर्दीर्घः । पुनःपुनरूर्णोति ऊर्णु-यङ् (५६०) दीर्घः ऊर्णूय इत्यस्य (७१६, ७२०) ऊं रञ्च हित्वा णूय इत्यस्य द्वित्वं, खेर्णुः, रेफसम्बन्धाभावात् मूलधातो-र्नकारस्य दन्त्यत्वं । पाणिनिः ७।४।८३ ।

‡ हसाद्येकाच उदाहरणान्याह पुनःपुनर्ददाति दा-यङ् (६१२) ङौ, दीय इत्यस्य

शोशूयते शेश्वीयते, सास्मर्य्यते, चेक्रीयते सञ्चेस्क्रीयते, विसे-सिच्यते, यङ्लान्न षः । * वक्रं व्रजति वाव्रज्यते ।

**८२४ । ग्रो र लः ।** (ग्रः ६।, र ।१।, लः १।) ।

गिरते रो लः स्यात् यङि । गर्हितं गिरति जेगिल्यते । लोलु-प्यते सासद्यते । †

**८२५ । कोः स्तु र्वा ।** (कोः ६।, चुः १।, वा ।१।) ।

कोः खेश्चुः स्याद्वा यङि । चोकूयते, कोकूयते ।‡

**८२६ । नीन् वन्च स्त्रन्स ध्वन्स भ्रन्श कस पत पद स्कन्दां ।** (नीन् ।१।, वन्च—स्कन्दां ६।।।) ।

एषां खेर्नीन् स्यात् यङि । वनीवच्यते । §

---

द्वित्वादि । एवं पुनःपुनर्माति, गायति, जहाति, पिबति, स्यति, तिष्ठति । सो स्था इति द्वयो र्मूलस्य (१११) षत्वं ।

* पुनःपुनः श्वयति श्वि-यङ् (६६९) विकल्पेन जिः, (५९०) दीर्घं, शूय इत्यस्य द्वित्वादि, पक्षे श्वीय इत्यस्य द्वित्वादि । पुनःपुनः स्मरति स्मृ-यङ् (६१५) गुणः, स्मर्य्यं इत्यस्य द्वित्वादि । कृ-यङ् (४९७) ऋस्थाने री, क्रीय इत्यस्य द्वित्वादि । सं-कृ-यङ् (७६६) सुम कृते, (६१५) स्कुम् व्यामेवेति नियमात् न गुणः । वि-पूर्ब्बक सिच-यङ् विसेसिच्यते, (५७२) अत्र गि-निमित्तकं खिनिमित्तकमपि षत्वं न स्यात्, दशस्यादेर्द्वेश्च इति विधानवत् निषेधेऽपि तथा ।

† गॄश निगरणे, यङ् (६२८) ऋस्थाने इर्, अनेन र ल, गिल्य इत्यस्य द्वित्वादि । ग्रतौ गिरतेरिति कथनात् गृणाति जेगीर्य्यते इत्येव । गर्हितं लुम्पति लोलुप्यते, गर्हितं सीदति सासद्यते । पाणिनिः ८।२।२० ।

‡ मण्डूकगत्या खेरित्यस्यानुवृत्तिः । कु ङ शब्दे, पुनःपुनः कवते इति कु-यङ्, (५९०) दीर्घः, अनेन वा खेश्चु आदेशः । पाणिनिः ७।४।६३ ।

§ वन्चु गत्यां, स्रन्सु ॠङ भ्रंशे, ध्वन्सु ॡङ गतौ, भ्रन्श य ङ अधःपाते (ताल-व्यान्त, पाणिनिमते दन्त्यान्त.), कस ञ गतौ, पत ॡ ञ गत्यां, पद स्थैर्य्ये—पद्यौ ङ

**८२७। जम जप जभ दह दनश भनज पश शपो ऽतो नुन् लवयस्तु वा।**

(जम—शप: ६।, अत: ६।, नुन् ।१।, ल-व-य: ६।, तु ।१।, वा ।१।)।

जमन्तानां जपादीनाञ्च अदन्तस्य खे नुन् स्यात् यङि, लवयान्तस्य तु वा। जञ्जन्यते जाजायते।*

**८२८। हनो वा घ्नी।** (हन: ६।, वा ।१।, घ्नी ।१।)।

जेघ्नीयते जङ्घन्यते। जञ्जप्यते। चञ्चल्यते चाचल्यते, मम्भव्यते मामव्यते, दन्दय्यते दादय्यते।†

---

गतौ इति द्वयं, स्कन्दिरौ गति-शोषणयो: इति। नीगो न इत् अन्ते। अत्र पत लृ ज गत्यामित्यस्यैव ग्रहणं, पत्य ऐश्वर्ये इत्यस्य तु पापत्यते इत्येव, तेन (१११८) पापतिरिति स्वयमुदाहरिष्यति। वक्रं वञ्चति, वनुच-यङ् (५६७) न-लोपे, वच्य इत्यस्य द्वित्वे, अनेन खेर्नीन् वनीवच्यते, (८१३) नकारेत्त्वात् न दीर्घः। एवं सनीस्रस्यते, दनीध्वस्यते, बनीभ्रश्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते। पाणिनि: ७।४।८४।

* जम् प्रत्याहार:। जमश्च जपश्च जभश्च दहश्च दनशश्च भनजश्च पशश्च शपच तस्य। अत्र नुन: केवलं न इत् अन्ते, न तु उकार इत्, अतो नु-रनुस्वार:, अन्यथा यंयम्यते रंरम्यते इत्यादौ झसपरत्वाभावात् (५०) अनुस्वारो न स्यात्। येन विधिस्तदन्तस्येति न्यायात् ल-व-य इति लान्त-वान्त-यान्तानामित्यर्थ:। ल-य-मध्यपाठात् वकारोऽत्र दन्त्य:। पुन: पुनर्जायते जन-यङ् (६५५) ङा-आदेशस्य विकल्पपक्षे जन्य इत्यस्य द्वित्वं, अनेन खेर्नुन, (५१) अनुस्वारस्य नित्यं जम्। जौमरास्तु—अनुस्वारस्य दान्तत्वं परिकल्प्य (५२) वा जम् कुर्वन्ति (तिङन्तपादस्य ५६० सूत्रे गोयीचन्द्र:)। नकारेत्त्वात् (८२३) खे न दीर्घ:। जन-स्थाने (६५५) ङा-आदेशपक्षे जाजायते इति। एतत्सूत्रोदाहरणाय आदौ ङाभावपक्षो दर्शित:। पाणिनि: ७।४।८५,८६। अत्र शपधातुर्न दृश्यते।

† हन-धातु: घ्नी स्याद्वा यङि। पुन:पुनर्हन्ति हन-यङ्, घ्नीय इत्यस्य द्वित्वादि। विकल्पपक्षे हन्य इत्यस्य द्वित्वे, पूर्व्वेण खेर्नुन्, (६७९) खे: परस्य हस्य घ:। गर्हितं जपति जञ्जप्यते। एवं जञ्जभ्यते, दन्दह्यते, दन्दश्यते बम्भज्यते, पम्पश्यते शंशप्यते। वक्रं चलति, पुन:पुनर्भवति, वक्रं दयते, एतेषु पूर्व्वेण वा नुन्। नुन्पक्षे खे न दीर्घ:।
"हन्तेर्हिंसायां यङि घ्नीभावो वाच्य:" इति वार्त्तिकम्।

## ८२९ । चरफलोरुच्चोङो न णुः ।

(चर-फलोः ६॥, उत् ।१।, च ।१।, उङः ६।, न ।१।, णुः १।)।

चरफलोः खेर्नुन् स्यात् उङ उकारस्य यङि, तस्य च न णुः । चञ्चूर्य्यते पम्फुल्यते । *

## ८३० । रीनृत्वतः । (रीन् ।१।, ऋत्वतः ६।) ।

ऋकारवतो धोः खेः रीन् स्यात् यङि । नरीनृत्यते । †

## ८३१ । व्येस्वपस्यमो ञिः । (व्ये-स्वप-स्यमः ६।, ञिः १।) ।

एषां ञिः स्यात् यङि । वेवीयते सोषुप्यते सेसिम्यते । ‡

## ८३२ । न वशः । (न ।१।, वशः ६।) ।

वष्टे ञिर्न स्यात् यङि । वावश्यते । §

---

* खेर्नुन् इति अनुवर्त्तते, खेरुङोऽभावात् मूलधातोरुङ उकारस्य । यङ्लुकि प्रसक्तस्य गुणस्य निषेधार्थं न णुरित्युक्तं । वक्रं चरति चर्य्य इत्यस्य द्वित्वे खेर्नुन्, मूलधातौ रुङ उकारः (२२८) तस्य दीर्घः । पुनःपुनः फलति पम्फुल्यते । पाणिनि ७।४।८७,८८ ।

† ऋत् विद्यते यस्य स ऋत्वान् तस्य । ऋकारवत इत्यनेन यदा ऋकारस्थिति तदैव खेः रीन् स्यादित्यर्थः, तेन चेक्रीयते इत्यादौ (४९७) ऋकारस्य रीभावे न रीन्, यङ्लुकि तु चरीकर्त्तीत्यादौ स्यादेव । एवं ग्रह-प्रच्छ-व्रश्चादीनां (६६१) ञौ कृते ऋकारवत्त्वात् रीन् स्यात्, तेन जरीगृह्यते परीपृच्छ्यते वरीवृश्च्यते इत्यादि । पुनःपुन नृत्यति नृत-यङ् नृत्य इत्यस्य द्वित्वे खेः रीन्, क्षुभ्नादित्वात् णत्वाभावः । एवं दरीदृश्यते इत्यादि । पाणिनिः ७।४।९०, वार्त्तिकञ्च ।

‡ (६६१) स्वपादेः किति ञिरिति नियमादप्राप्तौ विधिरयं । अनिष्टत्वात् खेरित्यस्य नानुवृत्तिः । व्ये ञ वृतौ, स्वप षलु शयने, स्यमु ध्वाने, पुनःपुनर्व्ययतीत्यादि वाक्यानि । व्ये यङ्, अनेन ञिः, (५९०) दीर्घः, वीय इत्यस्य द्वित्वादि । स्वप-यङ ञिः सुप्य इत्यस्य द्वित्वादि, (१११) षत्वं । स्यम यङ् ञिः सिम्य इत्यस्य द्वित्वादि पाणिनिः ६।१।१९ ।

§ ग्रहादित्वात् प्राप्तौ निषेधः । वश ल कान्तौ, पुनःपुन र्वष्टि । पाणिनिः ६।१।२०

८३३। चायः की। (चायः ६।, की ।१।)।

चायतेः की स्यात् यङि। चेकीयते। *

८३४। घ्राध्मो ङी। (घ्राध्मोः ६॥, ङी ।१।)।

जेघ्रीयते देध्मीयते। †

८३५। श्रीङो ङय् येऽणौ।

(श्रीङः ६।, ङय् ।१।, ये ७।, अणौ ७।)

शाशय्यते। ‡

---

यङ्लुगन्तः।

८३६। यङो लुगवापो लुक् पं द्वि णुरादि च धूक्तान्तु वाऽनि तु नित्यं नोतः।

(यङः ६।, लुक् ।१।, वा ।१।, अपः ६।, लुक् ।१।, पं १।, द्विः १।, णुरादि ।१।, च ।१।, धूक्तं १।, तु ।१।, वा ।१।, अनि ७।, तु ।१।, नित्यं १।, न ।१।, उतः ५।)।

यङो लुक् स्याद्वा, लुकि सति अपो लुक् पं द्वित्वं खेर्णुरित्यादि कार्य्यञ्च स्यात्, धुग्रहणात्तान्तु वा स्यात्, अनि तु नित्यं लुक् स्यात्, उदन्तात्त्वनि न स्यात्। §

---

* पाणिनिः ६।१।२१।

† ङी इत्यस्य ङःइत् अन्त्यस्य स्थाने। पुनःपुन र्जिघ्रति, पुनःपुनर्धमतीति वाक्ये। पाणिनिः ७।४।३१।

‡ श्री धातो र्ङय् स्यात् अणौ ये, ङित्त्वादन्त्यस्य स्थाने, अय्-स्थितिः। अणौ ये इति कथनात् कर्म्मणि वाच्ये यक् शय्यते, क्त्वाचः स्थाने यप् संशय्य, क्यप् शय्या इति। पुनःपुनः शेते, श्री-यङ्, ङय् शय्य इत्यस्य द्वित्वादि। पाणिनिः ७।४।२२।

§ यङो लुक्-करणेन त्यलोपे त्यलक्षणमिति न्यायप्राप्त-कार्य्यस्य लुकि न तन्नेति निषेधात् (४९७) यङ्यक्ये चर्द्रीति, (६१५) स्यादयर्त्यृतो णुरिति, (५६७) हस्युङ्नी-

बोभवीति बोभोति, बोभूतः बोभुवति। अबोभवीत् अबोभोत् अबोभूतां अबोभुवन्, अबोभूत् अबोभुवीत्, बोभुवाञ्चकार। *

वनीवञ्चीति वनीवङ्क्ति, वनीवक्तः, वनीवचति। जङ्गमीति जङ्गन्ति, जङ्गतः, जङ्ग्मति जङ्गमति; जङ्गमीमि जङ्गन्मि, जङ्गन्वः, जङ्गन्मः। जङ्घनीति जङ्घन्ति, जङ्घतः, जङ्घ्नति जङ्घनति। †

---

लोप इत्यादीनि न स्युः, यङन्तत्वेन विहितं कार्य्यं स्यादेव, तेन धातुसंज्ञा व्यामाम् च स्यात्। खादि-कार्य्यस्य यङि परे विहितस्य लुकि न तत्रेति निषेधादप्राप्तौ वचनं। धुग्रहणोक्तमिति, यत्र क्वचित् सूत्रे धातुविशेषग्रहणपूर्व्वकं यत् कार्य्यमुक्तं तद्वा स्यादिति। अनि तु इति (९९३) पचादित्वादनि कृते तस्मिन् परे नित्यं यङो लुक् स्यात्, ह्रस्वोदन्तधातोस्तु अनि परे न लुक् स्यात्। पाणिनिः २।४।७४, भाष्यञ्च।

तिपा शपानुबन्धेन निर्द्दिष्टं यत् गणेन च। यत्रैकाच्-ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि। आचार्य्या यङ्लुकोऽच्छन्ति सेट्कत्वमनिटामपि॥ इति प्राचीनवचनमपि स्मरणीयं। (६८६) वेत्तेरित्यादौ तिपा निर्द्दिष्टत्वात्, (५७३) स्वर इति शपा, (७१०) शीङ इति अनुबन्धेन, (६९५) रुद्रा इत्यादौ गणेन, (५७६) एकाचो वक्तव्यत्वात्, तत्तत् कार्य्यं न स्यादिति। अनिटां सेट्कत्वं (८४१) बेभिदिता इत्यादौ।

* पुनःपुनर्भवति यङ्लुकि, भू-यङ तस्य लुक्, द्वित्वं खे गुणः, बोभू इत्यस्य धातुसंज्ञायां तिप्, शप् तस्य लुक्, (७२२) ईम्, गुणः, बोभवीति। ईमो विकल्पपक्षे गुणः, बोभोति। एवं सर्व्वत्र। बोभू-तस्, ङित्त्वात् न गुणः। अन्ति (६९७) अन्त्-स्थाने अत, (५८८) उव्, बोभुवति। धी-दिप् (७२२) ईम वा, अबोभवीत्, अबोभोत्, धी-तां अबोभूतां, धी-अन, (५६३) भूवर्जनात न उम्, (५८८) उव, अबोभुवन्। टी-दि (५५२) धुग्रहणोक्तत्वात् वा सिलोपः अबोभूत्, पक्षे अबोभुवीत्, (८४१) अरे गुणनिषेधात् उव्। ठौ णप् (५८२) त्यान्तादाम उप्, ततः (५८३) कृप्रयोगः।

† वन्च-यङ्लुक्, द्वित्वादि, (८२६) खे नीन् वनीवञ्च-धातोस्तिप्, ईम। ईमो विकल्पपक्षे (२११) कुङ्, (५०,५१) नस्यानुस्वारे अनुस्वारस्य ङ्। तस्, (५६७) न-लोपः। अन्ति, (६९७) अन्तस्थाने अत्, न-लोपः। गम-यङ्लुक् (८२७) खे नुन् जङ्गमधातुः, ततस्तिप् वा ईम। पक्षे मस्यानुस्वारे तस्य न। तस् (६७६) उमलोपः। अन्ति (२३०) धुग्रहणोक्तत्वात् वा उङ्लोपः, अन्त अत्। मिप् ईम वा, पक्षे (२०२) गमो म-स्थाने न। वस् मस् उभयत्र मस्थाने न। हन-यङ्लुक् गमवत्, अधिकन्तु (६७९) हस्य घ।

चञ्चुरीति चञ्चूर्त्ति। चाखातः चङ्खन्तः, चङ्खति चङ्खनति। जाजातः जञ्जन्तः जञ्जति जञ्जनति। देदिवीति देद्योति देदेति, देद्यूतः देदितः, देद्युवः देदिवः। वेविच्छीति वेवेष्टि, वेविश्वः वेविच्छुः। *

**८३७। ह्राकः खे र्न घैः।** (ह्राकः ६।, खे. ६।, न।१।, घैः १।)।

जहेति जह्राति। †

**८३८। दन्शो न-लोपो वा।**

(दन्शः ६।, न-लोपः १।, वा।१।)।

दन्दशीति दन्दंशीति दन्दष्टि दन्दंष्टि। ‡

**८३९। जि र्न वा।** (जिः १।, न।१।, वा।१।)।

---

* चर-यङ्लुक् (८२९) खे र्नुन् उङ उकारस्य, तेनैव गुणनिषेधः, ईमोऽभावपक्षे (२२८) उकारस्य दीर्घः। खन-यङ्लुक्, तस् (६५५) धूक्तत्वात् वा ङादेशे, अमन्तत्वाभावात् खे र्न नुन्, (८२३) दीर्घः। पक्षे अमन्तत्वात् खेर्नुन्। अन्ति (२७०) वा उङ्लोपः, अन्त अत्। आगमादेशयोर्मध्ये बलीयानागमो विधिरिति न्यायात् तिप् सिप् प्रभृतिषु आदौ (७२२) ईमि ङादेशाभावे चङ्खनीति चङ्खनीत्यादि. ईमो-विकल्पपक्षेऽपि पिति झसे परे निषेधात् न ङा इति बोध्यं। जन-यङ्लुक् खनवत्। दिव-यङ्लुक् देदिव धातुः तिपि देदिवीति(७३४) निषेधात् न गुणः। ईमो विकल्पपक्षे (८१४) वस्थाने ऊट्, तस्य गुणः। ऊटो विकल्पपक्षे (६४२) वलोपः, ततो गुणः। तस् वस् उभयत्र वा ऊट्, पक्षे वलोपश्च। विच्छ-यङ्लुक् वेविच्छ-धातुः, तिप्, ईमो वकल्पपक्षे (८१४) छस्य शः, गुणः, (१५४) षङ्। वस्, वा छस्य शः।

† ह्राकधातोः खेः घौ न स्यात् वा यङ्लुकि। (८२३) घौऽगित इति प्राप्त-दीर्घस्य निषेधोऽयं। जहेति (७२२) ईम्, सन्धिः। सिद्धान्तकौमुदीमते तु न दीर्घनिषेधः, तेन जाहेति जाहाति इति।

‡ दन्श-धातो र्नकारस्य लोपः स्याद्वा यङ्लुकि। दन्दशीतीति ईम्पक्षे वा नकारलोपः, अनीम्पक्षेऽपि वा नकारलोपः। (८२७) खेर्नुन्, अनिम्पक्षे (१५४) षङ्, (४७) तस्थाने ट। पाणिनिः ७।४।८६, अत्र सूत्रे नित्यम्।

सास्वपीति सोषुपीति सास्वप्ति सोषोप्ति । *

## ८४० । रीनो रिन्‌रनौ वा ।

(रीन: ६।, रिन्-रनौ १॥, वा ।१।) ।

रीन: स्थाने रिन्‌रनौ वा स्त: यङ्‌लुकि ।

चरिकरीति चर्करीति चरीकरीति चरिकर्त्ति चर्कर्त्ति चरीकर्त्ति । †

## ८४१ । यङ्‌लुक्‌क्यलोपेऽरे न गुवृौ ।

(यङ्‌लुक्-क्यलोपे ७।, अरे ७।, न ।१।, गु-वृौ १॥) ।

बेभिदिता मर्मृजिता । अरे किं, बेभेत्ति मर्मार्ष्टि । ‡

इति यङन्त पाद: ।

---

* यङ्‌निमित्तक एव जि र्न स्यात् वा यङ्‌लुकि, तेन (८३१) व्येस्वप्स्यमो जिरित्यस्यैव निषेध: । जिर्वेति कृते जिमात्रस्यैव विकल्पो लभ्यते । वस्तुतस्तु (६६१) ग्रहादेर्जि र्नित्यमेव । सोषुपीति सोषोप्ति उभयत्र आदौ जि: पश्चात् द्वित्वादि । सोषुपीतीत्यत्र (७३४) गुणनिषेध: । एवं व्ये—वाव्येति वेवयीति वाव्याति वेवेति स्यम—संस्यमीति सेसिमीति संस्यन्ति सेसेन्ति । पाणिनिमते नित्यम् ।

† सूत्रत्वात् णत्वाभाव: । अत्र वा-ग्रहणं परत्र निवृत्त्यर्थं । रीन: स्थाने इति रीन उत्पत्तिस्थाने इत्यर्थ:, अन्यथा नित्त्वात् रीनोऽन्ते रिन्‌रन्‌प्रसक्ति: स्यात् । रनोऽकार उच्चारणार्थ: । कृ यङ्‌लुक्, ईम्‌पक्षे रिन्‌रन्‌रीन्, अनीम्‌पक्षेऽपि रिन्‌रन्‌रीन्, अतएव षट् पदानि ; एवं वृत—वरिवृतीति वर्वृतीति वरीवृतीति वरिवर्त्ति वर्वर्त्ति वरीवर्त्ति इत्यादि । ऋधातोस्तु अरियरीति अररीति अरियर्त्ति अरर्त्ति, अत्र (५८५) असमानवर्णे परे स्वेरिय । पाणिनि: ७।४।९१,९२ ।

‡ यङ्‌लुक् च क्यलोपश्च तस्मिन् । यङोलुकि क्यलोपे च सति अरे गुवृौ न स्याताम् । पुन:पुनरतिशयेन वा भेत्ता बेभिदिता, बेभिद्-डी ता (५५४) इम्, अनेन गुणनिषेध: । पुन:पुनर्मार्जिता मर्मृजिता, पूर्व्वसूत्रेण खे: रन्, मर्मृज-डी ता, इम्, (९९४) मृजोऽकङितीत्यनेन प्राप्तौ अनेन वृद्धिनिषेध: । क्य-लोपे तु (८४५) समिधिता इत्यादि । कौमरास्तु यङ्‌लुगन्तेभ्यो ञौ कृते विकल्पेन वृद्धिं कुर्व्वन्ति, बोभावयति बोभुवयतीत्यादि (संक्षिप्तसारे तिङन्तपादे ४६०सूत्रे) । पाणिनि: १।१।४ ।

## ८४२। लेः काम्यक् स्वेच्छायां।

(लेः ५।, काम्यक् ।१।, स्वेच्छायां ७।)।

लेः परः काम्यक् स्यात् आत्मेच्छायां। आत्मनः पुत्रमिच्छति पुत्रकाम्यति।*

## ८४३। क्योऽम्व्यात् ई च।

(क्यः १।, अम्व्यात् ५।, ई ।१।, अः १।, च ।१।)।

मान्त-व्य-वर्जात् लेः क्यः स्यात् स्वेच्छायां, तस्मिन्नवर्णे ई स्यात्।†

ज्ञानीयति। (४२३) ओदौतोऽच्यदिति। गव्यति नाव्यति। (४८७) यङ्ङ्यक्ये इति। कर्त्रीयति। (२५८) क्यङ्यचौ च गार्गीयति।‡

---

* स्वस्य इच्छायाः कर्म्मभूतं यल्लिङ्गं यदि असमस्ताद्विशेषणात् आत्मभिन्न-सम्बन्धि-पदाद्वा उत्तरवर्त्ति न स्यात् तदा तस्मात् काम्यक् स्यादित्यर्थः, तेन महान्तं पुत्रमिच्छति इत्यादौ न स्यात्; समासे तु महापुत्रमिच्छति राजपुत्रमिच्छति इत्यादौ स्यादेवेति। काम्यकः कित्त्वात् आत्मनो मुक्तिमिच्छति मुक्तिकाम्यतीत्यादौ न गुणः। आत्मनः पुत्रमिच्छतीति वाक्यविन्यासात् द्वितीयान्तात् लेरिति बोध्यं, तेन आत्मनः पुत्र इष्यते इत्यत्र न स्यादिति। पुत्रकाम्यतीति पुत्रमिति द्वितीयान्तात् काम्यक्, (३१९) तौर्लुक् त्ये चेति त्ये परे तौर्लुकि, पुत्रकाम्य इति (६३१) धातुसंज्ञायां, तिप्-अपौ, (५४३) अकारलोपश्च। पाणिनिः ३।१।९।

† मश्च व्यश्च म्वौ, नास्ति म्वौ यत्र सोऽम्वास्तस्मात्। मकारान्तं अव्ययञ्च हित्वा अन्यस्मात् लिङ्गादित्यर्थः। अत्र चकारेण काम्यक् च स्यादिति सूचितं। तेन सर्व्वस्मात् लिङ्गात् क्यः काम्यक् च स्यात्, मकारान्तादव्ययाच्च केवलं काम्यगेवेति निष्कर्षः। क्यस्य क इत् अगुणार्थः, य-स्थितिः। पाणिनिः ३।१।८, ७।४।३३, वार्त्तिकञ्च।

‡ आत्मनो ज्ञानमिच्छति ज्ञानमित्यस्मात् क्यः, तस्मिन् परे अकारस्य ई, ज्ञानीय इति

## ८४४ । न-लोपः क्यङेत्र । (न-लोपः १।, क्य-ङेत्र ७।) ।

राजीयति । *

## ८४५ । हसात्तयोर्व्वारे ।

(हसात् ५।, तयोः ६॥, वा ।१।, अरे ७।) ।

हसात् परयोः क्य-ङ्रयोर्लोपः स्याद्वा अरे । समिधिता समिध्यिता । † अस्यात् किं, किंकाम्यति स्वःकाम्यति । ‡

---

धातुः । एवं पुत्रीयतीत्यादि । पूर्व्वसूत्रेण ज्ञानकाम्यतीत्यपि । अवर्णस्य ई-कथनात् कन्यामिच्छति, कन्यीयति अत्र आकारस्य ई । कन्याकाम्यतीति च पूर्व्वसूत्रेण । गामिच्छति गव्यति, नावमिच्छति नाव्यति, उभयत्र कास्य अव्वद्भावात् (३५) क्रमेण अव् आव् च । 'आत्मनः कर्त्तारमिच्छति, ऋस्थाने री,। एव धात्रीयति । गर्गस्यापत्यं गार्ग्यः गर्गशब्दात् ण्यः, ततः गार्ग्यमिच्छति, क्ये परे ण्यलोपः, अकार ईश्च ।

* नान्तस्य ले नकारलोपः स्यात् क्ये ङेत्र च परे । (११८) नोलुप फेऽधावित्यनेन विरामे परे नकारस्य लुपि कृते (१५) तदादिविधि र्न स्यादित्यतो लोपविधानं ।

एवञ्च क्यञ्योः मत्योः विरामविहितं किमपि कार्य्यं न स्यादित्यप्यनुसन्धेयं, तेन विद्वांसमिच्छति विद्वस्यति अत्र न (१८३) दङ् । लिहमिच्छति लिह्यति अत्र न (१७५) हस्य ढ । दुहमिच्छति दुह्यति अत्र न (१७६) हस्य घ । वाचमिच्छति वाच्यति अत्र न (२११) कुङ् । पुमांसमिच्छति पुंस्यति अत्र न (१९३) स्यान्तलुप् । नमः करोति नमस्यति अत्र न (१०२) विसर्गः । सर्पिरिच्छति धनुरिच्छति सर्पिष्यति धनुष्यति इत्यादौ न (२२७) रङ् । गिरमिच्छति गीर्य्यति धुरमिच्छति धूर्य्यति इत्यादौ तु विरामविहितत्वाभावात् (२२८) इको दीर्घः । पाणिनिः ८।२।७ ।

राजानमिच्छति पूर्व्वसूत्रेण क्यः, अनेन न-लोपः, ततः पूर्व्वेण अकारस्य ईः ।

† विभक्तिपरिणामेन क्य-ङ्रयोरनुवृत्तिः । समिधमिष्टा इति वाक्ये क्यः, समिध्य धातुः, डी-ता, (५५४) इम्, अनेन वा क्यलोपः । एवं दृषदमिष्टा दृषदिता दृषद्यिता । हसात् किं, ज्ञानीयिता । अरे किं, समिध्यति । पाणिनिः ६।४।५० ।

‡ (८४३) क्योऽस्यादित्यस्य प्रत्युदाहरणमाह—किमिच्छति स्वरिच्छति, उभयत्र पूर्व्वेण काम्यक् । एवं उच्चैःकाम्यतीत्यादि ।

## ८४६। धनोदकाशन-वृषाश्वले ग्रहपानान्न-जाभार्थे ङा डनङ् ङा सन् सनसनौ क्ये न षः।

(धन—लेः ६।, ग्रह—अर्थे ७।, ङा ।१।, डनङ् ।१।, ङा ।१।, सन् ।१।, सन्-असनौ १॥, क्ये ७।, न ।१।, षः १।)।

धनस्य ग्रहणे ङा, उदकस्य पाने डनङ्, अशनस्य अन्ने ङा, वृषाश्वयोर्जाभे सन्, लेरर्थे काम्ये सन् असन् च स्यात्, क्ये—सः षो न स्यात्। *

धनायति उदन्यति अशनायति वृषस्यति अश्वस्यति, दधिस्यति दध्यस्यति। ग्रहादौ किं, धनीयति। †

---

* वृषश्च अश्वश्च वृषाश्वं, धनञ्च उदकञ्च अशनञ्च वृषाश्वञ्च लिश्चेति तस्य। ग्रहश्च पानञ्च अन्नञ्च (भक्षणं) जाभश्च अर्थश्च तत्तस्मिन्। सन् च असन् च सनसनौ। धन-शब्दस्य ग्रहणे काम्ये ङा, ङात् अन्त्यस्य स्थाने, उदकस्य पाने काम्ये डनङ्, डङौ, इतौ अन स्थितिः, अशनस्य भक्षणे काम्ये ङा, वृषाश्वयो र्जाभे काम्ये सन्, न· इत् अन्ते, जाभो मैथुनं, एतद्भिन्न-लिङ्गस्य अर्थे काम्ये सन् असन् च स्यात्, क्ये परे इति सर्व्वत्र योजनीयं। क्ये परे इति कथनात् इच्छाप्राप्तौ, पुनर्व्वत्तो काम्ये इति कथनात् अति-तृष्णायामित्यर्थो बोध्यः। सः षो न स्यादिति एतत् सनादेशस्यैव, तेन धनुष्यति सर्पिष्यतीत्यादौ षत्वं स्यादेव। सर्व्वत्र कर्म्मकारकादेव स्यादिति। पाणिनिः ७।४।३४, ७।१।५१, वार्त्तिकं काशिका च।

† धनं ग्रहीतुमिच्छति·धनायति ङा, धनशब्दस्यार्थसङ्कोचनं प्राचीनानां मतं, तेन वस्त्रं धनायतीत्यादिप्रयोगः। उदकं पातुमिच्छति डनङ्, डित्त्वात् उदकशब्दस्य अन्त्यस्य अकारस्य स्थाने डन्, डित्त्वात् उदक इत्यस्य (१२६) टेः अक्भागस्य लोपः, उदन्य-धातुः। अशनं (अन्नादि) भोक्तुमिच्छति ङा, अत्रापि अर्थसङ्कोचे अशनायति पायसम् इत्यपि प्रयोगः। वृषोऽत्र शुक्लः पुरुषः, वृषं अश्वं वा जभ्यं (सङ्गमयितुम्) इच्छति; अत्र च अर्थसङ्कोचेन, पुरुषं वृषस्यतीत्येव प्रयोगः। दधि इच्छति सन् असन् च, न षत्वं। अत्र लिङ्गस्य अर्थे काम्ये इति कथनात् नैव अर्थसङ्कोचः, तेन दध्यस्यति तक्रं इति न स्यात्। एवं क्षीरस्यति लवणस्यतीत्यादि। आदौ दधिशब्दो-दाहरणेन अकारान्तभिन्नस्य लिङ्गस्येति कश्चित्। अतितृष्णाया किं, दधीयतीत्यादि। ग्रहणादौ किं, (भविष्यतीति शेषः), धनमिच्छति धनीयति, एवं उदकीयति, अशनी-यति, वृषीयति, अश्वीयति।

## ८४७। ढङोपमानादाचारे क्यः।

(ढ-ङोपमानात् ५।, आचारे ७।, क्यः १।)।

ढात् ङाच्चोपमानात् क्यः स्यादाचारेऽर्थे। शिवमिवाचरति शिवीयति विष्णुं, विष्णाविवाचरति विष्णूयति शिवे। *

## ८४८। घान्ङ्यक्वौ सलोपश्च वा गल्भ-क्लीव-होढात्तु मं।

(घात् ५।, ङ्य-क्वौ १॥, स-लोपः १।, च ।१।, वा, ।१।, गल्भ-क्लीव-होढात् ५।, तु ।१।, मं १।)।

घादुपमानादाचारेऽर्थे ङ्य-क्वी स्तः, सस्य च वा लोपः, गल्भादेस्तु क्वावपि मं। कृष्ण इवाचरति कृष्णायते कृष्णति, स्वायते स्वति, स्वामास (५८२) त्यान्तत्वादाम्। पयायते पयस्यते। गल्भायते गल्भते। †

---

* ढश्च ङश्च ढङं ढङश्च तदुपमानञ्चेति ढङोपमानं तस्मात्। उपमानवाचकात् कर्म्मपदादधिकरणपदाच्च क्यः स्यात् आचारेऽर्थे। विष्णुं शिवमिव आचरति, शिवे विष्णौ इव आचरति, उभयत्र क्यः, (८४३) अकारस्य ई, विष्णूयतीत्यत्र (५९०) दीर्घः। काम्यक्प्रभृतीनां कित्करणात् धातुविहितं कार्य्यं लिधौ अपि स्यादिति बोध्यं। आधिकरणोपमानस्य क्ये परे न-लोपो न स्यादिति वक्तव्यं,तेन राजनि इवाचरति राजन्यति गुरौ। राजानमिवाचरतीत्यत्र राजीयतीत्येव। पौरीदीयन्तीत्यादि पदम् आत्मानं पौरीदमिवाचरन्तीत्यादि वाक्ये कर्म्मोपमानात् क्ये साध्यं। पाणिनि. ३।१।१०, वार्त्तिकञ्च।

† क्वचिदेकदेशस्येति न्यायात् उपमानादित्यनुवृत्य, सम्भवत्यामसत्येन मित्याकाङ्क्षेण सङ्गतिरिति न्यायात् घादित्यनेन सम्बन्धः। ङ्ये कृते ङित्त्वादात्मनेपदं, क्वौ कृतेऽपि गल्भादेरात्मनेपदं विधीयते। कृष्णायते इति (५९०) घोंऽजय्ये इति दीर्घः। एवं हरीयते विष्णूयते। (४९७) पित्रीयते। (४२३) गव्यते नाव्यते। (२५९) गार्गायते। (८४४) राजायते दण्डीयते। (३२७) विदुषीवाचरति विद्वस्यते, सतीवाचरति सत्यते, सुन्दरीवाचरति सुन्दरायते, गुणीवाचरति स्वायते इति। कृष्णतीति क्विः, क इत् अगुणः इकार उच्चारणार्थः, ततः (४९६) वकारमात्र प्रत्ययस्य

## ८४६। भृशादेश्च्व्यर्थे ङा त-स-लोपश्च।

(भृशादेः ५।, च्व्यर्थे ७।, वा ।१।, त-स-लोपः १।, च ।१।)।

भृशादेश्च्व्यर्थे ङ्य-क्वी वा स्तः, तस्मिन् त-स-लोपश्च। भृशायते भृशति भृशीभवति। चेतायते शश्वायते वेहायते। *

## ८५०। डाज् लोहितादेः पञ्च।

(डाच् लोहितादेः ५।, पं १।, च ।१।)।

डाजन्तात् लोहितादेश्च च्व्यर्थे ङ्य-क्वी वा स्तः पञ्च। पटपटायते पटपटायति पटपटाति पटपटास्यात्। लोहितायते

---

लोपः। तदन्तत्वेन क्रमा इति (६३१) धातुसंज्ञा, तिप् शप्, (५४३) अकारलोपः। एवं हरि-रिवाचरति क्वि. हरयति, एवं विष्णवति पितरतीत्यादि। स्व इवाचरति ङ्यः स्वायते, क्वि: स्वति। स्व इवाचचार क्वि: (५८२) स्वामास। पय इवाचरति ङ्यः, वा सलोपश्च। ओजायते अप्सरायते दुर्म्मनायते एतेषु नित्य सलोपो वक्तव्यः। गल्भ इवाचरति ङ्यः क्विश्च, उभयत्रात्मनेपदं। एवं क्लीवायते क्लीवते, होढायते होढते। गल्भोऽहङ्कारी, क्लीवो नपुंसकः, होढ़ लोप्त्रं। पाणिनिः ३।१।११, वार्त्तिकञ्च।

* भृश आदि र्यस्य स तस्मात्। च्वेरर्थश्चार्थः अभूततद्भावः तस्मिन्। तश्च सश्च तौ तयो र्लोपः तसलोपः। वृत्तौ तस्मिन् इति ङ्ये क्वौ च परे त स लोपो नित्य इत्यर्थः। अभृशो भृशो भवति ङ्यः भृशायते, क्वि: भृशति, पक्षे (४६५) च्विः भृशीभवति। एवं अचेतश्चेतो भवति चेतायते ङ्यः, सलोपः, (५६०) दीर्घः। क्वि: चेतति, पक्षे चेतीभवति अत्र (४६८) सलोपः। अशश्वत् शश्वत् भवति ङ्य-क्वी, शश्वायते शश्वति, उभयत्र तलोपः, पक्षे शश्वद्भवति। एवं अवेहत् वेहत् भवति वेहायते वेहति वेहद्भवति (वेहत् गर्भोपघातिनी गौः)। भृशादिश्च—भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् ओजस् तेजस् रहस् सुरजस् वर्च्चस्, डाच्प्रत्ययान्त, लोहित धर्म्म हरित नील मन्द फेन भद्र मल्ल वर्म्मन् निद्रा कृपा करुणा इति द्वात्रिंशत्। अत्र निद्रादिशब्दो धर्म्मवचनोऽपि शब्दशक्तिस्वभावात् धर्म्मिवचन एव, तेन निद्रायते जनः अनिद्रावान् निद्रावान् भवतीत्यर्थः। पाणिनिः ३।१।१२।

लोहितायति लोहितति लोहितीस्यात्, धर्म्मायते धर्म्मायति धर्म्मति धर्म्मीस्यात्। *

## ८५१। शब्दसुखकष्टादेः कृतिवेदपापे ङ्यः।

(शब्द सुख-कष्टादेः ५।, कृति-वेद-पापे ७।, ङ्यः १।)।

शब्दादेः कृतौ सुखादेरनुभवे कष्टादेः पापार्थे प्रवृत्तिरित्यस्मिन्नर्थे ङ्यः स्यात्। शब्दं करोति शब्दायते, वैरायते। सुखमनुभवति सुखायते, दुःखायते। कष्टं कर्म्म करोति कष्टायते। †

## ८५२। वाष्पोष्मफेनधूमादुद्वान्तौ।

(वाष्प—धूमात् ५।, उद्वान्तौ ७।)।

वाष्पायते उष्मायते फेनायते धूमायते। ‡

---

* यद्यपि (५०१) सम्पद्यति कृभ्वस्तिषु परेषु डाच् विहित-स्तथापि अत्र डाजन्तात् ङ्यक्विविधानसामर्थ्यात् ङ्य-क्वि-विषयेऽपि डाच् स्यादिति वक्तव्यं। पश्चेति चकारेण ङित्वात् प्राप्तनात्मनेपदमपि स्यादिति सूचितं। अपटत् पटत् स्यात् इति वाक्ये ङ्यविषये डाचि द्विर्भावादौ पटपटा इति डाजन्तात् ङ्य आत्मनेपदं परस्मैपदञ्च, क्विः पटपटाति, विकल्पपक्षे च्विः। एवं अलोहितो लोहितो भवति, अधर्म्मो धर्म्मो भवति। लोहितादिश्च—भृशादिशेषा लोहितादयो द्वादश। पाणिनिः ३।१।१३,१।३।९०।

† शब्दश्च सुखञ्च कष्टञ्च तत् आदि यस्य तस्मात्। कृतिश्च वेदश्च पापञ्च तस्मिन्। वेद इति विद ल ज्ञाने इत्यस्य अलि रूपं। पापार्थे पापजनक कर्म्मणि। कष्टं कर्म्म करोति कष्टजनक-कर्म्म कर्त्तुं प्रवर्त्तते इत्यर्थः। शब्दादिः—शब्द वैर प्रतीपाभ्र कन्दनीहारदुर्द्दिनाः, कलहः सुदिनं मेघः कोटा अट्टा अटा तथा, सीका सोटा च पोटा च मुष्टा शब्दादिरीरितः। सुखादिश्च—सुखं दुःखञ्च तृप्तञ्च कृपणः करुणस्तथा, प्रतीपालीकसोढास-कृच्छ्राश्राद्याः सुखादयः। कष्टादिश्च—कष्टञ्च सत्त्रो गहनञ्च कक्षः कृच्छ्रञ्च कष्टादिषु पञ्च शब्दाः। पाणिनिः ३।१।१४,१७,१८।

‡ एभ्यो ङ्यः स्यादुद्वान्तौ ऊर्द्धनिःसारणे इत्यर्थः। पाणिनिः ३।१।१६, वार्त्तिकञ्च।

**८५३। रोमन्थाच्चर्व्वणे।** (रोमन्थात् ५।, चर्व्वणे ७।)।

रोमन्थायते गौः। *

**८५४। नमस्तपोवरिवःकण्ड्वादिभ्यः क्यः कृतौ।**

(नमस्—कण्ड्वादिभ्यः ५।।, क्यः १।, कृतौ ७।)।

नमस्करोति नमस्यति, तपस्यति वरिवस्यति, कण्डूयति कण्डूयते, चित्रीयते, महीयते, हृणीयते। †

**८५५। लेः कृत्याख्याने ञिः।**

(लेः ५।, कृति-आख्याने ७।, ञिः १।)।

लेः परो ञिः स्यात् कृतावाख्याने च। प्रश्नं करोति आचष्टे वा प्रश्नयति, ऊढयति औडिढत्। औजिढदित्येके। (४६८) लुङ् मद्दिनामिति। ईश्वमन्तमाचष्टे ईश्वयति। सुग्वन्तमाचष्टे सुचयति। स्रग्विनमाचष्टे स्रजयति। ‡

---

* पूर्व्वस्मादुद्गान्तौ इत्यस्याप्यनुवर्त्तनम् बोध्यं, तेन उद्गीर्य्य-चर्व्वणे अर्थे रोमन्थात् ञः स्यादित्यर्थः। रोमन्थायते उद्गीर्य्यं चर्व्वयतीत्यर्थः। पाणिनिः ३।१।१५।

† नमस् च तपस् च वरिवस् च कण्ड्वादिश्च तेभ्यः। एभ्यः क्यः स्यात् कृतौ अर्थे। वरिवसशब्देन सेवा उच्यते। कण्ड्वादिगणमध्ये कण्डू-शब्दस्य आनुबन्धेन, चित्री मही हृणी शब्दानां ङानुबन्धेन च, (क्यप्रत्ययेऽपि) यथासम्भवं उभयपदं आत्मनेपदञ्च। कण्ड्वादिश्च—कण्डूञ् चित्रीङ महीङ हृणीङ असु मन्तु वल्गु लीट तिरस् उरस् मनस् पयस् उषस् कुषुभ मगध मेधा सुख दुःख चुरण भरण वरण दूषण अवर सपर अरम भिषज् गद्गद एला वेला खेला लेखा रेखा पम्पश प्रभृतिः। पाणिनिः ३।१।१५,१९,२७।

‡ अनुवृत्तावपि कृताविति कथनं स्पष्टार्थं। लेरिति कथनात् दान्तकार्य्यं न स्यादिति, तेन लघयतीत्यादौ न (२११) कुङ्। ञ इत् उभयपदं। प्रश्नयतीत्यादि, प्रश्न-ञि (४६७) ङित्वात् (१२६) टिलोपे प्रश्नि इति (६३१) धातुसंज्ञा। वह्धातोः

## ८५६। श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतक-लोपः।

(श्वेताश्व—आह्वरकस्य ६।, अश्व—क-लोपः १।)।

श्वेताश्वमाचष्टे श्वेतयति, अश्वयति, गालोडयति, आह्वरयति।*

## ८५७। नाप् सत्यार्थवेदैकाजतः।

(नाप् ।१।, सत्यार्थवेदैकाजतः ६।)।

सत्यादेरेकाचोऽकारान्तस्य च ञौ नाप् स्यात्, न इत्। सत्यापयति अर्थापयति वेदापयति स्वापयति। (४७०)वाढान्तिकेति साधादयः, साधयति। अश्वस्वमाचष्टे स्वापयति।†

---

ञिः ऊढिः, ऊढिमाचष्टे इति ऊढि-शब्दात् ञिः, ङित्त्वात् टिलोपे ऊढ़िधातुः ऊढिमाख्यातवान् ऊढि-टीदि, अमागमः, (५८१) पुनरमागमः, (६१३) अङ्, (७१९) ऊकारं हित्वा ढि इत्यस्य द्वित्वादि, (६४१) अलोपे औडिढत्। एके वामनादयः। ईशानमिति ईशधातोः क्विप् ईट्, ततः ईट् विद्यते अस्य इति (४४१) मतुः, (१५४) षड्, (१५५) षस्य ड, (६४) डस्य ट, (५९) टस्य ण, ईशान्। अनेन ञिः, मतुलुकि, या यस्य लिङ्गस्य पूर्व्वा प्रकृतिः सा तस्येति न्यायात् पुनस्तालव्य-श-स्थितिः, ईशि धातुः। एवं सुग्वन्तं स्त्रिवनश्च आचष्टे, वतु-विनोर्लुक्, पूर्व्वावयवस्थितिः। (४६८) लुङ् महद्दिनामिति बहुवचनेन अनट् क्तवतु घञ् अल् आनङ्युक्तिप्—एषां लुक् वक्तव्यः, तेन गमनमाचष्टे गमयति, गतवन्तमाचष्टे गमयति, बन्धमाचष्टे बन्धयति, वधमाचष्टे घातयति, ब्रह्माणीमाचष्टे ब्रह्मयति इत्यादि। एवं कर्त्तारमाचष्टे कारयति (४६९)। "तत् करोति तदाचष्टे।" वार्त्तिकद्वयम्।

* श्वेताश्वश्च अश्वतरश्च गालोड़ितश्च आह्वरकश्च तत् तस्य। अश्वश्च तरश्च इतश्च कश्च तेषां लोपः। एषां क्रमादेतेषामंशानां लोपः स्यादित्यर्थः। अश्वतरमाचष्टे, गालोड़ितमाचष्टे, आह्वरकमाचष्टे। (उन्मादशीले रोगार्त्ते मूर्खे गालोड़ितो मतः। आह्वरकमस्पष्टवाक्यम्।) भाष्यम्।

† एकाच्चासौ अत् चेति एकाजत्, सत्यश्च अर्थश्च वेदश्च एकाजश्च तत् तस्य। सत्यमाचष्टे, अर्थमाचष्टे, वेदमाचष्टे, स्वमाचष्टे इति वाक्यानि। वाढ़माचष्टे साधयति।

## ८५८ । णिः कल्यादेः । (णिः ११, कल्यादेः ५।) ।

कल्यादेरर्थविशेषे णिः स्यात् । कलिं गृह्णाति कलयति, अचकलत् । हलयति, अजहलत् । कृतयति, अचीकृतत् अचकृतत् । वर्णयति, त्वचयति । तूस्तानि विनिहन्ति वितूस्तयति । वस्त्रं संछादयति संवस्त्रयति । *

वर्म्मणा संनह्यति संवर्म्मयति¹। चूर्णैरवध्वंसते अवचूर्णयति । हस्तिना अतिक्रामति अतिहस्तयति । वीणया उपगायति उपवीणयति । तूलैरवकुष्णाति अवतूलयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभिमुखं याति अभिषेणयति । अभिषिषेणयिषति । रूपं पश्यति रूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । हस्तौ निरस्यति अतिहस्तयति ।

---

एवं अन्तिकमाचष्टे नेदयति, स्थूलमाचष्टे स्थवयति, दूरमाचष्टे दवयति, युवानं यवयति; (४७४) कन्-आदेशे कनयति, क्षिप्रं क्षेपयति, क्षुद्रं क्षोदयति, प्रियं प्रापयति, स्थिरं स्थापयति, स्फिरं स्फापयति, उरुं वरयति, गुरुं गरयति, बहुलं बंहयति, तृप्रं त्रपयति, दीर्घं द्राघयति, ह्रस्वं ह्रसयति, वृद्धं वर्षयति, (४७२) ज्य-आदेशे ज्यापयति, वृन्दारकं वृन्दयति । कर्त्तारं (४६९) टिलोपे कारयति । (४७१) प्रशस्यस्याने श-आदेशे श्रापयति, (४७२) ज्यापयतीति च । (४७३) पृथुं प्रथयति, मृदुं म्रदयति, कृशं क्रशयति, भृशं भ्रशयति, दृढं द्रढयति, परिवृढं परिव्रढयति । (४७४) अल्पं कनयति अल्पयति, बहु आचष्टे भावयति, बहोर्भूरिति वक्तव्यं । वार्त्तिकम् ।

* कलिरादिर्यस्य स कल्यादि स्तस्मात् । कलि-हली कामधेनु सर्व्वार्थवाचकत्वादिति माधवः । कृतो आख्याने च (८५५) पूर्व्वेण णिविधानात् अत्र अर्थविशेषे स्यादित्युक्तम् । अर्थञ्च स्वयं विवृणोति, कलिं गृह्णातीत्यादि । कलिशब्दात् णिः, (४६७) डित्, टिलोपः, कलि इति धातुः । अचकलदिति (६३९) कलि-हलि-वर्जनात् न सन्वद्भावः । एवं हलिं गृह्णाति, कृतं गृह्णाति । अचीकृतदिति (६३९) विकल्पेन सन्वद्भावः । वर्णं (वर्णद्रव्यं) गृह्णाति, त्वचं गृह्णाति । वितूस्तयति, तूस्तरहितं करोतीत्यर्थः । (तूस्तं रेणौ च पापे च जटायाश्च नपुंसकमिति मेदिनी ।) संछादयति परिदधातीत्यर्थः ।

¹ पाणिनि: ३।१।२१, वार्त्तिकानि च ।

पुच्छमुत्क्षिपति उत्पुच्छयते। भाण्डानि संचिनोति संभाण्डयते। चीवरं संमार्जयति परिदधाति वा सञ्चीवरयते भिक्षुः। *

### ८५९। लिधो यथेष्टं द्विः, कण्ड्वाद्यजाद्योस्तु तृतीयानाद्योः।

(लिधोः ६।, यथेष्टं २।, द्विः १।, कण्ड्वादि-अजाद्योः ६॥, तु ।१।, तृतीयानाद्योः ६॥)।

पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति, पुत्रीयिषिषति, पुपुतित्रीयियिषिषति। कण्डूयियिषति, अश्विश्वीयिषति। †

इति लिधु-पादः।

## ३य चतुर्गणाध्यायः।

---

* वर्म्मणा कवचेन संनह्यति बध्नातीत्यर्थः। चूर्णैश्चूर्णद्रव्यैः अवध्वंसते अवकिरतीत्यर्थः, नाशयतीति कश्चित्। हस्तिना इत्युपलक्षणं अश्वेन अतिक्रामति अत्यश्वयतीत्यपि स्यात्। तूलैः परिमापकदण्डैरवकृष्णाति परिमातीत्यर्थः। अभिषेणयतीति (५७२) गौक इति षत्वे, (१०७) णत्वं। अभिषेणयितुमिच्छति इति वाक्ये सेनिधातोः सन् (५५४) इम्, द्वित्वादौ, दश्वस्यादेरिति द्विरुक्तस्य षत्वं। भाण्डानि मूलधनानि सञ्चिनोति सञ्चितानि करोतीत्यर्थः। (भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोरिति मेदिनी।) अत्र संवर्म्मयतीत्यादिषु सप्तसूदाहरणेषु करणकारकेभ्य एव ञिः अतएवैते सकर्म्मकाः प्रयोगाः, अन्येषु कर्म्मकारकेभ्यः तेन प्रायशः अकर्म्मका इति। एषूदाहरणेषु पुच्छभाण्डचीवरेभ्यः आत्मनेपदं, अन्येभ्यः परस्मैपदं प्राचीनसम्मतम्। पाणिनिः ३।१।२५,२०।

† आदौ लिः पश्चात् धुः लिधुः नामधातुरिति यावत्. इष्टमनतिक्रम्य यथेष्टं (क्रियाविशेषणं)। कण्डूरादि र्यस्य स कण्ड्वादिः, अच् आदिर्यस्य सः अजादिः। कण्ड्वादिश्च अजादिश्च तयोः। तृतीयश्च अनादिश्च तयोः। यथेष्टमिति क्रमेण युगपद्वा इत्यर्थः, तथाच कदाचित् प्रथमवर्णस्य, कदाचित् द्वितीयादेः, कदाचित सर्व्वेषां युगपत्, कण्ड्वादेस्तृतीयस्यैव, अजादेश्च आदिवर्णं हित्वा द्वितीयस्य तृतीयादर्व्वा द्विर्भाव इत्यर्थः। पुत्रमिवाचरति शिष्यं इति वाक्ये (८४७) क्यः पुत्रीय-धातुः, ततः पुत्रीयितुमिच्छति सन् (५५४) इम्, पु त्री यि ष इत्यस्य पुप्रभृतीनां क्रमेण युगपच्च द्वित्वं। कण्डुं करोतीति वाक्ये (८५८) यण्, ततः कण्डूयितुमिच्छति सन्, इम, कण्डूयिष इत्यस्य तृतीयवर्णस्य यि इत्यस्य द्वित्वं। अश्वमिवाचरति गां (८४७) क्यः, अश्वीयितुमिच्छतीति सन्, अश्वीयिष इति स्थिते द्वितीयस्य द्वित्वं। तृतीयस्य द्वित्वे अश्वीयियिषति, एवं चतुर्थस्यापि। वार्त्तिकानि।

## ९मः। त्याद्यन्ताध्यायः।

### १म पादः—पं।

**८९०। घे पं परानु-कृ—प्रत्यभ्यति-क्षिप—प्र-वह—परि-मृष—व्यापरिरमो वा तूपरमः।**

(घे ७।, पं १।, परा-अनु कृ, प्रति-अभि-अति-क्षिप, प्र-वह, परि-मृष, वि-आ-परि-रमः ५।, वा ।१।, तु ।१।, उप-रमः ५।)।

एभ्यः पं स्यात् घे, उप-रमस्तु वा। 'पराकरोति अनुकरोति, प्रतिक्षिपति, प्रवहति, परिमृष्यति, विरमति आरमति परिरमति, उपरमति उपरमते विष्णुः।*

**८९१। कम्पान्नार्थेङ्‌बुधयुध्रुद्रुस्रुजननशोऽञिप्राणिघाढ़ाच्च ञेः।**

(कम्प—नशः ५।, अञि प्राणिघाढ़ात् ५।, च ।१।, ञेः ५।)।

चलयति भोजयति, अध्यापयति, बोधयति योधयति प्रावयति द्रावयति स्रावयति जनयति नाशयति, शाययति कृष्णं

---

* परानुभ्यां कृः परानुकृः, प्रत्यभ्यतिभ्यः क्षिपः प्रत्यभ्यतिक्षिपः, प्राद्वहः प्रवहः, परेर्मृषः परिमृषः, व्यापरिभ्यो रम व्यापरिरम। ततः, परानुकृश्च प्रत्यभ्यतिक्षिपश्च प्रवहश्च परिमृषश्च व्यापरिरम चेति तस्मात्। अनेन नियमेन कृ क्षिप वह मृष इति चतुर्णां ञित्त्वेऽपि आत्मनेपदं न स्यात्। येर्योगे (२८६) द्वितीया विहिता तेषामन्वादीनामिह न ग्रहणमिति, तेन कृष्णमनुकुरुते इत्यपि स्यात्। विष्णुः उपरमति उपरमते क्रीड़तीत्यर्थः। पाणिनिः १।३।७९—८५।

यशोदा। अप्राणिघात् किं, शोषयते शालिं। अढ़ात् किं, भक्तिं कारयते। अञौ किं, रूपयते हरिः।*

इति ५-पादः।

---

२य पादः—मं।

---

८६२। वि-परा-जि—परि-व्यव-क्री—नि-वि-शानुप्रच्छो मं। (त्रि—प्रच्छः ५।, मं १।)।

एभ्यो मं स्यात् घे। विजयते पराजयते, परिक्रीणीते, निविशते, आनुते आपृच्छते।*

---

* कम्पश्चलनं, अन्नं भोजनं, तौ अर्थौ येषां ते कम्पान्नार्थाः, तेच इङ् च बुधश्च युधश्च प्रुश्च द्रुश्च स्रुश्च जनश्च नशश्च तस्मात्। प्राणी घो यस्य स प्राणिघः, नास्ति ढ यस्य सोऽढः, प्राणिघश्चासौ अढश्चेति प्राणिघाढः, अञौ प्राणिघाढः अञिप्राणिघाढ तस्मात्। एभ्यो ञान्तेभ्यः पं स्यात् घे, एतेन फलवत्कर्त्तर्य्यपि आत्मनेपदं न स्यादिति बोध्यं। चल-यति जनयतीति च घटादित्वात् ह्रस्वः। शाययति कृष्णमिति, कृष्णः शेते इति प्राणिकर्त्तृकोऽकर्म्मकः, ततो ञान्तात् परस्मैपदं, शालिः शुष्यतीति अप्राणिकर्त्तृको ऽकर्म्मकः, तेन ञान्तात् परस्मैपदनियमाभावे उभयपदं। रूपयते इति रूपत क तत्कृतौ नित्यचुरादिः, सुतरां अञान्तदशाया असम्भवात् नैतन्नियमप्रसङ्गः, अतएव प्रेरणञान्तत्वे उभयपदमेव। पाणिनिः १।३।८६,८७,८८।

---

* वि-पराभ्यां जिः, परि-व्यवेभ्यः क्रीः, नेर्विशः, आङो नु-प्रच्छौ। ततः विपरा-जिश्च परिव्यवक्रीश्च निविशश्च आनुप्रच्छौ चेति तस्मात्। घे इति पूर्व्वादनुवर्त्तते। डु क्री ञ ग द्रव्यविपर्य्यये इत्यादि आनुबन्धधातूनामात्मनेपद-विधानं अफलवत्कर्त्तर्य्यपि आत्मनेपदप्राप्त्यर्थं। एवं सर्व्वत्र। नि-विश इत्यनेन प्रविशतीत्यादौ न मं स्यात्। पाणिनिः १।३।१७,१८,१९, वार्त्तिकञ्च।

८६३। आ-दाओ ऽस्वप्रसारे।

(आ दाञः ५।, अस्वप्रसारे ७।)।

आदत्ते। स्वप्रसारे तु, व्याददाति मुखं कृष्णः। *

८६४। आ-गमेः क्षान्तौ। (आ गमेः ५।, क्षान्तौ ७।)।

आगमयते कालं। †

८६५। पर्य्यन्ववाङः क्रीड़ः।

(परि-अनु-अव-आङः ५।, क्रीड़ः ५।)।

परिक्रीड़ते अनुक्रीड़ते अवक्रीड़ते आक्रीड़ते। ‡

८६६। समो ऽकूजने। (समः ५।, अकूजने ७।)।

संक्रीड़ते। कूजने तु, संक्रीड़ति चक्रं। §

८६७। क्रो ऽपाद्धर्षान्नवासेच्छे चतुष्पाद्वौ सुम् च।

(कृः ५।, अपात् ५।, हर्षान्नवासेच्छे ७।, चतुष्पाद्वौ ७।, सुम् ।१।, च ।१।)।

---

* स्वं स्वाङ्गं, स्वस्य प्रसारो विस्तारणं स्वप्रसारः, नञ्‌योगे तस्मिन्। आङ्-पूर्व्वात् दाञो मं स्यात् घे, न तु स्वप्रसारे। आदत्ते गृह्णाति, व्याददाति विस्तारयतीत्यर्थः। पाणिनिः १।३।२०। अत्र "अनास्यविहरणे" इत्युक्तम्।

† गमि ञ्यन्तः, क्षान्तिः प्रतीक्षणं। आङ्पूर्व्वात् गमयते मं स्यात् घे क्षान्तौ (प्रतीक्षायाम्)। आगमयते कालं प्रतीक्षते इत्यर्थः। आनयनादौ अर्थे परस्मैपदमेव। वार्त्तिकम्।

‡ परिश्च अनुश्च अवश्च आङ् च तस्मात्। एभ्यः क्रीड़ते मं स्यात् घे। समर्थकानुपूर्व्वात् न स्यादिति वक्तव्यं, तेन बालकमनुक्रीड़ति। पाणिनिः १।३।२१। अत्र भावः।

§ संपूर्व्वात् क्रीड़ते मं स्यात् घे, न तु कूजने। कूजन-मव्यक्तशब्दः। वार्त्तिकम्।

अपस्किरते मत्तः कुक्कुटः श्वा वा। अन्यत्र मल्लोऽपकिरति, गजोऽपकिरत्यम्भः। *

## ८६८। शपथाशीर्गत्यनुकारे शप-नाथ-हृञः।

(शपथ-आशी-गत्यनुकारे ७।, शप-नाथ-हृञः ५।)।

कृष्णाय शपते गोपी। मोक्षाय नाथते मुनिः। पैतृकमनुहरते अश्वः। †

## ८६९। प्रतिज्ञा-निर्णय-प्रकाशे संप्रव्यवाच्च स्थः।

(प्रतिज्ञा-निर्णय-प्रकाशे ७।, सं-प्र-वि-अवात् ५।, च।१।, स्थः ५।)।

---

* अन्नञ्च वासश्च तौ, तयोरिच्छा अन्नवासेच्छा, हर्षेण अन्नवासेच्छा यस्य स हर्षान्नवासेच्छस्तस्मिन्। चतुष्पाच्च विश्च तत्तस्मिन्। चतुष्पात् पशुः, विः पक्षी। हर्षहेतुक भक्षणेच्छावति हर्षहेतुक-वासेच्छावति वा चतुष्पदि पक्षिणि वा कर्त्तरि सति अपात् किरतेः मं स्यात्, तस्य स्मम् चेत्यर्थः। अपस्किरते, मत्तो हृष्टः कुक्कुटः भक्षार्थी भूमिमालिखति, मत्तः श्वा वा वासार्थी भूमिमालिखतीत्यर्थः। अत्र कृधातुरालिखनार्थे एव बोध्यः। चतुष्पादौ किं, मल्लोऽपकिरति धूल्यर्थं भूमिमालिखति। हर्षान्नवासेच्छे इति किं, गजः अम्भो जलं अपकिरति ऊर्द्ध्वं विपतीत्यर्थः। अत्र तुल्ययोगनिर्द्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायेन आत्मनेपदाभावपक्षे सुमपि न स्यादिति। पाणिनिः ६।१।१४२। "किरतेर्हर्षजीविकाकुलायकरणेषु वाच्यम्" इति वार्त्तिके हर्षादयस्त्रयो विषयाः उक्ताः, तत्र हर्षो विक्षेपस्य कारणम् इतरे फलं। वोपदेवस्तु मतान्तरमवलम्ब्य हर्षजनितं विषयद्वयमेव लिखितम्।

† शपो आक्रोशे इत्यस्मात् शपथे, नाथृ ङ तापाशिषोरैश्वर्येऽर्थने इत्यस्मात् आशिषि, हृञ हृयामित्यस्मात् गत्यनुकारे, मं स्यात् घे। शपथः पुत्रादिशरीरस्पर्शादिना मिथ्यानिरसनं, आशी-रिष्टार्थाविष्करणं, गत्यनुकारो गतिसदृशीकरणं। गोपी कृष्णाय शपते, कस्यचित् शरीरं स्पृष्ट्वा मयैतन्न कृतमिति दिव्येन कृष्णं तोषयितुमिच्छतीत्यर्थः। शपथादन्यत्र नियमाभावा-दुभयपदमेव। मुनि र्मोक्षाय नाथते मोक्षो मे भूयादित्याशास्ते इत्यर्थः। उभयत्र (२९४) चतुर्थी। नाथधातो-रात्मनेपदित्वेऽपि आशिषोऽन्यत्र परस्मैपदमेव। अश्वः पैतृकं पितृसम्बन्धीयं गमनमिति यावत् अनुहरते अनुकरोति पितृवत् गच्छतीत्यर्थः। गतिग्रहणात् रूपाद्यनुकारे न स्यादिति। "श<br>उपालम्भे", "आशिषि नाथः", "हरतेर्गतताच्छील्ये" इति वार्त्तिकत्रयम्।

नित्यं शब्दमातिष्ठते। त्वयि तिष्ठते विवादः। रामाय तिष्ठते सीता। सन्तिष्ठते प्रतिष्ठते वितिष्ठते अवतिष्ठते समस्थित। *

## ८७०। उदोऽनूर्द्ध्वेहे। (उदः ५।, अनूर्द्ध्वेहे ७।)।

मुक्तावुत्तिष्ठते। अन्यत्र आसनादुत्तिष्ठति, ग्रामाच्छतमुत्तिष्ठति। †

## ८७१। मन्त्रेणोपात्। (मन्त्रेण ३।, उपात् ५।)।

गायत्र्या उपतिष्ठते अर्कं। ‡

## ८७२। मैत्रध्वसङ्गाराधे। (मैत्री-अध्व-सङ्ग-आराधे ७।)।

सन्तमुपतिष्ठते साधुः। गङ्गामुपतिष्ठते पन्थाः। पतिमुपतिष्ठते नारी। विष्णुमुपतिष्ठते वैष्णवः। §

---

* प्रतिज्ञादावर्थे तिष्ठते मं स्यात्, सं-प्र-वि-अवेभ्यो यस्मिन् कस्मिन्नप्यर्थे मं स्यात् घे, चकारात् अर्थद्वयं। प्रतिज्ञा अङ्गीकारः, निर्णयो निश्चयः, प्रकाशः स्वाभिप्रायप्रकटनं। नित्यं शब्दमातिष्ठते, नित्यमिति शब्दस्य विशेषणं, शब्दो नित्य इति प्रतिज्ञां करोतीत्यर्थः, मीमांसक इति शेषः। त्वयि विवादस्तिष्ठते इति निर्णयः। सीता रामाय तिष्ठते स्वाभिप्रायं प्रकाशयतीत्यर्थः। (२८४) चतुर्थी। समस्थित इति (७३६) ङिः। पाणिनिः १।३।२२,२३, वार्त्तिकञ्च।

† न ऊर्द्ध्वं अनूर्द्ध्वं, अनूर्द्ध्वं ईहा (चेष्टा) यस्य सः अनूर्द्ध्वेहस्तस्मिन्, अनूर्द्ध्वेहे इति कर्त्तुर्विशेषणं। उत्पूर्व्वात् स्थाधातो मं स्यात् अनूर्द्ध्वविषये चेष्टमाने कर्त्तरि। मुक्तौ उत्तिष्ठते मुक्तिविषये चेष्टते इत्यर्थः। आसना-दुत्तिष्ठतीति कर्त्तुरूर्द्ध्वचेष्टत्वान्न मं। ग्रामात् शतमुत्तिष्ठतीति शतमुत्पद्यते इत्यर्थः, शतस्य कर्त्तुश्चेष्टाया अभावान्न मं। पाणिनिः १।३।२४।

‡ मन्त्रकरणके धात्वर्थे उपात् स्थो मं स्यात् घे। गायत्र्या मन्त्रेण अर्कं सूर्यं उपास्ते इत्यर्थः। मन्त्रेण किं, युवति यौवनेन भर्त्तारमुपतिष्ठति। पाणिनिः १।३।२५।

§ मित्रस्य भावो मैत्री, अध्वा पन्थाः, सङ्गः सङ्गमः, आराध आराधनं। एष्वर्थेषु उपात् स्थो मं स्यात् घे। अध्वनि कर्त्तरि सतीति भावः। साधुः सन्तं साधुं

## ८७३ । लिप्सायां वा । (लिप्सायां ७।, वा ।१।) ।

भिक्षु र्धार्म्मिकमुपतिष्ठते उपतिष्ठति वा । *

## ८७४ । अढात् । (अढात् ५।) ।

स्नानमुपतिष्ठते । †

## ८७५ । समो गम्ऋच्छप्रच्छस्वृश्रुवेत्त्यर्त्तिदृशः ।

(समः ५।, गम-ऋच्छ-प्रच्छ-स्वृ-श्रु-वेत्ति-अर्त्ति-दृशः ५।) ।

सङ्गच्छते, समगत समगंस्त, सङ्गसीष्ट सङ्गंसीष्ट । समृच्छते, संपृच्छते, संस्वरते, संशृणुते, संविद्रते संविदते, समियृते, सम्पश्यते । अढात् किं, गङ्गां सङ्गच्छति । ‡

---

उपतिष्ठते मित्रं करोतीत्यर्थः । गङ्गामुपतिष्ठते पन्थाः गङ्गां गच्छतीत्यर्थः । पथि कर्त्तरि किं, पन्थानमुपतिष्ठति । पतिमुपतिष्ठते पत्या सह सङ्गं करोतीत्यर्थः । विष्णुमुपतिष्ठते आराधयतीत्यर्थः । "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्त्तिकम् ।

* लब्धुमिच्छा लिप्सा । लिप्सार्थे उपात् स्थो मं स्याद्वा घे । धार्म्मिकमुपतिष्ठते उपतिष्ठति वा धार्म्मिकात् (धनं) लब्धुमिच्छतीत्यर्थः । वार्त्तिकम् ।

† उपात् अकर्म्मकात् स्थो मं स्यात् घे । विभाषाद्वय-मध्यवर्त्तित्वान्नित्यं । स्नानमुपतिष्ठते स्नानं उपस्थितं भवतीत्यर्थः । पाणिनिः १।३।२६ ।

‡ गमश्च ऋच्छश्च प्रच्छश्च स्वृश्च श्रुश्च वेत्तिश्च अर्त्तिश्च दृश् चेति तस्मात् । समः परेभ्यः अकर्म्मकेभ्य एभ्यो मं स्यात् घे । एते सकर्म्मका अपि विवक्षावशादकर्म्मकाः । समगतेति सम-गम टीतन्, सिः, (६५८) सेः कित्संज्ञा, (६७६) अम्-लोपः, (५६२) से लोपः । कित्संज्ञाभावपक्षे (५०) मस्यानुस्वारः । एवं ढी-सीष्ट । समृच्छते संपृच्छते तुदादित्वात् शः, (६६१) प्रच्छो ञिः । संशृणुते (६२१) श्रुः शिश्च । संविद्रते इत्यादि अन्ते (५५५) अन्तस्थाने अत्, (७१२) विकल्पेन रम् । समियृते इति ऋलिं गत्यां (७२६) द्वित्वं, (७२८) द्वे ङिः, (५८५) इस्थाने इय । अर्त्ति-ग्रहणेन भौवादिकस्यापि, तेन समृच्छते इति च । पाणिनिः १।३।२९,[१।२।१३,७।१।७,] वार्त्तिकद्वयञ्च ।

## ८७६ । गे र्वास्योह्नो ढे च ।

(गे ५।, वा ।१।, अस्योह: ५।, ढे ७।, च ।१।) ।

निरस्यते निरस्यति, समूहते समूहति । *

## ८७७ । गेरूह: स्वो ये ऽणौ ।

(गे: ५।, ऊह: ६।, स्व: १।, ये ७।, अणौ ७।) ।

ब्रह्म समुह्यात् । †

## ८७८ । आत्माङ्गढाद्‌ढाच्चा-ह्नयम: ।

(आत्माङ्गढात् ५।, अढात् ५।, च ।१।, आ-ह्न-यम: ५।) ।

उरआहते, पादमायच्छते । आहते आयच्छते । अन्यत्र अनुमाहन्ति, परश्रिर आयच्छति । ‡

## ८७९ । ह्न: कित् सि: । (ह्न: ५।, कित् ।१।, सि: १।) ।

---

* अस्‌ु क्षेपे, ऊह ङ वितर्के । गे: पराभ्यामाभ्यां मं स्याद्वा घे; ढे कर्मणि विद्यमाने, चकारात् अकर्मणि च । वार्त्तिकम् ।

† गे: परस्य ऊहधातो: स्व: स्यादणौ ये परे । ब्रह्म वेदं परमेश्वरं वा समुह्यात् ब्रह्मविषये वितर्कं क्रियादित्यर्थः । पूर्व्वसूत्रेण आत्मनेपदविकल्पपक्षे ढौ यात्, अत्र कस्य: । पाणिनि: ७।४।२३ ।

‡ आत्मन: अङ्गं ढं यस्य स आत्माङ्गढस्तस्मात् । नास्ति ढं यस्य सोऽढस्तस्मात् । ह्न च यम् च ह्नयम्, आङो ह्नयम आह्नयम् तस्मात् । मण्डूकप्लुत्या घे मं इत्यनुवर्त्तते । स्वाङ्गकर्म्मकाभ्यामकर्म्मकाभ्याञ्च आङ्‌पूर्व्व-ह्नयमाभ्यां घे मं स्यात् । स्वाङ्गढादिति नोक्ता आत्माङ्गढादिति कथनं, (२६५) पारिभाषिक-स्वाङ्ग-व्यावृत्त्यर्थं, अतएव परश्रिर आयच्छतीत्यत्र नात्मनेपदं । उरो वक्ष: आहते ताड़यतीत्यर्थ:, पादं चरणं आयच्छते दीर्घं करोतीत्यर्थः । कर्म्माविवक्षायां आहते ताड़ितो भवति, आयच्छते दीर्घो भवतीत्यर्थ: । पाणिनि: १।३।२८, भाष्यञ्च ।

हनः परः सिः कित् स्यात्। आहत आवधिष्ट, आहसातां आवधिषातां।*

## ८८०। यमः सूचने वा तूद्वाहे।

(यमः ५।, सूचने ७।, वा ।१।, तु ।१।, उद्वाहे ७।)।

आयत। रामः सीतामुपायत उपायंस्त।†

## ८८१। व्युत्तपः।

(वि-उत्-तपः ५।)।

वितपते उत्तपते पाणिं जनः।‡ आत्माङ्गढादृढाच्च किं, महीं वितपत्यर्कः।

## ८८२। तपोढाद् यक् च रे।

(तपोढात् ५।, यक् ।१।, च ।१।, रे ७।)।

तप्यते तपस्तापसः। रे किं, अतप्त।§

---

* आहत इति पूर्व्वेणात्मनेपदं, (६७८) वधादेश-विकल्पपक्षे अनेन सेः कित्त्वा (६७६) अम्लोपः, ततः (५६२) सिलोपः। वधादेशपक्षे (५५४) इम् आवधिष्ट। एवं टौ आतां। पाणिनिः १।२।१४,[२।४।४४]।

† यमः परः सिः कित् स्यात् आत्मनेपदे सूचने अर्थे, विवाहार्थे तु वा। सूचनम् इङ्गितादिना विज्ञापनं। आयत इति आ-यम, पूर्व्वेणात्मनेपदे टौ-तम्, सिः, अनेन सेः कित्त्वं, (६७६) अम्लोपः। उपायतेत्यादि (८०९) उपयम इति वक्ष्यमाण सूत्रेणात्मनेपदे अनेन विकल्पेन सेः कित्त्वं। पाणिनिः १।२।१५,१६।

‡ व्युद्भ्यां परादात्माङ्गढादृढाच्च तपो घे मं स्यात्। मण्डूकगत्या घे मं इत्यनुवर्त्तते। जनः पाणिं हस्तं उत्तप्तं करोतीत्यर्थः। एवं जनः उत्तप्तो भवतीति अढादपि वितपते उत्तपते। पाणिनिः १।३।२७, भाष्यं, वार्त्तिकञ्च।

§ तपः ढं (कर्म्म) यस्य स तपोढस्तस्मात्। पृथक्विधानात् व्युदिति नानुवर्त्तते तपोढादित्यनेन आत्माङ्गढादृढाच्चेति च निरस्तं। तपःकर्म्मकात् तपो मं स्यात् घे, परं यक् च स्यादित्यर्थः। अत्र यक् श्यपो बाधकः। तपस्तप्यते तपः अर्ज्जयतीत्यर्थः

## ८८३। सृजः श्राङ्घात् तनीण् च।

(सृजः ५।, श्राङ्घात् ५।, तनि ७।, इण् ।१।, च ।१।)।

सृज्यते स्रजं भक्तः। असर्जि। श्राङ्घात् किं, सृजति स्रजं मालिकः।*

## ८८४। निसंव्युपह्वः।

(नि-सं-वि-उप-ह्वः ५।)।

निह्वयते संह्वयते विह्वयते उपह्वयते। †

## ८८५। स्पर्द्धाया-माङः।

(स्पर्द्धायां ७।, आङः ५।)।

कृष्णश्चानूरमाह्वयते। ‡

## ८८६। सूचनावक्षेपणसेवासाहसप्रतियत्न-कथोपयोगे कृञः।

(सूचन—उपयोगे ७।, कृञः ५।)।

अपकुरुते, श्येनो वर्त्तिकामुपकुरुते, विष्णुं प्रकुरुते, परदारान् प्रकुरुते, एधोदकस्योपस्कुरुते, गीताः प्रकुरुते, शतं प्रकुरुते। §

---

एवं तप्यत तप्यतां अतप्यत। अतप्तेति टौ तन्, निमित्तगतविशेषात् सिरेव, न तु यक्, श्रौदित्त्वान्नेम्, (५६२) सिलोपः। पाणिनिः ३।१।८७,८८।

* अत्पूर्व्वक-धाधातोर्ङः (११५७) श्रद्धा इति, श्रद्धा विद्यतेऽस्येति (४४६) प्रज्ञादित्वात् णः श्राद्धः, श्राद्धः घः यस्य सः श्राद्धघस्तस्मात्। श्राद्धघात् सृजो मं स्यात् घे, तनि परे इण्, चकारात् रे परे यक् च स्यादित्यर्थः। भक्तः श्रद्धाविशिष्टो जनः स्रजं मालां सृज्यते रचयतीत्यर्थः। असर्ज्जीति तन्, इण् सिबाधकः, (६४४) तन्लोपः। मालिको न श्रद्धावान्। वार्त्तिकद्वयम्।

† नि सम् वि उप एभ्यः परात् ह्वेञो मं स्यात् घे। अनिष्टत्वात् यगिणो-र्नानुवृत्तिः। पाणिनिः १।३।३०।

‡ आङः परात् ह्वेञो मं स्यात् घे स्पर्द्धायां गम्यमानायां। स्पर्द्धा पराभिभवेच्छा। चानूरं तन्नामकमसुरं। स्पर्द्धायां किं, पिता पुत्रमाह्वयति। पाणिनिः १।३।३१।

§ सूचनाद्यर्थेषु कृञो मं स्यात् घे। सूचनं—परदोषाद्याविष्करणं, अवक्षेपण—तिरस्कारः, सेवा—अनुवृत्तिः, साहसं—पश्चाद्दोषमनालोच्य करणं हिंसा-चौर्य्य-

८८७। अधेः शक्तौ। (अधेः ५।, शक्तौ ७।)।

दैत्यानधिकुरुते कृष्णः। *

८८८। शब्दढाढाद्वेः। (शब्दढाढात् ५।, वेः ५।)।

स्वरान् विकुरुते, वायुर्विकुरुते। अन्यत्र चित्तं विकरोति कामः।†

८८९। ज्ञानार्चोत्क्षेपोपनयनभृतिविगणन-व्ययेषु नीञः। (ज्ञान—व्ययेषु ७।।।, नीञः ५।)।

शास्त्रे नयते, विष्णुं नयते, दण्डमुन्नयते, पुत्रमुपनयते, भृत्य-मुपनयते, ऋणं विनयते, द्रव्यं विनयते। ‡

---

परदारगमनादि, प्रतियत्नो—गुणान्तराधानं, कथा—व्याख्यानं, उपयोगो—धर्म्मादार्थं द्रव्यविनियोगः। अपकुरुते कस्यचित् दोषमाविष्करोतीत्यर्थः। श्येनो वर्त्तिकामुपकुरुते तिरस्करोतीत्यर्थः। वर्त्तिका-श्येनौ पक्षिविशेषौ। विष्णुं प्रकुरुते सेवते इत्यर्थः। पर-दारान् प्रकुरुते साहसात् तेषु प्रवर्त्तते इत्यर्थः। एधः काष्ठं तस्य उदकं रसः, एधो-दकस्य काष्ठरसस्य उपस्कुरुते अग्निसंयोगेन गुणान्तराधानं करोतीत्यर्थः, प्रतियत्नार्थे (७६९) सुम्। गाथाः प्रकुरुते कथयतीत्यर्थः। शतं प्रकुरुते शतं द्रव्याणि विनियुङ्क्ते इत्यर्थः। पाणिनिः १।३।३२। अत्र सूचनमित्यत्र गन्धनपदं प्रयुक्तं तस्यार्थश्च प्राणवियोगा-नुकूलं सूचनम्। हिंसा इति भट्टोजिदीक्षितः।

* अधिपूर्व्वात् कृञो मं स्यात् घे शक्तौ। शक्तिरभिभवः। दैत्यानधिकुरुते कृष्णः अभिभवतीत्यर्थः। पाणिनिः १।३।३३। (अत्र प्रसहनं=पराभिभवश्च)।

† शब्दो ढं यस्य सः शब्दढः, नास्ति ढं यस्य सोऽढः, शब्दढश्च अढश्च तस्मात्। वेः परात् शब्दकर्म्मकादकर्म्मकाच्च कृञो मं स्यात् घे। स्वरान् शब्दान् विकुरुते विशेषेण करोतीत्यर्थः। वायुर्विकुरुते विकृतो भवतीत्यर्थः। पाणिनिः १।३।३४,३५।

‡ ज्ञानं प्रमेयनिश्चयः, अर्च्चा पूजा, उत्क्षेप उन्नयनं, उपनयनं यज्ञोपवीतदान-संस्कारः, भृतिर्वेतनं, विगणनं ऋणशोधः, व्ययो विनियोगः। एष्वर्थेषु नीञो मं स्यात् घे। शास्त्रे नयते प्रमेयनिश्चयं करोति, विष्णुं पूजयति, दण्डमुत्क्षिपति, पुत्रं यज्ञोपवीतदानेन संस्करोति, भृत्यमुपनयते भृत्याय वेतनं ददाति, ऋणं शोधयति, द्रव्यं विनियुङ्क्ते इत्यर्थः। पाणिनिः १।३।३६।

## ८६०। घस्थामूर्त्तढात्। (घस्थामूर्त्तढात् ५।)।

क्रोधं विनयते। घस्थं किं, गुरोः क्रोधं विनयति। अमूर्त्तं किं, गण्डं विनयति। *

## ८६१। वृत्त्युत्साहतायने क्रमः—परोपक्रमः। (वृत्ति-उत्साह-तायने ७।, क्रमः ५।, परा-उप-क्रमः ५।)।

ऋत्तु क्रमते बुद्धिः। धर्म्माय क्रमते साधुः। सतां श्रीः क्रमते। पराक्रमते उपक्रमते। †

## ८६२। आङो भोद्गमे। (आङः ५।, भोद्गमे ७।)।

आक्रमते अर्कः। भोद्गमे किं, आक्रामति धूमः, खं व्याप्नोतीत्यर्थः। ‡

## ८६३। वेः पद्भिः। (वेः ५।, पद्भिः ३।।।)।

साधु विक्रमते वाजी। पद्भिः किं, वाजिना विक्रामति राजा। §

---

* घे कर्त्तरि तिष्ठतीति घस्थं, घस्थं अमूर्त्तं ढं यस्य स तस्मात्, नीञो मं स्यात् घे। क्रोधं विनयते शमयतीत्यर्थः, अत्र क्रोधः कर्त्तृस्थः। गण्डं व्रणं। पाणिनिः १।३।३७।

† वृत्तिरप्रतिबन्धः, उत्साह उद्यमः, तायनं वृद्धिः (स्फीतता)। एष्वर्थेषु क्रमः परोपक्रमश्च मं स्यात् घे। परोपग्रहणमन्योपसर्ग-निरासाय। ऋत्तु वेदेषु बुद्धिः क्रमते अप्रतिहता भवति। धर्म्माय क्रमते उत्सहते। सतां श्री वर्द्धते। पाणिनिः १।३।३८,३९।

‡ भात्यीति भानि (९९७) आदन्तात् घे डः। भानां चन्द्रसूर्य्यादीनामुद्गमे आङ्पूर्व्वात् क्रमो मं स्यात् घे। आक्रमते उद्गच्छतीत्यर्थः। पाणिनिः १।३।४०, वार्त्तिकञ्च।

§ वेः परात् क्रमो मं स्यात् घे पद्भिर्धात्वर्थे निष्पन्ने। वाजी घोटकः पद्भिर्गच्छति। पाणिनिः १।३।४१।

## ८९४। प्रोपादारम्भे। (प्र-उपात् ५।, आरम्भे ७।)।

भोक्तुं प्रक्रमते उपक्रमते। *

## ८९५। वाऽगे:। (वा।१।, अगे: ५।)।

क्रमते क्रामति। †

## ८९६। निह्नवे ज्ञ:। (निह्नवे ७।, ज्ञ: ५।)।

शतमपजानीते। ‡

## ८९७। अढात्। (अढात् ५।)।

सर्पिषो जानीते। §

## ८९८। संप्रतेरस्मृतौ। (सं-प्रते: ५।, अस्मृतौ ७।)।

संजानीते प्रतिजानीते। अस्मृतौ किं, पुत्रं संजानाति। ¶

## ८९९। ञेर्ढेऽञौ घे। (ञे: ५।, ढे ७।, अञौ ७।, घे ७।)।

दर्पयते भवो भक्तान्। अञौ यत् ढं तच्चेत् घ इति किं—

---

* प्रोपाभ्यां परात् क्रमो मं स्यात् घे आरम्भे। भोक्तुं प्रक्रमते आरभते इत्यर्थ: पाणिनि: १।३।४२।

† नास्ति गि यस्मिन् सोऽगि तस्मात्। अगे: क्रमो मं स्याद्वा घे। उपसर्गरहित क्रमधातु: उभयपदीत्यर्थ:। पाणिनि: १।३।४३।

‡ जानाते मं स्यात् घे निह्नवे; निह्नवोऽपलाप:। शतमपलपतीत्यर्थ:। अप जानातिरपह्नवार्थ:। पाणिनि: १।३।४४।

§ अकर्म्मकात् जानाते घे मं स्यात्। सर्पिषो घृतस्य जानीते सर्पिषा करणे प्रवर्त्तते इत्यर्थ:। (३०३) ज्ञोऽज्ञाने धे इति करणे षष्ठी। पाणिनि: १।३।४५।

¶ सं-प्रतिभ्यां परात् जानाते घे मं स्यात्, न तु स्मृतौ। संजानीते प्रतिजानीते अङ्गीकरोतीत्यर्थ:। पुत्रं संजानाति सोत्कण्ठं स्मरतीत्यर्थ:। पाणिनि: १।३।४६।

दर्शयति शम्भुं भक्तान् भक्तिः। स्मृतौ तु, स्मारयति भक्तान् हरिः। *

९००। ज्ञानयत्नप्रलोभे वदः।

(ज्ञान-यत्न-प्रलोभे ७।, वदः ५।)।

पाणिनि वदते, चैत्रे वदते, शिष्यमुपवदते। †

९०१। अनोरढात्। (अनोः ५।, अढात् ५।)।

अनुवदते। ‡

९०२। विमति-व्यक्तसहोक्त्योः।

(विमति-व्यक्तसहोक्त्योः ७॥)।

विवदन्ते शिष्याः। व्यक्तं किं, संप्रवदन्ति खगाः। §

---

* अजौ (अजान्तदशायां) ढे कर्म्मणि घे (आन्तदशायामिति यावत्) कर्त्तरि सति, आन्ताड्डातो मं स्यात् घे, न तु स्मृतौ। भक्ताः भवं पश्यन्ति, भवः भक्तान् दर्शयते आत्मानमिति शेषः। भक्ताः शम्भुं पश्यन्ति, भक्तिः भक्तान् शम्भुं दर्शयति। अत्र अजान्तस्य कर्म्म शम्भुः, आन्तस्य कर्त्री भक्तिः, अतो नात्मनेपदं। स्मारयतीति अत्र अजान्तदशायां कर्म्मणो हरे आन्तदशायां कर्तृत्वेऽपि स्मरणार्थत्वान्नात्मनेपदं। पाणिनिः १।३।६७।

† ज्ञानं यत्नः प्रलोभः (उपमन्त्रणमिति पाणिनिः, रहस्युपच्छन्दनमिति क्रमदीश्वरः) एष्वर्थेषु वदे वाचीत्यस्मात् मं स्यात् घे। पाणिनि वदितुं जानातीत्यर्थः। चैत्रे यत्नं करोतीत्यर्थः। शिष्यं प्रलोभयतीत्यर्थः। पाणिनिः १।३।४७।

‡ अनुपूर्व्वादकर्म्मकात् वदो मं स्यात् घे। अत्रापि व्यक्तोक्तौ इति पाणिनिक्रमदीश्वरौ। अनुवदते रामस्य कृष्णः, रामो यथा वदति कृष्णोऽपि तथा वदतीत्यर्थः। अढात् किं, पूर्व्वोक्तमनुवदति। पाणिनिः १।३।४९।

§ विविधा मति विमतिः, व्यक्ता चासौ सहोक्तिश्चेति व्यक्तसहोक्तिः, विमतिश्च व्यक्तसहोक्तिश्च ते तयोः। एतयोरर्थयो वर्त्तमानात् वदो मं स्यात् घे। विवदन्ते शिष्या इति द्वयोरुदाहरणं, विरोधिज्ञानपूर्व्वकं वदन्ति, व्यक्तं सहवदन्ति वा इत्यर्थः। संप्रवदन्ति अस्फुटं वदन्तीत्यर्थः। पाणिनिः १।३।४७,४८।

९०३। तद्योगे वा। (तद्योगे ७।, वा ।१।)।

विप्रवदन्ते विप्रवदन्ति वैद्याः । *

९०४। अवाद्गिरः। (अवात् ५।, गिरः ५।)।

अवगिरते । †

९०५। समः प्रतिज्ञायां। (समः ५।, प्रतिज्ञायां ७।)।

शतं संगिरते । ‡

९०६। उच्चरः सटात्। (उत्-चरः ५।, सटात् ५।)।

धर्म्ममुच्चरते । सटात् किं, धूम उच्चरति । §

९०७। समस्त्या। (समः ५।, त्या ३।)।

अश्वेन सञ्चरते । ¶

९०८। दानः सा चेच्चार्थे।

(दानः ५।, सा ।१।, चेत् ।१।, च्यर्थे ७।)।

* तयोः (विमति-व्यक्तसहोक्त्योः) योगस्तस्मिन् । अस्मिन्नर्थे वदो मं स्याद्वा घे । वैद्याः विरोधिज्ञानपूर्व्वकं व्यक्तं सहवदन्तीत्यर्थः । पाणिनिः १।३।५० ।

† अत्र गिर इति कथनात् गृणातेर्नेति भाष्यम् । पाणिनिः १।३।५१ ।

‡ संपूर्व्वात् गिरतेः प्रतिज्ञायां घे मं स्यात् । शतं प्रतिजानीते इत्यर्थः । प्रतिज्ञायां किं, ग्रामं संगिरति ददातीत्यर्थः ; (ग्रासं संगिरति वा) । पाणिनिः १।३।५२ ।

§ उत्पूर्व्वकात् सकर्म्मकात् चरो घे मं स्यात् । धर्म्ममुच्चरते उल्लङ्घयति । धूम उच्चरति उद्गच्छतीत्यर्थः । पाणिनिः १।३।५३ ।

¶ साधन-तृतीयान्तेन योगे सम्पूर्व्वकात् चरो घे मं स्यात् । हेतौ सहार्थे च तृतीयया न स्यात्, तेन पुत्रेण सञ्चरति, पुत्रेण सञ्चरति । "हेतुतृतीयायुक्तादपि भवति, मुद्रया सञ्चरते नृपः" इति तु गोयीचन्द्रः । पाणिनिः १।३।५४ ।

दास्या संयच्छते कामी। चर्थे किं, दास्या संयच्छति भिक्षां भिक्षवे। *

## ६०६। उप-यमो विवाहे। (उप-यम: ५।, विवाहे ७।)।

रामः सीतामुपायत उपायंस्त। †

## ६१०। भुजो ऽशने। (भुज: ५।, अशने ७।)।

शालीन् भुङ्क्ते गौः। अनशने तु, पृथ्वीं भुनक्ति राजा। ‡

## ६११। संक्ष्णोः। (सं-क्ष्णोः ५।)।

अस्त्रं संक्ष्णुते। §

## ६१२। युजिर उद्ग्यचो ऽयज्ञपात्रे।

(युजिर: ५।, उद्ग्यच: ५।, अयज्ञपात्रे ७।)।

---

* सा तृतीया चेत् यदि चर्थे चतुर्थ्यर्थे भवति तदा तेन तृतीयान्तेन संपूर्व्वकात् दाणो मं स्यात्। कामी जनः दास्या संयच्छते दास्यै वस्त्रादिकं ददातीत्यर्थः। दास्या इति (२९३) अधर्म्मसम्प्रदाने तृतीया। दास्या संयच्छति भिक्षां भिक्षवे इत्यत्र दास्या इति करणे तृतीया। उपसर्गान्तरव्यवधानेऽपि यथा, दास्या सम्प्रयच्छते। पाणिनिः १।३।५५।

† उपात् यमो मं स्यात् घे विवाहे। विवाहशब्देनात्र स्वीकारार्थो बोद्धव्य इति भाष्यमतम्, यतः पाणिनौ 'स्वकरणे' इत्युक्तम्। "स्वीकरणे" इति च क्रमदीश्वरः। तेन "अस्त्राण्युपायंसत जित्वराणि" शकटमुपयच्छते इत्यादि सङ्गच्छते। वोपदेवेन तु "पाणिग्रहणमिह स्वीकरणं गृह्यते न स्वीकरणमात्रम्" इति जयादित्यसर्व्ववर्म्मचन्द्रादीनां मतमनुसृत्य 'विवाहे' इत्युक्तम्। उपायत इति (८८०) सेः कित्त्वात् (६७६) अमलोपे, (५६२) सिलोपः, कित्त्वविकल्पपक्षे मस्य (५०) अनुस्वारः। पाणिनिः १।३।५६।

‡ भोजनार्थे भुजो मं स्यात् घे। 'अनवने' इति तु पाणिनिः, अवनं रक्षणं तद्भिन्नेऽर्थे इत्यर्थः। शालीन् धान्यानि। रक्षाभिन्ने उपभोगार्थेऽपि क्वचित् महाकविप्रयोगादौ मं स्यादिति वक्तव्यं। यथा—बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् (रघुवंशम्) इत्यादौ। पाणिनिः १।३।६६।

§ संपूर्व्वकात् क्ष्णोते मं स्यात् घे। संक्ष्णुते शाणयतीत्यर्थः। पाणिनिः १।३।६५

उद्युङ्क्ते प्रयुङ्क्ते । यज्ञपात्रे तु, प्रयुनक्ति स्रुचं । *

६१३ । प्रतारे वञ्चि-गर्द्धेः । (प्रतारे ७।, वञ्चि-गर्द्धेः ५।) ।

वटुं वञ्चयते गर्द्धयते । प्रतारे किं, श्येनोऽहिं वञ्चयति । †

६१४ । पूजाभिभवे च लापेः ।

(पूजाभिभवे ७।, च ।१।, लापेः ५।) ।

जटाभि र्लापयते । श्येनो वर्त्तिकामुल्लापयते । पुत्रमुल्लापयते ।
एषु किं, घृतं विलापयति । ‡

६१५ । मिथ्या कारे-रभ्यासे ।

(मिथ्या ।१।, कारेः ५।, अभ्यासे ७।) ।

पदं मिथ्या कारयते । मिथ्या किं, साधु पदं कारयति ।
अभ्यासे किं, सकृत् पदं मिथ्या कारयति । §

---

* उत् च, गेरश्च तस्मात् । उदो गेरचश्च परात् युजिरौ ञ ध युजौ इत्यस्मात् मं स्यात् घे, न तु यज्ञपात्रे । प्रयुनक्ति स्रुचमिति स्रुचं यज्ञे नियोजयतीत्यर्थः । पाणिनिः १।३।६४, वार्त्तिकञ्च । "असंनिर्दुरः प्रादेः" इति क्रमदीश्वरः ।

† वञ्चु गत्यां, गृधिर्यु लिप्से इत्येताभ्यां प्रेरणजान्ताभ्यां घे मं स्यात् प्रतारे । प्रलम्भनमिति पाणिनिसर्व्ववर्म्माणौ, विसंवाद इति क्रमदीश्वरः । वटुं ब्राह्मणकुमारं वञ्चयते गर्द्धयते प्रतारयतीत्यर्थः । श्येनः पक्षी अहिं सर्पं वञ्चयति परिहरतीत्यर्थः । पाणिनिः १।३।६९ ।

‡ पूजायां अभिभवे चकारात् प्रतारे च लापयते घे मं स्यात् । लापिरिति ली-धातो र्णौ (७४५) ङापत्वे, ला-धातोश्च णौ, उभयोरादन्तत्वात् (७८४) पणि रूपं । जटाभि र्जटिलकेशैः पुष्पजटाभिर्व्वा पूजयतीत्यर्थः । श्येनो वर्त्तिका-मभिभवतीत्यर्थः । पुत्रं प्रतारयतीत्यर्थः । घृतं द्रवीकरोतीत्यर्थः (७६१) । पाणिनिः १।३।७० ।

§ मिथ्या-शब्दात् परात् कारयते घे मं स्यात् पौनःपुन्ये । पदं मिथ्या कारयते स्वरादिदुष्टं पदं पुनःपुनरुच्चारयतीत्यर्थः । साधु पदं पुनःपुनरुच्चारयतीत्यर्थः । स्वरादिदुष्टं पदं सकृदुच्चारयतीत्यर्थः । पाणिनिः १।३।७१ ।

९१६। व्यतीहारे गतिहिंसाशब्दार्थ-हसान्य-ह्ववहो ऽनन्योन्यार्थे। (व्यतीहारे ७।, गति—वह: ५।, अनन्योन्यार्थे ७।)।

व्यतिभवते अर्कमिन्दु:, व्यतिहरते व्यतिवहते। व्यतिजज्ञिष व्यतिजज्ञिध्वं। *

९१७। होऽस्तेरेति। (ह: १।, अस्ते: ६।, एति ७।)।

अस्तेर्ह: स्यादेकारे परे। व्यतिहे। †

गत्यर्थादेस्तु, व्यतिसर्पन्ति व्यतिघ्नन्ति व्यतिजल्पन्ति व्यतिहसन्ति। अन्योन्यार्थे तु, परस्परं व्यतिलुनन्ति। ‡

९१८। स्मृदृशो(ऽ)ननुज्ञानाप्रतिश्रोः सन:।

(स्मृ—श्रो: ५।, सन: ५।)।

---

* गतिश्च हिंसा च शब्दश्च गतिहिंसाशब्दा:, ते अर्था येषां ते गतिहिंसाशब्दार्था:। ते च हसश्च ते गतिहिंसाशब्दार्थहसा:, तेभ्योऽन्य: गतिहिंसाशब्दार्थहसान्य:। गतिहिंसाशब्दार्थहसान्यश्च ह्वश्च वहश्चेति तस्मात्। अन्योन्यस्य अर्थ इव अर्थो यस्य सोऽन्योन्यार्थ:, न अन्योन्यार्थो ऽनन्योन्यार्थ स्तस्मिन्। अन्योन्यार्थेन अन्योन्य-इतरेतर-परस्पर-शब्दा बोध्या:। गत्यर्थ हिंसार्थ शब्दार्थ हसति—भिन्न धातुभ्यो ह्ववहाभ्याञ्च मं स्यात् घे व्यतीहारे, न त्वन्योन्यार्थशब्दे प्रयुज्यमाने। परस्परमेकजातीय-क्रियाकरणं व्यतीहार:, क्रिया-विनिमय: क्रिया-विपर्य्यय: इत्यादि। ह्ववहोर्गत्यर्थत्वात् पृथगुक्ति:। इन्दुरर्कं व्यतिभवते, अर्को यथा इन्दावस्तं गते उदेति, इन्दुरपि तथा अर्के अस्तं गते उदेतीति व्यतीहार:। व्यतिहरते व्यतिवहते कृष्णं बालक:। एवं व्यतिहरन्ते धान्यं चोरा: व्यतिवहन्ते भारं कृषका: इत्यादि। व्यतिजज्ञिष त्वमिति शेष:, व्यतिजज्ञिध्वं यूयमिति शेष:, जन म लिट् जनौ, (७२६) द्वित्वं, (७०८) इम्, (२२०) उङ्लोप:। एवं व्यतिसे, व्यतिषजते इत्यादि। पाणिनि: १।३।१४,१५,१६, वार्त्तिकत्रयञ्च।

† व्यतिहे इति व्यति-अस-की-ए, अनेन असस्थाने ह-आदेश:। पाणिनि: ७।४।५२।

‡ व्यतिसर्पन्तीत्यादि गत्यर्थादित्वात् व्यतीहारेऽपि न मं। परस्परं व्यतिलुनन्तीति परस्परशब्देनैव व्यतीहारस्योक्तत्वात् न मं। सम्यग्विनिमयेनोभौ दधतुर्भुवनद्वयमिति रघुवंशे विनिमय-शब्दस्यापि अन्योन्यार्थकल्पनेन नात्मनेपदं।

एभ्यः सनन्तेभ्यो मं स्यात्। सुस्मूर्षते दिदृक्षते जिज्ञासते शुश्रूषते। अन्यत्र अनुजिज्ञासति आशुश्रूषति प्रतिशुश्रूषति।*

९१९। ञित् आन्त-पिब धे नृद्वद् वस दम-रुचाद् परिमुहायमयसो ऽगिज्ञापवदाग्यन्योत्समायमः फलिनि।† (ञित्—यम: ५।, अगिज्ञा—यम: ५।, फलिनि ७।)।

ञितो आन्तपिबादे-रगिजानाते-रपवदो ऽग्यन्योदादिपूर्व्वयमश्च फलवति घे मं स्यात्। यजते। पाययते धापयते नर्त्तयते वादयते वासयते दमयते रोचयते आदयते परिमोहयते आयामयते आयासयते। जानीते अपवदते उद्यच्छते संयच्छते आयच्छते। यन्ये तु, वेदमुद्यच्छति। फलिनि किं, यजति याजकः।‡

इति म-पादः।

---

* नास्ति अनुर्यस्मिन् सोऽननुः, स चासौ ज्ञाश्चेति अननुज्ञाः। न विद्यते आ-प्रती यस्मिन् सोऽनाप्रतिः, स चासौ श्रुश्चेति अनाप्रतिश्रुः। स्मृश्च दृश्च अननुज्ञाश्च अनाप्रतिश्रुश्चेति तस्मात्। एभ्यः सनन्तेभ्यो मं स्यात् 'घे'। पाणिनिः १।३।५७,५८,५९।

† परेर्मुहः परिमुहः, आङो यम-यमौ आयमयसौ, पिबश्च धेश्च नृत् च वदश्च वसश्च दमश्च रुचश्च अदश्च परिमुहश्च आयमयसौ चेति तत्। आन्तश्चासौ पिबधेनृद्वद-वसदमरुचादपरिमुहायमयम् चेति तत्। ञिच्च आन्त-पिब——यस् चेति तस्मात्। नास्ति गि र्यस्मिन् सोऽगिः, अगिश्चासौ ज्ञाश्चेति अगिज्ञाः। अपात् वदः अपवदः। उद्च समृच आश्च उत्समाः, तेभ्यो यम् उत्समायम्, न यन्यो ऽयन्यः, अयन्य उत्समायम् अयन्योत्समायम्। ततः अगिज्ञाश्च अपवदश्च अयन्योत्समायम् चेति तस्मात्। पाणिनिः १।३।७२—७७,८९, वार्त्तिकद्वयञ्च।

‡ अत्र ञित्पदेन गणपाठे आनुबन्धाः आन्ताश्च गृह्यन्ते। तेन ञित्त्वेनैव आन्तप्राप्तौ आन्त-पिबादे र्ग्रहणं (८६१) कम्पाद्यार्थेङ् इत्यादिना विहित-परस्मैपदस्य बाधनार्थम्। अन्यथा पिब धे अद एषामन्नार्थत्वात् अन्येषामञिप्राणिपाठत्वात् तेन

## ३य पाद:—ढ-भावं।

## ६२०। ढ-भावे मं। (ढ-भावे ७।, मं १।)।

धो ढे भावे च मं स्यात्। *

## ६२१। र-तनो र्यगिणौ। (र-तनोः ७॥, यक्-इणौ १॥)।

धोः रे परे यक्, तनि परे इण्, स्यात् ढे भावे च।

स्तूयते विष्णुः स्तूयेत, स्तूयतां, अस्तूयत। अस्तावि। †

---

परस्मैपदापत्तिः स्यात्। ततश्च कम्पाद्यार्थेङित्यादि-विशेषविधेरन्यत्र सर्व्वजान्तेभ्यः फलवत्कर्त्तरि आत्मनेपदं सिद्धमिति। किञ्च श्रम ञ क् वितर्के इत्यादि चुरादि-गणीयस्य ञानुबन्धात् चुरादेर्ञें ञकारेण ञानुबन्धित्वं नास्तीति सूचनात् गणपठित-ञानुबन्धभिन्न-चुरादेर्नैयं व्यवस्था। यजते इत्यादि। यजे ञो देवार्च्चादौ इति ञित्। पा पाने, धे ट पाने, नृत्य नर्त्तने, वदे वाचि, ऐ वर्मां निवासे, दम् भ्य इर् शमे, रुच ङ् ऌ प्रीतिप्रकाशयोः, षद ऌौ भते, मुष्लू ञि ऌ वैचित्त्ये, श्रौ यमूपरमे, इर् यसु यतने, एकादशैते ञान्ताः। ज्ञा ग बोधे, वदे वाचि, औ यमूपरमे इति त्रयः। वेदमुद्यच्छति वेदमवगन्तुमुद्यमं करोतीत्यर्थः। याजको यजतीत्यत्र वेतनदानेन यजमान-एव फलवान्, न तु याजक इत्यर्थः।

(५३१) मत्रशः पमे इत्यनेन उभयपदप्राप्तौ व्यवस्थेयं, फलवति कर्त्तरि आत्मनेपदं, अफलवति परस्मैपदमिति।

---

* ढं कर्म्म, भावो धात्वर्थः, समाहारे ढभावं तस्मिन्। (६२५) भावे माद्यमिति वक्ष्यति, तथाप्यत्र भावग्रहणं परत्रानुवृत्त्यर्थं। वृत्तौ धोरिति कथनं धातुमात्रप्राप्त्यर्थं, तेन पच्यते, चिकित्स्यते, कार्य्यते, पिपत्स्यते, पापच्यते इत्यादि। कर्म्मणि वाच्ये प्रत्ययेन कर्म्मण एवोक्तत्वात् कर्म्मपदस्य सङ्ख्या-नाम-युष्मदस्मदाद्यनुसारेण क्रियापदस्य वचनादि भविता। पाणिनिः १।३।१३।

† अर्थगत-विशेषापेक्षया निमित्तगत-विशेषस्य बलवत्त्वात् ण्यां विना यक् बाध्यते, इणा च विर्बाध्यते। कित्त्वात् यकि न गुणः, णित्त्वात् इणि वृद्धिः। स्तूयते इत्यादि

## ९२२। हन ग्रह दृशचः सिङ्यादेर्मिण् वा।

(हन-ग्रह-दृश-चच: ५।, सि-आदे: ६।, मिण् ।१।, वा।१।)।

एभ्यः परासां सि-डी-ढी-ती-थीनां मिण् वा स्यात् ढ-भावे। अस्ताविषातां अस्तोषातां हरिहरौ। तुष्टुवे, स्ताविता स्तविता स्तोता, स्ताविषीष्ट स्तोषीष्ट, स्ताविष्यते स्तोष्यते, अस्ताविष्यत अस्तोष्यत। * स्मर्य्यते, अर्य्यते, संस्क्रियते। †

## ९२३। नेण् तपो ऽनुतापे।

(न ।१।, इण् ।१।, तप: ५।, अनुतापे ७।)।

अन्वतप्त। दीयते। ‡

## ९२४। यन् ङिणतङ्क्दिण्यातः।

(यन् ।१।, ङिणतङ्क्दिणि ७।, आत: ६।)।

---

(५९०) घोंऽजय्यरे इति दीर्घः। विष्णुरिति कर्म्म, अनेरिति शेषः। टी-तन् अस्तावि (५७७) वृद्धिः, (६४४) इषन्तन् लोप्यः। पाणिनिः ३।१।६६,६७।

* हनश्च ग्रहश्च दृशश्च अच्च तत्तस्मात्। सिश्च आदिश्च (डी ढी ती थी) तत्तस्य। मिणो मित्त्वादादौ, णित्त्वात् वृद्धिः। इमो बाधकोऽयं।' स्तु-टी आतां सिः, सेरादौ मिण्, उकारस्य (५७७) वृद्धिः। पक्षे (५८७) मेमिकाणादिति इमनिषेधः, (५४२) गुणः। हरि-हरौ कर्म्म। डी-ता, वा मिण्, मिणो विकल्पपक्षे (६०६) वा इम्। एवं ढी-सीष्ट, ती-स्यते, थी-स्यत। पाणिनिः ६।४।६२।

† स्मृ-ते, यक्, (६१५) स्याद्यर्त्तृत इति गुणः। एवं ऋ-ते अर्य्यते। सं-कृ-ते, (७७६) सुम्, (६१५) स्कुस्तु आमेवेति नियमात् गुणाभावे, (६२०) ऋद्रिः।

‡ तपो ऽनुतापार्थे इण् न स्यात् ढभावे। अन्वतप्तेति तन्, इणो निषेधे स्यां सिः, औदित्त्वादिम्, (५६२) सिलोपः। दीयते इति दा-न दाने, डु दा ञ लि दाने, दा ल लूनौ, दे ङ पालने, दै प शोधने, दो य च्छेदे इत्येषां (६१२) दामागे इति ङी। पाणिनिः ३।१।६५।

आदन्तानां यन् स्यात् ञिणति क्ङति, इणि च। *

अदायि, अदायिषातां अदिषातां। †

हन्यते, अवधि अघानि, अघानिषातां अवधिषातां अहसातां। ‡

गृह्यते, अग्राहि, अग्राहिषातां अग्रहीषातां। §

दृश्यते, अदर्शि, अदर्शिषातां अदृक्षातां। ¶

शम्यते मोहो मुकुन्देन, अशमि अशामि, अशमिषातां अशामिषातां अशमयिषातां। ||

---

* ञ च णच ञणौ, तौ इतौ यस्य स ञिणत्, स चासौ क्ङ्चेति ञिणत्क्ङत्, स च इण्च तस्मिन्। यनो न इत् अन्ते। आदन्तधातुभ्यो णपः स्थाने (६०६) डौ विधानात्, औ च (७८४) पण्-विधानात् अत्र ञिणति इत्यनेनैव सिद्धे क्ङिणो ग्रहणं दरिद्रा-धातोर्णपि ददरिद्र इत्यत्र यनागम-निषेधार्थं, अन्यथा, लोपोऽप्यादेश उच्यते इति न्यायेन लोपस्यादेशत्वे, आगमादेशयोर्मध्ये बलीयानागमो विधिरिति न्यायात्, (७०२) दरिद्र आलोप इति सूत्रं बाधित्वा अनेन यनागमापत्तेः। पाणिनिः ७।३।३३।

† अदायीत्यादि दा-तन्, इण्, (६४४) तन्लोपः, अनेन यन्। आतां सिः, मिण्, इण्-मिणोरभेदात् यन्। मिणो विकल्पपक्षे (७३६) स्थादोरिति ङिः।

‡ अवधीत्यादि हन-तन्, इण्, तन्लोपः, (६७८) वधादेशः, (५७७) वृद्धिः, (७४४) पुनः ह्रस्वः। वधादेशविकल्पपक्षे (६७६) खिर्ञ्णौ घ इति हस्य घः, वृद्धिः। आतां सिः, मिण्, हस्य घः, वृद्धिः। मिणो विकल्पपक्षे वधादेशः, तस्यापि विकल्पपक्षे (८७६) हनः कित्क्षिरिति सेः कित्त्वं, (६७६) अम्-लोपः।

§ गृह्यते इति (६६१) ञिः। ठौ आतां, सिः, मिण्, वृद्धिः। पक्षे इम् (७७१) इमो दीर्घः।

¶ अदर्शि, दृश-टौ-तन्, इण्, गुणः, तन्लोपः। टौ आतां सिः, मिण्, गुणः। पक्षे औदित्वान्नेम, (१५४) षङ्, (६०२) षस्य कः, (६५६) सेः कित्त्वं, (१११) षत्वं।

|| शम्यते इति शमधातोः ञिः, (८००) वा शमेति नित्यं ह्रस्वः, शमि इति स्थिते यक्, (६४१) ञेर्लोपः। मोह इति अजन्तकर्त्तुः कर्म्मत्वात् उक्तकर्म्मणि (२८०) प्रथमा। शमि-तन्, इण्, (७६८) ञौसनोस्तु घंश्चेति ह्रस्वो दीर्घश्च, ततः तन्लोपः। आतां, सिः (६२२) अजन्तत्वात् मिण्, ञौसमोस्तु घंश्चेति ह्रस्वो दीर्घश्च। मिणोविकल्पपक्षे इम्, न ञेर्लोपः।

## ९२५। भावे मार्द्यं। (भावे ७।, मार्द्यं १।)

मस्याद्यं वचनं भावे प्रयुज्यते। मया भूयते, अभावि, बभूवे बुभूवे, भाविता भविता। श्रम्यते मुनिना, अश्रमि। अकामि अवामि आचामि। व्यश्रमि व्यश्रामि। अवधि। अजागारि, ओौ तु अजागरि अजागारि। *

## ९२६। भनजगिलम्भो र्वेस्रमो र्नलोपः।

(भनज-अगिलम्भः ६।, वा ।१।, इण्‌ञमीः ७।, न-लोपः १।)।

अभाजि अभञ्जि, अलाभि अलम्भि। गौ तु, प्रालम्भि। †

---

* भावे क्यादिविभक्तयः अकर्म्मकादेव धातोः स्युः, कृत्प्रत्ययास्तु सकर्म्मकादपि। भावो धात्वर्थः, तस्मिन् वाच्ये आत्मनेपदस्य आद्यं वचनं स्यादित्यर्थः। धात्वर्थस्य वाच्यत्वात् युष्मदस्मदोरवाच्यत्वे से-प्रभृतयो न स्युः, अपिच धात्वर्थस्य द्वित्वादेरविवक्षातो द्विवचन-बहुवचने न स्तः, धात्वर्थस्य द्वित्वादेर्विवक्षायामपि पुत्राभ्यां भूयते इत्यादौ द्विवचनादि न स्यादिति। भूयते इति, मया इति अनुक्तकर्त्तरि तृतीया। भू सत्तायामिति अकर्म्मकात् भावे क्री ते, यक्। अभावि टी-तन्, इण्, वृद्धिः। बभूवे बुभूवे इति (५६०) भुवोऽङ् क्यां। इदन्तु पाणिनीया नेच्छन्ति। भाविता भविता, मिण् वा, पक्षे इम्। श्रम्यते मुनिना इति श्रमु भिये श्रमे, ते यक्। मुनिः श्रान्तोभवतीत्यर्थः। अश्रमि, टी-तन्, इण्, वृद्धिः, (७४४) जनवध इति ह्रस्वः। तत्रैव कम-वम-आचम-वर्जनात् तेषु न ह्रस्वः। आङ्-पूर्व-चमो वर्जनात् अचमीत्यत्र ह्रस्वः। श्रम-यम-विश्रमस्तु वेति व्यश्रमि व्यश्रामि, एवं अम अमि आमि, अयमि अयामि। अवधि वध हतौ टी-तन्, अत्रापि ह्रस्वः। अजागारि, (६९९) जागोऽणविति गुणनिषेधः, वृद्धिः। ओ तु (७९८) ओसमीस्तु घंस जागुर्स्ति वा ह्रस्वे पदद्वयं। भाष्यम्।

† नास्ति गि र्यस्मिन् सोऽगिः, स चासौ लम्भ चेति अगिलम्भ। भनज च अगिलम्भ च तत्तस्य। अनयोर्नस्य लोपः स्याद्वा इणि अमि च परे। अभाजीति भनज धौ मोटने टी तन्, इण्, नलोपः, ततः उङ् अकारस्य वृद्धिः। नलोपाभावपक्षे उङ् अकाराभावात् न वृद्धिः। एव लभी ङ य प्राप्तौ टी तन्, इण्, (७४१) नुण् रध इति नुण्, अनेन नलोपपक्षे वृद्धिः, अन्यत्र न वृद्धिः। गौ तु इति उपसर्गे उपपदे सतीत्यर्थः। पाणिनिः ६।४।३२,७।१।६९।

## ८२७। ढवद् ढघो ऽढे। (ढवत् ।१।, ढघः १।, अढे ७।)।

ढमेव घत्वं प्राप्तं ढघः, स च ढवत् स्यात् नतु ढे सति।*

तथाच—क्रियमाणन्तु यत् कर्म्म स्वयमेव प्रसिध्यति।
सुकरैः स्वैर्गुणैः कर्त्तुः कर्म्मकर्त्तेति तद्विदुः॥

स्वयमेव भिद्यते काष्ठं, अभेदि।†

---

* ढस्य तत् घश्चेति ढघः, आदौ ढं पश्चात् घ इत्यर्थः। ढघः कर्म्मकर्त्ता ढवत् कर्म्मवत् भवति, नतु ढे कर्म्मणि सति, द्विकर्म्मकस्थले एकस्य कर्म्मणः कर्त्तृत्वविवक्षायां अन्यस्मिन् कर्म्मणि विद्यमाने न स्यादित्यर्थः। तेन याच्यते राजा स्वयमेव भूमिमिति न स्यात्। ढवदित्यनेन कर्म्मवाच्यविहितं यक् इण् मिण् आत्मनेपदञ्च अतिदिश्यते, न तु कर्म्मकर्त्तुः कर्म्मत्वं विधीयते। पाणिनिः ३।१।८७, वार्त्तिकञ्च।

धात्वर्थाः केचित् कर्म्मस्थाः केचित् कर्त्तृस्थाश्च भवन्ति। अत्र कर्म्मस्थार्थधातूनामेव कर्म्मणः कर्त्तृत्वविवक्षा, नतु कर्त्तृस्थार्थधातूनां, तेन पच्यते ओदनः स्वयमेव, भिद्यते काष्टं स्वयमेव इत्यादि स्यात्, खाद्यते ओदनः स्वयमेव, गम्यते ग्रामः स्वयमेव इत्यादि तु न स्यादिति बोध्यं। तथाच प्राञ्चः—कर्म्मस्थेऽपि च धात्वर्थे कर्म्मकर्त्ता च कर्म्मवत्। कर्त्तृस्थेऽपि च धात्वर्थे कर्म्मकर्त्ता च कर्त्तृवत्॥ कर्म्मस्थः पचते र्भावः कर्म्मस्थाश्च भिदादयः। कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः इति॥ पचतेर्भावस्तण्डुलादीनां विक्लित्तिस्तण्डुलादिष्वेव भवति नतु पाककर्त्तरि, एवं भिदादे र्भावो भेदादिः काष्ठादिष्वेव न तु भेदादिकर्त्तरि। बुध्यते र्भावो ज्ञानं शिष्येष्वेव न तु ग्रन्थादौ, एवं गमादीनां भावः पादचालनादिः कर्त्तृष्वेव नतु ग्रामादावित्यर्थः। एवञ्च—निर्व्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते। न तु प्राप्ये कर्म्मणीति सिद्धान्तोऽयं व्यवस्थितः॥ किञ्च एकक्रियाकर्म्मण. कर्त्तृत्वं विवक्ष्यते इति बोध्यं, तेन पचत्योदनं देवदत्तः, राध्यते ओदनः स्वयमेव इत्यत्र न स्यात्।

† एकक्रियायां एकस्य कर्म्मत्वं कर्त्तृत्वञ्च कथं सम्भवतीत्यत आह—क्रियमाणमिति। क्रियमाणं साध्यमानं यत् कर्म्म. कर्त्तुः सुकरैः सुखनिष्पाद्यैः, स्वैर्निजैः कर्म्मसम्बन्धिभिरिति यावत् गुणैः, स्वयमेव प्रसिध्यति निष्पद्यते तत् कर्म्मकर्त्ता इति विदुर्जानन्ति बुधा इति शेषः। अन्येन भिद्यमानं काष्ठं स्वयमेव भिद्यते, काष्ठस्यातिभङ्गुरत्वरूपगुणेन कर्त्तुः सुकरेण स्वयमेव भेदो जायते इत्यर्थः। काष्ठमिति आख्यातेनोक्तत्वात् प्रथमा। टौ तन् अभेदि।

## ६२८ । कुषि-रन्जः श्यन्-पे वा रे ।

(कुषि-रन्जः ५।, श्यन्-पे १॥, वा ।१।, रे ७।) ।

कुष्यति कुष्यते, रज्यति रज्यते । *

## ६२९ । वेणजदुहः । (वा ।१।, इण् ।१।, अजदुहः ५।) ।

अजन्तात् दुहश्च इण् स्याद्वा ढघे । अकारि अकृत, अदोहि अदुग्ध । †

## ६३० । न तप-रुध-सढपचदुहः ।

(न ।१।, तप-रुध-सढ-पचदुहः ५।) ।

तपो रुधः सढाभ्यां पचदुहाभ्याञ्च इण् न स्यात् ढघे । अतप्त, अरुद्ध । अपक्त आम्रः फलं, अदुग्ध गौ दुग्धं । अतएवानयो-र्द्वेऽपि ढवत्वं । ‡

---

* 'कुषिश्च रन्जश्च तत्तस्मात् । श्यन् च पश्च ते । आभ्यां रे विषये श्यन् परस्मैपदञ्च स्याद्वा कर्म्मकर्त्तरि वाच्ये । कुष ग निष्कोषे, रे परे पं श्यन् च, पक्षे मं यक् । एवं रज्यतीति रन्जौ ञ रागे, (५६७) नलोपः । 'रे किं, अकोषि, चुकुषे । अरञ्जि, ररञ्जे ररञ्जे । पं वेति कृते सिद्धेऽपि श्यन्विधानं, कुष्यन्ती रज्यन्ती इत्यत्र (२४५) नित्यनुमर्थं । पाणिनिः ३।१।९० ।

† अच् च दुह च तत्तस्मात् । अजन्तधातो र्दुहधातोश्च तनि परे इण् वा स्यात् ढघे । वा-ग्रहणं वाधिकारनिवृत्त्यर्थं । अकारीति कृ-तन्, इण्, (६४४) तन्-लोपः, (५७७) वृद्धिः । पक्षे ध्यां सिः, (६५९) सेः कित्त्वं, (५६२) सलोपः । अदोहीति इणि गुणः । पक्षे (६५७) सिनिषेधे सकोऽप्राप्तिपक्षे अदुग्ध । पाणिनिः ३।१।६२,६३ ।

‡ ढेन सह वर्त्तेते यौ तौ सढौ, सढौ च तौ पचदुहौ चेति, ततः तपश्च रुधश्च सढपचदुहौ चेति तस्मात् । अतप्तेति इण्-निषेधे ध्यां सिः, औदित्त्वात् नेम्, सिलोपः । एवं अरुद्ध, अत्र सेः कित्संज्ञा । अपक्त आम्र इत्यादि, कालेन फलं पच्यमान आम्रवृक्षः स्वयं फलं अपक्त, एवं गोपेन दुग्धं दुह्यमाना गौः स्वयं दुग्धं अदुग्ध । अत्र सकर्म्मक-

**९३१। सन श्रन्थ ग्रन्थ ब्रू कॄ गॄ दुह नम-भूषार्थात् यक् च ञिस्नुश्रि-माढात्त्वमिण्।**

(सन—भूषार्थात् ५।, यक् ।१।, च ।१।, ञि—माढात् ५।, तु ।१।, अमिण् ।१।)।

सनन्तादे-रिण् यक् च न स्यात् ढघे, ञ्यन्तादेस्तु मिण्वर्जं। *

चिकीर्षते अचिकीर्षिष्ट। श्रथ्नीते अश्रन्थिष्ट, ग्रथ्नीते अग्रन्थिष्ट। ब्रूते अवोचत। किरते अकीर्ष्ट, गिरते अगीर्ष्ट। दुग्धे अदुग्ध। नमते अनंस्त। तंसते अतंसिष्ट। कारयते, अचीकरत अकारिष्ट अकारयिष्ट। स्नुते अस्नाविष्ट अस्नोष्ट। श्रयते अशिश्रियत अश्रायिष्ट अश्रयिष्ट। आहते आवधिष्ट आघानिष्ट आहत। †

---

पचदुहाभ्यां इण्-निषेधे च्यां सिः, सिलोपः, उभयत्र औदित्त्वान्नेम्। अतएवेति, सूत्रे सकर्म्मक-पचदुहग्रहणात् अनयोः कर्म्मान्तरसत्त्वेऽपि कर्म्मकर्त्तृत्वमिति बोध्यं। पाणिनिः ३।१।६४,६५, वार्त्तिकञ्च।

* सन् सनन्तः। भूषा अर्थो यस्य स भूषार्थः। सन् च श्रन्थश्च ग्रन्थश्च ब्रूश्च कॄश्च गॄश्च दुहश्च नमश्च भूषार्थश्चेति तस्मात्। ञि ञ्यन्तः। मे (आत्मनेपदे) अढः (अकर्म्मकः) माढः। ञिश्च स्नुश्च श्रिश्च माढश्चेति तस्मात्। न मिण् अमिण्। एभ्यो यक्, चकारात् इण् च, न स्यात्, इणोऽभिन्नत्वेन मिण् अपि न स्यात् ढघे, ञ्यन्तादेस्तु मिण्भिन्नः इण् यक् च न स्यात्, मिण् तु स्यादेवेत्यर्थः। दुहधातोः पूर्व्वेण इण्-निषेधे अत्र ग्रहणं यक्-निषेधार्थं। ञ्यन्तब्रुवो र्द्विकर्म्मकत्वेऽपि अतएवानयो र्ढेऽपि ढघत्वमिति बोध्यं। पाणिनिः ३।१।८९, वार्त्तिकत्रयञ्च।

† चिकीर्षते इत्यादि, यं कर्त्तुमिच्छति स स्वयमेव चिकीर्षते इति चिकीर्ष-धातोः यक्निषेधे आश्रिककर्त्तृवाच्यत्वात् शप्। टी-तम् इण्-निषेधे (५५१) सिः, अभिन्नत्वात् मिणोऽपि निषेधे (५५४) इम्। सकृद्गतौ विप्रतिषेधौ यद्बाधितं तद्बाधितमेवेति न्यायात् सिबाधकस्य इणोऽपि निषेधे पुनः कथं सिरिति चेत् न्यायस्य सर्व्वत्रास्वीकारादिति। श्रन्थ ग मोचे क्री-ते यको निषेधे आश्रिकर्त्तृवाच्यत्वात् (७३८) श्ना, (७०१) श्नाद्व्योरिति ईः, (५६७) नलोपः। टी-तन्, इण्-निषेधे सिः इम् च। एवं ग्रन्थ-ग दर्भे इत्यस्यापि।

# ९३२ । न्यादि-आन्ताढगत्यर्था मुख्ये ढे ढत्वमाप्नुयुः। गौणे याचादयोऽन्ये, तु यथेष्टं द्विढधुष्विति॥*

अन्यते यन्यते इति भौवादिकौ कश्चिदुदाहरति । ब्रूते यक्निषेधे शप्, अदादित्वात् शपो लुक् । टी-तन्, इण्निषेधे, अर-विषये (७२५) वचादेशे, (६१८) वक्रास्येति ङः, (६५२) वोचादेशः । कॄ श विक्षेपे ते यक्-निषेधे, तुदादित्वात् (७३८) शः(६२८)ऋत्स्थाने इर् । टी-तन् इण्निषेधे, सिः, (७४७) स्याद्वृद्दिति इमोऽभावपक्षे (६५८) सेः किस्त्व, इर्, (२२८) दीर्घः । इमपक्षे तु अकरीष्ट अकरिष्ट इति च । एवं गॄ श निगरणे इत्य-स्यापि । दुग्धे इति दुह ते, यक्निषेधे शप्, शपो लुक्, (१७६) दादेर्घः । टी-तन्, पूर्व्वसूत्रेणैव इण्निषेधे, (६५७) सकोऽप्राप्तिपक्षे सि-निषेधः । नम-ते यक्निषेधे शप् । टी-तन्, इण्निषेधे सिः, औदित्वान्निम् । तस-धातुर्भूषार्थः । कारयते इति कृ ञिः कारिधातोः ते, यक्निषेधे शप् । टी-तन्, इण्निषेधे, (६१३) अङ्, द्वित्वादिकं, अचीकरत । अङो नित्यत्वेऽपि अत्र मिण्वर्जमिति कथनेन मिणः प्राप्त्यनुरोधात् आन्त-श्रिभ्यां पक्षे ङ्यां सिरिति, अतः मिणि ञेर्लोपे, अकारिष्ट, मिणोऽप्राप्तिपक्षे इमि ञेर्लोपाभावे अकारयिष्ट । णुल प्रस्तुर्यां नु ते यक्निषेधे, शप्, शपो लुक् । टी-तन्, इण्निषेधे, ङ्यां सिः, मिण्, वृद्ध्यादि, अस्ताविष्ट । मिणोऽप्राप्तिपक्षे, (५९६) स्तुक्रमोऽमे इति नियमादिम्निषेधः । श्रि ञ सेवने ते, यक्निषेधे शप् । टी-तन् इण्निषेधे, अङ् द्वित्वादि, अशिश्रियत । मिण्पक्षे अश्रायिष्ट, इम्पक्षे अश्रयिष्ट । आहते इति आ-हन ते यक्निषेधे शप्, शपोलुक्, (६७६) अमलोपः । टी-तन्, इणो निषेधे, सिः, मिण्, (६७८) वधादेशः, वृद्धि (७४४) ह्रस्वः, आवधिष्ट । वधा-देशाभाव-पक्षे (६७९) हस्य घः, वृद्ध्यादि, आघानिष्ट । मिणोऽभावपक्षे (८७९) सेः किस्त्वं, ततो अमलोपः, ततः सिलोपः, आहत । आङ्पूर्व्वहन्तेरकर्म्मकात् (८७८) आत्मनेपदविधानात्, सकर्म्मकोऽप्ययं भाढ. बोद्धव्यः अकर्म्मकस्य कर्म्मकर्त्तृत्वासम्भवात् ।

* द्विकर्म्मकधातुभ्यः कर्म्मणि वाच्ये प्रत्ययोत्पत्तौ मुख्यं गौणमुभयं वा कर्म्म उक्तं भवतीति सन्देहे व्यवस्थामाह—न्यादीति । नास्ति ढं (कर्म्म) यस्य सोऽढः । अढश्च गत्यर्थश्च अढगत्यर्थौ, आन्तौ च तौ अढगत्यर्थौ चेति आन्ताढगत्यर्थौ । न्यादयश्च आन्ताढगत्यर्थ च ते । द्विढधुषु द्विकर्म्मकधातुषु मध्ये, (२८४) न्यादयो—नी वह हृ दण्ड ग्रह कृ मन्थ मुष पचाद्या नव, आन्ताकर्म्मका आन्तगत्यर्थाश्च धातवो मुख्ये ढे कर्म्मणि वाच्ये ढत्व कर्म्मप्रत्ययं आप्नुयुः । (२८५)याचादयो—याच्‌ञार्थ दुह चि प्रच्छ रुध ब्रू शास जि इत्यष्ट धातवो गौणे कर्म्मणि वाच्ये कर्म्मप्रत्ययमाप्नुयुः । अन्ये तु द्विकर्म्मका धातवः यथेष्ट मुख्ये गौणे वा कर्म्मणि वाच्ये कर्म्मप्रत्ययमाप्नुयुरिति व्यवस्था । (२८४) आन्तान् शब्दार्थांश्चनाथ ज्ञानार्थं ग्रह दृश श्रु कृ इत्येतानेव धातून् अन्येषु कश्चित् पठति । साक्षात् क्रिया

निन्ये विजनमजागरि रजनिमगमि मुदमयाचि सम्भोगं।
गोपी हावमकार्य्यत भावश्चैनामनन्तेन॥ *

इति ढभाव-पादः।

---

न्वयित्वं मुख्यत्वं, व्यवहितक्रियान्वयित्वं गौणत्वमिति। अत्र यथेष्टमिति अनिर्णयादुक्तं, सर्व्वत्र आत्मना प्रयोज्यं कर्म्मगौणं भवतीति पाणिनि सर्व्ववर्म्म क्रमदीश्वराः। पाणिनिः यथा—"गौणे कर्म्मणि दुह्यादेः (दुह याच पच दण्ड रुध प्रच्छ चि ब्रू शास जि मन्थ मुष) प्रधाने नी हृ कृष् वहाम, बुद्धिभक्षार्थयोः शब्दकर्म्मणाञ्च निजेच्छया, प्रयोज्य-कर्म्मण्यन्येषां ण्यन्तानां लादयोः मताः।"

* उदाहरणान्याह निन्ये इत्यादार्य्यया। अनन्तेन कृष्णेन गोपी विजनं (वनं) निन्ये प्रापिता, अत्र गोपीति मुख्य कर्म्म उक्तं। अनन्तेन गोपी रजनिं अजागरि जागरिता, (२८२) देशाध्वकालत्यनेन कालाधिकरणस्य रजने. कर्म्मत्वे सकर्म्मकस्यापि, स्वभावा-दकर्म्मकस्य जागधातोः आत्मकर्त्री गोप्याः (२८४) कर्म्मत्वं, ततश्च प्रेरणक्रियाया मुख्यं कर्म्म गोपीत्युक्तं। अनन्तेन गोपी मुदं हर्षं अगमि प्रापिता, अत्रापि गोपी मुख्यं कर्म्म उक्तं। अगमीति आत्मगमधातोः टौ तन्। अनन्तेन गोपी सम्भोगं अयाचि प्रार्थिता, अत्र गोपी गौणं कर्म्म उक्तं। यथेष्टमाह—अनन्तेन हावं (भावविशेषं) अकार्य्यत कारिता, अत्र गोपी मुख्यं कर्म्म उक्तं। अनन्तेन एना गोपी भावश्च अकार्य्यतेति शेषः, अत्र भाव इति गौणं कर्म्म उक्तं। अकार्य्यत इति कारि इति आत्मकृधातोः घौ त।

अकर्म्मकास्तु—

सत्ता-जीवन-दर्प-भीति-शयन-क्रीडा-निवास-त्वरा-
ऽव्यक्तध्वान-नभोगति-स्थिति-जरा-लज्जा-प्रमादोदये।
उन्मादे च पलायन-भ्रमणयोः ख्यातौ चवे खोटने
मोहे धावन-युद्ध-शुद्धि-दहने शान्तौ सुतौ मज्जने॥
दीप्तौ जागर-शोष-वक्रगमनोत्साहे मतौ संशये
म्लानौ मन्दगतौ च नृत्य-पतने चेष्टा-क्रुधो रोदने।
वृद्धौ हावकृतौ च सिद्धि-विरतौ स्वोपवेशे बले
कम्पोद्वेग-निमेष-सङ्ग-यतन-खेदे धवोऽकर्म्मका.॥

सकर्म्मकाश्च कर्म्माविवक्षायामकर्म्मका भवन्ति, तथाच भाष्यम्—

धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति॥

धात्वर्थेन सह कर्म्मण उपसंग्रहादित्यर्थ, यथा, तपस्यति मुनिरित्यादि।

## ४र्थ पादः—क्तिः ।

## ९३३ । भवद्भूतभव्ये त्रिशः क्याद्याः ।

(भवत्-भूत-भव्ये ७।, त्रिशः ।१॥, क्याद्याः १॥) ।

**क्याद्याः क्तय स्त्रिस्त्रिस्त्रः क्रमात् वर्त्तमानातीतभविष्यत्सु कालेषु स्युः । ***

**शेते स चित्त-शयने मम मीन-कूर्म्म-**
**कोलोऽभवन्नृहरिवामनजामदग्न्यः ।**

---

* भवंश्च भूतश्च भव्यश्च तत्तस्मिन् । की आद्या यासां ताः । अत्र काले इति विशेष्यं पदमध्याहार्य्यं । भवन्निति वर्त्तमाने शतृविधानात् वर्त्तमानः, भूत इति अतीते क्तविधानादतीतः ; भव्यो भविष्यत्कालः, सामान्यकाले तव्यादि-विधानादपि इह भविष्यत्काले यः । की खी गी—वर्त्तमाने, घी टी ठी—अतीते, डी ढी ती—भविष्यति, थो –सर्व्वकाले (९६२) ।

आरब्धक्रियायाः समाप्तिपर्य्यन्तः कालो वर्त्तमानः, यथा महाभारतं पठति । स चतुर्व्विधः—यथा, प्रवृत्तोपरतश्चैव, वृत्ताविरत एव च ; नित्यप्रवृत्तः, सामीप्यो वर्त्तमानश्चतुर्व्विधः । क्रमेण यथा—मांसं न खादति, आदौ प्रवृत्तं मांसभोजनं निवर्त्तयतीत्यर्थः । इह कुमाराः क्रीड़न्ति, तदानीं क्रीड़ाभावेऽपि पूर्व्वक्रीड़ाया बुद्धौ वर्त्तमानत्वात् । पर्व्वतास्तिष्ठन्ति, नित्यप्रवृत्तत्वात् । किञ्च पर्व्वतानां नित्यप्रवृत्तावपि सम्बन्धविवक्षया भूतभविष्यत्कालयोरपि प्रयोगो भविष्यति । सामीप्यो द्विविधः—भूतसामीप्यो भविष्यत्सामीप्यश्च, यथा—आगमनानन्तरमपि एषोऽहमागच्छामि, एवं गमनात् पूर्व्वमपि एषोऽहं गच्छामीति । पाणिनिः ३।२।१२३ ।

यस्मिन् काले क्रियासमाप्ति र्भवति स भूतः, सच त्रिधा,—अद्यतनः, ह्यस्तनः, परोक्षश्चेति । क्रमेण यथा—सः अद्याभवत्, स ह्योऽद्राक्षीत्,स बहुदिनं जगाम । अद्यतने घी, ह्यस्तने टी, परोक्षे ठीति कश्चित् तन्न, सर्व्वत्रैव व्यभिचारात् । पाणिनिस्तु "अनद्यतने लङ्" (३।२।१११), "लुङ्" (३।२।११०), "परोक्षे लिट्" (३।२।११५) ।

भविष्यन्नपि त्रिधा—अद्यतनभविष्यन् अनद्यतनभविष्यन् दूरभविष्यन् । यथा—अद्य भविता, श्वो भविष्यति, वत्सरान्ते भविष्यतीति । पाणिनिस्तु "अनद्यतने लुट्" (३।३।१५), "लृट् शेषे च" (३।३।१३) ।

योऽभूद्बभूव भरताग्रजकृष्णबुद्धः
कल्की सताञ्च भविता प्रहरिष्यतेऽरीन् ॥ *

९३४। क्तौ स्मेनातीते। (क्तौ ।१।, स्मेन ३।, अतीते ७।)।

स्मेन योगे अतीते काले क्तौ स्यात्। हन्ति स्म रावणं रामः। †

९३५। यावत्पुराभ्यां भव्ये। (यावत्-पुराभ्यां ३॥,भव्ये ७।)।

यावद् भवति कल्की, पुरा दृश्यते कल्की। ‡

९३६। कदाकर्हिभ्यां वा। (कदा-कर्हिभ्यां ३॥, वा ।१।)।

कदा पश्यामि गोविन्दं, कर्हि द्रक्ष्यामि शङ्करं। §

९३७। किम्भि लिप्सायां। (किम्भिः ३॥, लिप्सायां ७।)।

डतरडतमन्तयन्त-किमो रूपै योगे भव्ये क्तौ वा स्यात् लिप्सायां।
कतरः कतमः को वा भिक्षां दास्यति ददाति वा। ¶

---

* ग्वौ-गौ ढौ-घौनां विशेषविधिं वक्ष्यतीति ता विहाय उदाहरति शेते इति। स मम चित्तशयने चित्तशय्यायां शेते, यः मीनकूर्म्मकोलोऽभवत, नृहरिवामनजामदग्न्यः अभूत्, भरताग्रजकृष्णबुद्धो बभूव, कल्को भविता, सतां साधूनां अरीन् प्रहरिष्यते चेत्यन्वयः। मीन-कूर्म्माभ्यां कोलः मीनकूर्म्मकोलः, एवं सर्व्वत्र विग्रहः। कोलो वराहः।

† स्म इत्यव्ययं अतीतकालवाचि। यद्यपि भूतमात्रे स्मशब्दः प्रयुक्तो वैयाकरणैः, तथापि भूतक्रियाक्रमान्वयित्वे एव प्रायशः शिष्टप्रयोगो दृश्यते। यथा "पश्यति स्म जनता दिनात्यये" इति रघुः। पाणिनिः ३।२।११८।

‡ आभ्यां योगे भविष्यत्काले क्तौ स्यात्। निकटागामिके पुरा, तत्साहचर्य्यात् यावदित्यव्ययं। अतएव, यावद्दास्यति तावद्भोक्ष्यते इत्यादौ अव्ययभिन्ने न स्यात्। पाणिनिः ३।३।४।

§ आभ्यां योगे भव्ये क्तौ वा स्यात्। पश्यामि द्रक्ष्यामीत्युदाहरणद्वयेन विकल्पो दर्शितः। पाणिनिः ३।३।५।

¶ किम्भिरिति बहुवचनेन सर्व्वविधानां किम्शब्दरूपाणां प्राप्तिः। लप्सुमिच्छा

९३८। लिपृस्यसिद्धौ। (लिप्सा-सिद्धौ ७।)।

लिप्सेरन्नादिना स्वर्गादेः सिद्धौ सत्यां भव्ये क्तौ वा स्यात्। यो भिक्षां ददाति दास्यति वा स स्वर्गं याति यास्यति वा। *

९३९। ग्यर्थाशंसयोः। (ग्यर्थाशंसयोः ७॥)।

ग्या अर्थे प्रैषादौ आशंसायाञ्च भव्ये क्तौ वा स्यात्। गुरुश्चेदायाति आयास्यति वा, अथ त्वं वेदमधीष्व वयं तर्कमधीमहे। †

९४०। जात्वपिभ्यां सदा क्षेपे।

(जातु-अपिभ्यां ३॥, सदा ७।, क्षेपे ७।)।

जातु निन्दसि गोविन्द-मपि निन्दसि शङ्करं। ‡

९४१। कथमा खौ च वा।

(कथमा ३।, खौ ।१।, च ।१।, वा ।१।)।

---

लिप्सा तस्यां गम्यमानायामित्यर्थः। (५१०) द्वयोर्मध्ये कः, बहूनां मध्ये कः, को वा दाता, भिक्षां राति रास्यति वा, रा ल दाने। पाणिनिः ३।३।६।

* लब्धुमिच्छति यत् तत् लिप्स्यं (अन्नादि) कर्म्मणि यः, तेन सिद्धिस्तस्यां। पृथक्-योगात् क्षिप्रमिति नानुवर्त्तते। दातारं कश्चित् प्रोत्साहयति यो भिक्षामित्यादि। प्ररोचनायामिति कौमराः। पाणिनिः ३।३।७।

† ग्या अर्थो ग्यर्थः। वृत्तौ प्रैषादाविति कथनात्, (९५४) वक्ष्यमाणेषु ग्यर्थेषु विध्यादिषु मध्ये प्रैषप्राप्तकालानुमतय एव गृह्यन्ते। आशंसा सम्भावना। गुरुश्चेदायातीति आशंसायां, त्वं वेदमधीष्वेति ग्या अर्थे अनुमतौ उदाहरणद्वयं, अधीष्व इत्यस्य पक्षे अधीषे इति क्तौ च, अधीमहे इत्यस्य पक्षे अध्ययामहे इति गौ च भविता। आशंसायां क्षिप्रार्थे भव्ये क्तौ नित्यमिति वक्तव्यं (संक्षिप्तसारे, तिङन्तपादे ८३९ सूत्रम्), तेन वृष्टिश्चेदायास्यति शीघ्रं धान्यं वप्स्यामीत्येव। पाणिनिः ३।३।८।

‡ जात्वपिभ्यां योगे, क्षेपे गर्हायां, सदा सर्व्वेषु कालेषु नित्यञ्च, क्तौ स्यादित्यर्थः। सदेत्यधिकारः। जातु कदाचित्। पाणिनिः ३।३।१४२।

कथं निन्दसि त्वं, निन्दति शम्भुं, देवौ निनिन्दथ।*

## ९४२। किम्भिः स्त्रीत्यौ। (किम्भिः ३।॥, स्त्री त्यौ १॥)।

को निन्दिष्यति लक्ष्मीशं निन्देत् कतर ईश्वरं।†

## ९४३। अन्यैश्चाश्रद्धामर्षे। (अन्यैः ३।॥, च ।१।, अश्रद्धामर्षे ७।)।

किम्भिश्च (९३७)।

न श्रद्दधे मर्षये नो यत् स गर्हिष्यते हरिं।
हरं गर्हेत, को निन्देत् विष्णुं निन्दिष्यतीश्वरं॥‡

## ९४४। किंकिलास्त्यर्थाभ्यां तौ।

(किंकिल-अस्त्यर्थाभ्यां ३॥, तौ ।१।)।

त्वं किंकिल हृषीकेशं निन्दिष्यसि, न मंस्यसे।
महादेवञ्चास्तिनाम, श्रद्दधे नो न मर्षये॥§

---

* कथम् शब्देन योगे सर्व्वेषु कालेषु स्त्री चकारात् तौ च वा स्यात् गर्हायां। भटा क्षेपे इत्यनुवर्त्तते। कथं निन्दसीति कथंशब्दस्य त्रिषु वाक्येषु सम्बन्धः। पाणिनिः ३।३।१४३।

† डतरडतमत्यन्त-किमौ रूपे योगे सर्व्वेषु कालेषु स्त्री-त्यौ स्यातां गर्हायां। पाणिनिः ३।३।१४४।

‡ श्रद्धा सम्भावना, मर्षः क्षमा। श्रद्धाया अभावः अश्रद्धं, मर्षस्याभावः अमर्षं। अश्रद्धस्य अमर्षस्य समाहारः अश्रद्धामर्षं तस्मिन्। किम्भिश्चेति वृत्तिः। डतर डतम त्यन्त-किमौ रूपैरन्यैश्च शब्दै र्योगे सर्व्वेषु स्त्री-त्यौ स्तः अश्रद्धामर्षेऽर्थे, अत्र क्षेपे इति नानुवर्त्तते। स जनो यत् हरिं गर्हिष्यते हर गर्हेत तदहं न श्रद्दधे नो मर्षये, को जनो विष्णुं निन्देत्, ईश्वर निन्दिष्यति, तदहं न श्रद्दधे नो मर्षये इत्यन्वयः। पाणिनिः ३।३।१४५।

§ किमः परः किल, किंकिल। अस्त्यर्थो ऽस्तिभवत्यादिः। आभ्यां योगे सर्व्वेषु कालेषु तौ स्यादश्रद्धामर्षे। त्वं किंकिल निश्चितं हृषीकेशं निन्दिष्यसि, अस्तिनाम

## ९४५ । जातु-यद्-यदा-यदिभिः खी ।

(जातु-यद्-यदा-यदिभिः ३॥, खी ।१।) ।

न मर्षये श्रद्दधे नो जातु निन्देज्जनार्द्दनम् । *

## ९४६ । यच्च-यत्राभ्यां चेपचित्रे च ।

(यच्च-यत्राभ्यां ३॥, चेपचित्रे ७।, च ।१।) ।

यच्च निन्देत् विभुं, गर्हे चित्रं श्रद्धां न मर्षये । †

## ९४७ । चित्रे त्वयदिना ।

(चित्रे ७।, तौ ।१।, अयदिना ३।) ।

यदि-वर्ज्जितेन शब्दमात्रेण योगे चित्रे गम्ये सदा तौ स्यात् ।
चित्रं द्रक्ष्यति नामान्धः कृष्णं, पश्येत् यदीश्वरं । ‡

## ९४८ । वाढ़ेऽप्युताभ्यां खी ।

(वाढ़े ७।, अपि-उताभ्यां ३॥, खी ।१।) ।

---

सम्भावनायां महादेवञ्च न मंस्यसे, तदहं नो श्रद्दधे न मर्षये इति श्लोकार्थः । पाणिनिः ३।३।१४६ ।

* जातुश्च यद् च यदा च यदिश्च ते तैः । एभि र्योगे सर्व्वेषु कालेषु खी स्यादश्रद्धामर्षे । भवान् जातु कदाचित् जनार्द्दनं निन्देत् तदहं न मर्षये ना श्रद्दधे । एवं यन्निन्देत् यदा निन्देत् यदि निन्देदिति च । पाणिनिः ३।३।१४७, वार्त्तिकञ्च ।

† यच्चश्च यत्रश्च ताभ्यां । आभ्यां योगे चेपे चित्रे चकारात् अश्रद्धामर्षे च, सर्व्वेषु कालेषु खी स्यात् । चेपो गर्हा, चित्रमाश्चर्य्यं । जनो यच्च विभुं निन्देत् तदहं गर्हे, तच्चित्र, तत्राहं श्रद्धां न करोमि, तदहं न मर्षये इत्यर्थः । एवं यत्र निन्देदिति । पाणिनिः ३।३।१४८-१५० ।

‡ यदि-वर्जितेन इति वोपदेवमतम् ; यच्च यत्र-यदि-वर्जम् इति तु भट्टोजिदीक्षितक्रमदीश्वरौ । नाम सम्भावनायां अन्धः कृष्णं द्रक्ष्यति तच्चित्रं । अ-यदिना किं, अन्धः ईश्वरं यदि पश्येत् तच्चित्रं, अत्र खी-प्रयोगं दर्शयता यदिना योगे चित्रे गम्ये सदा खी स्यादिति सूचितं । पाणिनिः ३।३।१५१ ।

अपि हन्यादघं शम्भु-रुत दुःखं जयेदजः । *

## ९४९ । प्रौढ्या सम्भावने । (प्रौढ्या ३।, सम्भावने ७।) ।

प्रौढिः सामर्थ्यं । सम्भावनं क्रियासु योग्यताध्यवसायः । प्रौढिहेतुक-सम्भावनोपाधिकेऽर्थे वर्त्तमानात् धोः सदा ऌी स्यात् । अपिहिंस्यात् जगन्नाथो महापातकपञ्चकं । †

## ९५० । अद्धार्थे वाऽयदि ।

(अद्धार्थे ७॥, वा ।१।, अ-यदि ७।) ।

अद्दधे ऽजं भजेः प्राणै-र्भक्ष्यसेऽजं बभक्थ तं । ‡

## ९५१ । भव्ये वा फलहेत्वोः ।

(भव्ये ७।, वा ।१।, फलहेत्वोः ७॥) ।

यं यायाच्चे-न्नमेदीशं, श्रीशं नंस्यति यास्यति । §

---

* बाढ़ं अतिशयः । अतिशयार्थे वर्त्तमानाभ्यामप्युताभ्यां योगे सर्व्वेषु कालेषु ऌी स्यात् । शम्भुः अघं पापं अपि हन्यात् पापहनने अतियोग्य इत्यर्थः । अजः कृष्णः दुःखं उत जयेत् दुःखजये अतियोग्य इत्यर्थः । पाणिनिः ३।३।१५२ ।

† योग्यताध्यवसायः योग्यतावलम्बनं । सामर्थ्येन क्रियासु योग्यतावलम्बनं उपाधि-र्भेदकं यस्य तस्मिन्नर्थे वर्त्तमानात् धोः सर्व्वेषु कालेषु ऌी स्यादित्यर्थः । "सिद्धाप्रयोग" इति च पाणिनिः । जगन्नाथः महापातकपञ्चकं अपिहिंस्यात् सामर्थ्येन महापातकपञ्चक-हनने योग्य इत्यर्थः । पाणिनिः ३।३।१५४ ।

‡ न यद् अयद् तस्मिन् । अद्धार्थे योगे प्रौढ्या सम्भावने सर्व्वेषु कालेषु ऌी स्याद्वा न तु यदशब्दप्रयोगे । त्वं प्राणैः सामर्थ्यैः अजं भजेः अहं श्रद्दधे । पक्षे अजं भक्ष्यसे तं बभक्थ, इति भविष्यदतीतयोरुदाहरणद्वयं । अयदि किं, श्रद्दधेऽजं भवान् प्राणै-र्भजेत् यत् पुरुषोत्तममिति पूर्व्वेण (९४९) नित्यं ऌी । पाणिनिः ३।३।१५५ ।

§ वाग्रहणं परत्र वाधिकारनिवृत्त्यर्थं । फलं कार्य्यं, हेतुः कारणं । फलक्रियायां हेतुक्रियायाञ्च वर्त्तमानात् धोः भव्ये ऌी वा स्यात् । जनः ईशं नमेच्चेत् यं यायात्

## ९५२। कामोक्तौ ऽकच्चिति। (कामोक्तौ ७।, अकच्चिति ७।)।

कामं भजेत् भवान् भर्गं कश्चिदर्च्चिष्यते शिवं। *

## ९५३। गी चेच्छार्थैः। (गी।१।, च।१।, इच्छार्थैः ३।।।)।

इच्छामि, शर्व्वं सेवेत श्रीपतिं सेवतां भवान्। कामोक्त इति किं, इच्छन् करोति। †

## ९५४। विधि-निमन्त्रणामन्त्रणाध्येषण-संप्रश्न-प्रार्थनाप्रैष्य-प्राप्तकालादौ। (विधि—प्राप्तकालादौ ७।)।

सदा। यागं कुर्य्यात्, इह भुञ्जीत भवान्, इह शयीत भवान्, पुत्रमध्यापयेत् भवान्, किं भो वेदमधीयीय उत तर्कमधीयीय, भो भोजनं लभेय, प्रेषितस्त्वं गङ्गां गच्छेः, प्राप्तस्ते कालस्तपः कुर्य्याः। एवं गी। ‡

---

कल्याणं प्राप्नुयात्। ईश-नमस्कारो हेतुः, कल्याणप्राप्तिः फलं। पक्षे शीघ्रं नंस्यति चेत् श याम्यति। पाणिनिः ३।३।१५६।

* मण्डूकप्लुत्या सदेत्यनुवर्त्तते। कामोक्तमिच्छाप्रकाशः; तस्मिन्नर्थे सर्व्वेषु कालेषु खी स्यात् न तु कच्चित्शब्दप्रयोगे। भवान् कामं यथेष्टं यथा स्यात्तथा भर्गं शिवं भजेत् इति वक्तुरिच्छया एतद्वाक्यं। अकच्चिदिति किं, कच्चित् शिवं अर्च्चिष्यते इति कच्चित्शब्देन वक्तुरिच्छाप्रकाशः। (कच्चित् कामप्रवेदने इत्यमरः।) पाणिनिः ३।३।१५३।

† इच्छार्थैर्योगे सर्व्वेषु कालेषु कामोक्तौ खी गी च स्यात्। अहं इच्छामि—भवान् शर्व्वं महादेवं सेवेत, श्रीपतिं सेवतां वा। अत्र इच्छाप्रकाशे खी गी च। इच्छन् अमः करोति इत्यत्र इच्छाप्रकाशो नास्तीति न खी गी च। पाणिनिः ३।३।१५७, वार्त्तिकञ्च।

‡ विधिश्च निमन्त्रणञ्च आमन्त्रणञ्च अध्येषणञ्च संप्रश्नश्च प्रार्थना च प्रैष्यञ्च प्राप्तकालादिश्चेति तस्मिन्। सदा इति वृत्तिः। एष्वर्थेषु सर्व्वेषु कालेषु खी गी च स्यात्। अप्राप्तप्रापको विधिः, (विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्त्तनमिति सिद्धान्तकौमुदी)

## ९५५ । समर्थनाशिषो गीँ ।

(समर्थन-आशिषो: ७॥, गी ।१।) ।

सिन्धुमपि शोषयाणि । *

## ९५६ । तुह्योस्तातङ् वाशिषि ।

(तु-ह्यो: ७॥, तातङ् ।१।, वा ।१।, आशिषि ७।) ।

पातु पाताद्वा शिव:, पाहि पाताद्वा शिव: । †

## ९५७ । मुहुर्भृशार्थे हि-त-स्व-ध्वं ।

(मुहुर्भृशार्थे ७।, हि-त-स्व-ध्वं ।१॥) ।

पौन:पुन्ये अतिशये चार्थे सदा काले ग्या हि-त-स्व-ध्वं स्यु: ।

---

यथा, यागं कुर्य्यात, एवं सन्ध्यामुपासीत । यस्याकरणे प्रत्यवाय: स्यात्तन्निमन्त्रणं, (निमन्त्रणं नियोगकरणं आवश्यके श्राद्धभोजनादौ दौहित्रादे: प्रवर्त्तनमिति सिद्धान्त-कौमुदी), यथा, इह भुञ्जीत भवान् । यस्याकरणे प्रत्यवायो न,स्यात्तदामन्त्रणं (आमन्त्रणं कामचारकरणम् इति सिद्धान्तकौमुदी), यथा, इह शयीत भवान् । सत्कारपूर्व्वकनि-योजनमध्येषणं, (सत्कारपूर्व्वको व्यापार: इति सिद्धान्तकौमुदी), यथा, पुत्रमध्यापयेत् भवान् । संप्रश्नो जिज्ञासा, (संप्रधारणमिति पाणिनिटीका), यथा, किं भो वेदमधी-यीय उत तर्कमधीयीय, अहमिति शेष: । प्रार्थना याच्ञा, यथा, भो भोजनं लभेय, अहमिति शेष: । कर्म्मणि प्रेरणं प्रैष्यं यथा, प्रेषितस्त्वं गङ्गां गच्छे: । तत्क्रियोचित-काललाभ: प्राप्तकाल:, यथा, प्राप्तस्ते काल: तप: कुर्य्या: । आदिशब्दादनुमतौ च (अतिसर्ग: कामचारानुज्ञा इति पाणिनि:), यथा, श्राद्धमहं करिष्ये इति प्रश्ने, कुरुष्व इति । अनुमतौ ग्या न प्रयोग: । एवं गीति यागं करोतु इत्यादि । पाणिनि: ३।३।१६१-१६३ ।

* अशक्येऽध्यवसाय: समर्थना, ("समर्थनाशिषोश्च" इति कातन्त्रम), यथा सिन्धुमपि शोषयाणि । इष्टार्थस्याविष्करणमाशी:, यथा जीवतु भवान् । पाणिनि: ३।३।१७३ ।

† तु-ह्यो: स्थाने तातङ् वा स्यादाशिषि गम्यमानायां । सर्व्वावयवादेशोऽयं, तेन ङित्त्वेऽपि नान्त्यस्य स्थाने । ङित्त्वन्तु, भवान् राजत्वं कुरुतादित्यादावगुणार्थं, यत्र च कामौ—भवान् स्वर्गमुष्टादित्यादौ जिप्राप्त्यर्थञ्च । पाणिनि: ७।१।३५ ।

मुहुर्भृशं वा लुनाति लुलाव लविष्यति वा—लुनीहि लुनीत लुनीष्व लुनीध्वं। *

९५८। मास्मेन घीघ्यौ। (मास्मेन ३।, घी-घ्यौ १॥)।

मास्मशब्देन योगे सदा घी-घ्यौ स्तः। मास्म भवत् दुःखं, मास्म भूत् शोकः। †

९५९। मा टी वा। (मा ।३।, टी ।१।, वा ।१।)।

मा-योगे सदा टी स्याद्वा। मा विरंसीत् सुखं, मा विरमतु, मा विरंस्यति। ‡

९६०। क्याशिषि। (टी ।१।, आशिषि ७।)।

जीव्याच्चिरं सज्जनः। §

---

* पौनःपुन्ये अतिशये चार्थे, सर्व्वेषु कालेषु, लिङ्गे युष्मदि अस्मदि च प्रयुज्यमाने, तेषामेकत्वे द्वित्वे बहुत्वे च ध्या हि त स्व ध्वं स्युरित्यर्थः। तत्रायं विशेषः—कर्त्तरि वाच्ये परस्मैपदिनो हि त इति द्वयं, कर्त्तरि कर्म्मणि भावे च आत्मनेपदिनः स्व ध्वमिति द्वयं, कर्त्तरि उभयपदिनश्चत्वारीति। क्रियासमच्चये सत्यप्यथं विधिर्वा भवतीति वक्तव्यम्। (पाणिनिः ३।४।३), यथा, पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः इति माघः, अत्र अतीतकाले प्रयोगः, रावणः कर्त्ता। अत्र पुन. पुनश्चस्कन्देत्यर्थो भ्रममूलक एव इति सिद्धान्तकौमुदी। पाणिनिः ३।४।२।

† मास्म-योगोऽत्र व्यवहितोऽव्यवहितो वा। मास्म योगेऽपि (५५०) अमागमनिषेधः। पाणिनिः ३।३।१७६।

‡ अत्रापि योगो व्यवहितोऽव्यवहितो वा। पाणिनिः ३।३।१७५।

§ इष्टार्थस्याविष्करणमाशीः। आशिषि गम्यमानायां टी स्यात्। आशीस भव्ये एव सम्भवति, सुतरां सदेति निवृत्तं। पाणिनिः ३।४।११६।

## ९६१। स्मृर्थैस्त्ययदि त्वतीते।

(स्मृर्थैः ३।॥, ती ।१।, अयदि ७।, तु ।१।, अतीते ७।)।

स्मरणार्थैर्योगे अतीते काले ती स्यात्। यच्छब्दश्चेन्न प्रयुज्यते। घ्यपवादोऽयं। स्मरसि त्वं नंस्यसीशं, यत् स्मरस्यानमः शिवं।*

## ९६२। वानेकस्मार्य्ये। (वा ।१।, अनेकस्मार्य्ये ७।)।

अनेकस्मार्य्ये प्रयोक्तरि सति स्मरणार्थैर्योगे अतीते ती वा स्यात्। ध्यायसीदं यदीशानं द्रक्ष्यति स्तोष्यते भवान्।†

## ९६३। ध्वर्थासम्भवे थौ। (ध्वर्थासम्भवे ७।, थौ ।१।)।

धोरर्थस्यानिष्पत्तौ सदा थौ स्यात्। ज्ञानञ्चेदभविष्यत् सुखमभविष्यत्।‡

## ९६४। त्वियुष्मदस्मदि त्वादि त्रिशः।

(त्वि-युष्मद-अस्मदि ७।, त्वादि ।१॥, त्रिशः ।१॥)।

---

* स्मृधातोरर्थ इव अर्थौ येषां ते तैः। न यद् अयद् तस्मिन्। घ्यपवादोऽयमिति घ्या अपवादो विशेषः,' तेन यदः प्रयोगे अस्याप्राप्तौ घौ एव, न तु टौ-क्यौ। त्वं ईशं मंस्यसि एनं स्मरसि अत्र तौ, यत् त्वं शिवं आनमः तत् स्मरसि, अत्र घौ। पाणिनिः ३।२।११२,११३।

† स्मर्यते यत् तत् स्मार्य्यमिति ञ्यन्तात् कर्म्मणि यः। अनेक-मेकभिन्नं स्मार्य्यं स्मरणीयं येन सोऽनेकस्मार्य्यस्तस्मिन्। भवान् यत् ईशानं द्रक्ष्यति स्तोष्यते च इदं द्वयं ध्यायसि स्मरसीत्यर्थः। पक्षे ध्यायसीदं यदद्राक्षीदस्तावीच्च शिवं भवान् इत्यादि। स्मार्य्यस्य परस्परसाकाङ्क्षत्वे विधिरयं, तेन, स्मरसि यत् त्वं तर्कमपठः काशीमगच्छश्च इत्यादौ न स्यात्। पाणिनिः ३।२।११४।

‡ परत्वात् सर्व्वेषां बाधकोऽयं। ज्ञानञ्चेदिति, ज्ञानस्यासम्भवात् सुखस्याप्यसम्भव इति ध्वर्थासम्भवः। भविष्यति भूते च इति पाणिनीयाः। पाणिनिः ३।३।१३९,१४०।

लौ युष्मदि अस्मदि च त्यस्यार्थे प्रयुज्यमाने त्यादीनि त्रीणि त्रीणि क्रमात् स्युः। *

जानाति योऽखिलं, यञ्च न जानीतः श्रुतिस्मृती।
शास्त्राणि च न जानन्ति, स मया सेव्यते शिवः॥
भासि त्वमेको विश्वेश, भाथोऽच्युतशिवौ युवां।
भाथ यूयं हरिहरब्रह्माद्याः, पाह्यनेकशः॥ †

एको भवामि स्म भवेऽहमादौ, दारैरथोभौ स्म भवाव आवां।
वयं भवामो बहवः स्म पुत्रै-स्त्वन्माययाद्यापि विभो प्रसीद॥ ‡

इति त्रि-पादः।

इति त्याद्यन्ताध्यायः।

---

* लिष'युष्मच्च अस्मच्च तत्तस्मिन् गम्ये इत्यर्थः। त्यस्यार्थे इति कर्त्तरि कर्म्मणि च वाच्ये इत्यर्थः। यथा (५३१) नवशः पमे इत्यादिना कर्त्तरि वाच्ये प्रत्यये कर्त्तव्ये, लिङ्गे कर्त्तरि तिबादित्रयं, युष्मदि कर्त्तरि सिबादित्रयं, अस्मदि कर्त्तरि मिबादित्रयं; तथा (९२०) ढभावे मे-मित्यनेन कर्म्मणि वाच्ये प्रत्यये कर्त्तव्ये, लिङ्गे कर्म्मणि ते-आदित्रयं, युष्मदि कर्म्मणि से-आदित्रयं, अस्मदि कर्म्मणि ए-आदित्रयमिति। तेषामेकत्व-द्वित्व-बहुत्वेषु विभक्तीनामप्येकवचन-द्विवचन-बहुवचनानि स्युरित्यर्थः। भावे माद्यमिति (९२५) पूर्व्वमेव भाववाच्ये व्यवस्था कृता। पाणिनिः १।४।१०१,१०२,१०५,१०७,१०८।

† जानातीत्यादि। यः शिवः अखिलं सकलं जानाति, श्रुतिस्मृती च यं न जानीतः ज्ञापयितुं न शक्नुतः, अन्तर्भूतण्यर्थोऽयं, शास्त्राणि च यं न जानन्ति ज्ञापयितुं न शक्नुवन्ति, इति एकत्व-द्वित्व-बहुत्वेषु कर्त्तरि प्रत्ययः, स शिवः मया सेव्यते इति कर्म्मणि प्रत्ययः। हे विश्वेश त्वं एको भासि, हे अच्युतशिवौ युवां भाथः, हे हरिहरब्रह्माद्याः अनेकशो यूयं भाथ, इति युष्मदि कर्त्तरि एकत्व-द्वित्व-बहुत्वेषूदाहरणानि। पाहि, मुहुर्म्मां वा पाहीत्यर्थः, अस्मान् इति शेषः, (९५७) मुहुर्र्थार्थे इति हिः।

‡ भवे संसारे आदौ उत्पत्तिकाले अहं एको भवामि स्म, अथ दारैः सह आवां उभौ भवावः स्म, तथा पुत्रैः सह वयं बहवो भवामः स्म, एतत् सर्व्वं त्वन्मायया, अतएव हे विभो अद्यापि त्वं प्रसीद प्रसन्नो भव, यथा न पुनर्भवामीत्यभिप्रायः। अत्र अस्मदि

# १०मः । कृदन्ताध्यायः ।

—०—

## १म पादः—त्यः ।

**६६५ । कृद्धोः कृ-भावे ।** (कृत् ।१।, धोः ५।, क-भावे ७।) ।

**वक्ष्यमाण-त्यः कृतसंज्ञः स्यात्, सच धोः परः स्यात्, स च के भावे च स्यात् । ***

---

कर्त्तरि एकत्व द्वित्व-बहुत्वेषूदाहरणानि । युष्मदस्मदो संख्ययोरेव ग्रहणं, गौणयोस्तु लिङ्गविहिता विभक्तिः । यथा, त्वं भवति अनहं भवतीत्यादि । एवं

प्रकृतेर्विकृतेश्चापि यत्रोक्तत्वं द्वयोरपि ।

वाचकः प्रकृतेः सङ्ख्यां गृह्णाति विकृते र्न तु ॥ इति प्राञ्चः ।

यथा, एको वृक्षः पञ्च नौका भवति; पञ्च वृक्षा एका नौर्भवन्तीत्यादि ।

—

* वक्ष्यमाणतव्यादिश्नणम-पर्य्यन्त-त्यः प्रत्ययसमूहः कृत्संज्ञः स्यादित्यर्थः । करोतीति कृत, वक्ष्यमाणप्रत्ययानां संज्ञाकारक इत्यर्थः । सच धातुविशेषाद्विहितोऽपि प्रयोगानुसारादन्यस्मादपि धातोः स्यादित्यत आह, सच धोः परः स्यादिति, धो-र्धातुमात्रादित्यर्थः, तेन (११५०) भ्राजादिभ्यो विहितः क्यप् ईरधातोरपि स्यात्, यथा ईर्य्या इत्यादि । एवं अर्थविशेषे विहितोऽपि कृत प्रयोगानुसारादर्थान्तरेऽपि स्यादित्यत आह, स च के भावे च स्यादिति, तेन ढभावयोर्विहितस्तव्यो वसतेः कर्त्तर्य्यपि स्यात्, यथा वसतीति वास्तव्यः, अत्र मनीषादित्वात् वृद्धिः ; अपादानेऽपि यथा, भेतव्या रजनी । एवञ्च कर्म्मसम्प्रदानकरणाधिकरणेष्वपि अनीयः स्यात्, यथा, प्रवक्तीति प्रवचनीयो गुरुर्धर्म्मस्य, ददात्यस्मै दानीयो विप्रः, स्नायतेऽनेनेति स्नानीयं जलं, रम्यतेऽस्मिन्निति रमणीयं गृहं, "यत्र रम्यते तत्र रमणीयं" इति गोयीचन्द्रः । एवं कर्त्तर्य्यपि ध्यण्, यथा नियोक्तुमर्हति नियोग्यः प्रभुः, जायते इति जन्यं, आपततीति आपात्यः इत्यादि । अतएव (११८२) कृद्धोः कभाव इत्युक्ते-रन्यत्रापि प्रयोगत इति स्वयं वक्ष्यति । पाणिनिः ३।१।९१,९३ ।

## ८६६ । सरूपो बाध्यः ।

(सरूपः १।, बाध्यः १।) ।

समानरूपस्त्यः कृता बाध्यते, न त्वसरूपः । *

## ८६७ । तव्यानीयया ढ-भावे ।

(तव्य-अनीय-याः १।।।, ढ-भावे ७।) ।

धोरेते स्युः ढे-भावे । चेतव्यं चयनीयं चेयं पुण्यं । भवितव्यं भवनीयं भव्यं त्वया । †

---

* विशेषेण सामान्यस्य बाधनं नियमयति । विशेषेण कृता सामान्यः कृत् सरूप-एव बाध्यते इत्यर्थः । सरूपत्वन्तु अनुबन्धं हित्वा स्थायिभागेन एकावयवत्वं । यथा, विशेषेण घ्यणा सामान्यो य एव बाध्यते, न तु तव्यानीयौ । एवं एकार्थे एव सरूपत्वं गृह्यते न तु भिन्नार्थत्वे, तेन पचादित्वात् कर्त्तरि विहितेन विशेषेण अन्-प्रत्ययेन सामान्यः सरूपोऽपि घञ् न बाध्यते, अतएव पचतीति पचः, पचनं, पाकः इत्यादि स्यादेव । एवं (११५८) औषीत्यादिना स्त्रीविहितेन अन-प्रत्ययेन अनट् न बाध्यते, तेन कारणा कारणमित्यादि । एवमन्यत्रापि । न त्वसरूपइत्यनेन असरूप-विशेषणेन असरूपसामान्यो न बाध्यते इति । पाणिनिः ३।१।९४ । एतन्मते विभाषा

† तव्यश्च अनीयश्च यश्च ते । ढश्च भावश्च तत्तस्मिन् । (९३२) भवद्भूतभव्यं इत्यत्र भव्य इति भविष्यद्वाचिप्रयोगात् तव्यादयो भविष्यत्काले स्युरिति, अत्र विशेष कथनाभावात् अन्यस्मिन् कालेऽपि । चि-तव्य, एकाजिवर्णान्तत्वान्न इम्, (५४२) गुणः एवं अनीये चयनीयं, ये चेयं । अत्र पुण्यमिति कर्मणः क्लीवत्वात् तद्विशेषणात् चेतव्यादीनामपि क्लीवत्वं । भावे तव्यादौ भवितव्यमित्यादि । भव्यमिति यकारस्य (४२३) अजवत्त्वात् (३५) ओकारस्थाने अव् । एवं भावयितव्यं, बुभूषितव्यं, बोभूयितव्यं, पुत्रकाम्यितव्यं श्यानीयितव्यं कृष्णायितव्यं । भावप्रत्ययान्तत्वात् क्लीवत्वं । तथाच—

> अनामि कारके वाच्ये वाच्यलिङ्गः कृदुच्यते ।
> भावे ल्युट्-क्त-खलर्थास्ता अनटाद्या नपुंसके ।
> त्याद्यन्ताश्च स्त्रियां ज्ञेयाः, पुंस्येषु घञलौ तथा ।
> अन्येषान्तु कृतां लिङ्गं वेदितव्यं प्रयोगतः ॥ (परिशिष्टपत्रं द्रष्टव्यं)

पाणिनिः ३।१।९६,९७ । एतन्मते तव्यत् इत्यधिकं दृश्यते ।

**९९८। नो ऽचोऽन्तरदुर्गः प्राग्वस्मो ऽख्या-भाभूपूञ्क्रमगमप्यायवेपानिजादीदितो ञि-ह्रसादीजुङस्तु वा।** (नः ६।, अचः ५।, अन्तरदुर्गः ५।, प्राग्वत् ।१।, णः १।, अख्या—अनिजादीदितः ५।, ञिह्रसादीजुङः ५।, तु ।१।, वा ।१।) ।

अन्तरो दुर्-वर्ज-गेश्च परस्य णविधिहेतौ सति नस्याचः परस्य णः स्यात्, न तु ख्यादेः इजादिवर्जोदितश्च, आन्ताद्ध्रसादीजुङस्तु वा । *

अन्तर्याणीयं प्रयाणीयं । प्रयापणीयं प्रयापनीयं, प्रकोपणीयं प्रकोपनीयं । ख्यादेस्तु—प्रख्यानीयं प्रख्यापनीयं, प्रभानीयं प्रभापनीयं, प्रभवनीयं प्रभावनीयं, प्रपवनीयं प्रपावनीयं, प्रक्रमनीयं प्रक्रामनीयं, प्रगमनीयं प्रप्यायनीयं प्रवेपनीयं प्रकम्पनीयं । इजादेस्तु प्रेङ्खणीयं । †

**९९९। खनाट्टेरे ये।** (खनात्-टेः ६।, ए ।१।, ये ७।) ।

---

* नास्ति दुर्यत्र सोऽदुः, अदुश्चासौ गिश्चेति अदुर्गिः, अन्तर् च अदुर्गिश्च तत्तस्मात् । इच् आदि र्यस्य स इजादिः, न इजादिः अनिजादिः, अनिजादिश्चासौ इदिच्चेति अनिजादीदित् । ख्याश्च भाश्च भूश्च पूञ् च क्रमश्च गमश्च प्यायश्च वेपश्च अनिजादीदिच्चेति, पश्चाद्द्वन्द्वयोगे तस्मात् । ह्रसादिश्चासौ ईजुङ्चेति ह्रसादीजुङ्, ञिश्च ह्रसादीजुङ् चेति तस्मात् । अन्तरदुर्गेः पराद्धातोः परस्य कृत्सम्बन्धि-न-कारस्य अचः परत्वे सति णः स्यादित्यर्थः । ख्यादीनां केवलानां आन्तानाञ्च निषेधः । पाणिनिः ८।४।२९-३१,३४, वार्त्तिकञ्च ।

† अन्तर्याणीयमित्यादि, एवं प्रयायिणौ प्रयाणं प्रहीणः प्रहाणिरित्यादि । विकल्पमाह आन्तस्य प्रयापणीयं प्रयापनीयं, ह्रसादीजुङः प्रकोपणीयं प्रकोपनीयमित्यादि । प्रगमनीयमित्यादि, गमादीनां केवलानां आन्तानाञ्च अत्र तुल्यं रूपं । प्रेङ्खणीयमिति नित्यं णत्वं । अचः किं, प्रमग्न इत्यादि ।

खन आदन्तस्य च टे-रे स्यात् ये परे। खेयं देयं। *

## ९७०। घ्यणो-रावश्यके।

(घ्यण् ।१।, ओ: ५।, आवश्यके ७।)।

उवर्णान्तादवश्यम्भाविऽर्थे घ्यण् स्यात् ढभावे। विप्रेण शुचिना भाव्यं। †

## ९७१। हसृयासोः। (हस्-ऋ-यु-आ-सोः ५।)।

हसन्तात् ऋवर्णान्तात् यौते रासुनोतेश्च घ्यण् स्यात् ढभावे। वाह्यं घात्यं जन्यं वध्यं, कार्य्यं, याव्यं, आसाव्यं। ‡

---

* खन च आश्च खनातौ, खनातोरिट: खनादिस्तस्य। प्रकरणबलात् ये इति ल्यसंज्ञके यकारे परे इत्यर्थ:। खेयमिति खनधातौ घ्यंणि अनेन टेरेकार:। देयमिति दाखरूपात् (९८६७) य:, टेरेकार:। ल्यसंज्ञके किं, खन्यते, दीयते, प्रखन्य, प्रदाय इत्यादौ न स्यात्। पाणिनि: ३।१।१११,६।४।६५ (एतन्मते ई, ईत्)।

† अवश्यम् भाव: आवश्यं, आवश्यमेव आवश्यकं तस्मिन्। क्रियाया अवश्यम्भावे इत्यर्थ:। घ्यणो णकारेतौ य-स्थिति:। भाव्यमिति भू घ्यण् (५७७) वृद्धि:, (४२३) यस्य अज्वद्भावे, (३५) औस्थाने आव्। एवं तपस्विना विष्णु: स्ताव्य इत्यादि। अना-वश्यके तु ये भव्यं, क्यपि स्तुत्य:। पाणिनि: ३।१।१२५ (एतन्मते ण्यत)।

‡ हस् च ऋश्च युश्च आ-सुश्च तस्मात्। पृथग्योगादावश्यके इत्यस्य नानुवृत्ति:। वाह्यमिति उह्यते यत् तत्, वह-घ्यण् (५७७) वृद्धि:। घात्यमिति हन्यते यत् तत, हन घ्यण्, (६७९) खिर्होघ इति हस्य घ:, वृद्धि:, (८०१) हन-स्तङ्। जायते इति जन्यं, (९६५) कभावे इत्युक्ते: कर्त्तरि घ्यण्, वध्यते यत् तत् वध्यं, उभयत्र वृद्धौ (७४४) जनवध इति ह्रस्व:। कार्य्यमिति कृ अ क् य इति ह्रस्वदीर्घान्ताभ्यां घ्यणि वृद्धि:। याव्यमिति यु-घ्यण्, आसाव्यमिति आ-सु-घ्यण्, उभयत्र वृद्धौ (४२३) अज्वद्भाव:, आव् च। पाणिनि: ३।१।१२४,१२६।

९७२। चजोः कगौ घित्यसेमक्त-यज्ञाङ्गयज-गत्यर्थवन्चां। (च-जोः ६॥, क-गौ, १॥, घिति ७।, अ-सेमक्त-यज्ञाङ्गयज-गत्यर्थवन्चां ६॥)।

घिति परे च-जोः क-गौ स्तो न तु सेमक्तादेः।

पाक्यं रोग्यं। गतौ तु, वञ्चं। अन्यत्र वङ्कं काष्ठं। *

९७३। नावश्यके त्यज-यज-प्रवचाञ्च घ्यणि।

(न।१।, आवश्यके ७।, त्यज-यज-प्रवचां ६॥, च।१।, घ्यणि ७।)।

आवश्यकेऽर्थे एषाञ्च चजोः कगौ न स्तो घ्यणि। अवश्यं पाच्यं, त्याज्यः याज्यः प्रवाच्यः। †

९७४। भुज-वच-नियुजो ऽन्नाशब्दशक्ये।

(भुज-वच-नियुजः ६।, अन्न-अशब्द-शक्ये ७।)।

भुजो भक्ष्येऽर्थे, वचोऽशब्देऽर्थे, नियपूर्व्वस्य युजः शक्येऽर्थे, चजोः कगौ न स्तो घ्यणि। भोज्यं, वाच्यं, नियोज्यः प्रयोज्यः। एषु

---

* सेम् क्तो यस्मात् स सेमक्तः, यस्मात् क्तो विहितः सेम् भवतीत्यर्थः। यज्ञस्याङ्गं यज्ञाङ्गं, यज्ञाङ्गे यजः यज्ञाङ्गयजः, गत्यर्थश्चासौ वन्च चेति गत्यर्थवन्च। सेमक्तश्च यज्ञाङ्गयजश्च गत्यर्थवन्च चेति, ततो नञ्योगे तेषां। पाक्यमिति पच-घ्यण्, वृद्धिः, चस्य कः। रुज-घ्यण्, गुणः, जस्य गः। एवं घञि पाकः रोगः। सेमक्तात्तु याच-घ्यण् याच्य इत्यादि। यज्ञाङ्गयजस्तु घञि प्रयाजः अनुयाजः उपांशुयाजः, ऋतुयाजः, प्रधानयज्ञस्य अङ्गयज्ञा एते। यज्ञाङ्ग इति किं, यागः प्रधानयज्ञ इत्यर्थः। वन्चु गत्यां वञ्चो यामः। वक्रीभावार्थे वङ्कं काष्ठं। पाणिनिः ७।३।५२,६२,६३, भाष्यञ्च।

† क्रियाया अवश्यम्भावेऽर्थे सर्व्वेषां धातूनां, त्यज-यज-प्रवचाञ्च आवश्यके अनावश्यके चार्थे इत्यर्थः। अवश्यं पाच्यं, एवं अवश्यं रोज्यमित्यादि। त्यज-यज-प्रवचामिति बहुवचनेन शोच्यः शौच्यः इत्यादावपि प्रयोगानुसारेण क-ग-निषेधो वक्तव्यः। पाणिनिः ७।३।६५,६६, "स्वतुप्रकरणे त्यजेरुपसंख्यानम्" इति वार्त्तिकञ्च।

किं, भोग्या भूः, वाक्यं पद समुदायः, नियोक्तुमर्हति नियोग्यः प्रभुः। *

**९७५। पाय्य धाय्य प्रणाय्यानाय्य कुण्डपाय्य सञ्चाय्य राजसूय सान्नाय्य निकाय्य परिचाय्योपचाय्य चित्याग्निचित्या समूह्यामावस्यामावास्या याज्याः।** (पाय्य—याज्याः १॥)।

एते घ्यणन्ता निपात्यन्ते।

पाय्यं मानं। दधात्यग्निमिति धाय्या सामधेनी, धाय्या ऋत्विजः। प्रणाय्योऽसम्मतः प्रियो वा। आनाय्यो दक्षिणाग्निः। कुण्डैः पीयते अत्र सोम इति कुण्डपाय्यः क्रतुः। सञ्चाय्यः क्रतुः। राज्ञा सूयते राजसूयः क्रतुः। सान्नाय्यं हविः। निकाय्यो निवासः। परिचाय्योऽग्निः, उपचाय्योऽग्निः, चित्योऽग्निः। अग्नेश्चयनं अग्निचित्या। समूह्योऽग्निः संवाह्य इत्यर्थः। अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावस्या अमावास्या। यजन्त्यनया इति याज्या। निपातो ह्यर्थविशेषे। †

---

* भुजश्च वचश्च नियाभ्यां युज च तस्य। अन्नस्य अभ्रन्दस्य प्रकाश्येति तद्धितम्। भुज्यते यत् तत् भोज्यं अन्नादि। वाच्यं वचनीयमित्यर्थः। नियोक्तुं प्रयोक्तुञ्च शक्यतेऽसौ नियोज्यः प्रयोज्यः सेवकः। भोग्या भूरिति उपभोग्या पालनीया वेत्यर्थः। वाक्यं पदसमुदायः परस्पराकाङ्क्षायुक्तपदसमूहः नियोक्तुमर्हति योग्यो भवतीत्यर्थः, अत्र (९६५) कभावे इत्युक्तेः कर्त्तरि घ्यण्। पाणिनिः ७।३।६७-६९।

† पा घ्यण् पाय्यं परिमाणं, पेयमन्यत्। मतान्तरे मा-घ्यण्, मेयमन्यत्। धा-घ्यण्, धाय्या सामधेनी अग्निज्वालनमन्त्रः, एवं धाय्याः ऋत्विजः; धेयमन्यत्। प्रणीयतेऽसौ प्रणाय्यः; अन्यत्र प्रणेयः। गार्हपत्यादग्नेरानीय यः प्रणीयते स आनाय्यो दक्षिणाग्निः; अन्यत्र आनेयः। कुण्डपाय्यः क्रतुः; अन्यत्र कुण्डपेयं दुग्धं। सोमो लताविशेषस्य रसः। सञ्चीयतेऽसौ सञ्चाय्यः क्रतुः; अन्यत्र सञ्चेयं पुण्यं। राज्ञा सूयते मङ्गलपूर्व्वकं स्नायते

**९७६। पु शक सह तक चत यत शसोऽचम वप रप लप त्रप दभो यो भज जप यजानमस्तु वा।**

(पु—शसः ५।, अचम—दभः ५।, यः १।, भज—आनमः ५।, तु ।१।, वा ।१।)।

पवर्गान्तात् शकादेश्च चमादिवर्जात् यः स्यात् ढभावे, भजादेस्तु वा। रम्यं शक्यं सह्यं तक्यं चत्यं यत्यं शस्यं। भज्यं भाग्यं, जप्यं जाप्यं, यज्यं याज्यं, आनम्यं आनाम्यं। चमादेस्तु आचाम्यं वाप्यं राप्य लाप्यं त्राप्यं दाम्भ्यं—अनकारनिर्द्देशात्। *

**९७७। यत्रालभो मुण्।** (यि ७।, आ-लभः ६।, मुण् ।१।)।

आङ्पूर्व्वस्य लभो मुण् स्यात् यकारे परे। आलम्भ्यो गौः। †

---

ऽस्मिन्निति राजसूयः क्रतुः, ("राजशब्दः सोमवाची, तेन सोतव्यं राजसूयं" इति तु क्रमदीश्वरः ; भट्टोजिदीक्षितस्तु "राजा सोतव्योऽभिषवद्वारा निष्पादयितव्यः, यद्वा लतात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्रेति अधिकरणे क्यप् निपातनात् दीर्घः), सु-घ्यण् ; अन्यत्र सव्यं। सन्नीयते इदं सान्नाय्यं हविः ; अन्यत्र सन्नेयं। निचीयतेऽसौ निकाय्यो निवासः ; अन्यत्र निचेयं। परिचीयतेऽसौ, परिचाय्यः, उपचीयतेऽसौ उपचाय्यः अग्निः, चीयतेऽसौ चित्यः ; अन्यत्र परिचेयम्, उपचेयम्, चेयम। समुह्यतेऽसौ समूह्यः, सं-वह-घ्यण्, निपातनात् जिः, दीर्घश्च, अन्यत्र संवाह्यः। यद्यपि [illegible] घ्यणि पदं सिध्यति, तथापि वहधातौ घ्यणि अनिष्टवारणार्थं निपातनं। अमा (अव्ययं) चन्द्रस्य कला, तया सह वसतोऽस्यां तिथौ चन्द्रार्कौ इत्यर्थे अमावस्या अमावास्या इति द्वयं। याज्या ऋक्। एकमर्थविशेषे एव निपातः, न तु सर्व्वत्र। बहुवचननिर्द्देशात् शको घ्यण् शिक्यं, चर्घ्यण् चैत्यमित्यादि। पाणिनिः ३।१।११४,१२२, १२७—१३२। एतन्मते राजसूयपदं क्यबन्तो निपातः।

* पुश्च शकश्च सहश्च तकश्च चतश्च यतश्च शस चेति तस्मात्। चमश्च वपश्च रपश्च लपश्च त्रपश्च दभ च ते, न विद्यन्ते ते यत्र सो ऽचम-वप-रप-लप-त्रप-दभ, तस्मात्। भजश्च जपश्च यजश्च आ-नम चेति तस्मात्। (९७१) हसन्तत्वात् प्राप्तस्य घ्यणो बाधकोऽयं। रम्यमिति पवर्गान्तत्वात् यः, एवं तप्य लभ्यमित्यादि। शकसहोर्दिवाद्योरेव ग्रहणं, अन्यत्र शाक्यं साह्यमिति। आचाम्यमित्यादिषु घ्यण् एव। दाम्भ्यमिति दन्भु न दम्भे इत्यस्य नकार-रहितपाठात् नकारलोपे,(५७७)वृद्धिः। पाणिनिः ३।१।९८,९९,१२६, वार्त्तिके च।

† मुणो ण इत् अन्त्याच्च परः। आलम्भ्यो मारणीयः स्पर्शनीयो वा इत्यर्थः। पाणिनिः ७।१।६५। एतन्मते नुम्।

## ९७८ । उपात् स्तुतौ । (उपात् ५।, स्तुतौ ७।) ।

उपपूर्व्वस्य लभो नुण् स्यात् ये परे प्रशंसायां । उपलम्भ्यः साधुः। स्तुतौ किं, उपलभ्यमस्मात् किञ्चित् । *

## ९७९ । गद्-मद्-यम-चराचरो ऽगे यः ।

(गद मद यम चर आचरः ५।, अगेः ५।, यः ।१।) ।

अगिभ्य एभ्यो यः स्यात् ढभावे । गद्यं मद्यं यम्यं चर्य्यं आचर्य्यं । अगेः किं, प्रगाद्यं अभिचार्य्यं । †

## ९८० । पण्यावद्यवर्य्याचार्य्योद्यजय्यक्रय्यार्य्योपसर्य्याजर्य्याः ।

(पण्य—अजर्य्य १।) ।

एते याना निपात्यन्ते । पण्यं विक्रेयं । अवद्यमनिष्टं । वर्य्या कन्या ; वर्य्यं श्रेष्ठं । आचार्य्यो गुरुः। उह्यतेऽनेनेति वह्यं शकटं । जेतुं शक्यं जय्यं, एवं क्षय्यं । क्रय्यं हट्टे प्रसारितं । अर्य्यः स्वामी वैश्यो वा । उपस्रियते इत्युपसर्य्या ऋतुमती । न जीर्य्यतीति अजर्य्यं सङ्गतं । ‡

---

* उपलम्भ्यः स्तव्य इत्यर्थः । उपलभ्यं प्राप्यमित्यर्थः । पाणिनिः ७।१।६६ ।

† अयमपि ण्यणो बाधकः । गिपूर्व्वेभ्यो ण्यण् एव । पाणिनिः ३।१।१००,वार्त्तिकञ्च।

‡ पण व्यवहारे स्तुतौ च, पण्यं ; अन्यत्र पाण्यो विष्णुः स्तव्य इत्यर्थः । नञ्-पूर्व्वस्य वदतेः अवद्यं अनिष्टं निन्दनीयमित्यर्थः, अन्यत्र अवाद्यं वाक्यं । वृ-ण्यण् वर्य्या वरणीया, वर्य्यं पूजनीयं ; अन्यत्र वार्य्यं । आ-चर-ण्यण् आचार्य्यः गुरुः, अन्यत्र आचर्य्यं । (९६६) सूत्रोक्त-नियमेन (९७९) ण्यणो बाधितत्वात् अत्र निपातः । उह्यतेऽनेनेति वह्यं ; अन्यत्र वाह्यं । जि, जय्यं ; अन्यत्र जेयं । क्षेतुं शक्यं क्षय्यं ; अन्यत्र क्षेयं । क्री, क्रय्यं ; अन्यत्र क्रेयं । ऋ, अर्य्यः ; अन्यत्र आर्य्यः विप्रः । उप-सृ, उपसर्य्या उपगमनीया, ऋतुमती ऋतुस्नातेत्यर्थः ; अन्यत्र उपसार्य्यं । न-जॄ अजर्य्यं सङ्गतं मिलन-मित्यर्थः ; अन्यत्र अजार्य्यं । पाणिनिः ३।१।१०१—१०५, ६।१।८१,८२ ।

९८१। इ भृ जुष स्विन्-शास्हदुङ्-हजो ऽक्लपचृतऋचच पाणिसृजसमवसृजः क्यप्। (इ—हजः ५।, अक्लप— समवसृजः ५।, क्यप् ।१।)।

द्रादेऋंकारोङो हजश्च क्लपादिवर्जात् क्यप् स्यात् ढभावे। *

९८२। स्वस्य तन् पिति। (स्वस्य ६।, तन् ।१।, पिति ७।)।

स्वान्तस्य तन् स्यात् पिति। आहत्यः भृत्यः जुष्यः स्तुत्यः इत्यः शिष्यः वृध्यः वृत्यः। क्लपादेस्तु कल्प्य चर्त्यं अर्च्यं पाणिसर्ग्या समवसर्ग्या रज्जुः। †

९८३। क वृष मृज गुह दुह शनस संभृ प्रत्यपिग्रहो वा। (क—ग्रहः ५।, वा ।१।)।

एभ्यः क्यप् स्यात् वा ढभावे। कृत्यं कार्य्यं, वृष्यं वर्ष्यं, मृज्यं मार्ग्यं, गुह्यं गोह्यं, दुह्यं दोह्यं, शस्यं शंस्यं, संभृत्यः संभार्य्यः, प्रतिगृह्यं, प्रतिग्राह्यं, अपिगृह्यं अपिग्राह्यं। ‡

---

* ऋत् उङ् यस्य स ऋदुङ्, इश्च भृश्च जुषश्च स्तुश्च इन् च शास च ऋदुङ् च हज् चेति तस्मात्। पाणि सृज पाणिसृज, समाऽवः समवः, समवात् सृज समवसृज; क्लपश्च चृतश्च ऋचश्च पाणिसृज च समवसृज च तत, पश्चान्नञ्योगे तस्मात्। क्यपः कित्वात् अगुणः। पाणिनिः ३।१।१०९,११०,११२, वार्त्तिकद्वय, भाष्यञ्च।

† स्वान्तस्य तन् स्यात् प इत् कृति परे, निष्ठन्ते। अत्र येन केनापि प्रकारेण स्वान्तस्य ग्रहणं, नतु स्वभाव-स्वान्तस्य; तेन वितत्येत्यादौ अमलोपे अनेन तन्। आहत्य इत्यादि, आ-हृ-क्यप्, कित्वात् गुणाभावः, पित्वात् तन्। शिष्य इति शास-क्यप्, (७०५) अणौ इमि उङ इ, (११२) षत्वं। वृध्य इति अन्तर्भूतण्यर्थत्वात् सकर्म्मकत्व, कर्म्मणि क्यप्, वर्द्धनीय इत्यर्थः। हजो आनुबन्धात् हङ इत्यस्य वार्थं इत्येव। कल्प्यमिति क्लपः घ्यण्. (६४९) क्लपादेशे, गुणः। पाणिभ्यां सृज्यतेऽसौ समवसृज्यतेऽसौ इति च वाक्ये घ्यणि, (९७२) जस्य गः। पाणिनिः ६।१।७१।

‡ समो भृ संभृ, प्रत्यपिभ्यां ग्रह प्रत्यपिग्रह, कश्च वृष च मृज च गुह च दुह च

**९८४। गृह्य विनीय विपूय जित्या सूर्य्य रुच्याव्यथ्य भिद्योद्ध्य पुष्य सिद्ध्य तिष्याज्य युग्य कृष्टपच्य कुप्य भार्य्याः।** (गृह्य—भार्य्याः १॥)।

एते क्यबन्ता निपात्यन्ते।

प्रगृह्यं पदं, कृष्णगृह्यः कृष्णवर्ग्यः, गृह्योऽस्वैरी, ग्रामगृह्या ग्रामबाह्या। विनीयः कल्कः। विपूयो मुञ्जः। जित्या हलिः। सरतीति सूर्य्यः, एवं रुच्यः, अव्यथ्यः। कूलं भिनत्तीति भिद्यो नदः। वारि उज्झतीति उद्ध्यो नदः। कार्य्यं पुष्णातीति पुष्यो नक्षत्रं। कार्य्यं साधयतीति सिद्ध्यः, सएव तिष्योऽपि। आज्यं घृतं। युग्यं वाहनं। कृष्टे स्वयं पच्यते इति कृष्टपच्यो व्रीहिः। कुप्यं सुवर्णरूप्याभ्यामन्यत्। भार्य्या वधूः क्षत्रिया च। *

---

ग्रन्भ च संभृश्च प्रत्यपिग्रह चेति तस्मात्। सर्व्वत्र विकल्पपक्षे (९७१) घ्यण्। कार्य्यमित्यत्र (५७७) वृद्धिः। मार्ग्यमित्यत्र (६९४) वृद्धिः, (९७२) जस्य गः। गोप्यमिति घ्यणि, गुणे, (६५६) गुहो बोरुरित्यत्र अचि परे विधानात् अत्र न ऊः। अस्यमित्यत्र (५६७) न-लोपः। पाणिनिः ३।१।११२,११३,११८,१२०, वार्त्तिकं काशिका च।

* पद-पक्ष्य-परतन्त्र-बहिर्भूतेषु (पाणिनिः ३।१।११९) गृह्यं निपात्यते, यथा, प्रगृह्यं पदं; कृष्णवर्ग्यः कृष्णपक्ष्यः पाण्डव इत्यर्थः; अस्वैरी अधीनः; ग्रामबाह्या ग्रामबहिर्भूता नदीत्यर्थः; एभ्योऽन्यत्र ग्राह्यं। कल्कोऽस्त्री समलैनसोरित्यमरः; अन्यत्र विनेयः। मुञ्जः शरपुङ्खः; अन्यत्र विपव्यः। हलि महत् हलं; अन्यत्र जेयः। सूर्य्यादयस्त्रिष्यान्ताः अष्टौ कर्त्तरि क्यबन्ताः, अन्यत्र सृ—सार्य्यः इत्यादि। रोचते इति रुच्यः। न व्यथते अव्यथ्यः। तोषयतीति तिष्यः, पुष्यनक्षत्रवाची। अज्यते म्रक्ष्यते ऽनेनेति आज्यं। युज्यते यत् तत् युग्यं। कृष्टपच्य इति कर्म्मकर्त्तरि क्यप्, "कृष्टेन पच्यन्ते" इति तु क्रमदीश्वरः। गुप्यते यत् तत् कुप्यं। स्वर्ण-रूप्ययोस्तु गोप्यं। भ्रियते ऽसौ भार्य्या। (९९६) स्वरूपो बाध्य इति नियमात् (९८१) सूत्रे घ्यणो बाधितत्वात् अत्र निपातनं। पाणिनिः ३।१।११४—११७,११९,१२१, वार्त्तिकानि च।

## ९८५। ले र्वदः क्यप्यौ। (लेः ५।, वदः ५।, क्यप्-यौ१॥)।

लेः परात् वदः क्यप्-यौ स्तः; ढभावे।

ब्रह्मणा उद्यते इति ब्रह्मोद्या ब्रह्मवद्या, कथा। *

## ९८६। म्रषोद्यं नित्यं। † (म्रषोद्यं १।, नित्यं १।)।

## ९८७। भू-हनः क्यप् भावे न तश्च।

(भू-हनः ५।, क्यप् ।१।, भावे ७।, न ।१।, तः १।, च ।१।)।

लेः पराभ्यामाभ्यां क्यप् स्यात् भावे, हनो नस्य तश्च। ब्रह्म-भूयं ब्रह्मत्वं, ब्रह्महत्या। ‡

## ९८८। घोः केलिमो ढवे। (घोः ५।, केलिमः १।, ढवे ७।)।

घोः परः केलिमः स्यात् ढवे। स्वयमेव पच्यन्ते इति पचेलिमा-स्तण्डुलाः। एवं भिदेलिमाः माषाः। §

---

* क्यप्यौ इति द्वयं क्यपो विकल्पं सूचयति। ब्रह्मणा ब्राह्मणेन। ब्रह्मोद्या इति (९९१) जिः। यप्रत्यये ब्रह्मवद्या। भावे तु, ब्रह्मोद्यं ब्रह्मवद्यं। एतादृशस्थलेषु स्याद्यन्तोपपदस्य कृदन्तेन धातुना समासो वक्तव्यः। अतएव "प्रादिवर्ज्जिते सुपि" इति क्रमदीश्वरसूत्रव्याख्याने गोयीचन्द्रः। अनुद्यं अनूद्यं अनुवाद्यमिति तु पदानि भवन्ति। पाणिनिः ३।१।१०६।

† मृषा उद्यते इति मृषोद्यं, नित्यं क्यप्, जिः। नित्यमिति कथनेन मृषावद्य-मिति न स्यात्। पाणिनिः ३।१।११४।

‡ ब्रह्मणो भावः, ब्रह्मभूयं ब्रह्मत्वमित्यर्थः। ब्रह्मणो हननं ब्रह्महत्या, (९७६) अन्-लोपे, (९८२) तन्, अभिधानात् स्त्रीलिङ्गता। पाणिनिः ३।१।१०७,१०८।

§ ढश्च तत् वश्चेति ढवः तस्मिन्। घोरुपादानं सर्व्वधातुप्राप्त्यर्थं। केलिमः कि स्यात् न गुणः। कालेन पच्यमानास्तण्डुलाः स्वयमेव पच्यन्ते इत्यर्थः। गृहस्थेन भिद्यमानाः माषाः स्वयमेव भिद्यन्ते इति भिदेलिमाः। एवं भिदेलिमं काष्ठं। मेघेन मुच्यमानं

## ९८९। ते त्याः, शक्यार्हप्रैष्यानुज्ञाप्राप्त-कालेवा। (ते १।।।, त्याः १।।।, शक्य—प्राप्तकाले ७।, वा ।१।)।

तव्यादयो त्य-संज्ञाः स्युः, ते च शक्याद्यर्थेषु वा स्युः। *
वोढुं शक्यो वोढव्यः वहनीयः वाह्यः। स्तोतुमर्हः स्तोतव्यः स्तवनीयः स्तुत्यः। प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यं। अनुज्ञातस्त्वं त्वया अध्येतव्यं अध्ययनीयं अध्येयं। प्राप्तस्ते कालः त्वया ध्यातव्यं ध्यानीयं ध्येयं। †

इति त्य-पादः।

---

वारि स्वयमेव मुच्यते इति मुचेलिमं। इत्यादि। अत्र ढघे इति कथनं काशिकामतानुसारि, वार्त्तिकभाष्ययोस्तु कर्म्मणीति। "केलिमर उपसंख्यानम्" इति वार्त्तिकम्।

* शक्यश्च अर्हश्च प्रैष्यश्च अनुज्ञा च प्राप्तकालश्च तस्मिन्। शक्यते ऽसौ शक्यः कर्म्मणि यः। अर्ह्यते योग्यः क्रियतेऽसाविति अर्हः, अन्तर्भूतण्यर्थत्वात् कर्म्मणि यः। निर्यकार-पाठे तु कर्म्मणि घञ्। ते तव्यादयः—तव्य, अनीय, य, घ्यण्, क्यप्, केलिम इति षट्, "त्यः" संज्ञा येषां तादृशाः स्युः। ते च तव्यादयः शक्याद्यर्थेषु वा स्युः। वा-शब्दः समुच्चयार्थः। तेन, शक्याद्यर्थाभावेऽपि स्युरित्यर्थः। त्यादिकृदन्त-शब्दानां नामसंज्ञामाहुः—

उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजं।
नामसंज्ञा भवेदेषां स्याद्युत्पत्तिस्ततः परं॥

† अन्यार्थेषु पूर्व्वोदाहरणानि, शक्याद्यर्थेषु उदाहरणान्याह वोढुमित्यादि। वोढव्य इति वह-तव्य, (१७५) हस्य ढ, (६५३) अकारस्य ओकार, (५७५) तस्थाने ध, (४७) धस्य ढ, (७७) ढलोपः। वोढुं शक्यः स्वल्पो भार इति शेषः। वाह्य इति वह (९७१) घ्यण्, (५७७) वृद्धिः। स्तोतुमर्हः गुरुरिति शेषः। स्तुत्य इति (९८१) क्यप्, (९८२) स्वस्य तन्। इत्युदाहरणद्वयं कर्म्मणि वाच्ये। प्रैष्यादीनामुदाहरणानि भाववाच्ये। ध्यातव्यमिति ध्यै तव्य, (६०८) आ, ध्येयमिति (६११) ए। पाणिनिः ३।१।९५, ३।३।१६३,१६९। एतन्मते कृत्याः।

## ९९० । तृणकौ घे । (तृन्-णकौ १॥, घे ७।)।

धोस्तृन्-णकौ घे स्तः। करोतीति—कर्त्ता, कारकः, दरिद्रायकः। *

## ९९१ । गलेचोपक-पादहारकौ ढे ।

(गलेचोपक पादहारकौ १॥, ढे ७।)।

एतौ निपात्यौ ढे। †

## ९९२ । माऽर्हात् क्रमो नेम् तृणः ।

(माऽर्हात् ५।, क्रमः ५।, न ।१।, इम् ।१।, तृणः ६।)।

प्रक्रान्ता उपक्रान्ता। अन्यत्र क्रमिता अतिक्रमिता। ‡

## ९९३ । ग्रहनन्दिपचादे र्णिननान् घे ।

(ग्रह-नन्दि-पच-आदेः ५।, णिन्-अन-अन् ।१।, घे ७।)।

ग्रहादे र्णिन्, नन्द्यादेरनः, पचादेरन्, स्यात् घे। ग्राही स्थायी

---

* तृन् च णकश्च तौ। तृन् इति दन्त्य-नकार, औणादिकतन्प्रत्ययान्तानां पितृ-आदि-शब्दानां विशेषार्थं। णकस्य णकारो (५७७) वृद्ध्यर्थः। तृन् तच्छीलतद्धर्म-तत्साधुकारिष्वर्थेष्वपि (पाणिनिः ३।२।१३५) स्यादिति बोध्यं, अतएव ग्रन्थकारेण (३०५) शीलार्थतृन् इति कथितं। दरिद्रायक इति (७०२) दरिद्र आलोप इत्यत्र अकवर्जनात् आलोपाभावे, (९२४) यन्। पाणिनि ३।१।१३३। एतन्मते तृन् तृन् च।

† एतौ कर्मणि वाच्ये णकप्रत्ययेन निपात्यौ। गले चुप्यतेऽसौ गलेचोपकः। पादाभ्यां ह्रियतेऽसौ पादहारकः। भाष्यम्।

‡ मं (आत्मनेपदं) अर्हतीति मार्हः। आत्मनेपदप्राप्तियोग्यात् क्रमः परस्य तृण-इम् न स्यात्। प्रक्रान्त्यादि (८९४) आत्मनेपद योग्यत्वं। मकारस्य (५०,५१) अनुस्वार-नकारौ। अन्यत्र आत्मनेपदायोग्ये इत्यर्थः। वार्त्तिकम्।

प्रणायिणी, नन्दनः विचक्षणः जनार्द्दनः मधुसूदनः लवणः, पचः देवः लेल्यः लोलुवः रोरुयः। *

९९४। चिक्लिद चक्नस चराचर चलाचल पतापत वदावद घनाघन पाटपटा वा।

(चिक्लिद—पाटपटाः १॥, वा ।१।)।

एते अनन्ता निपात्यन्ते वा।

पक्षे, क्लेदः क्नसः चरः चलः पतः वदः हनः पाटः। †

---

* ग्रहश्च नन्दिश्च पचश्च ते आदयो यस्य स तस्मात्। णिन् च अनश्च अन् च तत्। णिनो ण इत् (५७७) वृद्ध्यर्थः। अनः अकारान्तः। अन् इत्यस्य नइत अ-प्रत्ययात् विशेषार्थः। ग्रहादिः—ग्रह स्था पा सह दास भास मन्त्र मर्द्द रक्ष श्रु वप श्री (श्रा) याच ह्व व्रज वद वस क्रु नी भू राध रुध। नन्द्यादिः—नन्दि वाशि मदि दूषि साधि वर्द्धि शोभि रोचि सहि तपि दमि जल्पि रमि दर्पि क्रन्दि कर्षि हर्षि आर्द्दि यु सूदि भीषि लू नाशि चवि। पचादिः—पच वच वप वद चल पत नद भष प्लु चर स्तूप गम हश चप चम लिष व्रण क्लिद सूद लिख क्रम हन पट भू भ्र स्तृ गृ जृ भृ तृ गाह दिव चुर सेव दु नी ज्वल सृ। एवमपरेऽपि प्रयोगतो ज्ञेयाः। (३०५) ढघे क्रतीत्यत्र स्वयं कथनात् कदाचिद् भविष्यत्काले ऋणार्थे च णिन् स्यादिति (पाणिनिः ३।३।१७०)। एवं (६६०) स्वयमुक्तत्वात् घिणिनि-प्रत्ययोऽपि वक्तव्यः; घ इत, अन्त्यस्य इकारस्य च इत्, ण इत्, इन्स्थितिः (पाणिनिः ३।२।१४१-१४५)। गृह्णातीति णित्त्वात् वृद्धिः। तिष्ठतीति (९२४) यन्। प्रपिबत. यौ, (९९८) णत्व, णत्वप्रदर्शनार्थमेव द्विवचनान्तं पदं। नन्दयतीति अनः, (६४१) अलोपः। विचष्ट इति (७०६) अन-वर्जनात् न चक्षः क्साञ्ख्याञौ, (१०७) णत्व। जनं अर्द्दयतीति, मधुं सूदयतीति, जन-मधू असुरविशेषौ। लुनातीति लवणः राक्षसः, स्वभावात् णत्वं। पचतीति पचः, दीव्यतीति देवः, अत्र अन् (९९६) क-प्रत्ययस्य बाधकः। लेलीयते इति अन्, (८३६) अनि तु नित्यं यङ्लुक्, (८४१) गुणनिषेधं, (५८८) ईस्थाने यः। लोलूयते इति अनि यङ्लुकि उस्थाने उव्। रोरुयते इति अनि, उदन्तात् अनि यङ्लुक्निषेधः। (५४३) यङोऽकारलोपः। पाणिनिः ३।१।१३४। ल्यु = अन। अच् = अन्।

† क्लिदु इर् क्लेदे, क्नसु म उद्धृतौ, चर गतौ, चल ज गतौ, पत लृ ञ गत्यां, वदे वाचि, हन ल वधे गतौ, पट क ल्विषि, इत्येभ्यः पचादित्वादनि एते वा निपात्यन्ते। पाटपट इत्यत्र पाटूपट इति चान्द्राः। पाटूपट इति पाणिनीयाः। पक्षे क्लेद इत्यादि, पाट इति चुरादित्वात् ञौ, वृद्धिः। वार्त्तिकत्रयम्।

## ९९५। रात्रेर्मन् वा कृति।

(रात्रेः ६।, मन् ।१।, वा ।१।, कृति ७।)।

रात्रेर्मन् स्याद्वा कृति। रात्रिञ्चरः रात्रिचरः। *

## ९९६। कॄ-गॄ-ज्ञा-प्रीजुङः को—दुहो घङ् च।

(कॄ-गॄ-ज्ञा-प्री-इजुङः ५।, कः ।१।, दुहः ६।, घङ् ।१।, च ।१।)।

कॄादेरिजुङश्च कः स्यात्, तस्मिंश्च दुहो घङ् स्यात् घे। किरः गिरः ज्ञः प्रियः चिपः भूरुहः कामदुघा गौः। †

## ९९७। हनजनात्-गमादेर्डः।

(हन-जन-आत्-गमादेः ५।, डः ।१।)।

हनो जन आदन्तात् गमादेश्च डः स्यात् घे। शोकापहः वराहः सरसिजं पङ्कजं अजः गोदः द्विपः प्रज्ञः आशुगः नगः गिरिशः, वारि चरतीति वार्चो हंसः। ‡

---

* कृति कृदन्ते धातौ परे इत्यर्थः। मनोऽनावितौ, नित्त्वादन्ते। "रात्रौ चरतीति पचादित्वादनि, अनेन मन्, (५०,५१) मस्यानुस्वारः, अनुस्वारस्य ञ। पक्षे रात्रिचरः। अगदङ्कारः सत्यङ्कारः (पाणिनिः ६।३।७०) (१००९) षण्, तिमिङ्गिलः ("गिलेऽगिलस्य" इति वार्त्तिकम्) (९९६) कः, इत्यादौ मन् वक्तव्यः। पाणिनिः ६।३।७२।

† इच् उङ् यस्य स इजुङ्, कॄश्च गॄश्च ज्ञाश्च प्रीश्च इजुङ् चेति तस्मात्। दुहो घङ् चेति चकारात् इजुङन्तात् के सतीत्यर्थः। परसूत्रेण डप्रत्ययेन सिद्धेऽपि अत्र ज्ञा-ग्रहणं, परसूत्रे उपपदपूर्व्वादेव डः स्यात्, इह तु केवलात् जानातेः क इति ज्ञापनार्थम्। अत्र इजुङमात्रनिमित्तकतया विशेषस्य कप्रत्ययेन, सर्व्वधातु-निमित्तकतया सामान्यो ढात् षण् (१००९) बाध्यते। किरतीति किरः, (६२८) इर्। एवं गिरतीति गिरः। जानातीति ज्ञः, (६१०) आलोपः। प्रीणातीति प्रियः (५८८) इस्थाने इय। चिपतीति चिपः, भुवि रोहतीति भू-रुहः, उभयत्र इजुङन्तात् कः। कामं दोग्धीति, कप्रत्यये, दुहस्य घङि, स्त्रीत्वात् (२४९) आप्। पाणिनिः ३।१।१३५, ३।२।७०।

‡ हन च जन च आच्च गमादिश्च तस्मात्। उदाहरण-दर्शनेन, उपपदपूर्व्वकादेवे-

## ९९८ । घेट-दृश-पा-घ्रा-ध्मः शः ।

(घेट—ध्मः ५।, शः १।) ।

एभ्यः शः स्यात् घे । उद्धयः उत्पश्यः उत्पिबः उज्जिघ्रः उद्धमः । *

## ९९९ । साहि साति चेति वेद्येजि धारि पारि लिम्प विन्दो ऽगेः । (साहि—विन्दः ५।, अगेः ५।) ।

अगिभ्य एभ्यः शः स्यात् घे । साहयः सातयः चेतयः वेदयः एजयः धारयः पारयः, लिम्पः विन्दः गोविन्दः । †

## १००० । दुनीभूज्वलाद्यास्रुसंस्रो णो वा ।

(दु—संस्रो. ५।, णः १।, वा ।१।) ।

---

त्यर्थः । शोकमपहन्ति, वरमाहन्ति, सरसि जायते (विभक्तेरलुक्), पङ्काज्जायते, न जायते, गा ददाति, द्वाभ्यां पिबति, प्र-ह्वयति, आशु गच्छति, न गच्छति, गिरौ शेते, इति क्रमेण वाक्यानि । एवं तमोपहः, दुःखापहः, द्विजः अनुजः सहजः इत्यादयः । गमादिस्तु प्रयोगतो ज्ञेयः । पाणिनिः ३।२।४८,४९,५० ; ३।२।९७-१०१ ; ३।१।१३६, ३।२।३ सूत्रयोः कः ।

* शस्य श इत् रसंज्ञ', अकारस्थितिः । उद्धयतीति शः, घे शप् रे शप्, (५४३) अकारलोपः । एवं उत्पश्यतीत्यादि वाक्यानि । सर्व्वत्र रे परे शप्, (५९७) दृशादेः स्थाने पश्याद्यादेशः । साहचर्य्यादत्र पा इति भौवादिक एव । उदाहरणज्ञापकात् प्रायशः सोपसर्गाणामेवायं विधिरिति ; (अतएव "प्रादेशोदेः शङ्" "अप्रादेशेत्येके" इति क्रमदीश्वरः) । व्याघ्र इत्यत्र संज्ञानुरोधात् ड एव ("जिघ्र. संज्ञायात् प्रतिषेधः इति वार्त्तिकम्) । पाणिनिः ३।१।१३७ ।

† षह ञ ङ शक्तौ, सात क सुखे, चिती संज्ञाने, विद ल् मतौ, एजृ कम्पे, धृ श ङ स्थितौ, पृ लि पालने, एते आन्ताः । ञि लिपी श प ञ लेपने, विद लृ श प औ लाभे, इत्युभयोः (७४१) मुचादित्वात् णन् । साहयतीत्यादि वाक्यानि । श-प्रत्यये, रे परे शप्, गुणादि । लिम्पः विन्दः इत्युभयत्र तुदादित्वात् शः । उदेजयः इत्यत्र तु उद्शब्दस्य उपसर्गप्रतिरूपकत्वेन अनुपसर्गत्वात् शः इति भाष्यम् । क्रमदीश्वरस्तु उद्शब्दस्य उपसर्गत्वात् "एजेरुदः" इति पृथक् सूत्रं कृतम् । पाणिनिः ३।१।१३८ ।

अगिभ्य एभ्यो णः स्यात् घे वा। दावः द्रवः, नायः नयः, भावः भवः, ज्वालः ज्वलः, चालः चलः, आस्रावः आस्रवः, संस्रावः संस्रवः। *

१००१। श्वस व्यधेन तन दावहृसः। (श्वस—सः ५।)।

एभ्यो णः स्यात् घे। श्वासः व्याधः अत्यायः अवतानः दायः धायः अवहारः अवसायः। †

१००२। नृत्खनरनजः षकः। (नृत् खन-रन्जः ५।, षकः १।)।

एभ्यः षकः स्यात् घे। नर्त्तकी खनकी रजकी। ‡

१००३। गो णनट्थकौ। (गः ५।, णनट् थकौ १॥)।

गायतेरेतौ घे स्तः। गायनी, गायकः। §

---

* ण प्रत्ययस्य ण इत् वृद्ध्यर्थः, अकारस्थितिः। द्रुनोतीति दावः, ण-प्रत्यये, (वृद्धिः), पक्षे पचादित्वादन् द्रवः। एवं नयति, भवति, ज्वलति, चलति, आस्रवति, संस्रवति, इति वाक्यानि। आस्रुसंस्रु इत्यादौ। व्यतिकरसन्देहनिरासार्थं समासः न कृतं। एवं ग्राहः ग्रहः (पाणिनिः ३।१।१४३)। क-प्रत्यये गृहमित्यपि (पाणिनिः ३।१।१४४)। ज्वलादिश्च—ज्वल चल टल स्थल हल नल पल बल शल पत क्वथ वम भम चर सह रम शद सद कुच कस। पाणिनिः ३।१।१४० —१४२, काशिका च।

† श्वश साश्च श्वसौ, अर्थात् हृसौ अवहृसौ। श्वसश्च व्यधश्च इन च तन च दाश्च अवहृसौ चेति तस्मात्। पृथक्सूत्रकरणं नित्यार्थं, अगेरित्यस्य निवृत्त्यर्थञ्च। दा इति दासंज्ञकः। श्वसिति, विध्यति, प्रत्येति, अवतनोति, ददाति, दधाति, अवहरति, अवस्यति, इति क्रमेण वाक्यानि। दायः धायः अवसायः एतेषु आदन्तत्वात् (९२४) यन्। पाणिनिः ३।१।१३९,१४१, वार्त्तिकञ्च। अवश्याय-प्रतिश्यायौ च णप्रत्ययान्तौ इति वक्तव्यम्।

‡ षकः ष इत् (२५७) ईवर्थः अक-स्थितिः। नृत्यति, खनति, रजति या सा, इति वाक्यानि। रञ्जकौत्वन (९९०) षके परे न-लोपः। पाणिनिः ३।१।१४५, वार्त्तिकञ्च।

§ णनटो णित्त्वात् वृद्धिः, टित्वादीप् अन-स्थितिः। गायति या सा गायनी, (९२४) यन्, (२५७) ईप्। पाणिनिः ३।१।१४६,१४७।

**१००४ । हायनः ।** (हायनः १।) ।

अयं निपात्यते । भावं जहातीति हायनो वर्षः, अम्बु जहातीति हायनो व्रीहिः । *

**१००५ । प्रु द्रु स्रु सृ ल्वो ऽकः ।** (प्रु—ल्वः ५।, अकः १।)।

एभ्योऽकः स्यात् घे । प्रवकः द्रवकः स्रवकः सरकः लवकः ।†

**१००६ । आशिषि ।** (आशिषि ७।) ।

जीवतादिति जीवकः । ‡

**१००७ । नाम्न्यन्ये तिक् च ।**

(नाम्नि ७।, अन्ये १॥, तिक् ।१।, च ।१।) ।

धोराशिषि अन्येऽपि क्तः स्युः, तिक् च, संज्ञायां । देवरातः, रन्तिः । §

---

* काल-व्रीहिभ्यामन्यत्र हातः, (९७५) निपातो ह्यर्थविशेषे इत्युक्तेः । "जिहीते प्राप्नोतीति वा" इति भट्टोजिदीक्षितः । पाणिनिः ३।१।१४८ ।

† साधुकारिणि कर्त्तरीति वक्तव्यं, यतः "समभिहारे" इति पाणिनिना प्रोक्तम् । "साधुकारिण्युपसंख्यानम्" इति वार्त्तिकोक्तिश्च । "समभिहारग्रहणेन साधुकारित्वं लक्ष्यते" इति भट्टोजिदीक्षितः । साधु प्रवते प्रवकः, (५४२) गुणः । एवं साधु द्रवति, स्रवति, सरति, लुनाति । साधुकारिणि किं, प्रोता । पाणिनिः ३।१।१४९ । भाष्ये वुन् । भाष्यञ्च ।

‡ आशिषि गम्यमाने सर्व्वधातुभ्यो ऽकः स्यात् घे । जीवतादिति (९५६) तातङ् । एवं नन्दकः, वर्द्धक इत्यादि । स्त्रियां जीविका । पाणिनिः ३।१।१५० ।

§ आशिषि संज्ञायाञ्च गम्यमानायां कर्त्तरि वाच्ये कथितादन्येऽपि (उणादयः) कृत्-प्रत्ययाः स्युः, तिक् च स्यादित्यर्थः । देवाय रायात् देवरातः, कर्त्तरि क्तः । एवं देवाय देयात् देवदत्तः, यज्ञाय देयात् यज्ञदत्तः । एवञ्च वीरो भूयात् वीरभूः, मित्रं भूयात् मित्रभूः, इत्यादौ क्विप् । रमतां रन्तिः, (९७६) तिकि-वर्ज्जनात् न अम्लोपः । (परिशिष्टपत्रं द्रष्टव्यम्) । इदमेव सूत्रं "उणादयो बहुलम्" (पाणिनिः ३।३।१) इति सूत्रस्थानीयम् । पाणिनिः ३।३।१७४ ।

१००८। सनि-सातौ वा। (सनि-सातौ १॥, वा।१।)।

सन्तिश्च। *

१००९। ढात् षण्। (ढात् ५।, षण्।१।)।

ढात् परात् धोः षण् स्यात् घे। कुम्भकारः, अघटं घटं करोतीति घटीकारः। †

१०१०। हनचरग-टक। (हन-चर-गः ५।, टक्।१।)।

ढात् परेभ्यः एभ्यः टक् स्यात् घे। पापघ्नः कुरुचरः सामगः। ‡

१०११। सृकृष्टः। (सृ-कृः ५।, टः १।)।

ढात् पराभ्यामाभ्यां टः स्यात् घे। पुरःसरी, यशस्करी विद्या। भास्करः चपाकरः, कर्म्मकरी दासी। §

---

* सतिश्च सातिश्च तौ। सनोतेराशिषि तिगन्तस्य एतौ वा निपात्यौ। पक्षे सन्तिः, सनुतादिति वाक्ये तिक्, (१०३३) इम् निषेधः, (६७६) अमलोपाभावः। पाणिनिः ६।४।४५।

† षणो ण इत् ढकारार्थः ष इत् ईवर्थः, अकारस्थितिः। ढादिति निर्वर्त्त्यादिकर्म्मण एव, तेन मृदुकार इति न स्यात्। कुम्भं करोतीति कुम्भकारः। यद्यपि नित्यसमासे वाक्यरचना नास्ति, तथापि शिष्यबोधार्थमिति बोध्यम्। (११८३) कृत्तद्धितसमासानामभिधानं नियामकमिति कथनेन नतु सर्व्वत्र षण्। पाणिनिः ३।२।१।

‡ हनश्च चरश्च गाश्च तस्मात्। टकः कित्त्वादगुणः, टित्त्वादीप्, अकारस्थितिः। षणोऽपवादोऽयं। पापं हन्तीति पापघ्नः, टकः कित्त्वात् अगुणत्वे, (१३०) उङ्लोपः, (१८९) हस्थाने घ्नः। कुरून् चरतीति कुरुचरः (कुरुषु चरतीति पाणिनिः)। साम गायतीति सामगः, (६१०) आलोपः। एवं सहचरः अनुचरः इत्यादि वक्तव्यम्। पाणिनिः ३।२।८,१६,५२—५४।

§ पुरोऽग्रं सरतीति, टः, (५४२) गुणः, (२५७) टित्त्वादीप्। यशः करोति, भासं करोति, चपां करोति, कर्म्म करोति, इति वाक्यानि। (१००९) कुम्भकार इत्युदा-

## १०१२ । शकृत्स्तम्बात् हृति-नाथात् फले-रजो-मलात् देववातात् कृ-हृ-ग्रहाप इः ।

(शकृत् स्तम्बात् ५।, हृति-नाथात् ५।, फलि-रजस्-मलात् ५।, देव-वातात् ५।, कृ हृ ग्रह आपः ५।, इः १।) ।

एभ्यः परेभ्यः क्रमादेतेभ्य इः स्यात् घे । शकृत्करि वत्सः, स्तम्बकरि व्रीहिः, हृतिहरिः श्वा, नाथहरिः पशुः, फलेग्रहिः रजोग्रहिः मलग्रहिः, देवापिः वातापिः ।*

## १०१३ । कुक्ष्यात्मोदराद् भृः खिः ।

(कुक्षि-आत्मन् उदरात् ५।, भृः ५।, खिः १।) ।

एभ्यः परात् भृञः खिः स्यात् घे ।†

## १०१४ । खित्यव्याजरुषो मन्स्वौ ह्रौकान्तत्वं त्वेकाजिचः ।

(खिति ७।, अव्याजरुषः ६।, मन्-स्वौ १॥, ह्रौकान्तत्वं १।, तु ।१।, एकाजिचः ६।) ।

---

हरता ग्रन्थकारेण अभिधानात् क्वचित् षण्, क्वचित् टश्च स्यादिति सूचितं । एवं अभिसर-इत्यादि वक्तव्यम् । पाणिनिः ३।२।१८—२२ ।'

* पृथक् पदकरणं यथासङ्ख्यार्थं । तेन, शकृत्-स्तम्बाभ्यां कृञः, हृति-नाथाभ्यां हृञः, फलिरजोमलेभ्यो ग्रहः, देव-वाताभ्यां आपः, इः स्यादित्यर्थः । शकृत् अव्ययशब्दः तालव्यादि विष्ठावाचकः, शकृत् करोतीति इः, गुणः । स्तम्बं गुच्छं करोतीति स्तम्बकरिः । हृतिं चर्म्म हरतीति, नाथं प्रभुं हरति वहतीति । फलं गृह्णातीति एकारान्तग्रहणात् अधिकरणविवक्षा, अनुक् च । फलग्राहक इत्यर्थः । रजो गृह्णातीति रजोग्रहिः धूलिग्राहको वायुरित्यर्थः । मलं गृह्णातीति मलग्रहिः, हड्डिक इत्यर्थः । देवं आप्नोति देवापि देवयाजकः (देवयाज्ञिक इति क्रमदीश्वरः) । वातमाप्नोति वातापि-रसुरविशेषः । पाणिनिः ३।२।२४—२६ । सर्व्ववर्म्मा क्रमदीश्वरश्च ।

† कुक्षेश्च आत्मनश्च उदरस्य तत्सात् । खिप्रत्ययस्य ख इत् इकारस्थितिः । पाणिनिः ३।२।२६, कालापाः चान्द्राश्च ।

व्यवर्जस्याजन्तस्यारुषश्च मन् स्यात् खश्च, एकाजिचस्तु द्वीकान्तत्वं स्यात् खिदन्ते धौ परे। कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः। *

### १०१५। खशेजेः। (खश् ।१।, एजेः ५।)।

ढात् परात् एजयतेः खश् स्यात् घे। जनमेजयः।†

### १०१६। मन्यात् स्वार्थे। (मन्यात् ५।, स्वार्थे ७)।

आत्मानं गां मन्यते गांमन्यः, श्रियंमन्या।‡

### १०१७। मुञ्जकूलास्यपुष्पात् धेटः।

(मुञ्ज कूल-आस्य-पुष्पात् ५।, धेटः ५।)।

एभ्यः परात् धेटः खश् स्यात् घे। मुञ्जन्धयः कूलन्धयः आस्यन्धयः पुष्पन्धयः। मुञ्जन्धयी, धेटष्टित्त्वादीप् (२५७)। §

---

* नास्ति व्यं यत्र सोऽव्यः, अव्यश्चासौ अच् चेति अव्याच्। (अच् – अजन्तः)। अव्याच्च अरुस् च तत्तस्य। द्वौ द्वितीया, तस्याः कं (एकवचनं) द्वीकं, द्वीकं अन्तं यस्य स द्वीकान्तः, तस्य भावः द्वीकान्तत्वं। एकाश्चासौ इच् चेति एकाजिच् तस्य। इच् इजन्तः। मनो म इत् अन्त, म-स्थितिः, अकार उच्चारणार्थः। कुक्षिं बिभर्त्ति, खिः, गुणः, कुक्षिशब्दस्य अजन्तत्वात् मन्। आत्मानं बिभर्त्ति, (३१९) तोर्लुकि, (११८) विरामे परे नस्य लुपि, (१५) नञा निर्द्दिष्टमनित्यमिति न्यायात् तदादिविधिनिषेधस्यानित्यत्वे अनेन मन्। एवं उदर बिभर्त्ति उदरम्भरिः। पाणिनिः ६।३।६६,६७,६८।

† एजेरिति एज् कम्पे इत्यस्य अन्तस्थ ग्रहणं। खशः खशाविती अकारस्थितिः। जनं एजयतीति खश्, (५४१) घे शप् रे इति शप्, (५४२) गुणादिः, (५४३) अकारलोपः, पूर्व्वस्य मम्। पाणिनिः ३।२।२८।

‡ ढात् परात् मन्यतेः खश् स्यात् घे स्वार्थे, स्व-निमित्तक-धात्वर्थे इत्यर्थः। गांमन्य इति (७३८) दिवादित्वात् श्यन्, (५४३) अकारलोपः। गामिति एकाजिजन्तत्वात् द्वितीयैकवचनान्तत्वं। एवं श्रियंमन्या (भाष्यमते श्रिमन्या)। पाणिनिः ३।२।८३।

§ मुञ्जं (तृणविशेषं) धयतीत्यादि वाक्यं। खिदन्त धातौ परे पूर्व्वस्य मम्।

**१०१८। नाडी शुनी स्तन कर मुष्टि पाणि नासिकात् ध्मश्च ।** (नाडी—नासिकात् ५।, श: ५।, च।१।)।

एभ्य: परात् ध्मो धेटश्च खश् स्यात् घे। नाडिन्धम: नाडिन्धय: ।*

**१०१९। घटी-खारी-वाताद् विध्वरुस्तिला-दसूर्य्योग्राल्ललाटा-न्मित-नख-मानात् ध्मा-तुद-दृश-तप-पचः ।** (घटी-खारी-वातात् ५।, विधु-अरुस्-तिलात् ५।, असूर्य्य-उग्रात् ५।, ललाटात् ५।, मित-नख-मानात् ५।, ध्मा-तुद-दृश-तप-पच: ५।)।

एभ्यः परेभ्य: क्रमादेतेभ्य: खश् स्यात् घे। घटिन्धम: खारिन्धम: वातन्धम:, विधुन्तुद: अरुन्तुद: तिलन्तुद:, असूर्य्यम्पश्य: उग्रम्पश्य:, ललाटन्तप:, मितम्पच: नखम्पच: द्रोणम्पच: ।†

**१०२०। कूलादुद्रुजुद्वहः ।**
(कूलात् ५।, उद्-रुज-उद्-वह: ५।)।

---

धेटधातोष्टित्त्वात (२५७) ईप्। यत्र धेटधातो-रेकारस्थाने अयादेश: स्यात् तत्रैव टित्त्वादीप् इति वक्तव्यं, तेन धेट-तव्य=धातव्या इत्यादौ न ईप्। कातन्त्रम्।

* नाडी च शुनी च स्तनश्च करश्च मुष्टिश्च पाणिश्च नासिका चेति तस्मात्। नाडीं धमतीति खश्, (५९७) धमादेश:, पूर्व्वपदस्य मन् ह्रस्वश्च। एवं नाडिन्धय इत्यादि। पाणिनि: ३।२।२९,३०,३७, वार्त्तिकं कातन्त्रञ्च।

† पृथक् पदकरणं यथासङ्ख्यार्थं, तेन, घटी-खारी-वातेभ्य: ध्म:, विध्वरुस्तिलेभ्य-स्तुद:, असूर्य्योग्राभ्यां दृश: ललाटात् तप:, मित-नख-मान-वाचकेभ्य: पच:, खश् स्यात् घे इत्यर्थ:। घटीं धमतीत्यादि वाक्यं (१०१४) घटी-खारी-शब्दयो मन् ह्रस्वश्च। खारी परिमाणविशेष:। खरीति च वार्त्तिके, खरी गर्गरी (गर्द्दभीति सिद्धान्तकौमुदी)। अरु: मर्म्म तुदतीति अरुन्तुद:, अरुसो मन्, (२१३) सलोप:। न सूर्य्यं पश्यतीति असूर्य्यम्पश्य:। द्रोणम्पच: इति द्रोण: परिमाणविशेष:। एवं आढकम्पच: इत्यादि। पाणिनि: ३।२।२८—३७, वार्त्तिकञ्च।

कूलात् आभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः। *

## १०२१। प्रियवशात् भयर्त्तिमेघात् सर्व्वकूला-भ्रकरीषात् वद-कृ-कषः खः।

(प्रिय-वशात् ५।, भय-ऋति-मेघात् ५।, सर्व्व-कूल-अभ्र-करीषात् ५।, वद-कृ-कषः ५।, खः १।)।

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे। प्रियंवदः वशंवदः, भयङ्करः ऋतिङ्करः मेघङ्करः, सर्व्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः। †

## १०२२। क्षेम-प्रिय-मद्रात् कृवा।

(क्षेम-प्रिय-मद्रात् ५।, कृः ५।, वा।१।)।

एभ्यः कृञः खो वा स्यात् घे। क्षेमङ्करः प्रियङ्करः मद्रङ्करः। पक्षे क्षेमकारः। ‡

## १०२३। भावघे त्वाशितात् भुवः।

(भाव-घे ७।, तु।१।, आशितात् ५।, भुवः ५।)।

आशितात् भुवः खः स्यात् भावे घे वा।

---

* उभयत्र उदो ग्रहणं स्पष्टार्थं। कूल-मुद्रुजति, कूल-मुद्वहति इति वाक्यद्वयं। उभयत्र खश्, कूलशब्दस्य मन्। पाणिनिः ३।२।३१।

† पृथक्पदकरणं वदादिभि र्यथासङ्ख्यार्थं, तेन प्रिय-वशाभ्यां वदः, भय-ऋति-मेघेभ्यः कृञः, सर्व्वकूलाभ्रकरीषेभ्यः कषः, खः स्यात्। प्रियं वदतीत्यादि वाक्यानि। सर्व्वत्र पूर्व्वपदस्य मन्। संज्ञायामपि मिन्दाया-मशुभे गमने स्त्रियां, कल्याण-वर्त्मनो-ऽत्र ऋतिरित्यभिधीयते। करीषः शुष्क-गोमयं। पाणिनिः ३।२।३८,४२,४३।

‡ क्षेमं करोतीत्यादि वाक्यानि। पक्षे (१००६) ढात् षण्। पाणिनिः ३।२।४४।

आश्रितम्भवं वर्त्तते, आश्रितं भवत्यनेनेति आश्रितम्भव ओदनः।*

**१०२४। तॄ भृ वृ दॄ जि धृ तप यम दम मद लिह गम सहाजो नाम्नि।** (तॄ—भजः ५।, नाम्नि ७।)।

एभ्यः खः स्यात् संज्ञायां। रथेन तरतीति रथन्तरः, विश्वम्भरः, पतिंवरा, पुरन्दरः, धनञ्जयः, वसुन्धरा, शत्रुन्तपः परन्तपः, वाचंयमः, अरिन्दमः, इरया माद्यतीति इरम्मदो हस्ती, वहंलिहः, भुजङ्गमः (पतङ्गमः प्लवङ्गमः), सर्व्वंसहः, वातमजः। †

**१०२५। शर्द्धंजहोरङ्गमोरग तुरग तुरङ्गम विहग विहङ्गम (भुजग)भुजङ्ग (पतग)पतङ्ग (प्लवग) प्लवङ्गाः।** (शर्द्धंजह—प्लवङ्गाः १॥)।

---

* धे करणे। आश्रितं तृप्तिः। आश्रितस्य भवनं आश्रितम्भवं भावे खः। ख-प्रत्यये परे गुणः पूर्व्वस्य मन्। "आश्रितो भवत्यनेनाश्रितम्भवः ओदनः। आश्रितस्य भवनम् आश्रितम्भवः" इति तु सिद्धान्तकौमुदी। पाणिनिः ३।२।४५।

† तॄ तरे, भृ ञि धृतिपुष्योः, वृ न ञ ग वृतौ, दॄ य गि विदारे, जि जये, धृ ञ धृत्यां, तपौ सन्तापे, ओ यमु उपरमे, दमुच इर् शमे, मदी भि र्य जि हर्षे, लिह ल स्वादे, ओ गम ऌ गत्यां, सह भ ङ शक्तौ, अज गतौ क्षेपणे, इति चतुर्द्दशभ्यो धातुभ्यः नाम्नि वाच्ये खः स्यात्। विश्वं बिभर्त्ति। पतिं वृणोति या सा। पुरं दीर्य्यति (दारयतीति पाणिनिः) पुरन्दरः, एवं भगन्दरः ("भगे च दारेः" इति काशिका)। धनं जयति धनञ्जयः, एवं रिपुञ्जयः। वसूनि धरति (धारयतीति पाणिनिः)। शत्रुं तपति, परं तपति (तापयतीति पाणिनिः, एवं द्विषन्तपः)। वाचां यच्छति, अच मन् आपो ह्रस्वश्च। अरिं दाम्यति। इरा जलं, इरम्मद इत्यत्र मन् ह्रस्वश्च। वहं लेढि वहंलिहः, एवं अभ्रंलिहः; ग्रन्थकृता तृभृवृदॄजिधृ इति गुणप्राप्तियोग्यधातूनां मध्ये लिहधातोः सन्निवेशनं न कृत्वा वहंलिह इत्यत्र गुणो न स्यादिति सूचितं। भुजेन वक्रगमनेन गच्छति भुजङ्गमः, एवं पतङ्गमः प्लवङ्गमः। हृदयङ्गमः इति असंज्ञायामपीति वक्तव्यं। सर्व्वं सहते। वातमजतीति वातमजः वातमृगः, संज्ञानुरोधात् न वी-आदेशः (५८६)। पाणिनिः ३।२।३२,३७,३९,४०,४१,४६,४७, ६।३।६९, वार्त्तिकञ्च।

एते खान्ता निपात्यन्ते। शर्द्धं जहातीति शर्द्धंजहो माषः, उरसा गच्छतीति उरङ्गमः, उरगः, त्वरया गच्छतीति तुरगः तुरङ्गमः, विहायसा गच्छतीति विहगः विहङ्गमः, भुजेन गच्छतीति (भुजगः) भुजङ्गः, पतेन गच्छतीति (पतगः) पतङ्गः, प्लवेन गच्छतीति (प्लवगः) प्लवङ्गः। *

## १०२६। नग्नपलितप्रियान्धस्थूलसुभगाढ्यात् कृञः खनट् घे च्व्यर्थे। (नग्न-आढ्यात् ५।, कृञः ५।, खनट् ।१।, घे ७।, च्व्यर्थे ७।)

एभ्यः परात् कृञः खनट् स्यात् घे च्व्यर्थे। अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करणं द्यूतं, पलितङ्करणं, प्रियङ्करणं, अन्धङ्करणः शोकः, स्थूलङ्करणं दधि, सुभगङ्करणं रूपं, आढ्यङ्करणं वित्तं। †

## १०२७। भुवो घे खिष्णु-खुकञौ।

(भुवः ५।, घे ७।, खिष्णु-खुकञौ १।।)।

---

* शर्द्धः सशब्दः अपानवायुत्यागः। पत्यतेऽनेनेति पतः पक्षः। प्लवोऽत्र उल्लम्फनं। बहुवचनादन्येऽपि, तेन त्वरया गच्छतीति तुरङ्गः, विहायसा गच्छतीति विहङ्गः इत्यादि। अत्र भुजग-पतग-प्लवग पदानि ड-प्रत्ययेन साध्यान्यपि लिपिकर-प्रमादात् एतत्सूत्रे निवेशितानि। वार्त्तिकानि।

† नग्नश्च पलितश्च प्रियश्च अन्धश्च स्थूलश्च सुभगश्च आढ्यश्च तत्तस्मात्। खनटः खटावितौ, अन-स्थितिः। च्वेरर्थस्यार्थः (४९५) अभूततद्भावः। घे करणवाच्ये। नग्नङ्करणमित्यादि खित्त्वात (१०१४) पूर्व्वपदस्य मन्। कृधातो गुणः। एवं अपलितं पलितं क्रियतेऽनेनेति पलितङ्करणं वार्द्धक्यं। प्रियङ्करणं सेवनं। च्व्यर्थे खनट्विधानात् च्विप्रत्यये न स्यात्, तेन नग्नीकरोत्यनेन इत्यत्र खनट् न स्यादिति पाणिनीयाः। काशिकामते अनट् अपि न स्यात्, भाष्यमते तु स्यादेव। पाणिनि ३।२ ५६।

नग्नादिभ्यः परात् भुवस्त्वार्थे एतौ वे स्तः। नग्नम्भविष्णुः नग्नम्भावुकः। *

## १०२८। ढात् भज-वह-सहो विण्।

(ढात् ५।, भज-वह-सहः ५।, विण् ।१।)।

ढात् परेभ्यः एभ्यो विण् स्यात्। सुखभाक् प्रष्ठवाट् तुराषाट्।†

## १०२९। अनडुच्छ्वेतवाहादिः। (१।)।

एते विणन्ता निपात्यन्ते। अनो वहतीति अनड्वान् वृषः। श्वेतैरुह्यते इति श्वेतवाः इन्द्रः। अवयजतीति अवयाः, उक्थानि शंसतीति उक्थशाः यजमानः। पुरोडाः हविः, पुरोडाशः। ‡

## १०३०। क्रम गम खन सन जनो विट्।

(क्रम—जनः ५।, विट् ।१।)।

* "क्तिष्णौ. ख इत्, इष्णु-स्थितिः। खुकञः खञाविती, उक-स्थितिः। अत्रापि द्विप्रत्यये न स्यात्। अनग्नो नग्नो भवतीति नग्नम्भविष्णुः, भूधातो गुणः, खित्त्वात् नग्न-शब्दस्य मन्। एवं नग्नम्भावुकः ञित्त्वात् वृद्धिः। एवं पलितम्भविष्णुः पलितम्भावुकः इत्यादि। पाणिनिः ३।२।५७।

† विण् इत्यस्य इकार उच्चारणार्थः, ण इत् (५७७) वृद्ध्यर्थः। अवशिष्ट-वकारस्य (४९६) व्यो वमाच इति लोपः, सुतरां विणः सर्व्वाभावः। सुखं भजतीति सुखभाक्, विलासी, (२११) कुङ्। प्रष्ठं अग्रगं वहतीति प्रष्ठवाट् अश्वः, तुरां वेगं सहते इति तुराषाट् इन्द्रः, उभयत्र (१७५) हस्य ढ, तुराषाडिति (१११) षत्वं। पाणिनिः ३।२।६२—६४।

‡ श्वेतवाह आदि र्यस्य सः। अनड्वानिति (१८१) आन्। श्वेतवाः इति कर्त्तृः परात् वहः कर्म्मणि वाच्ये विण्। पुरः आदौ दाश्यते दीयते इति पुरोडाः, एतेषु (१८४) डसङ्, (१८५) दीर्घः। पुरोडाश इति अकारान्तोऽपि निपात्यते। पाणिनिः ३।२।७१,७२।

एभ्यो विट् स्यात् घे । *

## १०३१ । विड्वनो ङा । (विट्-वनोः ७॥, ङा ।१।) ।

धोरन्त्यस्य ङा स्यात् विटि वनि च । उदधिक्राः, अग्रेगाः, विसखाः, गोषाः, अब्जाः । †

## १०३२ । त्रासुसिस् मन् क्वनिप् वनिप् विच् क्विपः । (१॥) ।

धोरेते स्युः के भावे च । नीयतेऽनेनेति नेत्रं दंष्ट्रा नद्री योत्रं, उरुव्यचाः नृचक्षाः रजः, चक्षुः, सर्पिः, सुष्ठु ददातीति सुदामा गन्मा । ‡

---

* विटः इटावितौ, (४९६) वमान्तस्यापि लोपः, सुतरां विटः सर्व्वाभावः । पाणिनिः ३।२।६७ ।

† विट्-साहचर्य्यात् वन् इति गुणी ग्राह्यः, तेन न क्वनिपः प्रसङ्गः । ङा इत्यस्य ङ् इत् अन्त्यस्य स्थाने, अत आह धोरन्त्यस्येति । उदधिं क्रामतीति उदधिक्राः, एवं अग्रे गच्छति, विसं (मृणालं) खनति, गां सनोति (ददाति), अप्सु जायते इति वाक्यानि । सर्व्वत्र पूर्व्वेण विट्, अनेन ङा, आकारान्ताः शब्दाः । गोषा इति सन धातोः सस्य (५७०) कृतत्वात् (१११) षत्वं । उदाहरणज्ञापकात् जमन्तानामेव ङा, नान्यस्य । पाणिनिः ६।४।४१ ।

‡ त्रश्च अस् च उस् च इस् च मन् च क्वनिप् च वनिप् च विच् च क्विप् च ते । क्वनिपः क इ प इतः, वनिपः इपावितौ, उभयत्र वन्-स्थितिः । विच्-क्विपोः सर्व्वाभावः । धोरिति सामान्येनोक्तावपि प्रयोगानुसारात् शेयं । दश्यतेऽनयेति दंष्ट्रा दन्तः, (१५४) षङ् । नह्यते ऽनयेति नद्री रज्जुः. (२३७) हस्य धङ्, (५७५) तस्य ध, (६४) पूर्व्वधस्य द । उभयत्र अभिधानात् स्त्रीत्वं, नदादित्वादीप् । यूयतेऽनेनेति योत्रं । एवं युज्यतेऽनेनेति योक्त्रं, दा लवने दात्रं, पा पाने पात्रं, स्तु स्तोत्रं, मिह मेढ्रं, पत पत्त्रं, शस शस्त्रं, अस अस्त्रं, भस भस्त्रा इत्यादि । उरु महान्तं विचति उरुव्यचाः, (७५६) असवर्जनात् न ञिः । नरं चष्टे नृचक्षाः, (७०६) अस्-

१०३३ । ह्वन्ते नेम् । (ह्व्-न-तेः ६।, न ।१।, इम् ।१।) ।

क्तौ ह्वस्य नस्य तेश्च इम् न स्यात् । सशर्म्मा, सुपीवा प्रातरित्वा सुत्वा, भूरिदावा वारिजावा, सोमपाः रेट् रीट् क्रुङ्, युङ् प्रत्यङ् अन्नद्यूः मित्रशीः आशीः गीः बहुभृट् घृतस्पृक् ग्रस्यात् क्रव्यात् । *

१०३४ । छादे स्त्रमन्क्विसघे स्वः ।

(छादेः ६।, त्र-मन्-क्वि इस् घे ७।, स्वः ११) ।

छादयतेः स्वः स्यात् त्रे मनि क्वाविसि घे च । छत्त्रं, छद्म, तनुच्छत्, छदिः, उरश्छदः । †

---

वर्जनात् न क्मा-ख्यादेशः । रज्यतेऽनेनेति रजः, (६६०) न-लोपः । एवं विधतीति वेधाः । चष्टे (पश्यति) अनेन चक्षुः, (७०६) उसवर्जनात् न क्सा-ख्यादेशः । एवं धन रवे धनतीति धनुः । सर्पतीति सर्पिः । एवं हूयते यत्तत् हविः । गच्छतीति गन्मा (२०२) मस्य न । पाणिनिः ३।२।६१, ७३—७७, ८७—९६, उणादिश्च ।

* ह्व् इति वर्ग्यं वकारान्तः प्रत्याहारः । सु-शृ-मन्, अनेन इम्निषेधः, गुणः । सुपिबतीति सुपीवा, सु पा-क्वनिप् कित्त्वादगुणे, (६१२) ङी । प्रातरेति प्रातरित्वा, सुनोतीति सुत्वा, उभयत्र (९८२) तन् । भूरि ददातीत्यत्र वनिप् (१६४,११८) भूरिदावा, वारिणि जायते वारिजावा, इत्यत्र वनिप्, (१०३१) ङा । सोमं पिबतीति सोमपाः, विच्, विचः च इत् प्राचीनानुवादार्थः न त्वव्ययार्थः । (४९६) वमात्र-लोपः । रेषति रीषति रेट् रीट्, विच्, गुणः । क्रुञ्चतीति विच् क्रुङ् । युनक्तीति युङ्, युन्ज-क्विप्, (५६७) न-लोपः, युज्शब्दः, सिः, (२१०) नुम् । प्रत्यञ्चतीति क्विप् (५६८) पूजार्थस्य अञ्चः न-लोपाभावे प्रत्यङ्, गत्यर्थस्य च नलोपेऽपि, प्रत्यच्शब्दस्य (१९२) नुम् कृते प्रत्यङ् । अन्नैर्दीव्यति अन्नद्यूः, (८१४) ऊट् । मित्रं शास्ति मित्रशीः, आशास्ति आशीः, उभयत्र (७०५) उङः स्थाने इस, (२२७,२२८) रङ्, दीर्घः । (७०५) क्वौ त्वाशास्येति कथनात्, अन्यत्र प्रशास्तीति प्रशाः । गृणातीति गीः, (६२८) इर् । बहु भज्जतीति बहुभृट्, (६६१) जिः । घृतं स्पृशतीति घृतस्पृक् । ग्रस्यं अत्ति, क्रव्यं (मांसं) अत्ति, ग्रस्यात् क्रव्यात् । पाणिनिः ७।२।८,९ ।

† छद कि संवृतौ । छाद्यतेऽनेनेति छत्त्रं, (१०३३) इम्निषेधे, (६४१) जे-

## १०३५। दृदज्जुहू वाक् प्राट् श्री स्रू द्रू ज्वायतस्तू कटप्रू परिव्राट् दिद्युज्जगत् दधृक् स्रगुष्णिहः। (दृदत्—उष्णिहः १॥)।

एते क्विबन्ता निपात्यन्ते। दीर्य्यतीति दृदत्, जुहोत्यनयेति जुहूः, वक्त्यनयेति वाक्, पृच्छतीति प्राट्, श्रयत्येनां श्रीः, स्रवतीति स्रूः, द्रवतीति द्रूः, जवतीति जूः, आयतं स्तौतीति आयतस्तूः, कटं प्रवते कटप्रूः, परिव्रजतीति परिव्राट्, द्योतते इति दिद्युत्, गच्छतीति जगत्, धृष्णोतीति दधृक्, सृज्यते इति स्रक्, ऊर्द्ध्वं स्निह्यतीति उष्णिक्।*

## १०३६। जि घोऽन्त्यः। (जिः १।, घः १।, अन्त्यः १।)।

अन्त्यो जि घः स्यात्। मित्रं ह्वयतीति मित्रहूः।†

## १०३७। वेध्याप्यां क्वौ। (वे-ध्या-आप्यां ६॥, क्वौ ७।)।

ऊः धीः आपीः। ध्याप्योरतएव जिः।‡

---

लोपः, अनेन ह्रस्वः, (६४) दस्य त। छद्म इति मन्, ह्रस्वश्च। तनुं छादयतीति, तनुच्छत् क्विपि ह्रस्वः। छाद्यतेऽनेनेति छदिः, इसि ह्रस्वः। घ-प्रत्यये परं ह्रस्वविधानात् छादयतेः कर्त्तरि नाम्नि घ-प्रत्ययो वक्तव्यः, (१००७), घ इत् अकारस्थितिः। तेन उरश्छादयतीति उरश्छदः। एवं प्रच्छदः परिच्छदः दन्तच्छदः इत्यादि। पाणिनिः ६।४।९६,९७। एतन्मते "अद्व्युपसर्गस्य"। यथा समुपच्छादः।

* "जुहोतेर्ह्वयतेर्वा जुहूः। दृणातेर्दीर्य्यतेर्वा दृदत्" इति भाष्यम्। पाणिनिः ३।२।५९,१७७,१७८, वार्त्तिकपञ्चकम्, उणादिश्च।

† अन्त्य इति कृत्प्रत्ययाव्यवहितपूर्ववर्त्ती। मित्रहूरिति क्विप्, (६६१) जिः, दीर्घः। एवं हूतः हूतवान्, हूतिः, हूत्वा। ज्या—जीनः, श्वि—शूनः। अन्त्यः किं, इष्टः उप्तः पृष्टः। वार्त्तिकं, भाष्यञ्च।

‡ एषां जे घः स्यात् क्वौ। वे ञे स्यूतौ, वयतीति ऊः, क्विपि (६६१) जिः,

## १०३८। अमुङो झस्यणौ चातिकि।

(अमुङ: ६।, झसि ७।, अणौ ७।, च ।१।, अतिकि ७।)।

अमन्तस्य उङो घः स्यात् अणौ झसे क्वौ च, न तु तिकि। प्रशान्। *

## १०३९। स्विवाव मव ज्वर त्वरो वुडङा अमे च।

(स्वि-अव-मव-ज्वर-त्वर: ६।, व् ।१।, ऊट् ।१।, उङा ३।, अमे ७।, च ।१।)।

एषां व उङा सह ऊट् स्यात् क्वौ झसि अणौ अमे च। स्रूः ऊः मूः जूः तूः। †

## १०४०। रात्च्छ्वो लोपः। (रात् ५।, छ्वो: ६॥, लोप:।१।)

रात् परयो-श्छकार-वकारयो लोपः स्यात् क्वौ झस्यणौ अमे च। मुर्च्छा मूः, धुर्व्वी धूः। ‡

---

दीर्घः। पूर्व्वसूत्रेण सिद्धेऽपि नियमोऽयं, अस्य जेः क्वावेव दीर्घः, नान्यत्र, तेन उतः उत्वा इत्यादि। ध्यायत्यनया धीः, ("ध्यायतेर्दधातेर्वा धीः" इति भाष्यम्), आप्यायते इति आपीः; ध्यै प्यै एतयो र्जेरसम्भवेऽपि, जे दीर्घविधानादेव क्वौ जि र्वक्तव्यः। वार्त्तिकं भाष्यञ्च।

* अम् अमन्तो धातुः, तस्य उङ् तस्य। प्रशाम्यतीति प्रशान्, प्रशम-क्विप्, अनेन उङो दीर्घः, (२०२) मस्य न। अणौ झसे यथा, शान्तः शान्तिः शान्त्वा इत्यादि। हतः हतिः हत्वा इत्यादौ तु (६७६) अम् लोपे अमन्तत्वाभावात् न दीर्घः। अतिकीति किं, रन्तिः तन्तिः। पाणिनिः ६।४।१५।

† स्रिव्यु शोषे गतौ, स्रीव्यतीति स्रूः। अव रक्षादौ, अवतीति ऊः। मव बन्धे, मवतीति मूः। प्रथमाद्विवचनादौ, (१३५) उव, स्रुवौ. उवौ, मुवौ इत्यादि। ज्वर म रोगे, ज्वरतीति जूः, ("ज्वरतेर्जीर्य्यतेर्वा जूः" इति भाष्यम्), ञि त्वरा अङ् त्वरे, त्वरते इति तूः। अणौ झसे—स्रूतिः ऊतिः मूतिः जूर्त्तिः तूर्त्तिः। अमे च, स्रिव-मन् स्रोमा, अव-मन् ओम् इत्यादि। पाणिनिः ६।४।२०।

‡ मुर्छा मोह उच्छ्रये, धुर्वी हिंसे, उभौ ऊस्ववन्तौ। क्विपि अनेन छ-व-लोपे, मुर्, धुर् शब्दौ, ततः प्रथमैकवचने, (२२८) दीर्घः। अणौ झसे च मूर्त्तः धूर्त्तः इत्यादि।

## १०४१ । आदूटो व्रिः । (आत् ५।, ऊटः ६।, व्रिः १।) ।

अवर्णात् परस्य ऊटो व्रिः स्यात् । जनान् अवतीति जनौः ।*

## १०४२ । यम मन तन गमोऽन्तलोपः क्वौ ।

(यम-मन-तन-गमः ६।, अन्तलोपः १।, क्वौ ७।) ।

एषामन्तस्य लोपः स्यात् क्वौ । संयत् परिमत् परीतत् संगत् ।†

## १०४३ । स्वि-विष्वग्-देवस्य टेरद्र्यञ्चौ क्वौ ।

(स्वि-विष्वच्-देवस्य ६।, टेः ६।, अद्रि ।१।, अञ्चौ ७।, क्वौ ७।) ।

स्वे विष्वचो देवस्य च टेरद्रिः स्यात् क्विबन्तेऽञ्चतौ । सर्व्वानञ्चतीति सर्व्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ् । ‡

---

अत्र रेफसाहचर्य्यात् वकारो दन्त्यएव, तेन घर्ब गतौ इत्यादौ वर्ग्यबकारे न प्रसङ्गः । पाणिनिः ६।४।२१ ।

* जनौरिति, जनान् इति उपपदेन अव-धातोः समासे, ततः क्विप्, (१०३९) ऊट्, जन-ऊ, अनेन ऊ इत्यस्य वृद्धिः औ, ततः सन्धिः । यत्रादौ क्विप् ततः समासस्तत्र, जनस्य ऊः जनौरिति, एवं तत्र ऊः तवौरित्यादि । एकपदे तु अव-धातोः क्विप्, (८१४)वस्य ऊट्, अनेन वृद्धिः, औरित्यादि । पाणिनिः ६।१।८९ ।

† संयच्छति, परिमन्यते, परितनोति, सङ्गच्छते—इति वाक्यानि । सर्व्वत्र क्विपि, अन्त्याक्षरलोपे, (९८२) ह्रस्य तत् । परीतदिति दीर्घनिर्द्देशात् क्विबन्ते धातौ परे क्वचिदुपसर्गस्य दीर्घो भवतीति सूचितं, "उपसर्गस्य दीर्घत्वं क्विप्घञादौ क्वचिद्भवेत्" तेन, विरौतीति वीरुत्, उपनह्यति उपानत्, उपवर्त्तते उपावृत्, प्रवर्षति प्रावृट् (मतान्तरे) इत्यादि । पाणिनिः ६।४।४०, वार्त्तिकञ्च । परिमत्स्थाने "सुमत्" इति सिद्धान्तकौमुदी ।

‡ स्वश्च विष्वक् च देवश्चेति तस्य । विष्वगिति मूर्द्धन्यमध्यं चान्तमव्ययं । विष्वक् समन्तात् अञ्चति विष्वद्र्यङ्, देवानञ्चति देवद्र्यङ् । सर्व्वत्र टेः स्थाने अद्रि-आदेशः । एतेषु पूजार्थस्य (५६८) नलोपनिषेधे सर्व्वद्र्यञ्च् देवद्र्यञ्च् शब्दौ, गत्यर्थस्य तु (५६७) नलोपे विष्वद्र्यच् शब्दः, ततः सिः, (१९२) लुक् । पाणिनिः ६।३।९२ ।

१०४४ । अमुद्र्यङ् अमुमुयङ् अदद्र्यङ् अद-मुयङ् । (१॥) ।

अमुमञ्चतीत्यर्थे एते निपात्यन्ते । *

१०४५ । सह-सन्तिरः सध्रि-समि-तिरि ।

(सह-सम्-तिरः ।६।, सध्रि-समि-तिरि ।१।) ।

एषां क्रमादेते स्युः क्विबन्तेऽञ्चतौ । सध्र्यङ् सम्यङ् तिर्य्यङ् ।†

१०४६ । वीरुहो धङ् क्वौ ।

(वीरुहः ६।, धङ् ।१।, क्वौ ७) ।

वीरुत् । ‡

१०४७ । त्यदादि-भवत्-समानान्योपमानात् दृशष्टक्-सक्-क्विपो ढे ।

(त्यदादि—उपमानात् ५।, दृशः ५।, टक्-सक्-क्विपः १॥, ढे ७।) ।

त्यदादेर्भवतः समानादन्यस्माच्च उपमानात् दृश एते स्युः ढे । §

१०४८ । खेङ्गी । (खे: ६।, ङा ।१।) ।

---

* पाणिनिः ८।२।८० ।

† सह अञ्चति, सम् अञ्चति, तिरः अञ्चति, इति वाक्यानि । पाणिनिः ६।३।९३-९५।

‡ विपूर्व्वस्य रुहो धङ् स्यात् क्वौ । ङ इत् अन्त्यस्य स्थाने । विरोहतीति वीरुत् । वेर्दीर्घस्य वीजं (१०४२) सूत्रस्य टीकायां द्रष्टव्यं । पाणिनिमते विपूर्व्वकात् रुधधातोः क्विपि वीरुध् इति सिद्धम् ।

§ त्यद् आदि र्यस्य स त्यदादिः, त्यदादिश्च भवांश्च समानश्च अन्यश्च तत, तच्च तत् उपमानश्चेति तस्मात् । अन्य इत्येव शब्दः । उपमानभूतेभ्य एभ्यः परात् दृशः टक् सक् क्विपः स्युः कर्म्मणि वाच्ये इत्यर्थः । टकः ट-कावितौ अकारस्थितिः, सकः क इत् सस्थितिः, क्विपः सर्व्वाभावः । पाणिनिः ३।२।६०, वार्त्तिकद्वयञ्च ।

से ङा स्यात् टगाद्यन्ते दृशि। स इव दृश्यते तादृशः तादृक्षः तादृक्। भवादृशः। *

## १०४९। समानेदंकिमदः सेक्यम्।

(समान-इदम्-किम्-अदः ।६।।।, स-ई-की-अमू ।१।।।)।

एषां स्थाने स ई की अमू एते क्रमात् स्युः टगाद्यन्ते दृशि। सदृशः ईदृशः कीदृशः अमूदृशः। अन्यादृशः। †

इति त्यादि-पादः।

---

## ३य पादः—क्तादिः।

## १०५०। क्त-क्तवतू भूते ढभावे घे।

(क्त-क्तवतू १।।, भूते ७।, ढभावे ७।, घे ७।)।

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतुः स्यात्, उकावितौ। स्तुतस्त्वया विष्णुः, स्नातं मया, विष्णुर्विश्वं कृतवान्। *

---

* सेः सर्व्वादिगणस्य स्थाने इत्यर्थः। ङा इत्यस्य ङ इत् अन्त्यस्य स्थाने। तादृश-इति तद्-दृश-टक्, किम्त्वात् गुणाभावः, तद् स्थाने ङा। टित्वात् (२५७) ईपि तादृशी इति च। तादृक्ष इति सक्, (१५४) षङ्, (६०२) षस्य क, (१११) कवर्गात् षत्वं। स्त्रियान्तु तादृक्षा। क्विपि तादृश् शब्दः, (२११) कुङ्। भवानिव दृश्यतेऽसौ, टक् भवादृश, स्त्रियां भवादृशी। एवं भवादृक्षः, भवादृक् इति। पाणिनिः ६।३।९१।

† समान इव दृश्यते, अयमिव दृश्यते, क इव दृश्यते, असाविव दृश्यते, अन्यइव दृश्यते—इति क्रमेण वाक्यानि। सर्व्वत्र टक्। एवं सदृक्षः सदृक् इत्यादि। अन्यादृश-इति पूर्व्वेण ङा। पाणिनिः ६।३।८९,९०। ८।२।८०।

---

* स्तुत इति ष्टुञ् ञ स्तुतौ, कर्म्मणि क्तः (६०६) वेमत्वेऽपि, (१०५३) इमो

## १०५१। च्वे र्घो ऽढे भावदैन्याक्रोशे तु वा।

(च्वेः ६।, घंः १।, अढे ७।, भावदैन्याक्रोशे ७।, तु ।१।, वा ।१।)।

च्वे र्घः स्यात् न तु ढे, भाव-दैन्याक्रोशे तु वा, तयोः परयोः।*

## १०५२। सूल्वाद्योदिद्द्र-च्वी-यल्स्यातो न तो ऽपृ-मुर्च्छ-ख्या-ध्या-मदो दस्य च।†

(सू-लू-आदि-ओत्-इत्-द-र-च्वी-यल्-स्य-आतः ५।, न ।१।, तः ६।, अपृ—मदः ५।, दः ६।, च ।१।)।

स्वादे ल्वादे रोकारेतो दान्तात् रेफात् च्वीशब्दात् यलस्ययुक्ता-कारान्तात् परयोस्तयोस्तस्य नः स्यात्, पूर्व्वस्य च दस्य नः, न तु प्रादिभ्यः। च्वीणः च्वीणवान्। अढे किं, च्वितः कामो मया।‡

## १०५३। वृदुग्विज्ञणो: क्तितो नेम्।

(वृ-ऋत्-उ-ग्विज्-ऊर्णोः ५।, क्तितः ६।, न ।१।, इम् ।१।)।

---

निषेधे, क्त्वात् गुणाभावः। ष्यात ल शोधने, भावे क्तः, स्नातं। डुकृञ् द करणे क्तवतुः, कित्त्वात् गुणाभावे कृतवत्शब्दः, प्रथमैकवचने, (१९२) उदित्त्वात् नुण्, (१८५) दीर्घः, (१९३) स्यान्तलोपः। पाणिनिः १।१।२६, ३।२।१०२।

* भावश्च दैन्यञ्च आक्रोशश्च तत्तस्मिन्। भावो धात्वर्थः, दैन्यं दीनता, आक्रोशः क्रोधोक्तिः। च्वेरिति अविशेषात् सर्व्वगणपठित-च्विधातो र्ग्रहणं। पाणिनिः ६।४।६०,६१।

† सूश्च लूश्च सूल्वौ, तौ आदी ययोस्तौ सूल्वादी। ओत् इत् यस्य स ओदित्। यलः यलान्तः, स चासौ स्यश्चेति यलस्यः, तेन युक्त आत् यलस्यात्। ततः सूल्वादी च ओदिच्च दश्च रश्च च्वीश्च यलस्याच्चेति तस्मात्। पृश्च मुर्च्छश्च ख्याश्च ध्याश्च मद चेति, न पृमुर्च्छख्याध्यामद तस्मात्। च्वी इति कृतदीर्घस्य ग्रहणं। स्वादयः—सू दू दी डी धी मी री ली व्री। ल्वादयः पूभिन्नाः प्वादयः,४१० पृष्ठे द्रष्टव्याः। पाणिनिः८।२।४२-४६,५७। एतन्मते स्वादयः ओदितः।

‡ च्वीण इति अकर्म्मकात् वक्ष्यमाणेन (१०९३) कर्त्तरि क्ते, (१०५१) पूर्व्वेण दीर्घे, अनेन तस्य न, (१०७) णत्वं। एवं क्तवतु, च्वीणवान्। मया कामः च्वितः हिंसित-इत्यर्थः। अत्र कर्म्मत्वात् (१०५१) च्वेर्घ इति न दीर्घः, दीर्घाभावाच्च न क्तस्य नः। भाव वाच्ये तु च्वीणं च्वितमिति विकल्पेन दीर्घः।

वृञो वृङ ऋदन्ता-दुवर्णान्तात् श्रिञ ऊर्णोश्च कित इम् न स्यात्। *

सूनः सूनवान् दीनः,+लूनः जीनः, रुग्णः भुग्नः प्रक्षीणः, भिन्नः निर्व्विण्णः, प्यानः ग्लानः घ्राणः। प्रादेस्तु—पूर्त्तः मूर्त्तः ख्यातः ध्यातः मत्तः। †

वृतः शीर्णः भूतः श्रितः ऊर्णुतः। ‡

**१०५४। दिव्यञ्चश्योऽजिगीषाजास्पर्शे न तस्तयोः।**(दिवि-अञ्च-श्यः ५।, अजिगीषा-अज-अस्पर्शे ७।, न।१।, त ६।, तयोः ६॥)।

---

* वृञ्च वृङ च उश्च श्रिञ्च ऊर्णुश्च तत्तस्मात्। क इत् यस्य स कित् तस्य। वृ-ऋतोः (७४७) स्वाद्यृदुदिति वेमत्वेन, श्रिधातोः (८१०) भसृजश्चीति वेमत्वेन च, (१०७१) नेम् डीश्वोत्यादिना क्त-क्तवत्वोरिम्निषेधे, क्ति-प्रादौनाच (१०३३) डवन्तरित्यनेन इम्-निषधे सिद्धेऽपि इहोपादानं क्त्राच इम् निषेधार्थं। उवर्णान्तत्वेन प्राप्तावपि ऊर्णोः पुनर्ग्रहणं, भसृजश्चीत्यनेन विकल्पितेमः ऊर्णुधातोः नेम् डीश्वीत्यत्र अनेकाचवर्जनात् इम्प्रसक्तौ, पुनर्निषेधार्थं। अतएवात्र उवर्णान्त एकाच एव बोध्यः। पाणिनिः ७।२।११, वार्त्तिकञ्च।

† स्वादिमाह सून इत्यादि—सु ग्री ङ सूतौ कर्म्मणि क्तः, अनेन इम्-निषेधे, पूर्व्वेण नत्व न। एवं क्तवतुः सूनवान्। ओ दी ङ य क्षये, दीनः स्वादित्वात् तस्याने न। ल्वादिमाह—लू ञ गि छिदि लून, ज्या गि जरायां जीनः, (६६१) जिः, (१०३६) दीर्घः। ओदितमाह—रुजो शौ भङ्गे रुग्णः (१०७) णत्वं। भुजो शौ वक्रणे भुग्नः, अन्तरङ्गत्वादादौ (२११) चुडिति कुङ्, पश्चात् तस्याने न। ओ हा क वि त्यागे प्रहीणः, (६१२) ईः, (६६८) णत्वं। दान्तमाह—इर् भिदा छेदे भिन्नः, (१०७२) इम्-निषेधः। विदो ङ भावे निर्व्विण्णः, अध्ययने जड इत्यर्थः, अत्र णत्वं वक्तव्यं। रान्तस्य उदाहरणं न दत्तं, गुर—गूर्णः, चुर—चूर्णः इत्यादि ऊह्यं। यल्युक्तादन्तमाह—प्यै —प्यानः (६०८) ऐ स्थाने आ, ग्लै—ग्लानः, घ्रा—घ्राणः। पृ—पूर्त्तः, (६२८) उर्, (२२८) दीर्घः। मुर्छ—मूर्त्तः, (१०७२) इम् निषेधः, (१०४०) छ-लोपः, (२२८) दीर्घः। ख्या—ख्यातः, ध्यै—ध्यातः। मद—मत्तः।

‡ वृ क्त वृतः, (५५४) इम्प्राप्तौ अनेन निषिद्धः। शॄ—शीर्णः, इत्यादि।

दिवेरजिगीषायां अञ्चतेरजे श्यायतेरस्पर्शे तयोस्तस्य नः स्यात्। आद्यूनः समक्नः । *

## १०५५ । घनस्पर्शे श्यो जिः ।

(घन-स्पर्शे ७।, श्यः ६।, जिः १।) ।

घने स्पर्शे चार्थे श्यो जिः स्यात् तयोः । शीनं घृतं । जिगीषादौ तु, द्यूतं, उदक्तमुदकं कूपात्, शीतं जलं । घनस्पर्शे किं, संश्यानो वृश्चिकः शीतात् सङ्कुचित इत्यर्थः । †

## १०५६ । प्रतेः । (प्रतेः ५।) ।

प्रतिपूर्व्वस्य श्यो जिः स्यात्तयोः । प्रतिशीनः । ‡

## १०५७ । अभ्यवाद्वा । (अभि-अवात् ५।, वा ।१।) ।

अभ्यवात् परस्य श्यो जिः स्याद्वा तयोः । अभिशीनः अभिश्यानः, अवशीनः अवश्यानः । §

---

* दिविश्च अञ्चश्च श्याश्च तत्तस्मात् । न जिगीषा अजिगीषा । जं अपादानं, न जं अजं । न स्पर्शो ऽस्पर्शः । अजिगीषा च अजश्च अस्पर्शश्च तत्तस्मिन् । आ-दिव-क्त, (८१४) वस्थाने ऊट्, अनेन तस्थाने न । आद्यूनः स्या-दौदरिक इत्यमरः । सम्-अन्च-क्त, (५६७) नलोपः, (२११) कुङ्, तस्थाने न, समक्नः सङ्गत इत्यर्थः । "समक्नौ शकुनेः पादौ" इति पाणिनिटीका । उभयत्र (१०७१) इम्-निषेधः । पाणिनिः ८।२।४७—४९ ।

† घने द्रवद्रव्यस्य घनीभावे इत्यर्थः । शीनमिति श्यै ङ गतौ, क्तः, घनेऽर्थे अनेन जिः, (१०३९) दीर्घः, पूर्व्वेण तस्थाने न । पूर्व्वस्य प्रत्युदाहरणमाह—द्यूतं, दिव-भावे क्तः, जिगीषार्थे न त-स्थाने न । उदक्तं उद्गतमित्यर्थः, कूपादिति अपादानप्रयोगात् न त-स्थाने न । शीतमिति श्यै-क्तः, स्पर्शार्थे अनेन जिः, पूर्व्वेण न त-स्थाने न । संश्यान इति घनस्पर्शाभावे न जिः, पूर्व्वेण अस्पर्शार्थे त स्थाने न । पाणिनिः ६।१।२४ ।

‡ पृथक्योगात् घनस्पर्शयोर्नानुवृत्तिः । पाणिनिः ६।१।२५ ।

§ "व्यवस्थितविभाषेयं, तेनेह न समवश्यानः" इति सिद्धान्तकौमुदी । पाणिनिः ६।१।२६ ।

## १०५८। षिञो ढघे न तो ग्रासे।

(षिञः ५।, ढघे ७।, न ।१।, तः ६।, ग्रासे ७।)।

षिञः परस्य तयोस्तस्य नः स्यात् ढघे, ग्रासे वाच्ये। सिनो ग्रासः स्वयमेव। *

## १०५९। पूञो नाशे। (पूञः ५।, नाशे ७।)।

पूनो नष्टः, अन्यत्र पूतः। †

## १०६०। दुग्वो र्घश्च। (दुग्वोः ६॥, र्घः १।, च ।१।)।

आभ्यां तयोस्तस्य नः स्यात् तयो र्घश्च। दूनः गूनः। ‡

## १०६१। व्रश्चेः कङ् च। (व्रश्चेः ६।, कङ् ।१।, च ।१।)।

व्रश्चेस्तयो स्तस्य नः स्यात्, कङ् च। वृक्णः। §

---

* षिञ इति षोपदेश-निर्देशः। (५६९) षस्य स। षिञ् बन्धे. कर्म्मकर्त्तरि क्तः, देवदत्तेन सीयमानो ग्रासः स्वयमेव सिनः बद्ध इत्यर्थः, ग्रासः कवलः। ढघे किं. सितो ग्रासो देवदत्तेन। ग्रासे किं सितश्चौरः स्वयमेव। वा-द्वयमध्यवर्त्तित्वा-देतदादीनां चतुर्णां नित्यता। "सिनोतेर्ग्रासकर्म्मकर्त्तृकस्य" इति वार्त्तिकम्।

† धातूनामनेकार्थत्वात्, नाशार्थ-पूञ-धातो-स्तयोस्तस्य नः स्यात्। "पूञो विनाशे" इति वार्त्तिकम्।

‡ दु गतौ (दु टु उपतापे इत्यस्य तु न, तत्र दुत इति पदं), गु ङ ध्वनौ, गु श तु विट्सर्गे, इत्येतेषां ग्रहणं। दू गू इति दीर्घान्ताभ्यां क्तप्रत्ययेन पदनिष्ठावपि एतत्-सूत्रकरणं ह्रस्वान्तयोर्दुग्वोः प्रयोगनिषेधार्थं। "दुग्वोर्दीर्घश्च" इति वार्त्तिकम्।

§ (१५४) ग्रहृज्जेति षङ्प्राप्तिवारणार्थमिह कङ्विधानं। ङ इत् अन्त्यस्य स्थाने। वृक्ण इति, व्रश्चू श छेदे, क्त, (१०७१) नेम् डीश्वीति इमो निषेधे. (६६१) जिः, अनेन क्तस्थाने न, चस्य क, निमित्तस्यापाये नैमित्तिकस्याप्यपाय इति न्यायेन तालव्यशस्य दन्त्यत्वे, (२१३) स्यादिः सो लोपः, (१०७) णत्वं। पाणिनि. ८।२।२६, वार्त्तिकञ्च।

## १०६२ । ह्रीघ्राचोन्दनुदविन्दो वा ।

(ह्री—विन्दः ५। वा ।१।) ।

एभ्यस्तयो स्तस्य नः स्याद्वा । ह्रीणः ह्रीतः, घ्राणः घ्रातः, त्राणः त्रातः, उन्नः उत्तः, नुन्नः नुत्तः, विन्नः वित्तः । *

## १०६३ । च्यैशुषपचो मकवः ।

(चै-शुष-पच: ५।, म-क-वः ।१।) ।

एभ्यस्तयो स्तस्य म क व एते क्रमात् स्युः । चामः शुष्कः पक्वः । †

## १०६४ । प्रस्त्यो म वा, जिश्च ।

(प्र—स्त्य: ५।, म ।१।, वा ।१।, जि: ।१।, च ।१।) ।

प्रस्त्यस्तयो स्तस्य मः स्याद्वा, जिश्च । प्रस्तीमः प्रस्तीतः । प्रात् किं, संस्त्यानः । ‡

* ह्रीश्च घ्राश्च त्राश्च उन्दश्च नुदश्च विन्द च तस्मात । ह्री ञि लज्जे क्तः, वा तस्थाने नः । एव घ्रा गन्धग्रहणे त्रै ङ् पालने, क्तः । उन्द धी क्लेदे क्तः, (१०७१) नेम डीश्वीति ईदित्त्वात 'इम निषेधे, (५६७) नलोपः । नुदी ञ श प्रेरणे । धी विद ङ मीमांसे । अत्र सूत्रे विन्द इत्यनेन चौधादिको विदधातुर्बोध्यते,—प्रमाणानि यथा —(१) पाणिनिः (८।२।५६) "नुद दीन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्"—विद विचारणे चौधादिक एव गृह्यते, इति भट्टोजिदीक्षितः । (२) भाष्य "वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः ॥" (३) कातन्त्रम् "ह्रीघ्राचोन्दनुदविन्दां वा ।" कृत्सु ५३८ सूत्रम । (४) सुपद्मम् "नुदोन्दविन्दित्राघ्राह्रीभ्यां वा ।" 'विद विचारणे' । (५) संक्षिप्तसारः "उन्दीह्रीघ्रात्राविनत्तिनुदां वा ।" कृदन्तपादे ५०० सूत्रम् । 'विनत्तीति निर्देशात् विद सत्तायामित्यस्य नित्यं विन्नमिति' गोयीचन्द्रः ।

† चै चर्वे चामः, शुष्यौ ल्ट शोषे शुष्क, उभयत्र अकर्मकत्वात (१०९३) कर्त्तरि क्त । डु ओ ष पच पाके अन्तरङ्गत्वादादौ (२११) कुङ्, ततः क्तस्य वः । पाणिनिः ८।२।५१—५३ ।

‡ अत्र वा-शब्दस्य मकारेणैव सम्बन्धात जिर्नित्यः । स्त्यै संहतौ ध्वनौ, प्रस्तीमः प्रस्तीतः, (१०३६) अन्त्य-जे दीर्घः । सस्त्यान इति (१०५२) क्तस्य नः । एवं स्त्यानः । पाणिनिः ८।२।५४, ६।१।२३ ।

**१०६५। निर्व्वाण भित्तर्ण वित्त फुल्लोत्फुल्ल संफुल्ल प्रफुल्ल क्षीव कृश परिकृशोल्लाघाः।** (१॥)।

एते क्तान्ता निपात्यन्ते। निर्व्वाणः शान्तः निर्व्वाणं मुक्तिः, भित्तं खण्डं, ऋणं विशोध्यं, वित्तं धनं वित्तः प्रतीतः, फुल्लो विकसितः उत्फुल्लः संफुल्लः प्रफुल्लश्च, क्षीवो मत्तः, कृशस्तनुः परिकृशश्च, उल्लाघो नीरुजः। *

**१०६६। क्षुध वस पूजार्थाञ्चागाध्यार्थ-लुभः क्त्वश्चेम्।** (क्षुध—लुभः ५।, क्तः ६।, च ।१।, इम् ।१।)।

एभ्यः परयोः क्तयोः क्त्वश्च इम् स्यात्। क्षुधितः उषितः अञ्चितः लुभितः। गतौ तु अक्तः। गाध्यार्थे तु लुब्धः। †

* निपातो ह्यर्थविशेषे इत्याह निर्व्वाणः शान्त इत्यादि। वा ल गमनहिंसयोः निर्व्वाणः, अन्यत्र निर्व्वातः। भिदिर् धौ ञ भिदि भित्तं, अन्यत्र भिन्नं। ऋ गतौ ऋणं, अन्यत्र ऋतं सत्यं। विद लृ श प ञौ लाभे वित्तं, अन्यत्र विन्नं, विद ल मतौ वित्तः, अन्यत्र विदितः। फुल्ल विकसने फुल्लादि-चतुष्टयं, केवलस्य उत्संप्रपूर्व्वस्य च निपातनात् अन्यत्र सफुल्लित इत्यादि। पाणिनौ अनुपसर्गात् ञि फला विसरणे इति फलधातोः क्तान्तो निपातः, प्रफुल्ल इति रूपं तु फुल्ल विकसने इत्यस्य पचाद्यचि बोध्यम्। क्षीव ङ दर्पे क्षीवः, सोपसर्गात्तु प्रक्षीवितः। कृश य कार्श्ये कृशः, एवं परिकृशः, अन्यत्र परिकृशितः। लाघृ ङ शक्तौ उल्लाघः, अन्यत्र प्रलाघितः। पाणिनिः ८।२।५०, ५५,५८—६०, वार्त्तिकञ्च। "परिकृश इति प्रादिसमासः" इति क्रमदीश्वरः।

† पूजार्थश्चासौ अञ्च चेति पूजार्थाञ्च। गाध्यं (लिप्सा) अर्थो यस्य स गाध्यार्थः, न गाध्यार्थः अगाध्यार्थः, स चासौ लुभ चेति अगाध्यार्थ-लुभ। ततः क्षुधश्चेत्यादि द्वन्द्वसमासात्। क्तः क्त्वाच् इत्यर्थः। क्षुध-वसो-रौदित्वात्, अञ्चः उदित्त्वेन (११७२) क्त्वाचो वेमत्वे लुभश्च (६०६) वेमत्वे (१०७१) नेम् क्तौ क्तीति निषेधात्, इमोऽप्राप्तौ विधिरयं। उषित इति (६६१) षिः। अञ्चित इति पूजार्थत्वात् (५६८) न नलोपः। लुभित-इति लुभ विमोहने। अक्त इति (५६७) न-लोपः, (२११) कुङ्। लुब्ध इति लुभ्य इगार्ध्ये, (५७५) त-स्थाने ध, (६४) भ-स्थाने ब। क्त्वाचस्तु क्षुधित्वा उषित्वा अञ्चित्वा, लुभित्वा लोभित्वा (८१८) वा कित्त्वं। पाणिनिः ७।२।५२—५४।

## १०६७। पू क्लिश वम जप व्याश्वस स्तयोर्वा ।

(पू—व्याश्वस: ५।, तयो: ६॥, वा ।१।)।

एभ्यस्तयोरिम् स्याद्वा । *

## १०६८। पू शी धृष मिद क्ष्विद ख्विद क्षमार्थमृषां सेमौ णुः ।

(पू—मृषां ६॥, सेमौ: ७॥, णु: १।)।

एषां णुः स्यात् तयोः सेमोः। पवितः पूतः, क्लिशितः क्लिष्टः, वमितः वान्तः, जपितः जप्तः, विश्वसितः विश्वस्तः, आश्वसितः आश्वस्तः। शयितं धर्षितं मेदितं क्ष्वेदितं खेदितं मर्षितं। क्षमार्थः किं, अपमृषितं वाक्यं। †

## १०६९। भावादिढे वोदुङः ऽपवतः ।

(भाव-आदिढे ७।, वा ।१।, उत्-उङ: ६।, अप्-वत: ६।)।

विहिताप उदुङो भावादिढयोः णुर्वा स्यात् तयोः सेमोः। द्योतितं द्युतितं तेन। अनपस्तु क्षुधितं। ‡

---

* विश्व आश्व ताभ्यां श्वस व्याश्वस, पूश्च क्लिशश्च वमश्च जपश्च व्याश्वस च तस्मात्। पू-धातोरुवर्णान्तत्वात् (१०५३) निषेधे, क्लिश्धातोरुदित्त्वादिमत्वेन (१०७१) नेमुङीङीति निषेधे, वमादीनां (५५४) नित्यप्राप्तौ विभाषेयं। पाणिनिः ७।२।५०,५१। वमजपव्याश्वसामिम्विकल्पः चन्द्रवर्द्धमानमतानुसारेण; "पाणिनीयास्तु 'पूङश्च' इति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वेन साधयन्ति" इति गोयीचन्द्रः।

† क्षमार्थश्चासौ मृष चेति क्षमार्थ-मृष, ततः पूश्च शीश्च धृषश्च मिदश्च क्ष्विदश्च ख्विदश्च क्षमार्थ-मृष च तेषां। इमा सह वर्त्तेते यौ तौ सेमौ तयोः। पवित इत्यादि, पूर्व्वेण इम्, अनेन गुणः। क्लिष्ट इति (१५४) षङ्। वान्त इति (१०३८) दीर्घः। शयितमित्यादीनि अस्मोदाहरणानि। धृष ञि प्रागल्भ्ये, ञी-मिदा स्नेहे, क्ष्विद ञि मोचे, ख्विदा ञि खेदने, एषां चतुर्णां (१०७२) इम्प्राप्ते, गुणः। मर्षितं (५५४) इम्। अपमर्षितं निन्दितमित्यर्थः। पाणिनिः १।२।१९,२०,२२।

‡ आदिढ क्रियारम्भः। भावश्च आदिढश्च तस्मिन्। उत् उङ् यस्य स तस्य। अप् विद्यतेऽस्य अप्वान् तस्य इति उदुङो विशेषणं। अतो विहिताप इति, विहितः

**१०७०। लोपो ञेः।** (लोपः १।, ञेः ६।)।

ञे र्लोपः स्यात् तयोः सेमोः। भावितः भावितवान्। *

**१०७१। नेम् डीश्वीदिद्वेमो ऽपत्यनेकाज्-निष्कुषः।** (न।१।,इम।१।,डी-श्वि-ईदित्-वेमः ५।, अ-पति-अनेकाच् निष्कुषः ५।)।

डीनः शूनः दीप्तः गूढ़ः ध्वतः ततः। पत्यादेस्तु पतितः दरिद्रितः निष्कुषितः। †

**१०७२। आदितः।** (आदितः ५।)।

---

क्तः अप् यस्मात स तस्य, भ्वादेरदादेश्चेत्यर्थः। अदादेः शपोऽस्थायित्वेऽपि (६७०) तद्विधानमेतदर्थं। द्युत ङ वलृ दीप्तौ भावे क्तः, (५५४) इम्, अनेन वा गुणः। अदादेश्च रोदितं रुदितमिति। आदिढे तु, (१०९२) घेचादिढे क्त इति कर्त्तरि क्ते, द्योतितः द्युतित इत्यादि। भ्वाद्यदादिभ्या-मन्यस्य तु क्षुध यो क्षुधि क्षुधितमित्यादि। सेमोः किं, दुग्धं गुप्तं। पाणिनिः १।२।२१, भाष्यञ्च।

* (६४१) इमि ञिलोपनिषेधादिह विधानं। भावित इति भू-ञि, भावि-क्त, (५५४) इम्, ञिलोपः। पाणिनिः ६।४।५२।

† ईत् इत यस्य स ईदित्। वा इम् येभ्यस्ते वेमः, येन केनापि विकल्पितेम इत्यर्थः। डीश्च श्विश्च ईदिच्च वेमश्चेति तस्मात्। पतिश्च अनेकाच्च निष्कुष च ते, न विद्यन्ते ते यत्र सोऽपत्यनेकाज्निष्कुष तस्मात। डीन इति ओ डी ङ य नभोगतौ, अनेन इम्निषेधे, ओदित्वात् (१०५२) क्त स्थाने न। शून इति टु ओ श्वि इर् गतिवृद्ध्योः, क्तः, (६६१) ञिः, (१०३६) ञे दीर्घः, पूर्ववत् त-स्थाने न। दीपी ञ ङ दीपने, दीप्तः, (१०७१) ईदित्वादिम्निषेधः, एवं चिती संज्ञाने चित्तमित्यादि। गुहू ञ संवृतौ, गूढ़ः, ध्व ल ध्वनौ, ध्वतः, उभयत्र (५७३) वेमत्वात् (१०७१) इम्निषेधः, गूढ़ इत्यत्र च (१७५) हस्थाने ढ, (५७५) त-स्थाने ध, (४७) धस्य ढः, (७७) ढलोपः पूर्वस्य दीर्घश्च। तन दु ञ विस्तृतौ, (११७२) पूक्लिशमदित इति (८१०) भसज इति च वेमत्वात् (१०७१) इम्निषेधः, (६७६) अम्लोपः। एवं सह—सोढः (६०६) वेमत्वात्। नृत—नृत्तः, (७३९) वेमत्वात्। पतितः दरिद्रितः उभयत्र (८१०) भसञ्जीति, निष्कुषितः इति (५७३) वेमूदिदिति वेमत्वेऽपि, अत्र वर्जनादिम्। पाणिनिः ७।२।१४,१५,४७, भाष्यञ्च। सुपद्मे 'डी'धातुर्दृश्यते।

आकारेतस्तयो रिम् न स्यात्। मिन्नः, मिन्नवान्। *

**१०७३। भावादिढे वा।** (भाव-आदिढे ७।, वा ।१।)।

मिन्नं मेदितं तेन। प्रमिन्नः प्रमेदितः सः। †

**१०७४। शकेः ढे।** (शकेः ५।, ढे ७।)।

शकितोऽर्च्चितुं शिवस्तेन, शक्तः। ‡

**१०७५। क्षुब्ध वाढ़ स्वान्त ध्वान्त फाण्ट कष्ट घुष्ट लग्न क्लिष्ट विरिब्ध धृष्ट विशस्त परिवृढ़ दृढ़ भृत हृत्ताभ्यर्णाः।** (१॥)।

एते क्तान्ता निपात्यन्ते। क्षुब्धो मन्थः, वाढं भृशं, स्वान्तं मनः, ध्वान्तं तमः, फाण्टं कषायभेदः, कष्टं कृच्छ्रं, घुष्टं शब्दितं, लग्नं सक्तं, क्लिष्टं अस्पष्टं, विरिब्धः स्वरः, धृष्टः प्रगल्भः, विशस्तश्च, परिवृढ़ः प्रभुः, दृढो बली, भृतं पक्वं, हृत्तो गुणस्त्यागेन, अभ्यर्णं समीपं। §

---

* आत् इत् यस्य स तस्मात्। इर् मिदा स्नेहे, कर्त्तरि क्तः, (१०५२) क्त स्थाने न, पूर्व्वस्य दस्य च न, मिन्नः, एवं क्तवतुः मिन्नवान्। पाणिनिः ७।२।१६।

† आदिभूतं ढं, क्रियारम्भ इति यावत्। भावश्च आदिढश्च तत्तस्मिन्। आकारेतो धो भावे आदिकर्म्मणि च विहितस्य क्तस्य इम् न स्याद्वा। भावादिढयोः क्तवतोरसम्भवात् केवलं क्तस्यैवेत्यर्थः। मिन्नमिति भावे क्तः, पक्षे इम्, (१०६८) पुष्वीति गुणः मेदितं।. एवं प्रमिन्नः इति (१०९२) क्रियारम्भे कर्त्तरि क्तः, प्रशब्देन आरम्भो द्योत्यते। स्नेहं कर्त्तुमारब्धवानित्यर्थः। पाणिनिः ७।२।१७।

‡ शक धातोः कर्म्मणि विहितस्य क्तस्य इम न स्याद्वा। ढे इति किं, तेन शक्तं, स शक्तः, अत्र ऊदित्त्वाद्विमत्वे, (१०७१) नेम ञीश्वीति इमनिषेधः। "शक्लृ सकर्म्मकः" इति क्रमदीश्वरः।

§ क्षुभ ङ ल सञ्चलने, क्तः क्षुब्धः, मन्थो मन्थनदण्डः, अन्यत्र क्षुभितः। वाढ ङ

## १०७६। नेम् संनिव्यर्द्दः।

(न ।१।, इम् ।१।, सं नि-वि-अर्द्दः ५।)।

संनिविपूर्व्वा-दर्द्दतेस्तयोरिम् न स्यात्। समर्णः न्यर्णः व्यर्णः।*

## १०७७। वा रुषाम त्वर त्वर संघुषास्वनः।

(वा ।१।, रुष-अम-त्वर-त्वर-संघुष-आस्वन: ५।)।

एभ्यस्तयोरिम् न स्याद्वा। रुष्टः रुषितः, आन्तः अमितः, तूर्णः त्वरितः, तूर्णः त्वरितः, संघुष्टं संघुषितं, आस्वान्तं आस्वनितं। †

---

यत्ने, वाढं भृशं, अन्यत्र वाहितं। स्वन ण शब्दे स्वान्तं मनः, अन्यत्र स्वनितं। ध्वन मि ण रवे ध्वान्तं, अन्यत्र ध्वनितं। फण ण निस्नेहे, ञिः, ततः क्तः फाण्टं कषायविशेषः, (फाण्टमनायासभाव्यमिति पाणिनिः), अन्यत्र फाणितं। कष वधे कष्टं कृच्छ्रं, (कृच्छ्रगहनयोः कष इति पाणिनिः), अन्यत्र कषित। घुष कि विशब्दे घुष्टं शब्दितं, (घुषिरविशब्दने इति तु पाणिनिः, घुषिः प्रतिज्ञायामिति तु क्रमदीश्वरः), अन्यत्र घुषितं। लग म सङ्गे लग्नं सक्तं, अन्यत्र लगितं। म्लेच्छ कि देश्योक्तौ म्लिष्टं अस्पष्टं, अन्यत्र म्लेच्छितं। रेभृ ङ शब्दे विरिब्धः स्वरः, अन्यत्र विरेभितं। ञि धृषा न प्रागल्भ्ये धृष्टः प्रगल्भः, अन्यत्र धर्षितं। (१०७२) आदित इति इम्निषेधे पदसिद्धावपि, (१०७३) भावादिष्ठे वेति पाक्षिकस्य इमो निषेधार्थं निपातनं। शस उ वधे विशस्तः प्रगल्भः, अन्यत्र विशसितः। अत्र (१०७१) नेम् डीश्वीति इम्निषेधेऽपि, प्रगल्भादन्यत्र इम्प्राप्त्यर्थं निपातनं। वृहि दृहि च वृद्धौ, परिवृढः प्रभुः, दृढो बली, (दृढः स्थूलबलयोरिति पाणिनिः), अन्यत्र परिवृंहितं दृंहितं। श्रा ल् भ पाके केवलस्य ण्यन्तस्य च शृतं पक्वं, एतच्च क्षीरे हविषि च वाच्ये निपातितं, अन्यत्र श्राणः श्रपितः। वृत ङ व लृ वर्त्तने वृत्तः अधीतः गुणो ग्रन्थविशेषः, (णिजन्तवृतधातुरेवोक्तः पाणिनिना, णिलुक् च), अन्यत्र वर्त्तितः। अर्द्द पीड़ायां, समीपादन्यत्र अभ्यर्द्दितः। पाणिनिः ७।२।१८—२१,२५,२६,२७।

* समर्णः इत्यादि, अर्द्द पीड़ायां, अनेन इम्निषेधः, (१०५२) तस्य दस्य च न, एवं समर्णवानित्यादि। एभ्य. कि, अर्द्दितः प्रार्द्दित इत्यादि। पाणिनिः ७।२।२४।

† रुषस्य अमस्य त्वरस्य त्वरस्य संघुषस्य आस्वन् च तस्मात्। रुष्ट इत्यादि, रुषोर्ञि क्रुधि, अम मतौ भजने शब्दे अमक् रोगे, त्रिष्णु इर् तुष्टौ, ञि त्वरा अङ् त्वदे, घुष

**१०७८। दान्त शान्त पूर्ण दस्त स्पष्ट च्छन्न ज्ञप्ता वा।** (दान्त-ज्ञप्ताः १॥, वा ।१।) ।

एते अन्ताः क्तान्ता निपात्यन्ते वा। पक्षे दमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञपितः । *

**१०७९। स्फायः स्फी वा।** (स्फायः ६।, स्फी ।१।, वा।१।) ।

स्फीतः स्फीतवान्, स्फातः स्फातवान् । †

**१०८०। प्यायोऽगेः प्यस्वाङ्गे तु वा।**

(प्यायः ६।, अगेः ६।, पी ।१।, अस्वाङ्गे ७।, तु ।१।, वा ।१।)।

अगेः प्यायः पी स्यात्, स्वाङ्गादन्यत्र तु वा तयोः। पीनं मुखं, प्यानः पीनः स्वेदः। ‡

---

क्लि इर् कृतौ, स्वन ण शब्दे, एभ्यः क्त-क्तवतुप्रत्यययोः वा इमनिषेधः। क्लान्त इति, "स्वान्तं इति च (१०३८) अमुङ इति दीर्घः। तूर्ण इति (१०३९) स्त्रिवंति ऊट्, (१०५२) क्तस्ये न. णत्वञ्च। अत्र रुष धातोः (६०६) वेमसहेति, हृष धातोः (११७२) पूङ्क्लिशेति वेमत्वे, (१०७१) नेम् ङीश्वीति निषेधादप्राप्तौ, अन्येषाञ्च (५५४) वसोऽरस्येति नित्यप्राप्तौ विभाषा। पाणिनिः ७।२।२८,२९। "हृष्टं हृषितं लोम" इति पाणिनिः, "विस्मितप्रतिघातयोश्च" इति वार्त्तिकम्। हृष तुष्टौ इट्। इति सिद्धान्तकौमुदी।

* दमु-शमु भिर्यं शमे, प्रेरणार्थे, (७७७) ञौ, कर्म्मणि क्ते (१०३८) दान्तः शान्तः इति, पक्षे (७९८) ह्रस्वे, (५५४) इमि, (१०७०) ञेर्लोपे दमितः शमितः इति च। एवं पूरी ञ पूर्त्तौ—पूर्णः, पक्षे (५५४) इम्, (१०७०) ञेर्लोपे, पूरितः। दसु इर् उत्क्षेपणे दस्तः, पक्षे दासितः। स्पश ञ ग्रन्थ-बाधयोः, स्पष्टः, पक्षे स्पाशितः। छद कि संवृतौ, स्वार्थञौ छन्नः, पक्षे छादितः। ज्ञप ञ्म तु ज्ञप्तौ—ज्ञप्तः, पक्षे ज्ञापितः। पाणिनिः ७।२।२७।

† स्फायतेः स्फी वा स्यात् तयोः। स्फायी ङ वृद्धौ, ईदित्वात (१०७१) इम्-निषेधे, स्फी-आदेशः, पक्षे (६४२) य-लोपः। पाणिनिः ६।१।२२, भाष्यञ्च।

‡ पीनमिति, ओ प्यायी ङ वृद्धौ, क्तः, (१०७१) ईदित्वादिमनिषेधे, ओदित्वात (१०५२) तस्य न। अगेः किं, प्रप्यानं मुखं, (६४२) यलोपः। अस्वाङ्गे तु प्यानः पीनः स्वेदः, स्वेदस्य स्वाङ्गभिन्नत्वं (२६५) सूत्रे द्रष्टव्यं। पाणिनिः ६।१।२८, भाष्यञ्च।

**१०८१। आङोऽम्बूधसोः।** (आङः ५।, अम्बु ऊधसोः ७॥)।

आङः परस्य प्यायः पी स्यात् तयोः,अम्बूधसोः। आपीनोऽम्बुः, आपीनमूधः। *

**१०८२। ह्लादः स्वः क्तौ च।**

(ह्लादः ६।, स्वः १।, क्तौ ७।, च।१।)।

ह्लादेः स्वः स्यात् तयोः क्तौ च। प्रह्लन्नः। †

**१०८३। दो-षो-मा-स्थां ङिस्त्यणौ।**

(दो – स्थां ६॥, ङिः १।, ति ७।, अणौ ७।)।

एषां ङिः स्यादणौ तकारे। दितः सितः मितः स्थितः। ‡

**१०८४। छाशो वा।** (छा-शोः ६॥, वा।१।)।

छितः छातः, शितः शातः। §

**१०८५। शो व्रते नित्यं।** (शः ६।, व्रते ७।, नित्यं १।)।

संशितं व्रतं। ¶

---

* अम्बुः कूपः, ऊधः गवादेः स्तनः, एतयोरर्थयोरित्यर्थः। (६।१।२८) सूत्रे वार्त्तिकम।

† प्रह्लन्न इति, ह्लादी ङ मोदने, कर्त्तरि क्तः, (१०७१) इमनिषेधे, अनेन ह्रस्वे दान्तत्वात (१०५२) तस्य दस्य च न। क्तौ प्रह्लत्तिरिति। पाणिनि: ६।४।९५।

‡ दो य छेदे, षो य नाशे (षोपदेशनिर्द्देशः), मा इति मा स्वरूपं, तेन मे ङ प्रतिदाने, मा ङ लि शब्दे, मा ल च माने, मा ङ य च माने इत्येतेषां ग्रहणं। ञि ष्ठा गतिनिवृत्तौ। एवं दितवान् दितिः दित्वा। अणौ किं, दाता दातुं दात्र-मित्यादि। पाणिनि: ७।४।४०।

§ छा शो ङिः स्याद्वा अणौ तकारे। छो य लूनौ, शो य निशाने, (९०८) ओस्याने आ, ततः ङिः। अणौ किं छायं। पाणिनि: ७।४।४१।

¶ शो य निशाने इत्यस्य नित्यं ङिः स्यात् अणौ तकारे। व्रते वाच्ये क्तस्यैव प्रयोगः। "श्यतेरित्वं व्रते नित्यम्" इति वार्त्तिकम्।

## १०८६। धाञो हिः। (धाञः ६।, हिः १।)।

धाञो हिः स्यादग्णौ ते परे। हितः। *

## १०८७। चरफलोऽदुः। (चर-फल: ६।, अत् ।१।, उ:१।)।

अनयोरकार उः स्यादग्णौ ते। प्रफुल्तः। †

## १०८८। दद् दोऽधः। (दत् ।१।, दः ६।, अधः ६।)।

दासंज्ञकस्य धावर्जस्य दत् स्यात् अग्णौ ते। दत्तः। अधः किं, धीतः। ‡

## १०८९। ण्यचस्त वा। (णि-अचः ५।, त ।१।, वा ।१।)।

णेरचः परस्याधो दासंज्ञकस्य वा तः स्यादग्णौ ते। प्रत्तः प्रदत्तः। §

---

* हिधातुना सिद्धेऽपि धाञो निवारणार्थः। एवं हितवान्, हितिः, हित्वा, हिनिर्म। धाञः किं, धेट-धीतः। पाणिनिः ७।४।४२।

† चर गमने इत्यस्मात् क्त क्तवत्वोः क्त्वाचश्च,' (५५४) वसोऽरस्येतीमि अव्यवहित-तकाराभावादुकाराभावे चरितः चरितवान् चरित्वा इति भविता। क्तौ तु (१०३३) इववतेरितीमनिषेधे अनेन अकारस्य उकारे, (२२८) दीर्घे चूर्तिरिति। ञि फला भिदि, (१०७२) इमनिषेधे, 'अनेन अकारस्य उकारे प्रफुल्तः। एवं फुल्तवान्, फुल्तिः। पाणिनिः ७।४।८८।

‡ दा ख लूनौ, दा तु दाने, डु दा ञ लि च, दे ङ पालने इति चतुर्णां दत्तः, एवं दत्तवान् दत्तिः दत्त्वा। डु दा ञ् लि दाने इत्यस्य दत्त्रिममिति च। दासंज्ञकेति कथनात् दैपधातोः दातमिति। धीत इति धे ट पाने इत्यस्य, (६१२) ऐ-आदेशः। पाणिनिः ७।४।४६।

§ अधः किं, धे-ट पाने इत्यस्य प्रधीतः। अचः किं, निर्दत्त इत्यादि। पाणिनिः ७।४।४७।

१०९० । घौ दा-ते गीच: । (घं: ।१, दा-ते ७।, गीच: ६।)।

नीत्तं । इच: किं, प्रत्तं । *

१०९१ । जग्धोऽदो यपि च ।

(जग्ध: १।, अद: ६।, यपि ७।, च ।१।) ।

अदो जग्ध: स्यात् अणौ ते यपि च । जग्धं । †

१०९२ । घे चादिढे क्त: । (घे ७।, च ।१।, आदिढे ७।, क्त: १।)।

आदिढे विहित: क्तो घे स्यात् ढभावयोश्च । प्रकृत: कटं स:, प्रकृत: कटस्तेन । (१०५१) चेघँ इति प्रचीण: स: । प्रचीणं प्रचितं तेन, चीण: चितोऽयं तपस्वी, चीणायु: चितायु: प्रभु: । ‡

---

* वाद्वयमध्यवर्त्तित्वात् एतदादीनामष्टानां नित्यत्वं । गेरिची घं: स्यात् दा-स्थानजाते तकारे परे । नीत्तमिति पूर्व्वेण दास्थाने तकारे अनेन नि इत्यस्य दीर्घ: । एवं नीत्ति: परीत्तं अनूत्तमित्यादि । पाणिनि: ६।३।१२४ ।

† क्रियापदत्वेनैव प्रयुज्यमानस्य अदधातो र्जग्धादेश इत्यर्थ:, तेन पक्वतण्डुलादौ रूढ़ं अन्नमिति भविता । जग्द्धमिति भक्षितमित्यर्थ:, जग्धादेशे, (५७५) तस्य ध:, (६४) पूर्व्वधस्य द । यपि प्रजग्धा । [पाणिनिमते तु (८।४।६५) झरोझरीति सूत्रेण धलोपे क्तादौ जग्ध इत्यादि रूपम् ।] क्ताचि परे आदौ जग्धादेशे पश्चात् यपि कृते सिद्धेऽपि, अत्र यपीति ग्रहणं, क्ताच: स्थाने यबादेशात् प्राक् प्रकृते: किमपि कार्य्यं न स्यादिति सूचनार्थं, तेन विमुच्येत्यादौ न कुङ् (२११), प्रविश्येत्यादौ न षङ् (१५४), प्रणह्येत्यादौ न धङ् (२३०), प्रलिह्येत्यादौ न ढ (१७५), आपृच्छ्य प्रदीव्येत्यत्र च न ञ-क्रटौ (८१४) । पाणिनि: २।४।३६ ।

‡ आदिभूतं ढं कर्म्म (क्रिया), आदिढ आदिक्रिया, क्रियारम्भ इति यावत् । स कटं प्रकृत कर्त्तुमारब्धवान्, तेन कट: प्रकृत: कर्त्तुमारब्ध इत्यर्थ: । प्रचीण इति अनेन कर्त्तरि क्त:, अकर्म्मकत्वात् नित्यं दीर्घ:, ची इति दीर्घान्तात् (१०५२) तस्यानेन:, (१८७) णत्वं । प्रचीणं प्रचितमित्यादि भावदेश्याश्रोषेषु क्रमेणोदाहरणानि । पाणिनि: ३।४।७१ ।

## १०६३ । गत्यर्थाढ शी स्थास वस जन जृ श्लिष रुह: । (५।) ।

एभ्यो घे क्त: स्यात् ढभावयोश्च । गङ्गां गत: कृष्णं प्राप्त:, शयित:, शेषमधिशयितो विष्णु:, वैकुण्ठमधिष्ठित:, शिवमुपासित:, हरिदिनमुपोषित:, राममनुजातोऽच्युत:, विश्वमनुजीर्णोऽनन्त:, लक्ष्मीमाश्लिष्टो मुकुन्द:, गरुड़मधिरूढ़ो गोविन्द । *

## १०६४ । ध्रौव्यगत्यदनार्थात् डे च ।

(ध्रौव्य-गति-अदनार्थात् ५।, डे ७।, च ।१।) ।

निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च ।

---

* नास्ति ढं येषां ते अढा: । गत्यर्थाश्च अढ़ाश्च शीश्च स्थाश्च आसश्च वसश्च जनश्च जृश्च श्लिषश्च रुहश्च तस्मात् । घे, च, क्त:, इति त्रयमनुवर्त्तते । परसूत्रेणैव सिद्धे अत्र गत्यर्थग्रहणं, गत्यर्थ-प्राप्त्यर्थयोरैक्यात् ढाभ्यां कर्त्तरि क्त: स्यात्, परसूत्रे तु केवलं गत्यर्थादेव न तु प्राप्त्यर्थादिति ज्ञापनार्थं । शीस्थादीनामकर्म्मकत्वादेव प्राप्तौ पुनर्ग्रहणं, येन केनापि सकर्म्मकत्वेऽपि कर्त्तरि क्त-प्राप्त्यर्थं । गत इति (६७६) अम्लोप: । सर्व्वे गत्यर्था: ज्ञानार्था: प्राप्त्यर्थाश्चेति वचनात् प्राप्त इति गत्यर्थत्वादेव कर्त्तरि क्त: । एवं लब्ध इत्यपि । शयित इति अढत्वात् कर्त्तरि क्त:, (१०६८) गुण: । अधिशयित इत्यस्य शेषमिति, अधिष्ठित इत्यस्य वैकुण्ठमिति च, अधिकरणे (२८१) कर्म्मत्वं । अधिष्ठित इति (१०८३) डि: । उपासित इति आराधनार्थत्वात् सकर्म्मकत्वं, एवं घोषमध्यासित इत्यादावधिकरणस्य कर्म्मत्वेऽपि कर्त्तरि क्त: । उपोषित इत्यस्य हरिदिनमिति (२८२) कर्म्मत्वेऽपि कर्त्तरि क्त:, (१०६६) इम्, (६६१) शि: । अनुजात: अनुजीर्ण: इति अनुपूर्व्वकयोरेतयो: सकर्म्मकत्वं, यस्य पश्चाज्जननादि तदेव कर्म्म । जात इति (१०७१) इम्निषेधे, (६५५) ज्ञा । जीर्ण इति (१०५२) इमनिषेधे, (६२८) इर्, (२२८) दीर्घ: । आश्लिष्ट: अधिरूढ़ इति च सकर्म्मकत्वेऽपि कर्त्तरि क्त: । रूढ़ इति (१७५) हस्य ढ:, (५७५) तस्य ध, (४७) धस्य ढ, (७७) ढलोप: पूर्व्वदीर्घश्च । पाणिनि: ३।४।७२ ।

मुकुन्दस्यासितमिद-मिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥ *

## १०८५। ज्ञानेच्छार्थ ञीच्छीलादेः सति।

([ज्ञा-अर्था इच्छा]-अर्थ-ञि-इत्-शीलादेः ५।, सति ७।)।

एभ्यो वर्त्तमाने क्तः स्यात् तेषु। विदितः, पूजितः, वाञ्छितः, इद्धः, शीलितः,—ञिवोऽनुवर्त्तते। †

---

* भ्रुवो निश्चलः। भ्रुवस्य भावो ध्रौव्यं, ध्रौव्यञ्च गतिश्च भदनञ्च समाहारे तत् अर्थो यस्य स तस्मात्। ङे अधिकरणे, चकारात् ढे भावे मे च। मुकुन्दस्येति। मुकुन्दस्य कृष्णस्य इदं (कुञ्जं) आसितं, आस ङ ल उपवेशने, निश्चलार्थत्वादधिकरणे क्तः, इदमिति अधिकरणमुक्तं। रमापतेः कृष्णस्य इदं (कुञ्जं) यातं, या ल गतौ अधिकरणे क्तः, इद-मित्यधिकरणमुक्तं। अनन्तस्य कृष्णस्य एतत् (तरुतलं) भुक्तं, भुज धौ त्राण-भक्षयोः अधि-करणे क्तः, एतदित्यधिकरणमुक्तं। (मुकुन्दं) दिदृक्षवो गोप्यः इति ऊचुः। सर्व्वत्र (३०६) क्तामुकेति कर्त्तरि षष्ठी। कर्म्मणि वाच्ये यथा—मुकुन्देन पीठमध्यासितं, मथुरा याता, यामिकान्नं भुक्तं। भाववाच्ये—मुकुन्देन आसितं, यातं, भुक्तमिति। कर्त्तरि वाच्ये—मुकुन्दः पीठे आसितः, मथुरां यातः, यामिकान्नं भुक्त इत्यादि। पाणिनिः ३।४।७६।

† ज्ञा ज्ञानं, ज्ञानं अर्था च इच्छा च ज्ञानेच्छाः अर्थाः येषां ते ज्ञानेच्छार्थाः। ञिरित् यस्य स ञीत्। शील (धातुः) आदि र्यस्य स शीलादिः। ततः ज्ञानेच्छा-र्थाश्च ञीच्च शीलादिश्चेति, तस्मात्। सति वर्त्तमानकाले, अतीतेऽपि इति वक्तव्यम्। एतत् सूत्रं कालमात्रविधायकं, कर्म्मादि-वाच्ये तु यथासम्भवं स्यादित्यर्थः। विद ल ज्ञाने विदितः ज्ञायते इत्यर्थः। पूज क पूजे पूजितः (१०७०) ञिलोपः, पूज्यते इत्यर्थः। वाछि कामे वाञ्छितः वाञ्छ्यते इत्यर्थः। एषु कर्म्मणि क्तः। ञि इन्धी ष ङ दीप्तौ, अकर्म्मकत्वात् (१०९२) कर्त्तरि क्तः, (१०७१) इम्-निषेधः, (५६७) न-लोपः, (५७५) तस्य ध, (६४) पूर्व्व-धस्य द;—इद्धः द्योतते इत्यर्थः। ञि शील समाधौ, कर्म्मणि क्ते शीलितः, ध्यायते इत्यर्थः। आदिशब्दात् ञि रक्ष पालने रक्षितः इत्यादि। गणपाठे शीलादयोऽपि ञिकारानुबन्धाः। तद्यथा—शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट इत्यपि। रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि॥ हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ। कष्टं भविष्यतीत्याहुरमृताः पूर्व्ववत् स्मृताः॥ पाणिनिः ३।२।१८७, १८८, चकारात् शीलादि।

## १०९६ । ठौ-प-म-वत् क्वसु-कानौ ।

(ठौ-प-म-वत् ।१॥, क्वसु-कानौ १॥) ।

धोरेतौ क्रमात् स्याः प-म-वत् स्तः ।

बभञ्ज्वान्, जजागर्व्वान् जजागरवान्, दुद्यूवान् दिदिवान्, विविश्वान् विविच्छान् । *

## १०९७ । वसो घसैकाज्जिनात इम् ।

(वसोः ६।, घस-एकाच्-ऋ-इन-आतः ५।, इम् ।१।)

घस एकाचो ऽर्त्ते रिन आदन्ताच्च वसो रिम् स्यात्, नान्यतः ।

जक्षिवान् आदिवान् आरिवान् ईयिवान् ददिवान् । †

---

* ठौ-पमे इव ठौ-पमवत्, तेन अतीते काले कर्त्तरि वाच्ये परस्मैपदिभ्यः क्वसुः, आत्मनेपदिभ्यः कानः, उभयपदिभ्यो द्वय स्यात ; कर्म्मणि भावे च वाच्ये कानः स्यादित्यर्थः । क्वसु-कानयोः क इत् अगुणार्थः, उकारः (२५७) ईबर्थः । बभञ्ज्वानिति भन्ज-क्वसुः, (५६७) न-लोपः, (५५८,५६४) द्वित्वादि, बभञ्ज्वस् शब्दः, ततः सिः, (१९२) उदित्त्वात नुष्, नसन्तत्वात (१६४) दीर्घः, (१९३) स्यान्तलुप् । एवं स्त्रियां (२५७) उदित्त्वादीप्, (२२९) वस्य उः, बभञ्जुषी । जागृ-क्वसुः, द्वित्वादि, (६९९) वा गुणः, जजागर्व्वान् जजागरवान् । दिव-क्वसुः, (८१४) वस्थाने ऊट्, द्वित्वादि, दुद्यूवान्, पक्षे (६४२) वलोपे दिदिवान् । एवं विच्छ-क्वसुः, (८१४) छस्थाने वा श, विविश्वान् विविच्छान् । पाणिनिः ३।२।१०६,१०७ ।

† घस च एकाच्च ऋश्च इन च आश्च तस्मात् । घसः पृथक् ग्रहणात् एकाच् इति द्वित्वे कृतेऽपि य एकाच् सएव ग्राह्यः । एतेभ्य एव धातुभ्यो वसु-स्थाने इम् नान्यतः इति नियमः । जक्षिवानिति अद-क्वसुः, (६७४) व्यां वेति घसादेशे, अनेन इमि, द्वित्वादौ, (२३०) उङ्-लोपे, (६४) घस्य क, (१११) षत्वं । पक्षे अदो द्वित्वे, (१६४) दस्य लोपे, सन्धौ, एकाच्त्वादिम, आदिवान् । एवं यज-क्वसुः, (६५१,६६१) खे मूलस्यापि जिः, एकाच्त्वादिम ईजिवान्, वस ऊषिवान् । एवं (५७९) तृफलेति खे लोपे पेचिवान भेजिवान् इत्यादि । ऋ-क्वसुः, द्वित्वं, (५५९) खे ऋकारस्य अ, (६१५) मूलस्य गुणः, ततः सन्धिः, आरिवान् । इन गतौ, क्वसुः, द्वित्व, (६८३) खेर्दीर्घ., (६८१) मूलस्य यकारः ईयिवान् । दा-क्वसुः, द्वित्वादि, (७०१) आद्योरिति आलोप. ददिवान् । पाणिनि. ७।२।६७ ।

## १०९८। हन-गम-दृश-विश-विन्दो वा।

(हन—विन्द: ५।, वा ।१।)।

एभ्यो वसो रिम् स्याद्वा। *जघ्निवान् जघन्वान्, जग्मिवान् जगन्वान्, ददृशिवान् ददृश्वान्, विविशिवान् विविश्वान्, विविदिवान् विविद्वान्। *

## १०९९। दाश्वान् साह्वान् मीढ्वान्। (।१॥)।

एते वस्वन्ता निपात्यन्ते। †

चक्राणः, जजागराणः जजाग्राणः, अनूचानः। ‡

## ११००। क्री-प-म-वत् शतृ-शानौ।

(क्री-प-म-वत् ।१॥, शतृ शानौ १॥)।

धोरेतौ क्रमात् क्याः प-म-वत् स्तः। पचन्। §

---

* हन-क्वसुः, इम्, द्वित्वादि, (२३०) उङ्लोपः, (१८९) हस्य घ, जघ्निवान्। पक्षे, (६७९) हनो हस्य घः, जघन्वान्। गम क्वसुः, उङ्लोपे जग्मिवान्, पक्षे (२०२) मस्थाने न, जगन्वान्। दृश-क्वसु, ददृशिवान, पक्षे ददृश्वान्। एवं विश-क्वसु, विद् लृ श प ओ लाभे विद क्वसुः, वेत्तेस्तु विविद्वान्। पाणिनि: ७।२।६८, वार्त्तिकञ्च।

† दाश ङ् दाने, तालव्यान्तः, दन्त्यान्त इति केचित्। सह ज ङ शक्तौ। मिहौ सेचने। एतेभ्यः क्वसुः। पाणिनि: ६।१।१२।

‡ कानमुदाहरति, कृञ धातोः कर्त्तरि कर्म्मणि वा कानः। जागृधातोः कर्म्मणि कानः, (६९९) वा गुणः। अनु-ब्रूधातोः कर्त्तरि कान, (७२५) वचादेशः, द्वित्वादि, (६५१.६६१) खे मूलस्य च जिः। अनूचानः साङ्गवेदाध्यायी। पाणिनि: ३।२।१०९।

§ क्रीपमे इव क्री-पमवत्। एतेन वर्त्तमानकाले कर्त्तरि वाच्ये परस्मैपदिभ्यः शतृः, आत्मनेपदिभ्यः शानः, उभयपदिभ्यो द्वयं स्यात्, एवं कर्म्मणि भावे च वाच्ये सर्व्वेभ्यः शानः स्यादित्यर्थः। शित्वात् रसंज्ञा, पित्वाभावाच्च ङित्संज्ञा। शतृ इत्यस्य च ऋ इत् (२५७) ईबर्थः। एतयोः प्रयोगे क्रियासमाप्तिं नाप्नोति बोध्य। क्रियायाः परिचायके चिह्ने हेतौ च अर्थे तौ भवतः। यथा शयाना भुञ्जते यवनाः; हरिं

११०१। शाने ऽतो मन्। (शाने ७, अतः ६।, मन् ।१।)।

अकारस्य मन् स्यात् शाने। पचमानः। *

११०२। यासो ऽस्य। (ई ।१।, आ ।१।, आसः ५।, अस्य ६।)।

आसः परस्यास्य आ ई स्यात्। आसीनः। †

११०३। वेत्तेः शतुः क्वसु वा।

(वेत्तेः ५।, शतुः ६।, क्वसु १।, वा ।१।)।

विदः परस्य शतुः क्वसुः स्याद्वा। विद्वान् विदन्। ‡

११०४। शक्तिवयस्ताच्छील्ये शतुः शानः।

(शक्ति-वयस्-ताच्छील्ये ७।, शतुः ६।, शानः १।)।

शत्रुं निघ्नानः, कवचं बिभ्राणः, भोगं भुञ्जानः। §

---

पच्यन् मुच्यते। पचन् इति, डु ओ श् पच पाके, शतृ, (५४१) शप्, (५४३) अकार-लोपे पचत्शब्दः, ततः सिः, ऋदित्वात् (१९२) नुण्, (१९३) स्यान्तलुप्। स्त्रियां (२५७) ईप्, (२४५) नुण्, पचन्ती। पाणिनिः ३।२।१२४, १२६।

* मनो न इत् अन्ते। पचमान इति कर्त्तरि शानः, अनेन मन्। कर्म्मणि विप्रेण पच्यमान ओदनः। पाणिनिः ७।२।८२।

† अस्य शानस्य। आसीन इति, आस ङ ल उपवेशने, कर्त्तरि शानः, (५४१) शप्, तस्य (६७०) लुक्, अनेन आकारस्य ई। पाणिनिः ७।२।८३।

‡ क्वसुप्रत्ययस्य शतृ-स्थानजातत्वेन द्वित्वं अतीतत्वञ्च न स्यात्। विद्वानिति विद ल ज्ञाने, शतृ, तस्य स्थाने क्वसुः, विद्वस्शब्दः, ततः सिः, (१९२) नुण्, (१९४) दीर्घः, (१९३) स्यान्तलुप्। पक्षे विदन्। पाणिनिः ७।१।३६।

§ शक्तिः सामर्थ्यं, वयो यौवनादि, ताच्छील्यं तत्स्वभावत्वं। एष्वर्थेषु शतृ-स्थाने शानः स्यात्। शत्रुं निघ्नान इति, हन-शतृ, शक्त्यर्थे शतृस्थाने शानः, (६७०) शपो लुकि, (२३०) उङ्-लोपः, (१८९) ह स्थाने घ। कवचं (वर्म्म) बिभ्राण इति, भृ-शतृ,

## ११०५। तौ-प-म-वत् स्यट-स्यमानौ।

(तौ-प-म-वत् ।१॥, स्यट-स्यमानौ १॥)।

धोरेतौ क्रमात् त्याः प-म-वत् स्तः। करिष्यन् करिष्यमाणः।*

इति क्रादि-पादः।

---

### ४र्थ पादः—इष्णुादिः।

---

## ११०६। जि भ्राज भू सह रुच चर वृध वृत प्रजनापत्रपालंकृ निराकृन्मदपतपच इष्णु घे।

(जि—पचः ५।, इष्णुः १।, घे ७।)।

एभ्य इष्णुः स्यात् घे। कारयिष्णुः भ्राजिष्णुः भविष्णुः सहिष्णुः रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णुः उत्पचिष्णुः।*

---

यौवनवयसि अर्थे शतस्थाने शानः, (७२६) द्वादौ रे ह्रिः, खे भंकारस्य (५५८) बकारे, (७२८) खे ङिः, (१०७) णत्वं। भोगं भुञ्जान इति भुज-शत, तत्स्वभावार्थे शतस्थाने शानः, रुधादित्वात् श्नम्,(७५८) नणा नकारे,तस्य (४६) अकारः। पाणिनिः ३।२।१२९।

* भविष्यत्काले कर्त्तरि परस्मैपदिभ्यः स्यटः आत्मनेपदिभ्यः स्यमानः, उभयपदिभ्यो द्वयं स्यात्, एवं कर्म्मणि भावे च वाच्ये स्यमानः स्यादित्यर्थः। स्यट इत्यस्य ऋट इत् (२५७) ईवर्थः। करिष्यन् इत्यादि, (६१७) इम्। पाणिनिः ३।३।१४।

---

* प्रात् जन प्रजन, अपात् त्रप अपत्रप, अलम् कृ अलंकृ, निरः आ निरा तस्मात् कृ निराकृ, मद च पत च पच चेति मदपतपच, उदो मदपतपच उन्मदपतपच। ततः जिश्च भ्राजश्चेत्यादि द्वन्द्वे तस्मात्। जि ञ्यन्तः। अत्र पूर्व्वसूत्रादनुवर्त्य केवलं ताच्छील्यार्थे इष्णुः स्यादिति वक्तव्यं। ताच्छील्यार्थस्य च (११३२) स्वयंभ्रंविसंप्रादिति पर्य्यन्तेष्वधिकारः। तेन, कारयितुं शीलमस्येत्यादि वाक्ये कारयिष्णुरित्यादि। भ्राजिष्णुरिति काशिका वृत्तिः। पाणिनिः ३।२।१३६—१३८। एतन्मते तच्छीलतद्धर्म्मतत्साधुकारिषु अर्थेषु।

११०७। ष्णुक् भूजेः। (ष्णुक् ।१।, भू-जेः ५।)।

आभ्यां ष्णुक् स्यात् घे। भूष्णुः जिष्णुः। *

११०८। ग्ला म्ला स्था क्षि पच परिमृजः स्नुः। (ग्ला—परिमृजः ५।, स्नुः १।)।

एभ्यः स्नुः स्यात् घे। ग्लास्नुः म्लास्नुः स्थास्नुः क्षेष्णुः पक्ष्णुः परिमार्क्ष्णुः। †

११०९। क्षिप त्रस गृध धृषः क्नुः।

(क्षिप—धृषः ५।, क्नु १।)।

एभ्यः क्नुः स्यात् घे। क्षिप्नुः त्रस्नुः गृध्नुः धृष्णुः। ‡

१११०। मृ स्था भू कम गम हन लष वृष पत पदो उकः। (मृ—पदः ५।, उकः १।)।

एभ्यो उकः स्यात् घे। मारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः। §

---

* ष्णुकः कित्त्वात् (१०५३) वृद्भ्रीति इम्निषेधः, गुणाभावश्च। पाणिनिः ३।२।१३९, वार्त्तिकञ्च।

† क्षेष्णुरिति गुणे, (१११) षत्वं। पक्ष्णुरिति (२११) कुङ्, षत्वं। परिमार्क्ष्णुरिति ऊदित्त्वादनिमपक्षे (६६४) वृद्धिः, (१५४) षङ् (६०२) षस्य कः, षत्वं। अस्य इमपक्षे न प्रयोगः। पाणिनिः ३।२।१३९। "ज्यादेः स्नुः" इति संक्षिप्तसारे कर्कशोणादिपादे ६६ सूत्रे।

‡ क्नु इत्यस्य कित्त्वात् न गुणः। पाणिनिः ३।२।१४०।

§ उको ञित्त्वात (५०७) वृद्धिः। स्थायुक इति (६२४) यम्। घातुक इति (६७६) हस्य घः, (८०१) हनस्तङ्। पाणिनिः ३।२।१५४।

## ११११। भिक्ष-जल्प-कुट्ट-लुण्ट-वृञः षाकः।

(भिक्ष—वृञः ५।, षाकः १।)।

एभ्यः षाकः स्यात् घे। भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी।*

## १११२। पति गृहि स्पृहि शीङ आलुः।

(पति—शीङः ५।, आलुः १।)।

एभ्य आलुः स्यात् घे। पतयालुः गृहयालुः स्पृहयालुः शयालुः।†

## १११३। शत सद सि धे दो रुः। (शत—दः ५।, रुः १।)।

एभ्यो रुः स्यात् घे। शतुः सद्रुः सेरुः धारुः दारुः।‡

## १११४। घसस्रदः क्मरः। (घस-सृ-अदः ५।, क्मरः १।)।

एभ्यः क्मरः स्यात् घे। घस्मरः सृमरः अद्मरः।§

## १११५। मिद-भास-भञ्जो घुरः।

(मिद-भास-भञ्जः ५।, घुरः १।)।

---

* षाकस्य षित्त्वात् (२५७) ईप्। पाणिनिः ३।२।१५५।

† पत तृ ऐश्वर्ये, गृह तृ क ङ ग्रहे, स्पृह त ईप्से, त्रयोऽदन्तचुरादयः, शी ङ स्व शयने, (६४१) आलु-वर्जनात् न णेर्लोपः, गुणश्च। पाणिनिः ३।२।१५८, वार्त्तिकञ्च; एतन्मते दय निद्रा तन्द्रा श्रद्धा इति चतुष्टयादपि आलुच्। वोपदेवेन तु (४४६) निद्रादित्वात् आलुः इति तद्धिते निवेशितम्।

‡ घे इत्यस्य पृथक्-ग्रहणात् दा इति न दासंज्ञः, तेन दै प शोधने इत्यस्यापि प्राप्तिः। शतुरिति सूत्रे तान्त-निर्देशात् शदो दस्य तः, मनीषादित्वादिति केचित्। पाणिनिः ३।२।१५९। एतन्मते शदधातोः शद्रुः, शतुस्तु शातयतेरौणादिकः क्रुन्।

§ क्मरः क इत् अगुणः, मर स्थितिः। पाणिनिः ३।२।१६०।

एभ्यो घुरः स्यात् घे । मेदुरः भासुरः भङ्गुरः । *

## १११६ । छिद्-भिद्-विदः कुरः ।

(छिद-भिद-विदः ५।, कुरः १।) ।

एभ्यः कुरः स्यात् घे । छिदुरः भिदुरः विदुरः । †

## १११७ । जागृ यङन्त-यजजपवद्दन्शः ऊकः ।

(जागृ—दन्शः ५।, ऊक. १।) ।

एभ्य ऊकः स्यात् घे । जागरूकः, यायजूकः जञ्जपूकः वावदूकः दन्दशूकः । ‡

## १११८ । यङन्त-चल पत सह वहः किः ।

(यङन्त—वहः ५।, किः १।) ।

एभ्यः किः स्यात् घे । चाचलिः पापतिः सासहिः वावहिः । §

---

* घुर् इत्यस्य घ इत् । भङ्गुर इति (९७२) घिति जस्य गः, (५०) मस्यानुस्वारः, (५१) अनुस्वारस्य ङ । पाणिनिः ३।२।१६१ ।

† कुरस्य कित्त्वान्न गुणः । अत्र विदः ज्ञानार्थः । पाणिनिः ३।२।१६२ ।

‡ यजश्च जपश्च वदश्च दन्शश्च तत्, यङन्तश्च तत् यजजपवदन्दशश्चेति, ततः जागृश्च यङन्त-यजजपवदन्दशश्च तस्मात् । पुनः पुनः यजतीति यायज्य-धातोः ऊकः, (७७५) यलोपः । एवं गर्हितं जपति जञ्जप्यते इति जञ्जपूकः । वावद्यते वावदूकः । दन्दश्यते दन्दशूकः । एवं भञ्ज बन्ध मञ्ज बल भ्रम धातुभ्यः ऊकः वक्तव्यः (उणादिषु द्रष्टव्यः) । पाणिनिः ३।२।१६५, १६६ । एतन्मते वावदूकः औणादिकः ।

§ चल ज गतौ, पत्ल ऊैश्ये, सह्य कि सह ज ङ च शक्तौ इति द्वयं, वह ञौ प्रापणे, यङन्तेभ्य एभ्य इत्यर्थः । चाचल्यते इत्यादि वाक्यानि । पापतिरिति, (८२६) नीम् वञ्चेत्यत्र पत्लृज गत्यामित्यस्य ग्रहणात् । पत्ल ऊैश्ये इत्यस्य नीमोऽभावे पापत्य-धातुः, तस्मात् किः, (७७५) इयाल्लोप इति अकार-यकारयो र्लोपः । वार्त्तिकम् ।

## १११९ । कि श्चादृङ्लोपिनः ।

(कि. १।, च ।१।, आत्-ऋ-उङ्लोपिनः ५।) ।

आदन्तात् ऋवर्णान्तात् उङ्लोपिनश्च किः स्यात् घे, तेषाञ्च द्वित्वं । ददिः चक्रिः जज्ञिः । *

## ११२० । यायाय भास कस स्थेश पिश प्रमदो वरः ।

(यायाय—प्रमदः ५।, वरः १।) ।

एभ्यो वरः स्यात् घे । यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः । †

## ११२१ । क्वरप् सृजीन्नशगम स्त मश्च ।

(क्वरप् ।१।, सृ-जि-इन्-नश-गमः ५।, त ।१।, मः ६।, च ।१।) ।

एभ्यः क्वरप् स्यात् घे, मस्य तश्च । सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी । ‡

---

* आत् च ऋश्च उङ्लोपी चेति तस्मात् । उङ्लोपिनश्च (२३०) सूत्रे दर्शिताः । ददातीति ददिः, किः, द्वित्वं, (६१०) उस्येचीति आलोपः । एवं दधि । करोति किरति इति वयोः चक्रिः । एवं चक्रिः । जायते इति जज्ञिः, द्वित्वं, (२३०) उङ्लोपः, (४६) नस्य ञ । एवं हन—जघ्निः, गम-जग्मिः, खन—चख्निः, घस—जक्षिः । पाणिनिः ३।२।१७१, वार्त्तिकञ्च ।

† वक्रं यातीति यङि यायाय धातुः, भासृ ङ न दीप्तौ, कस न गतौ, ञि ष्ठा स्थाने, ईश ङ ल ऐश्वर्य्ये, पिश श पावयवे, प्रपूर्व्व-मदी भिर्य ञि हर्षे—एभ्य इत्यर्थः । यायाय धातोः वरः (१०३३) इम्निषेधे, (७७५) अकारलोपे, (६४२) यलोपः । ईश्वरः इति वरप्रत्ययस्य दन्त्यादित्वात् (१५४) न षङ् । पाणिनिः ३।२।१७५,१७६ । एतन्मते पिस दन्त्यान्तः । प्रमद्वर इति पदं कातन्त्रादगृहीतम् ।

‡ क्वरपः कित्त्वात् (५४२) अगुणः, षित्त्वात् (२५७) ईप्, पित्त्वात् (९८२) तन् । सरति जयति एति नश्यति गच्छतीति वाक्यानि । नश्वरीति (१०३३) इड्वर्त्तेरिति इम्निषेधः । गत्वरीति अनेन मस्य त । पाणिनि. ३।२।१६३,१६४ ।

**११२२ । हिंस दीप कम्पाजस स्मिङ् कम नमो रः ।** (हिंस—नमः ५।, रः १।) ।

एभ्यो: रः स्यात् घे । हिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्रः नम्रः । *

**११२३ । सनभिक्षाशंस उः ।**

(सन्-भिक्ष-आशंसः ५।, उः १।) ।

एभ्यः उः स्यात् घे । रिप्सुः भिक्षुः आशंसुः । †

**११२४ । विन्दिच्छू ।** (१॥) ।

एतौ निपात्यौ । वेत्तीति विन्दुः, इच्छतीति इच्छुः । ‡

**११२५ । स्वप तृष धृषो नजङ् ।**

(स्वप-तृष-धृषः ५।, नजङ् ।१।) ।

एभ्यो नजङ् स्यात् घे । स्वप्नक् तृष्णक् धृष्णक् । §

**११२६ । शृवन्द आरुः ।** (शृ-वन्दः ५।, आरुः १।) ।

आभ्यामारुः स्यात् घे । शरारुः वन्दारुः । ¶

---

* हिनस्ति दीप्यते कम्पते न जस्यति स्मयते कामयते नमतीति वाक्यानि । हिंस इत्यादौ (१०३३) इमनिषेधः । कम इति (५९२) वारे इति ञिङोऽप्राप्तिपक्षे । पाणिनिः ३।२।१६७ ।

† रब्धुमिच्छति, सन्, (८११) खिलोपः इम च, (२१३) स्यादेः स-लोपः, (६४) भस्य प, रिप्स इत्यस्मात् उः, (७७५) अकारलोपे रिप्सुः । भिक्षते भिक्षुः, आशंसते आशंसुः । पाणिनि. ३।२।१६८ ।

‡ पाणिनिः ३।२।१६९ ।

§ ङानां ङ इत् गुणाभावः, नज्-स्थितिः । स्वपिति, तृष्यति, धृष्णोति, इति वाक्यानि, तृषधृषोः (१०३३) इमनिषेधः, (२११) कुक् । पाणिनिः ३।२।१७२, वार्त्तिकञ्च ।

¶ शृणाति वन्दते इति वाक्यद्वयं । पाणिनि, ३।२।१७३ ।

## ११२७। क्रुक्लुकौ भिय: । (क्रुक्लुकौ १॥, भिय: ५।) ।

भीरु: भीलुक: । *

## ११२८। स्पृहि गृहि श्रु द्द जे राय्य: ।

(स्पृहि—जे: ५।, आय्य. १।) ।

एभ्य आय्य: स्यात् घे। स्पृहयाय्य: गृहयाय्य: श्रवाय्य: दराय्य: जयाय्य: । †

## ११२९। गण्डि मण्डि जि जनि नन्दिभ्योऽन्त:।

(गण्डि—नन्दिभ्य: ५॥, अन्त: १।) ।

एभ्योऽन्त: स्यात् घे। गण्डयन्त: मण्डयन्त: जयन्त: जनयन्त: नन्दयन्त: । ‡

## ११३०। स्तनि गदि मदि हृदि दूषे रित्नु: ।

(स्तनि—दूषे: ५।, इत्नु: १।) ।

एभ्य इत्नु: स्यात् घे। स्तनयित्नु: गदयित्नु: मदयित्नु: हृदयित्नु: दूषयित्नु: । §

---

* भीधातो रेतौ स्यातां घे। उभयो: कित्त्वात् गुणाभाव: । बिभेतीति वाक्यं। क्रुकन्नपि वक्तव्यम्। भीरुक: । पाणिनि: ३।२।१७४ ।

† स्पृहत् कीप्से, गृहत् क ङ ग्रहे, द्वौ अदन्त चुरादौ ; श्रु श्रुतौ, दृ ङ आदरे, जि जये—एभ्य इत्यर्थ: । आद्योदाहरणद्वये,(६४१) आय्य-वर्जनात् न अलोप: । उणादि: ।

‡ गडि गण्डे, मडि क भूषे, जि जये, जनी य्यङ् प्रादुर्भावे, टु नदि समृद्धि। अत्र णिवर्जा: सर्व्वे आन्ता: । गण्डयन्त इत्यादौ, (६४१), अन्त-वर्जनात् न अलोप: । गड्यन्त इति तु पदं संक्षिप्तसारे दृश्यते । उणादि: ।

§ स्तनत् क गदत् क वाक्यध्वनौ, द्वावदन्तचुरादौ। मदी भियं ञि हर्षे, आन्त:, घटादित्वात् ह्रस्वे मदि. । हृत् करोति आचष्टे वा (८५५) ञि: हृदि: । हर्दुष्यौ

## ११३१ । कॄ गॄ जागृः क्विः । (कॄ गॄ-जागृः ५।, क्विः १।) ।

एभ्यः क्विः स्यात् घे । कीर्व्विः गीर्व्विः जागृविः । *

## ११३२ । स्वयं शं वि सं प्राद् भुवो डुः ।

(स्वयं—प्रात् ५।, भुव ५।, डुः १।) ।

एभ्यो भुवो डुः स्यात् घे । स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः ।†

## ११३३ । लू ऋ धू खन सू चर पू सह वह दूत्रो घे ।

(लू-ऋ-धू-खन-सू-चर-पू-सह-वहः ५।, इत्रः १।, घे ७।) ।

एभ्य इत्रः स्यात् घे । लवित्रं अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रं । ‡

## ११३४ । घञलनटो ऽघे । (घञ्-अल्-अनटः १।।।, अघे ७।) ।

घोरेते स्युः न तु घे । प्राकारः, पादः, दासः, उपाध्यायः,

---

वैकृते, ञि, गुणे, (७९७) औस्थाने ऊ कृते दृषिः । स्तनयित्नुरित्यादौ (६४१) इत्नु-वर्जनात् न ञेर्लोपः । उणादिः । तत्र तु हृदिस्थले हृषिर्दृश्यते ।

* कॄ श विक्षेपे, गॄ श निगरणे गृगि शब्दे इति द्वयं, जागृ खलु जागरे । किरतीति कीर्व्विः, (१०३३) इवन्तेरिति इमनिषेधे, (६२८) इर्, (२२८) दीर्घः । एवं गिरति गृणाति वा गीर्व्विः । जागर्त्तीति जागृविः (६९९) वि-वर्जनात् न गुणः । उणादिः । क्विः जागर्विरिति तु संक्षिप्तसारः ।

† डु इत्यस्य डित्त्वात् (१२६) टिलोपः । एतत्-पर्य्यन्तेषु ताच्छील्यार्थाधिकारः । पाणिनिः ३।२।१८०, वार्त्तिकञ्च ।

‡ लू ञ गि छिदि, ऋ प्रापे, धू ञ गि कम्पे, खनु ञ विदारे, सू ङ ल सूतौ, चर गतौ भक्षणे आचारे, पू ञ गि शोधे, सह्य कि सह ञ ङ शक्तौ, वहै ञौ प्रापणे । घे करणवाच्ये । लूयतेऽनेन, अर्य्यतेऽनेन इत्यादि वाक्यानि । पाणिनिः ३।२।१८४—१८६। एतन्मते वहित्रम् उणादिसिद्धम् । देवतायां कर्त्तरि पवित्रं ।

प्रासादः। समाजः, शमः, कामः वामः आचामः, श्रमः श्रामः यमः यामः विश्रमः विश्रामः। *

## ११३५। कभावेऽमौ। (क भावे ७।, अमौ १।।।)। †

प्रघसः, वधः, करः निलयः समजः मयः लयः।

स्नानं मानं दानं प्रवेपनं, वयनं अजनं, दरिद्राणं शयनं। ‡

---

* घस्य वर्जनात् कर्म्मादि-कारके भावे च वाच्ये इत्यर्थः। 'भावो धात्वर्थः, क्रियामात्रवाचीति यावत्। क्रियायाश्च अवस्थाद्वयं भवति, तथाच—अवस्थे द्वे क्रियायाः स्तः साध्यता सिद्धतापि च। साध्यता त्यादि-वाच्या स्यात् सिद्धता द्रव्यवत् भवेत्। द्रव्यवत्त्वं घञादिः स्यात् योगी लिङ्गेन सङ्ख्यया इति। तेन पाकः पाकौ पाकाः इत्यादि। पाणिनिः ३।३।१८,१९,५६-८७,११५ ११७। एतन्मते अच्, अप् = अल्। ल्युट् = अनट्।

घञो घकारः (९७२) चजोः कगार्थः, ञकारः (५७७) वृद्ध्यर्थः। यथा पाकः भाग इत्यादि। अलो लकारः कातन्त्राद्यनुयायी। अनटष्टकार (२५७) ईबर्थः। प्राकार इत्यादि, प्रकर्षेण क्रियते ऽसौ, कर्म्मणि घञ्, वृद्धिः। अस्य दीर्घविधानात् घञन्त-धातौ परे क्वचिदुपसर्गस्य दीर्घत्वं स्यादिति सूचितं। तथाच—उपसर्गस्य दीर्घत्वं क्विप्घञादौ क्वचित् भवेदिति प्राञ्चः, ("उपसर्गस्य घञि अमनुष्ये बहुलम्" इति पाणिनिः (६।३।१२२), मनुष्यभिन्ने इति किं, निषादः।) यथा—प्रासादः नीहारः नीवारः प्रतीकारः प्रतीहारः व्यतीहारः व्यतीपातः परीरम्भः परीवादः अतीसारः, क्विपि परीतत् नीवृत् (१०४२,१०४६ सूत्रटीका द्रष्टव्या) इत्यादि।

पद्यते ऽनेनेति पादः, दीयते ऽस्मै दासः, उपेत्य अधीयते ऽस्मात् उपाध्यायः, प्रसीदन्ति (मनांसि) अस्मिन् प्रासादः इति कारकोदाहरणानि। भावे यथा, समजनं समाजः समूहः, (५८६) घञ् वर्जनात् न वी-आदेशः। शमनं शमः, घञि वृद्धौ, (७४४) अमवधेति ह्रस्वः। काम इति (५९२) वारि इति ञिडोऽप्राप्ति-पक्षे घञि वृद्धिः, अमवधेत्यत्र वर्जनात् न ह्रस्वः, एवं वामः आचामः। श्रम यम विश्रमा वा ह्रस्वे श्रमः श्रामः इत्यादि।

† पूर्व्वसूत्रे घञादयः कर्त्तरि न स्युरित्युक्तापि, अत्र सूत्रे अमौ सर्व्वकारकेषु भावे च स्युरित्युक्तवता, प्रयोगानुसारेण क्वचित् कर्त्तर्य्यपि स्युरिति सूचितं। यथा. घञि रुजतीति रोगः, अतिसरतीति अतीसार इत्यादि। अन्यच्च पूर्व्वसूत्रे संज्ञायां, अत्र असंज्ञायामिति। पाणिनिः ३।३।११३।

‡ अलि उदाहरति, प्राप्नोति प्रघसः, (६७३) अदो घसादेशः। हननं वधः, (६७८) हनो वधादेशः। क्रियते ऽनेन करः। निलीयते ऽस्मिन् निलयः, (७४५)

## ११३६ । छीवन-सीवने वा । (छीवन-सीवने १॥, वा ।१।)।

एते निपात्ये वा । पक्षे छेवनं सेवनं । *

## ११३७ । मुण् लभो ऽनेकदुःसोर्गेः खलघञोः ।

(मुण् ।१।, लभः ६।, अन्-एक-दुः-सोः ५।, गेः ५।, खल्-घञोः ७॥) ।

केवलदुःसुवर्जात् गेः परस्य लभो मुण् स्यात् खलि घञि च । प्रलम्भः । अन्यत्र दुर्लभः । एकेति किं, अतिदुर्लम्भः । †

## ११३८ । स्यदैधावोद हिमस्रथ प्रस्रथ स्फार स्फाल राग काय निकायाकायाः । (१॥) ।

एते घञन्ता निपात्यन्ते । स्यदो वेगः । एध इध्मं । अवोद अवक्लेदः । हिमस्रथः हिमस्रन्थनं । प्रस्रथः प्रस्रन्थनं । स्फारः

---

अलवर्जनात् न ङा । सञ्जनं सञ्जः, (५८६) अलवर्जनात् न वी-आदेशः । ञु मि ञ न चेपे मी ञ ग वधे इति द्वाभ्यां भावे अल् मयः, (७४५) अलवर्जनान्न ङा । एवं ली ङ् य श्री-श्लिषि, लयनं लयः । अनट् यथा, ज्ञायते इति भावे ऽनट् ज्ञानं । मा-स्वरूपाणां मिम्योश्च (७४५) ङादेशे मानं । दा-स्वरूपाणां दीङश्च (७४३) ङादेशे दानं । प्रवेपनमिति (६६८) वेपवर्जनात् न णत्वं । अज-अनट् (५८६) विकल्पेन वी-आदेशे वयनं अजनं । दरिद्राणमिति (७०२) अनपवर्जनान्न आलोपः । श्री ङ स श्रयने श्रयनं । कारके अनट् यथा—छिद्यते ऽनेनेति छेदनः खड्गः, बन्धनी रज्जुरित्यादि ।

* ष्ठिवु निरसने, षिव्यु तन्तुसन्तती एतयो भावे ऽनटि दीर्घो वा निपात्यते, पक्षे गुणः । "ष्ठिवुसिवोर्दीर्घश्च" इति चान्द्रसूत्रम् । पृषोदरादित्वादिति पाणिनीयाः ।

† एकौ (अद्वितीयौ) च तौ दुःसू चेति एकदुःसू, न विद्येते एकदुःसू यत्र सोऽनेकदुःसु तस्मात् । मुणो ण इत् अन्त्यात् परः, उकारश्चिह्नार्थः, म-स्थितिः । प्रलम्भः इति घञि अनेन मुण् । केवल-दुःसुवर्जनात् दुर्लभः, एवं सुलाभः । अतिदुर्लम्भः इत्यत्र न केवलदुः । (७४१) मुणरध इत्यनेन सिद्धेऽपि एतद्विधानं नियमार्थं । पाणिनिः ७।१।६७,६८ ।

स्फोरणं । स्फालः स्फोलनं । रज्यतेऽनेनेति रागः । कायो देहः । निकायो निवासः । आकायश्चितिः । *

## ११३९ । खनो ड-डरेकेकवकाः ।

(खनः ५।, ड-डर-इक-इकवकाः १॥) ।

आखः आखरः आखनिकः आखनिकवकः । †

## ११४० । व्याप्तौ भावे णिनः ।

(व्याप्तौ ७।, भावे ७।, णिनः १।) ।

धोर्भावे णिनः स्यात् व्याप्तौ सत्यां । णिनान्तात् स्वार्थे षणः । सांराविणं वर्त्तते । ‡

## ११४१ । व्यतीहारे णन् स्त्री ।

(व्यतीहारे ७।, णन् ।१।, स्त्री ।१।) ।

---

* स्यन्द् ङ-व्लृ चरणे स्यदः, वेगादन्यत्र स्यन्दः । ञि इन्धीङ् दुती एधः काष्ठं, अन्यत्र इन्धः । अवपूर्व उन्द धी क्लेदे अवोदः, अवादन्यत्र उन्दः प्रोन्दः । श्रन्थ ग मोचे, हिमस्य श्रन्थनं हिमश्रथः प्रश्रन्थनं प्रश्रथः, अन्यत्र श्रन्थः परिश्रन्थः । स्फुर स्फुल च धि स्फूर्त्तौ आन्तस्य स्फारः, स्फालः । स्फार इति (७९३) कौगौङ् इत्यनेन आ कृते, स्फुल धातोश्च स्फाल इति सिद्धावपि, निपातनं, पक्षे स्फोरः स्फोल इति अनिष्ट-निवारणार्थं । रन्ज्औ ञ रागे, करणे भावे वा रागः, अन्यत्र रङ्गः । चि ञ न चित्यां कायः, निकायः, आकायः, अन्यत्र चायः निचायः आचाय इति । चितिश्चितेत्यर्थः । पाणिनिः ६।१।४७, ६।४।२७, २८, २९, ३।३।४१ ।

† खन धातोः ड डर इक इकवक एते स्युः कभावे इत्यर्थः । ड डरयो डित्त्वात् टिलोपः । वार्त्तिकम् ।

‡ णिनस्य ण इत् वृद्ध्यर्थः । संपूर्व रु ल ध्वनौ भावे णिने, वृद्धौ, संराविण इति स्थिते, (४३३) स्वार्थे षणे, (४१६) णिति त्रिरिनि आद्यचो वृद्धौ, (२५८) यचोर्लोप इत्यकार-लोपे, सांराविणं, बहूनां समवेतशब्द इत्यर्थः । पाणिनिः ३।३।४४, ५।४।१५ ।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे णः, तदन्तस्य स्त्रियां। व्यावहारी। *

## ११४२। ट्वितोऽथुर्भावे।

(ट्वितः ५।, अथुः १।, भावे ७।)।

टुकारेतो धोरथुः स्यात् भावे। वेपथुः। †

## ११४३। ड्वितस्तज्ज्ञे त्रिमक्।

(ड्वितः ५।, तज्ज्ञे ७।, त्रिमक् १।)।

डुकारेत स्त्रिमक् स्यात् धवर्थाभिप्यन्ने। करणाज्जातं कृत्रिमं।‡

## ११४४। स्वप रक्ष यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः।

(स्वप—यजः ५।, नङ् १।, भावे ७।, न ।१।, जिः १।)।

---

* णनो णकारो ह्रस्वार्थः, इन्त्यमकारस्तु (१०००) दुनीभुज्ज्वलादीति णप्रत्ययेन सह प्रभेदार्थः, तत्फलञ्च (४१७) य्वोर्युमदान्तित्यत्र व्यक्तं। अकार-स्थितिः। परस्पर-व्यवहरणं इति वाक्ये व्यावहारी, व्यव-हृ-णन्, (५७७) हर्वृद्धिः, व्यवहार इति स्थिते, (४३३) स्वार्थे णः, (४१७) य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य न इम, (४१६) आद्यचो वृद्धिः, (२५८) अकारलोपः, (२५७) षिच्वादीप्, पुनः अकारलोपः। एवं परस्पर-व्याक्रोशनं व्याक्रोशीत्यादि। पाणिनिः ३।३।४३, ५।४।१४।

† टु इत् यस्य स ट्वित् तस्मात्। पृथक् योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्तिः। वेपनं वेपथुः। एवं वमथुः दवथुः भाजथुरित्यादि। पाणिनिः ३।३।८९

‡ डु इत् यस्य स ड्वित् तस्मात्। तस्मात् (धात्वर्थात्) जातं तज्ज्ञं (९९७) डप्रत्ययेन सिद्धं, तस्मिन्। डु कृ ञ इत्यस्मात् त्रिमक्, किन्त्वादगुणे कृत्रिमं, एवं डु दा ञ दत्त्रिमं (१०८८) दा स्थाने दत्, डु धा ञ (१०८९) हित्रिमं, डु पच ष पक्त्रिमं, डु वप् उप्त्रिमं, डु भृ ञ भृत्रिममित्यादि। पाणिनिः ३।३।८८, ४।४।२०।

एभ्यो नङ् स्यात् भावे, न च जिः। स्वप्नः रक्ष्णः यत्नः प्रश्नः विश्नः याच्ञा यज्ञः। *

११४५। क्रिङ्दोऽन्तागेः। (क्रिः १।, द ५।, अन्तर्-गेः ५।)।

अन्तरो गेश्च परात् दा-संज्ञकात् क्रिः स्यात् भावे। अन्तर्द्धिः आदिः। †

११४६। ढाड्डे। (ढात् ५।, ङि ७।)।

ढात् परात् दः क्रिः स्यात् ङे। वारिधिः पयोनिधिः। ‡

११४७। क्तिः स्त्र्यघे। (क्ति १।, स्त्री ।१।, अघे ७।)।

धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियां। कृतिः बुद्धिः मतिः स्मृतिः प्रकृतिः। (१०८२) ह्लादेः स्वः क्तौ चेति। प्रह्लत्तिः, भूतिः फुल्तिः। §

---

* नङो ङित्त्वात् गुणाभावः, न-स्थितिः। न जिरिति निषेधात (६६१) यङ्-स्वपाद्योरिति प्राप्तस्य जेर्निषेधः। प्रश्नः, विश्नः उभयत्र (८१४) छ्वौ. शूटाविति छस्य श.। याच्ञा इति (४६) नस्य ञः, अभिधानात् स्त्रीत्वं, (२४६) आप्। यज्ञ इति (४६) नस्य ञः। एषु (१०३३) ह्वन्तेरिति इमनिषेधः। पाणिनिः ३।३।९०,९१।

† अन्तर्द्धानं अन्तर्द्धिः, आदानं आदिः, क्त्यादगुणे, (६१०) उसंघोति आलोपः। पाणिनिः ३।३।९२, वार्त्तिकञ्च।

‡ ङे अधिकरणवाच्ये.। वारि धीयतेऽस्मिन्, पयो निधीयतेऽस्मिन् इति वाक्यद्वयं। पाणिनिः ३।३।९३।

§ घः कर्त्ता, तस्य वर्जनात् कर्त्तृभिन्न-कारके भावे च वाच्ये इत्यर्थः। क्रियतेऽसौ इति कर्म्मणि, करणमिति भावे वा कृतिः। बुध्यते ऽनया इति करणे, बोधनमिति भावे वा बुद्धिः, (५७५) तस्य ध, (६४) धस्य द। मननं मतिः, (६७६) अम्लोपः। स्मरणं स्मृतिः। प्रक्रियते ऽनया करणे प्रकृतिः। प्रह्लादनं प्रह्लत्तिः, (१०३३) ह्वन्ते-

## ११४८। कॄ गॄ ज्याग्लाह्वाल्वादेर्निः।

(कॄ—ल्वादेः ५।, निः १।)।

एभ्यः परस्याः क्तेर्निः स्यात्। कीर्णिः गीर्णिः ज्यानिः ग्लानिः ह्वानिः लूनिः पूर्णिः। *

## ११४९। साति हेति यूति जूति। (।१॥)।

स्यति-हिनोति-यौति-जवतीना-मेते क्त्यन्ता निपात्यन्ते। †

## ११५०। शी व्रज यज विद् स्वास मन चर भ्रटाट्येन समज निपत निषदः क्यप्।

(शी—निषदः ५।, क्यप्।१।)।

एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियां। शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या। ‡

---

रितीमृनिषेधः (प्रह्णूतिरिति तु सिद्धान्तकौमुदी)। भूयते ऽनया भूतिः सम्पत्तिः, भवनमिति वा, (१०५३) वृदुश्रीति इमृनिषेधः। फलनं फुल्तिः, (१०८७) चरफलोऽदुरिति अकारस्य उः। पाणिनिः ३।३।९४।

* लू आदि र्यस्य स ल्वादिः, कॄश्च गॄश्च ज्याश्च ग्लाश्च ह्वाश्च ल्वादिश्च, समाहारे तस्मात्। ल्वादिश्च (७९९) सूत्रटीकायां द्रष्टव्यः। कीर्णिरिति, क्तेः स्थाने निः (१०५३) इमृनिषेधः, (९२८) ॠस्थाने इर्, (२२८) दीर्घः। एवं गीर्णिः। ज्यानिरित्यत्र क्तेः स्थानिवत्त्वात्क्तौकारात् (९९१) न ञिः। ह्वानिरिति ह्वा-ङ धातोः क्तेः स्थाने निः, (९१२) दामागेह्वाक इति ह्वाक-ग्रहणात् न ङौ। ("ओ ह्वाक् ह्वानिरपचयः" इति तु संक्षिप्तसारः)। लूनिरिति (१०५३) इमृनिषेधः। पूर्णिरिति पॄ-धातोः। पूर्त्तिरिति तु पूर-धातोरेव। सुपद्मे संक्षिप्तसारे च तु पॄधातोः पूर्त्तिरिति। उणादिः, वार्त्तिकञ्च।

† सो च नाशे, हि न वर्द्धने गतौ, यु ल मिश्रणे, जु गतौ, एषामेते प्रयोगा इत्यर्थः। सातिरित्यत्र, (१०८२) दोषोमास्थां ङिरिति न ङिः। पाणिनिः ३।३।९७।

‡ अत्र, सूत्रे भावे इति नोक्ता वृत्तौ भावे इति व्याख्यानात् प्रयोगानुसारेण

## ११५१। कृ: श च। (कृ: ५।, श: १।, च ।१।)।

करोते: श: स्यात् क्यप् च, भावे, सच स्त्रियां। क्रिया, कृत्या।*

## ११५२। सृ-जागृ र्य:। (सृ-जागृ: ५।, य: १।)।

आभ्यां य: स्यात् भावे, सच स्त्रियां। परिसर्य्या जागर्य्या। †

## ११५३। शंस्त्यादः। (शंस् त्यात् ५।, अ: १।)।

आभ्याम: स्यात् भावे, सच स्त्रियां। प्रशंसा, दिद्दृक्षा अटाटा कण्डूया। ‡

---

कर्त्तृभिन्ने कारकेऽपि स्यात्, यथा, शेतेऽस्यामिति अधिकरणे शय्या खट्टादि:, शयनमिति भावे वा, क्यप्, (८३५) शीङो ङय्, स्त्रीत्वात् (२४९) आप्। व्रजनं व्रज्या। यजनं इज्या, (६६१) जि। विदन्त्यनया इति करणवाच्ये विद्या, वेदनं (ज्ञानं) इति वा। सवनं (यजनं) सुत्या, (९८२) तन्। आसनं आस्या। मन्यतेऽनया मन्या (पश्चाद्ग्रीवाशिरा), मननमिति वा। चरणं (आचरणं) चर्य्या। भरणं (पोषणं) भृत्या। अट-यङ्, अटाट्यधातो: क्यप्, (७७५) हसाल्लोप इति क्रमश: अकार-यकारयोर्लोप: अटाट्या मुहुर्भ्रमणं। एति अनया, अयनं वा, इत्या। समजन्ति (सङ्गच्छन्ते) अस्यामिति समज्या, सभा, समजनमिति वा। (५८६) क्यप्वर्जनात् न वी-आदेश:। निपतन्त्यस्यामिति निपत्या, पिच्छिला भूमि:। निषीदन्त्यस्यामिति निषद्या, क्रयविक्रय-भूमि:। पाणिनि: ३।३।९८,९९ वार्त्तिकञ्च।

* श इत् र-संज्ञ:, अकार-स्थिति:। कृ-अ:, (भाववाच्ये) (९२१) र-तनोरिति यक्, (६२०) ऋत रि:, स्त्रियामाप्, क्रिया। क्यपि च, गुणाभावे, (९८२) तन्, कृत्या। अत्र चकारेण क्तेरपि समुच्चयात् कृति: इति च। पाणिनि: ३।३।१००।

† परिसरणं परिसर्य्या, परिपूर्व्वस्यैव प्रयोग:। जागरणं जागर्य्या। वार्त्तिकम्।

‡ शन्स च त्यश्चेति शंस्त्यं तस्मात्। त्य: प्रत्ययान्त:। प्रशंसनं प्रशंसा। दृश-सन्, (१५४) षङ् (६०२) षस्य क:, दिदृक्ष धातो: अ-प्रत्यय:, (५४३) पूर्व्वाकार-लोप:, दिदृक्षा। एवं चिकित्सा इत्यादि। अटाटा इति अट-यङ्, अटाट्यधातो:

**११५४। सेमक्तात् सरोः।** (सेमक्तात् ५।, सरोः ५।)।

यस्मात् क्तो विहितः सेम् स सेमक्तः, तस्मात् रुमतो धोः अः स्यात् भावे, स च स्त्रियां। ईहा जागरा। सेमक्तात् किं, नीतिः राद्धिः। रुमतः किं, पक्तिः। *

**११५५। तुलेच्छारा तारा धारा कारा हारा गोधा लेखा रेखा चूडाः।** (१॥)।

एते अान्ता निपात्यन्ते। चोदना चूडा। †

**११५६। भौषि चिन्ति पूजि कथि कुम्बि चर्चि स्पृहि तोलि दोलि षिद् भिदाद्यात्वर्घटादेः ङः।** (भौषि—आत्वर् घटादेः ५।, ङः १।)।

---

अः, (७७५) अकार-यकारयो लोपः। कण्डूया इति कण्डूशब्दात् (८५४) क्यः, कण्डूय धातोः अः। अचः परत्वात् (७७५) न अकार-यकार-लोपः। एवं ऋतीया गोपाया इत्यादि। पाणिनिः ३।३।१०२। "शंसिप्रत्ययादः" इति कातन्त्रे कृत्सु पञ्चमे पादे।

* इमा सह वर्त्तते यः स सेम्, सेम् क्तो यस्मात् स सेमक्तस्तस्मात्। सेमक्तात् गुर्व्वक्षरयुक्तात् धातोः अः स्यादित्यर्थः। ईहनं ईहा, जागरणं जागरा। क्ते कृते ईहितं जागरितं। नयनं, नीयते ऽनया इति वा, नीतिः; राधनं राद्धि। क्ते कृते नीतं राद्धं। पक्तिरिति पच-क्तिः, क्ते पतितमिति। पाणिनि. ३।३।१०३, वार्त्तिकञ्च।

† तुल धातोः, तोलयत्यनया तुला परिमाणदण्डः। इष धातो-रिच्छा। ऋ—आरा क्षुरिका। तॄ—तारा नक्षत्रं, उद्धारकारिणी भगवती च। धृ—धारा, द्रवद्रव्यपतनं, वृक्षादिपतनं, खड्गादि निशितस्थलं, समूहः, प्रकारश्च। कॄ—कारा बन्धनालयः। हृ—हारा हरणं, हारश्च। गुध—गोधा अङ्गुलित्रं, गोधिका च। लिख—लेखा लिखनं, लकारस्य रेफे रेखा च, श्रेणी। चुट—चूडा, चोदना प्रेरणा इत्यर्थः। पाणिनिः ३।३।१०१,१०४। तुलाशब्दस्तु पृथक् सिद्धः।

एभ्यो भावे: ङः स्यात्, सच स्त्रियां ।
भीषा चिन्ता पूजा कथा कुम्बा चर्चा स्पृहा तोला दोला, पचा, भिदा छिदा गुहा विदा चिपा जना पीड़ा सरा वसा रुजा, घटा व्यथा त्वरा । *

## ११५७। आतो ऽन्तःश्रद्‌गे: ।

(आत: ५।, अन्तर्-श्रत्-गे: ५।) ।

एभ्य: परादादन्तात् ङः स्यात्, सच स्त्रियां । अन्तर्द्धा श्रद्धा, संज्ञा प्रमा । †

## ११५८। भी-षि अन्थि ग्रन्थि वेत्ति वन्दासो ऽनः ।

(षि—आस: ५।, अन: १।) ।

एभ्यो ऽनः स्यात् सच स्त्रियां ।

---

* ष इत् यस्य स षित् । भिद आदि र्यस्य स भिदादिः । आत्वर् त्वरपर्य्यन्तः, स चासौ घटादिश्चेति आत्वर्घटादिः । ततः, भीषिश्च चिन्तिश्चेत्यादि द्वन्द्वे तस्मात् । भीष्यादि दोलि-पर्य्यन्ता नव ज्ञान्ता: । षित् गणपाठे मूर्द्धन्यषकारेत् धातुः । भिदादि गंणः । ङ इत्यस्य ङ इत्, अकारस्थिति । भी-ञि, भीषि—ङः, (६४१) ञिलोपः, (२४९) आप्, भीषा । एवं चिन्ता इत्यादि । पचा इति डु ञी ष् पच पाके, षित्त्वात् ङः । एवं मज्जा चमा इत्यादि । भिदादि र्यथा, भिदा छिदा गुहा विदा चिपा एषु ङित्त्वात् न गुणः । जना इति (२३०) हनगमेत्यत्र ङवर्जनात् न उङ्-लोपः । सरा इति (६१९) इग्नोरिति गुणः । आत्वर् घटादि र्यथा, घटा व्यथा त्वरा । एवं ज॒ जरा, प्रथ प्रथा, त्रप त्रपा, लज्ज लज्जा, मेध मेधा, वप वपा, क्रप क्रपा इत्यादय: । पाणिनि: ३।३।१०४,१०५ । भीषि इत्यारभ्य दोलि इत्यत: सर्व्वं क्रमिकं कातन्त्रम् ।

† अन्तर्धानं अन्तर्द्धा, एवं श्रद्धा, श्रत् इत्यव्ययं । संज्ञायतेऽनया संज्ञा नाम । प्रमीयतेऽनया प्रमाणमिति वा प्रमा । एषु (६१०) उस्येचीति आ-लोपे, स्त्रीत्वादाप् । पाणिनि: ३।३।१०६, वार्त्तिकञ्च ।

कारणा ईषणा अन्थना ग्रन्थना वेदना वन्दना आसना। *

## ११५९। प्रश्नाख्याने णिः। (प्रश्न-आख्याने ७।, णिः १।)।

प्रश्ने आख्याने च धो र्णिः स्यात्, सच स्त्रियां। कां कारिमकार्षीः, सर्व्वां कारिमकार्षं। †

## ११६०। नञो ऽन्याक्रोशे स्त्री।

(नञः ५।, अनि ।१।, आक्रोशे ७।, स्त्री ।१।)।

नञः परात् धो रनिः स्यात्, आक्रोशे, सच स्त्रियां। अजीवनिस्तव भूयात्, अप्रयाणिः। ‡

## ११६१। ईषत्-दुःसोः खल् भावे ढे।

(ईषत्-दुर्-सोः ५।, खल् ।१।, भावे ७।, ढे ७।)।

एभ्यः परात् धोः खल् स्यात् भावे ढे च। ईषदाढ्यम्भवं भवता, दुराढ्यम्भवं भवता। ईषत्करः कट-स्त्वया, दुष्करः सुकरः। §

---

* ञि अन्तः, ञिश्व ईषिश्चेत्यादि द्वन्द्वः। कारि—अनः कारणा इत्यादि। एषु (६४१) ञेर्लोपः। पाणिनिः ३।३।१०७, वार्त्तिकञ्च। "इषेरनिच्छार्थस्य" इति वार्त्तिके तु इषधातौ अन्वयणा। कातन्त्रे तु ईषिधातुर्निर्लिखितः।

† णि इत्यस्य ण इत् वृद्ध्यर्थं, इ-स्थितिः। कृ-णि, (५७७) वृद्धिः, कारिः कार्य्यमित्यर्थः, अकार्षीः त्वमिति प्रश्नः; अकार्षं अहमिति शेषः। प्रश्ने, आख्याने (उत्तरदाने) च उदाहरणद्वयं। पाणिनिः ३।३।११०। एतन्मते विभाषा। विभाषाग्रहणात् पक्षे यथाप्राप्तं प्रत्यया भवन्ति, क्रियां कृत्यां कृतिं वा।

‡ अ-जीव-अनिः अजीवनिः, अ-प्र-या अनिः अप्रयाणिः (६६८) नोऽच इति णत्वं। स्त्र्यधिकारेऽपि स्त्रीग्रहणं स्त्र्यधिकारनिवृत्त्यर्थं। आक्रोशे किं, अकृतिस्तस्य घटस्य। पाणिनिः ३।३।११२।

§ खलः ख-लौ इतौ, अकारस्थितिः। एषामव्ययत्वात् (१०१४) खित्कार्य्याभावेऽपि, ईषत्दुःसोः परात् धातोः खल्विधानसामर्थ्यात् आढ्यादिशब्दव्यवधानेऽपि

## ११६२ । आतोऽनोऽदरिद्रः ।

(आतः ५।, अनः १।, अदरिद्रः ५।) ।

दरिद्रावर्जादादन्ता-दीषद्दुःसोः परात् अनः स्यात् भावे ढे च । ईषत्पानः दुष्पानः सुपानः । अदरिद्रः किं, ईषद्दरिद्रं । *

## ११६३ । दृश शास युध धृष मृषो वा ।

(दृश—मृषः ५।, वा ।१।) ।

ईषत् दुः सोः परेभ्य एभ्यो ऽनः स्यात् भावे ढे च वा । सुदर्शनः सुदर्शः, दुःशासनः दुःशासः, दुर्य्योधनः दुर्य्योधः, सुधर्षणः सुधर्षः, ईषन्मर्षणः ईषन्मर्षः । †

## ११६४ । तादर्थ्ये चतुम् । (तादर्थ्ये ७।, चतुम् ।१।) ।

धो-श्चतुम् स्यात् तादर्थ्ये । कृष्णं द्रष्टुं याति । ‡

---

स्यादिति, तेन, ईषदाढ्येन भूयते इति वाक्ये ईषदाढ्यशब्दात् भूधातो र्भावे खल्, गुणः, खित्त्वात् आढ्यस्य मन् ईषदाढ्यम्भवं, एवं दुराढ्यम्भवं । ईषत् क्रियतेऽसौ ईषत्करः, एवं दुःखेन क्रियतेऽसौ, सुखेन क्रियतेऽसौ, एषु अव्ययत्वात् न मन् । पाणिनिः ३।३।१२६ ।

* ईषत् पीयते ऽसौ, दुःखेन पीयते ऽसौ, सुखेन पीयते ऽसौ, एषु कर्म्मणि अनः । ईषत् दरिद्रायते इति पूर्व्वेण भावे खल्, (७०२) दरिद्र आलोपः। पाणिनिः ३।३।१२८ ।

† सुखेन दृश्यते ऽसौ, अनः सुदर्शनः, पक्षे खल सुदर्शः । दुःखेन शिष्यतेऽसौ दुःशासनः दुःशासः । दुःखेन युध्यते ऽसौ दुर्य्योधनः दुर्य्योधः । एवं सुखेन धृष्यते ऽसौ, ईषत् मृष्यते ऽसौ । वार्त्तिकम् । एतन्मते नित्यम् । कातन्त्रमते विभाषा ।

‡ स धात्वर्थः, स चासौ अर्थः प्रयोजनश्चेति तदर्थः, तस्य भावस्तादर्थ्यं तस्मिन् । यस्य धातोरर्थः अन्य-धात्वर्थस्य प्रयोजनं भवति तस्मात् धातोः चतुम् स्यात्, च इत् अव्ययं, तुम्-स्थितिः । अत्र भावे वाच्ये भविष्यत्काले चेति बोध्यं । द्रष्टुमिति दृश-तुम्, (६०४) ऋकारस्य र, (१५७) षत्व, (४७) तस्थाने ट । अत्र दृश धातोरर्थः या-धात्वर्थस्य प्रयोजनं । क्रिययोरेककर्तृत्वे सत्येव चतुम् स्यात्, तेन विप्रं भोक्तुं निमन्त्रयते इति न स्यात्, भोजनाय निमन्त्रयते इत्येव स्यात् । पाणिनिः ३।३।१५८ ।

## ११६५ । क्वाच् वा निषेधे ऽलं-खलुना ।

(क्वाच् ।१।, वा ।१।, निषेधे ७।, अलं-खलुना ३।) ।

निषेधार्थयोरलं-खल्वोर्योगे धोः क्वाच् स्याद्वा भावे ।
अलं दत्त्वा अलं दानेन, खलु पीत्वा खलु पानेन । *

## ११६६ । पूर्व्वकाले । (७।)

पूर्व्वस्मिन् काले स्थितात् धोः क्वाच् स्यात् । विष्णुं नत्वा स्तौति । †

## ११६७ । न कित् स्कन्दस्यन्दः ।

(न ।१।, कित् ।१।, स्कन्द-स्यन्दः ५।) ।

स्कन्त्वा स्यन्त्वा । ‡

---

* क्वाच् अकारोऽव्ययार्थः, क इत् गुणाभावः, त्वा-स्थितिः । अलं दत्त्वा दानं निषिद्धमित्यर्थः, (१०८८) दा स्थाने दत्-आदेशः, पक्षे दानेन (२८९) सहवारणेनेति तृतीया। खलु पीत्वा, पानं निषिद्धमित्यर्थः (६१२) दामा इति ङी। पाणिनिः ३।४।१८ ।

† यदा कर्त्ता क्रियाद्वयं क्रियात्रयं वा करोति तदा परक्रियापेक्षया पूर्व्वस्मिन् काले वर्त्तमानात् धातोः भावे क्वाच् स्यादित्यर्थः । विष्णुं नत्वा स्तौतीति स्तुति-क्रियायाः पूर्व्वकाले वर्त्तमानात् नम-धातोः क्वाच, (६७६) अमलोपः । नमति च स्तौति च इत्यादौ समकालत्वात् न स्यात् । अत्रापि क्रियाणा-मेककर्त्तृत्वे एव क्वाच् स्यादिति । पुत्रं दृष्ट्वा सुखं भवतीत्यादौ तु स्थितस्येत्यध्याहारादेककर्त्तृत्वं । भ्रमन्-क्रत्य पतति, मुखं व्यादाय स्वपिति इत्यादौ तु पूर्व्वकालविवक्षयेति वक्तव्यं । पाणिनिः ३।४।२१ ।

‡ आभ्यां परः क्वाच् किन्न स्यात् । क्वाचः कित्त्वनिषेधस्य फलं (५६७) इमुङ्न इति नलोपाभावः । स्कन्त्वा इति औदित्त्वादिम् निषेधः, स्यन्त्वा इति ऊदित्त्वादिमो विकल्पपक्षे उदाहरणं । उभयत्र चथो यत्रैकवर्गीया मध्यमस्तत्र लुप्यते इति द-लोपः । एताभ्यां क्वाच एव कित्त्वनिषेधः, क्वाच-स्थानजातस्य यपस्तु कित्त्वमेवेति, तेन प्रस्कद्य प्रस्यद्य । पाणिनिः ६।४।३१ ।

**११६८। सेमऽक्षुध कुष क्लिश गुध मृड मृद वद वस ग्रहः।** (सेम् ।१।, अक्षुध — ग्रहः ५।)।

धोः पर इम्सहितः क्त्वाच् किन्न स्यात्, नतु क्षुधादेः। शयित्वा। सेम् किं, श्रुत्वा। क्षुधादेः किं, क्षुधित्वा। *

**११६९। तृष मृष कृष वञ्च लुञ्चृतो वा।** (तृष— ऋतः ५।, वा ।१।)।

एभ्यः सेम् क्त्वाच् किन्न स्याद्वा। तर्षित्वा मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा। पक्षे तृषित्वा इत्यादयः। †

**११७०। थफान्नुङः।** (थ-फात् ५।, नुङः ५।)।

नकारोङ्स्थान्तात् फान्ताच्च सेम् क्त्वाच् किन्न स्याद्वा। श्रन्थित्वा श्रथित्वा, ग्रन्थित्वा ग्रथित्वा, गुम्फित्वा गुफित्वा। नुङः किं, कोथित्वा रेफित्वा। ‡

---

* सह इमा वर्त्तते योऽसौ सेम्, क्त्वाच् इत्यस्य विशेषणं। शयित्वा इति शी त्वा, (५५४) वसोरस्येतीम्, किन्त्वनिषेधात् (५४२) गुणः, (२५) एस्थाने अय। क्षुधित्वा इति, एवं कुषित्वा क्लिशित्वा गुधित्वा मृडित्वा मृदित्वा उदित्वा उषित्वा गृहीत्वा। एषु क्षुधित्वा उषित्वा उभयत्र (१०६६) क्षुधवसेतीम्। क्लिशित्वा इति ऊदित्त्वात् (५७३) इम्पक्षे प्रयोगः। अन्येषु (५५४) वसोरस्येतीम। उदित्वा उषित्वा गृहीत्वा इति (६६१) जिः। गृहीत्वा इति (७७१) इमोदीर्घः। पाणिनिः १।२।१८,७,८। क्षोधित्वापीति भट्टोजि दीक्षितः।

† ऋत इति ऋत धातुः। तर्षित्वा इत्यादिषु (५५४) वसोरस्येतीम्, किन्त्वाभाव-पक्षे यथासम्भवं गुणः नलोपाभावश्च, किन्त्वपक्षे तु गुणाभावो नलोपश्च। पाणिनिः १।२।२४,२५। एतस्मते कृषः तालव्यान्तः।

‡ येन विधिस्तदन्तस्येति न्यायात् थान्तात् फान्तादिति। श्रन्थित्वेत्यादि सर्व्वत्र (५५४) वसोरस्येतीम्। किन्त्वाभाव-पक्षे नलोपाभावः, किन्त्वपक्षे (५६७) नलोपः। कोथित्वा रेफित्वा इति (११६८) सेमऽक्षुधेति किन्त्वनिषेध, गुणः। पाणिनिः १।२।२३।

## ११७१। नश्-ओऽनिमः। (नश्-अ: ५।, अनिम: ५।)।

नशो जान्ताच्च ठुओऽनिमः परः क्त्वाच् किन्न स्यात्। नष्ट्वा नंष्ट्वा भक्त्वा भङ्क्त्वा। अनिमः किं, अञ्जित्वा। *

(८१८) व्युओऽवो हसादेरिति। द्युतित्वा द्योतित्वा, लिखित्वा लेखित्वा। रुदादेस्तु रुदित्वा विदित्वा मुषित्वा। अवः किं, देवित्वा। हसादेः किं, एषित्वा ओषित्वा। †

## ११७२। पूक्लिश्युदित इम्। (पू-क्लिश-उदित: ५।, इम्।१।)।

एभ्यः क्त्वाच इम् स्यात्। पवित्वा पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा। ‡

## ११७३। क्रमो घौ वा। (क्रम: ६।, घ: १।, वा।१।)।

---

* नश् च ज चेति तस्मात्। नष्ट्वा इति, नश लृ य् नाशे ऊदित्वात् (५७३) इमोऽभावपक्षे (७४१) नुण् रध इति नुण्, कित्पक्षे (५६७) न-लोपे, (१५४) षङ्, (४७) तस्थाने ट। अकित्पक्षे नस्यानुस्वार: नंष्ट्वा इति। भक्त्वा इति, भन्ज धौ मोटने, औदित्वादिमोऽभावे, कित्पक्षे न-लोपे, (२११) कुङ्, अकित्पक्षे (५०,५१) नस्यानुस्वार:, तस्य च ङ्। अञ्जित्वा इति ऊदित्वात् (५७३) इम्, (११६८) सेमऽसुधेति किन्त्वनिषेधे, नस्यानुस्वारे, तस्य च ञ। अनिम्पक्षे तु अक्त्वा अङ्क्त्वा इति। पाणिनि: ६।४।३२।

† व्युओऽवो हसादेरित्यस्योदाहरणमाह, द्युतित्वेत्यादि (५५४) वसोऽरस्येतीम्। देवित्वा इति दिव्‌ु क्रीड़ायां उदित्वात् (११७२) पूक्लिशुदित इति वा इम्, (११६८) नित्यकित्त्वाभावे गुण:। अनिम्पक्षे (८१४) द्यूत्वा इति। एषित्वा ओषित्वा इति ऊदित्वादनयोरपि वेमत्वादिम्पक्षे नित्य-कित्त्वाभाव:। पाणिनि: १।२।२६।

‡ (१०५३) वृदुश्रीत्यनेन कित इम्-निषेधादप्राप्तौ विकल्पार्थं पू इत्यस्य ग्रहणं, पवित्वा (११६८) सेमऽसुधेति कित्त्वनिषेधात् गुण:। तत्रैव क्लिशवर्जनात् क्लिशित्वेत्यत्र न गुण:। शान्त्वा इति (१०३८) अमुङ इति दीर्घ:, मस्यानुस्वारस्तस्य च नकार:। पाणिनि: ७।२।५०,५१,५६।

क्रमित्वा, क्रान्त्वा क्रन्त्वा । *

११७४ । जृव्रश्चो न जिः । (जृ-व्रश्च: ६।, न ।१।, जि: १।)।

आभ्यां क्त्वाच इम् स्यात्, नतु व्रश्चे जिः । जरित्वा व्रश्चित्वा । †

११७५ । हाको हिः । (हाक: ६।, हि: १।) ।

हित्वा । ‡

११७६ । व्यादनञः क्त्वो यप् से ।

(व्यात् ५।, अनञ: ५।, क्त्व: ६।, यप् ।१।, से ७।) ।

नञ्वर्जात् व्यात् परात् धोः क्त्वो यप् स्यात् से सति । प्रकर्षेण कृत्वा प्रकृत्य, प्रवत्य प्रतत्य प्रहत्य, उदज्य, प्रदाय प्रमाय प्रगाय प्रहाय प्रपाय प्रस्थाय । §

---

* क्रमो घं: स्याद्वा क्त्वाचि । क्रमित्वा इति उदित्त्वात् पूक्लिशुदित इति इम्, विकल्पपक्षे अनेन वा दीर्घः । पाणिनि: ६।४।१८ ।

† विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यता । जरित्वा इति (१०५३) ऋदुशीति इम्-निषेधेऽपि, अनेन इम, (११६८) सेमऽसुधेति कित्त्वनिषेधात् गुणः । (६२७) वृतो वेमोर्घ इति वा इमो दीर्घत्वे जरीत्वा इत्यपि । व्रश्चित्वा इति ऊदित्त्वेन वेमत्वेऽपि अनेन नित्यमिम् । सेम्क्त्वाचः कित्त्वनिषेधादेव जेरप्राप्तौ अत्र जेर्निषेधः प्रव्रश्च्य इति क्त्वाचो यपि जिनिषेधार्थः । पाणिनि: ७।२।५५ ।

‡ हाको हिः स्यात् । हाकः किं, हाङ इत्यस्य हात्वा । पाणिनि: ७।४।४३ ।

§ नास्ति नञ् यत्र सोऽनञ् तस्मात्, व्यात् इत्यस्य विशेषणं । प्रकर्षेण कृत्वा इति (५४८) व्यस्य ग्यनुकारेति समासे, अनेन क्त्वाचो यपि, क्त्वाचः स्थानित्त्वेन कित्त्वात् गुणाभावे, (६८२) ह्रस्य तन्, प्रकृत्य । प्र-वन प्रवत्य, प्र-तन प्रतत्य, प्र-हन प्रहत्य, एषु (६७६) अमलोपे, ह्रस्य तन् । उद्-अन्च (५६७) हसुङ् न इति न-लोपे उदज्य । दा इत्यस्य प्रदाय, मा इत्यस्य प्रमाय, गै प्रगाय, हा-क प्रहाय, पा पाने प्रपाय, स्था प्रस्थाय, एषु (६१२) दामागै इत्यत्र यप्वर्जनात् न ङी । पाणिनि: ७।१।३७ ।

(७४३) दीङ्स्ग्रामिति यपि ङा, प्रदाय। (७४५) मिम्यो-रिति ङा, प्रमाय, प्रलाय प्रलीय। *

## ११७७। म्लोपो वानिमः।

(म्-लोपः १।, वा।१।, अनिमः ६।)।

अनिमो मस्य लोपः स्याद्वा यपि। प्रणत्य प्रणम्य। अनिमः किं, प्रशम्य। †

## ११७८। घो ञेरयः। (घोः ५।, ञेः ६।, अयः १।)।

घु-पूर्व्वस्य ञेरयः स्यात् यपि। विगणय्य। घोः किं, सम्प्रधार्य्य ।‡

## ११७९। वापः। (वा।१।, आपः ५।)।

आपः परस्य ञेरयः स्याद्वा यपि। प्रापय्य प्राप्य। §

## ११८०। वा मेच्यो मिच्यौ।

(वा।१।, मे-च्यो. ६॥, मि च्यौ १॥)।

मेङो मिः चेः ची स्याद्वा यपि। अपमित्य अपमाय, प्रचीय प्रचित्य। ¶

---

* ओदौ ङ य नयं, ङा प्रदाय। डु मिञ न चंपे, मी ङ् य त्, मी ञ ग वधे एषां ङा प्रमाय। ली इत्यस्य विकल्पे ङा प्रलाय प्रलीय इति। अनञः किं, न कृत्वा अकृत्वा। से किं, सर्पादि कृत्वा इत्यादौ न यप्।

† प्र-नम, क्काचौ यपि अनेन मलोपे, स्वस्य तन् प्रणत्य, पक्षे प्रणम्य, (५४६) णत्वं। एवं आगत्य आगम्य इत्यादि। प्रशम्य इति सेमत्वात् न मलोपः, एवं विक्रम्य आक्रम्य इत्यादि। निर्जित्य आहृत्य विधृत्य इत्यादौ आगमविधेर्बलवत्त्वात् आदौ स्वस्य तन्, सुतरां (५६०) घोँऽज्य्यरे इति न दीर्घावकाशः। पाणिनिः ६।४।३८।

‡ लघोरव्यवहित-परस्थितस्य ञे रसम्भवात् हस्व्यवधाने इत्यर्थः। वि-गणि इति ञान्तात् क्काचौ यपि, अनेन ञेः स्थाने अय, विगणय्य, एवं विघटय्य इत्यादि। सं-प्र-धारि इति ञान्तात् यपि, धा इति गुर्व्वक्षरपूर्व्वत्वात् ञेरयाभावे, ञेर्लोपे संप्रधार्य्य, एवं विभाव्य विनाश्य इत्यादि। पाणिनि. ६।४।५६।

§ प्र-आपि-यप्, प्रापय्य प्राप्य इति, गुरुपूर्व्वत्वादप्राप्तौ, विभाषा। पाणिनिः ६।४।५७।

¶ पुनर्वाग्रहणं व्याधिकार निवृत्त्यर्थं। अपमित्य इति मे स्थाने मि आदेशे, स्वस्य

## ११८१। न वे-ज्या-व्यो जिः।

(न ।१।, वे-ज्या-व्यः ६।, जिः १।)।

एषां जि र्न स्यात् यपि। प्रवाय प्रज्याय प्रव्याय। *

## ११८२। सं-परि-व्यो वा। (सं-परि-व्यः ६।, वा ।१।)।

आभ्यां व्येञो जि र्वा स्यात् यपि। संवीय संव्याय, परिवीय परिव्याय। †

## ११८३। णमु वाभीक्ष्ण्ये पूर्व्वकाले।

(णमु ।१।, वा ।१।, आभीक्ष्ण्ये ७।, पूर्व्वकाले ७।)।

धोः पूर्व्वकाले णमु स्याद्वा पौनःपुन्ये। स्मृत्वा स्मृत्वा नमसि, स्मारं स्मारं नमसि। ‡

---

तन्; पक्षे (६०८) एचोऽश्यिया इति अयमाय। क्षिधातोः ची इति दीर्घान्तादेशे प्रचीय, पक्षे स्वस्य तनि प्रचित्य। पाणिनि ६।४।५९,७०।

* वे ञ तन्तुसन्ताने, ज्या गि जरायां, व्ये ञ वृतौ, एषां (६६१) ग्रहस्वपाद्योरिति प्राप्तौ जि र्न स्यात् यपि। पाणिनि: ६।१।४१-४३।

† सं-परि-पूर्व्वस्य व्ये ञ वृतौ इत्यस्य जि र्वा स्यात यपि। संवीय परिवीय उभयत्र जौ कृते, (१०३६) जिर्घोऽन्त्य इति दीर्घः। पाणिनि: ६।१।४४।

‡ अभीक्ष्णं मुहुरर्थ-मव्ययं, तस्य भाव आभीक्ष्ण्यं तस्मिन्। अत्रापि क्रिययोरेककर्तृकत्वे सतीति बोध्यं। स्मृत्वा स्मृत्वा नमसि, पक्षे स्मारं स्मारं नमसि। स्मृ-णमु, ण इत् अव्ययं, ण इत् (५७७) वृद्धिः, अम इत्यस्य स्थितिः। आभीक्ष्ण्यार्थे द्वित्वं वक्तव्य (पा. ८।१।४)। क्वचिदाभीक्ष्ण्याभिन्नेऽपि णमु भवति यथा, चौर इति कृत्वा इति चौरङ्कारमाक्रोशति (पा. ३।४।२५), स्वादुङ्कारं भुङ्क्ते (पा ३।४।२६), मूलकोपदंशं भुङ्क्ते (पा. ३।४।४७); एवङ्कारं, कथङ्कारं, अन्यथाकारं (पा. ३।४।२७); यथाकारं, तथाकारं (पा. ३।४।२८)। क्वचिच्च णमन्तस्यायंभावो भवति यथा, समूलघातं हन्ति जीवग्राहं गृह्णाति (पा ३।४।३६), चूर्णपेषं पिनष्टि (पा. ३।४।३५), विद्युत्प्रणाशं नश्यति (पा. ३।४।४५) इत्यादि। पाणिनि: ३।४।२२-६४।

कृतो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
कृद्गोः कभाव इत्युक्ति-रन्यत्रापि प्रयोगतः ॥
तथाच । कृत्तद्धितसमासाना-मभिधानं नियामकम् ।
लक्षणन्त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥ *

## ११८४ । बहुलं ब्रह्मणि । (बहुलं १।, ब्रह्मणि ७।) ।

यदिदं लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिकप्रयोगव्युत्पत्तौ बहुलं ज्ञेयं । क्वचित् विहितं न स्यात् (१), क्वचित् निषिद्धं स्यात् (२), क्वचित् वा स्यात्, क्वचित् ततोऽन्यदपि स्यादित्यर्थः । यथा,—पूर्व्वेभिः (१), ब्राह्मणास् (२), इत्यादौ वेदसिद्धेः । † 'ब्रह्म' शब्दोऽत्र मङ्गलार्थः ।

इति इण्वादि-पादः ।

कृदन्ताध्यायः ।

समाप्तम् ।

---

* कृदन्तप्रकरणं समाप्य ग्रन्थकृत् न्यूनता-परिहारार्थमाह—कृतो ये इति । ये कृतः यत्र येष्वर्थेषु विहिताः, ते तत्र तेष्वर्थेषु नूनं निश्चितं भवन्ति । प्रयोगतः महाकविप्रयोगानुसारेण अन्यत्रापि स्युः । तत्र हेतुमाह (९६५) कृद्गोः कभावे इत्युक्तिरिति । तथाच, प्राहुः इति शेषः । कृतां तद्धितानां समासानाञ्च, अभिधानं प्राचीनः शब्दकोष एव नियामकं, यस्मिन्नर्थे यस्मिन् लिङ्गे च यत् भवति तन्नियमकारकं । व्याकरणलक्षणन्तु अनभिज्ञानां प्रसिद्धप्रमाणमजानतां तदभिज्ञानस्य सूचकं प्रकाशकमित्यर्थः ।

† ब्रह्मणि वेदे, बहुलं—बहवः (प्रकाराः) सन्त्यस्य, चूडादित्वात् (४४६) लः, अथवा बहून् प्रकारान् लाति गृह्णातीति बहुलं, आदन्तत्वात् (९९७) डः । सामान्यत्वात् नपुंसकं । एतत् व्याकरणं लौकिकप्रयोग-साधनाय, वैदिकप्रयोग-साधनार्थन्तु प्रकारान्तरमपि स्यादित्यर्थः, तथाहि क्वचिदित्यादि । पूर्व्वेभिरित्यत्र, भिसः स्थाने ऐस् (१०६) विहितमपि न जातं । ब्राह्मणास इत्यत्र, सस्थाने विसर्गः (१०२) विहितोऽपि निषिद्ध इति । वेदसिद्धेरिति हेतौ पञ्चमी । पाणिनिः २।४।३९, ७३, ७६ ; ३।१।८८ ; ५।२।१२२ ; ६।१।३४ ; ७।१।८, १०, १०३ ; ७।३।९७ ; ७।४।७८ ।

# परिशिष्ट-पञ्चम् ।

## लिङ्गानुशासनम् ।

(११४७) सूत्रोक्त-स्त्रीलिङ्गसूचनामवलम्ब्य अत्र प्रचलितानां कतिपय-कृत्तद्धित-समास-प्रत्ययान्तानामेव लिङ्गनिर्द्देशः क्रियते ।

(९६७ सूत्रस्य टीका द्रष्टव्या ।)

### कृदन्त-पुंलिङ्गाः—

(११३४) घञन्ताः *, (११३४) अलन्ताः*, (११४४) नङन्ताः †, (११४५-११४६) कि-प्रत्ययान्ताः ‡, (१११३) रु-प्रत्ययान्ताः §, (११४२) अथु-प्रत्ययान्ताः, (१०००-१००१) घ-प्रत्ययान्ताः ।

### तद्धित-पुंलिङ्गाः—

(४७५) इमन्-प्रत्ययान्ताः ¶ ।

### समास-पुंलिङ्गाः—

(३६२) रात्रान्ताः, (३५३) अहान्ताः ‖, (३५४) अह्नान्ताः ।

### कृदन्त-स्त्रीलिङ्गाः—

(११४७-११४९) क्ति-प्रत्ययान्ताः, (११५०) भावविहितक्यप्प्रत्ययान्ताः*, (११५२) भावविहित-यप्रत्ययान्ताः †, (११५३-११५५) अप्रत्ययान्ताः, (११५६-११५७) ङ-प्रत्ययान्ताः, (११४१) यन्-प्रत्ययान्ताः, (११५८) अन-प्रत्ययान्ताः ‡, (११५९) णि-प्रत्ययान्ताः, (११६०) अनि-प्रत्ययान्ताः ।

### तद्धित-स्त्रीलिङ्गाः—

(४३८) त-प्रत्ययान्ताः, (४४९) सूत्रोक्ताः कतिपये— (तद्धित-नपुंसक-लिङ्गाः द्रष्टव्याः) ।

### समास-स्त्रीलिङ्गाः—

(३८९) अप्रत्ययान्त-धुरशब्दान्ताः ।

---

* घञन्ताः अलन्ताश्च भावार्थे एव पुंलिङ्गाः, अन्यार्थे तु विशेष्यलिङ्गा अपि भवन्ति। अलन्तेषु—भयं वर्षं पदं सुखं नपुंसकम् ।

† याञ्चा—स्त्री ।

‡ इषुधिः—पुमान्, स्त्री च ।

§ दारु (काष्ठं), जतु—नपुंसकम् ।

¶ प्रेम—नपुंसकमपि ।

‖ पुण्याहं—नपुंसकम् ।

* (९८१-९८७) सूत्रोक्तक्यबन्ताः प्रायेण कर्म्मविहिताः कर्तृविहिता वा दृश्यन्ते, भावविहितास्तु नपुंसकलिङ्गाः ।

† (९६७-९६९, ९७६-९८०) सूत्रोक्त-यान्ताः प्रायेण कारक-विहिताः, भाव-विहितास्तु नपुंसकलिङ्गाः ।

‡ (११६२-११६३) कर्म्मविहितान-प्रत्ययान्तास्तु विशेष्यलिङ्गाः ।

### कृदन्त-नपुंसकलिङ्गाः—

(११३४-११३६) अनट्-प्रत्ययान्ताः *, (११३२) इत्र-प्रत्ययान्ताः, (१०५०) भावविहित-क्तप्रत्ययान्ताः ।

### तद्धित-नपुंसकलिङ्गाः—

(४३३) भावार्थ-समूहार्थ-प्रत्ययान्ताः †, (४३८) त्व-प्रत्ययान्ताः, (४६०-४६१) तयट्-अयट्-प्रत्ययान्ताः *, (४६२) तैल-आद्यन्ताः, (४८३) आकट-आकिन-प्रत्ययान्ताः ।

### समास-नपुंसकलिङ्गाः—

(३२२) समाहार-द्वन्द्वनिष्पन्नाः, (३२२) समाहार-द्विगुनिष्पन्नाः †, (३२२) अव्ययीभावनिष्पन्नाः, (३८५) अप्रत्ययान्त-पुरुषद्वान्ताः ।

* भावविहिता एव बोध्याः । कारकविहितास्तु प्रायेण विशेष्यलिङ्गाः ।

† (४४६) जनता, बन्धुता, खलिनी, हलिनी, गोत्रा, रथकट्या—स्त्रीलिङ्गाः । वातूलस्तु पुंलिङ्गः ।

* स्त्रीलिङ्गा अपि भवन्ति ।

† (३६६) अकारान्त-भिन्नाः, पात्रादीनि तु नपुंसकानि एव । (३७०,३७१) सूत्रयोस्तु स्त्रीलिङ्गा नपुंसकलिङ्गाश्च ।

---

## उणादयः ।

(१००७) सूत्रोक्त-सङ्केतमाश्रित्य कतिपये प्रचलिताः उणादि-प्रत्ययान्ताः लिख्यन्ते ।

### अ

अङ्गच्—कुर-कुरङ्गः, तृ-तरङ्गः, मृद-मृदङ्गः, लु-लवङ्गः, सृ-सारङ्गः ।

अटन्—कनक-कङ्कटः, कप-कपटः, कृ-करटः, कर्क-कर्कटः, कृप-कर्पटः, मर्क-मर्कटः, शक शकटः, सृ-सरटः ।

अठ—कम-कमठः, जृ-जरठः ।

अण्डन्—कृ-करण्डः, वृ-वरण्डः ।

अत्—पृष-पृषत्, मह-महत्, वह-वहत् ।

अति—वस-वसतिः, हन-अंहतिः ।

अत्रन्—अम अमत्रं, गड-कलत्रं, नक्ष-नक्षत्रं, पत-पतत्रं, वृ-वरत्रा ।

अत्रिन्—पत-पतत्रिः ।

अथन्—श्रप-श्रपथः, आ-वस-आवसथः ।

अद—शृ-शरत्, दृ-दृषत् ।

अनि—ऋ-अरणिः, अव-अवनिः, अश-अशनिः, आ-शुष-सन्-आशुशुक्षणिः, यह-यहणिः, तृ-तरणिः, धम-धमनिः, धृ-धरणिः, अन्ज-रजनिः, सृ-सरणिः ।

अन्ति—अव-अवन्तिः, किंवद-किंवदन्तिः ।

अन्य—ऋ-अरण्यं, पृष-पर्जन्यः ।

अप—सृ-सर्षपः ।

अभच्—ऋष-ऋषभः, कृ-करभः, कल-कलभः, गर्द्द-गर्द्दभः, रास-रासभः,

वल्ल-वल्लभः, वृष-वृषभः, शृ-शरभः, शल-शलभः ।
अम—अध-अधमः, कर्द्द-कर्द्दमः, कल-कलमः, चर-चरमः, प्रथ-प्रथमः ।
अम्बच्—कड़-कड़म्बः, कद-कदम्बः, स्था-स्तम्बः ।
अयु, अयू—सृ-सरयुः, सरयूः ।
अरन्—कृ-भरं, कु-कवरः, चम-चमरः, जन-जठरं, जर्ज-जर्जरं, झर्झ-झर्झरः, दिव-देवरः, भम-भमरः, वस-जि-वासरः ।
अरु—ऋ-अरुः ।
अल—तृ-तरलः, मन्ग-मङ्गलं, सृ-सरलः ।
अलि—अन्ज-अञ्जलिः ।
अवक—स्था-स्तवकः ।
असच्—चम-चमसः, तम-तमसं, नभ-नभसं, पन-पनसः, यु-यवसः, रभ-रभसः, वे-वेतसः ।

### आ

आ—नि कष-निकषा, सम्-इ-समया ।
आक—तड़-तड़ाकः, तड़ागः, पत-पताका, पा-पिनाकः, बल-बलाका, शल-शलाका ।
आनक—भी-भयानकः ।
आनुक्—कृश-कृशानुः ।
आन्य—वद-वदान्यः ।
आर—भङ्ग-भङ्गारः, कड़-कड़ारः भृ-भृङ्गारः, मन्द-मन्दारः, मृज-मार्जारः ।
आलञ्—पत-पातालं, चण्ड-चण्डालः ।

### इ

इज—वण-वणिज् ।
इतन्—रुह-रोहितः, हृ-हरितः ।
इत्—तड़-तड़ित्, युष-योषित्, सृ-सरित्, हृ-हरित् ।
इथिन्—अत-अतिथिः ।
इन—अज-अजिनं, दृ-दरिणः, कठ-कठिनः, कुण्ड-कुण्डिनः, तुह-तुहिनं, दक्ष-दक्षिणः, द्रु-द्रविणं, मल-मलिनं, पुल-पुलिनं, मल-मलिनः, वेप-विपिनं, रुह-रोहिणः, श्यै-श्येनः ।
इल—अन-अनिलः, कप-कपिलः, कुक-कोकिलः, कुट-कुटिलः, मन्थ-मिथिला, मह-महिला, सल-सलिलं ।

### ई

ई—अव-अवीः, तन्त्र-तन्त्रीः, तृ-तरीः, लक्ष-लक्ष्मीः, वात-प्र-मा-वातप्रमीः ।
ईकन्—अन-अनीकं, अल-अलीकं, इष-इषीका, वल-वलीकं, ऋष ऋषीकं ।
ईचि—मृ-मरीचिः, वे-वीचिः ।
ईरन्—कट-कटीरं, कृ-करीरः, पट-पटीरं, शृ-शरीरं, शौट-शौटीरः ।
ईषन्—अम्ब-अम्बरीषं, कृ-करीषं, पृ-पुरीषं, शृ-शिरीषं ।

### उ

उ—अण-अणुः उन्द-इन्दुः, इष-इषुः, कट-कटुः, स्कन्द-कन्दुः, गड़-गडुः, चर-चरुः, जन-जनुः, जन-जतु, जन-दनुः, तन-तनुः, तृ-तरुः, त्सर-त्सरुः, धन-धनुः, नि-अन्च-न्यङ्कुः, पट-पटुः, फल-फल्गुः बन्ध-बन्धुः, भृ-भरुः, मन-मधु, मन-मनुः, मृ-मरुः, मस्ज-मद्गुः, सृज-रज्जुः, वट-वटुः, वल-वल्गुः, वस-वसुः, विद-विन्दुः, शृ-शरुः, शी-शिशुः, स्यन्द सिन्धु, हन-हनुः ।
उण्—अश-आशु, कृ-कारुः, वा-वायुः, स्वद-स्वादुः ।
उत्—गृ-गरुत्, मृ-मरुत् ।

उन, उनि, उन्न, उन्नि—शक-शकुनः, शकुनिः, शकुन्नः, शकुन्निः ।

उनन्—कृ-करुणः, अर्ज-अर्जुनः, कृ-करुणः, तृ-तरुणः, दृ-जि-दारुणः, पिश-पिशुनः, मिथ-मिथुनं, वृ-वरुणः ।

उसक्—कुस-कुसुमम् ।

उम्भक्—कुस-कुसुम्भम् ।

उर—अनक-अङ्कुरः, कर्ब-कर्बुरः, चत-चतुरः, दृ-दर्दुरः, बन्ध-बन्धुरः, मन्थ-मथुरा, मद-मद्गुरः, मन्द-मन्दुरा, मनक-मुकुरः, आशु-अश-श्वशुरः ।

उल—चट-चटुलः, तनड-तण्डुलः ।

उलि—अनग-अङ्गुलिः ।

उश—अनक-अङ्कुशः ।

उषन्—कल-कलुषं, नह-नहुषः, पृ-परुषः ।

## ऊ

ऊ—चम-चमूः, जन-जनूः, तन-तनूः, दरिद्रा-दर्द्रूः, बन्ध-बधूः, वह-वधूः ।

ऊक—वल-उलूकः, भल्ल-भल्लूकः, मनड-मण्डूकः, शम-शम्बूकः, बन्ध-बन्धूकं ।

ऊख—मय-मयूखः ।

ऊथन्—वृ-वरूथः ।

ऊम—गुध-गोधूमः ।

ऊर—क्रप-कर्पूरं, खर्ज-खर्जूरः, मि-मयूरः, स्यन्द-सिन्दूरं ।

ऊल—लनग-लाङ्गूलं ।

ऊषन्—गड़-गण्डूषः, पीय-पीयूषं, मसज-मञ्जूषा ।

## ऋ

ऋ—दिव-देवा, न-मन्द-नन(ना)न्दा, सव्ये स्था-सव्येष्ठा, सु-अस स्वसा ।

ऋत्—शक-शकृत् ।

## ए

एनु—क्र-करेणुः ।

एन्य—वृ-वरेण्यः ।

एरक्—कठ-कठेरः ।

## ओ

ओरन्—कठ कठोरः, किम्-शृ किशोरः, चक-चकोरः ।

ओल—कप-कपोलः, पट-पटोलः ।

## क

क—कल-कल्कः, कै काकः, नि-सद-निष्कः, रा-राका, वल-वल्कं, शल-शल्कं ।

कक्—उष-उल्का, सुष-सुष्कः, शुभ शुकः ।

कन्—इ एकः, भी भेकः ।

कण—चित-चिक्कणः ।

कतु—क्र क्रतुः ।

कन—कृ-किरणः, धृष धिषणः ।

कनस—वश-उशनाः ।

कनिन्—तक्ष-तक्षा, यु-युवा, राज-राजा ।

कन्यन्—हृ-हिरण्यं । [कुणपः ।

कपन्—उल-उलपं, विट-विटपः, क्रण-

कयन्—तन-तनयः, मल-मलयः, वल-वलयं, हृ-हृदयं ।

करन्—पुष-पुष्करं, शृ-शर्करा ।

कल—कम-कम्बलं, कु, कम-कोमलः, चुप-चपलः, कौ कुगलः, पल-पललं, मुष-मुषलं, लनग-लाङ्गलं, वल-वल्कलं, वृष-वृषलः, शक-शकलः, शप-शबलः ।

कालन्—कप-कपालः, कुल-कुलालः, तम-तमालः, पनच-पञ्चालः, पल-पलालः, पीय पियालः, मृण-मृणालः, बिड-बिडालः, विश-विशालः ।

किकन्—मुष-मूषिकः, व्रश्च-वृश्चिकः ।

कित—वच-उचितः ।

किन्द—पुल-पुलिन्दः।

किर—अज-अजिरं, इष-इषिरः, खद-खदिरः, खिद-खिदिरः, छिद-छिदिरः, तिम-तिमिरं, बन्ध-बधिरः, भिद-भिदिरं, मद-मदिरा, मन्द-मन्दिरं, मिह-मिहिरः, मुद-मुदिरः, रुच-रुचिरः, रुध-रुधिरं, शी शिविरं, शश-शिशिरः, शुष-शुषिरः, स्था-स्थविरः, स्था-स्थिरः, स्फाय-स्फिरः।

किष्यन्—भुज-भुजिष्यः।

कीटन्—कृ-किरीटं, क्रप-क्रपीटं।

कु—अम-अम्बुः, ऊर्णु-उरुः,ऊरुः, ऋज-ऋजुः, कृ-कुरुः, खन-खरुः, गॄ-गुरुः, दृश-पशुः, पन्श-पांशुः, पॄ-पुरुः, प्रथ-पृथुः, बन्ह-बहुः, भ्रस्ज-भृगुः, मृद-मृदुः, रन्घ-रघुः, लन्घ-लघुः, व्यध-विधुः।

कुषन्—पुर-पुरुषः।

कू—अन्द-अन्दूः, जन,जम-जम्बूः, दिधि-षो-दिधिषूः, दृभ-दृन्भः।

क्त—चि-चित्तं, मिद-मित्तं।

क्थन्—अव-भृ-अवभृथः, काश-काष्ठं, कुष-कुष्ठं, रम-रथः।

क्थिन्—अस-अस्थि, सन्ज-सक्थि।

क्न—तृह-तृणं।

क्मलन्—कुट-कुट्मलं।

क्रन्—कु-कुररः।

क्रि—भू-भूरिः, सू-सूरिः।

क्रु—रु-रुरुः।

क्वन्—लिह-जिह्वा, विश-विश्वं।

क्सि—कुष-कुक्षिः।

क्सु—इष-इक्षुः।

क्स—क्षत-क्षतस्‍सं, तिज-तीक्ष्णः, श्लिष-श्लक्ष्णः।

## ख

ख—मुह-मूर्खः, शम-शङ्खः, शी-शिखा।

## ग

गक्—छो-छागः, पू-पूगः, भृ-भृङ्गः, मुद-मुद्गः, शृ-शृङ्गं, सिट-सिङ्गः।

गन्—खड-खड्गः, गम-गङ्गा, गॄ-गर्गः।

## च

चट्—सिव-सूची।

## ञ

ञुण्—किं-शृ किंशारुः, कृक वच कृकवाकुः, चट चाटु, चर-चारु, जरा-इ-जरायुः, जन-जानुः, तॄ-तालु, दॄ-दारु, सन-सानुः।

## ट

टिषच्—अम-आमिषं, किल-किल्बिषं, मह-महिषः।

## ठ

ठ—कण-कण्ठः।

## ड

ड—अम-अण्डं, कण-काण्डं, खन-खण्डं, गम-गण्डः, दम-दण्डः, पण-पण्डः, मन-मण्डः, रम-रण्डा, षन-षण्डः।

डउ—तन-तितउः।

डक्—गु-गुउः।

डति—पा-पतिः।

डवतु—भा-भवान्।

डिम्—की-किम्।

डुत—अत-भू-अद्भुतं।

डुन्—अ-श्रि अश्रु, श्मन्-श्रि-श्मश्रु।

डुमस्—पा पुमान्।

डू—भ्रम-भ्रूः।

डृ—नी-ना।

डै—रा-राः।

डैस्—उद्-चि उच्चैः, नि-चि-नीचैः।

डौ—गम-गौः, द्युत-द्यौः ।
डोस्—दम-दोः ।
डौ—ग्लै-ग्लौः, नुद-नौः ।
ड्ट्—स्त्यै-स्त्री ।
ड्रि—तृ-त्रयः ।

ठ

ढ—सम-षण्ढः ।

ण

णित्रम्—चर-चारित्रं ।
णु—अज-वेणुः, स्था-स्थाणुः ।
ण्य—धृष-धिष्ण्या ।

त

तकन्—अश-अष्टका ।
तकक्—इष-इष्टका ।
तन्—अम-अन्तः, इ एतः, गृ-गर्त्तः, तुस-तूर्त्तं, दम-दन्तः, धुर्व्व-धूर्त्तः, पू पीतः, मृ-मर्त्तः, हस-हस्तः ।
तनन्—पत-पतनं, अज-वेतनं ।
ति—अग,अस अगस्तिः, भज-भर्ह गभस्तिः, पद-पत्तिः, वस-वस्तिः, वि-तस-वितस्तिः,शाम-शास्तिः, सु-अस-स्वस्ति।
तिक—कृत-कृत्तिका, वृत-वर्त्तिका ।
तुक्—ऋ-ऋतुः ।
तुण्—वस-वास्तुः ।
तुन्—अव-ओतुः, चाय-केतु, क्रुश-क्रोष्टा, मन-मन्तुः, जै जातु, तन-तन्तु, धा-धातुः, मन-मन्तुः, मस-मस्तु या-यातुः, वस-वस्तु, शच-शक्तुः, सि-सेतुः, हि-हेतुः ।
तृच्—जाया-मा-जामाता, दुह-दुहिता, पा पिता, भाज-भ्राता, मान-माता ।
त्युक्—मृ-मृत्युः ।
त्रिप्—अद-अत्रिः, रा-रात्रिः ।

थ

थक्—वच-उकथं, उद्-गै-उद्गीथं, गू-गूथं, तॄ-तीर्थः, तुद तुत्थं, नि शी-निशीथः, पृष-पृष्ठं, यु यूथं, रिच-रिक्थं, सिच-सिक्थं ।
थण्—सृ-सार्थः ।
थन्—ऋ-अर्थः, उष-ओष्ठः, कुष-कोष्ठः, गै-गाथा, प्रु-प्रोथः, पु-प्रोथः ।

द

द—अव-अब्दं, कम कन्दं, कु कुन्दं, वृण-वृन्दं, श्री श्राद्धः ।

ध

धुक्—शी-शीधु ।

न

न—ऋ-अर्णः, कॄ,कॄ-कर्णः, द्रु-द्रोणः, धा-धानः, रम जि रत्नं, सू-सूना, सि-सेना, स्था स्थूणा ।
नक्—इ-इनः, उष-उष्णः, कृष कृष्णः, जि जिन, तृष तृष्णा, स्फाय-फेनः, बन्ध-बुध्नः,ब्रध्नः, मी मीनः, वी-वीणा, सि-सिनः ।
नण—रस-रास्ना, सस-सास्ना ।
नि—अग,अनग-अग्निः, द्रु-द्रोणिः, स्पृश-पृश्निः,यु-योनिः,वह-वह्निः, श्रि श्रेणिः।
निक्—वृष वृष्णिः, सृ सृणिः ।
नु—भा-भानुः, धे-धेनुः, भा-भानुः ।
नुक्—विष विष्णु, सू-सूनुः ।

प

प—तल-तल्पं, पा-पापं, बाध,बा-बाष्पः, वास्पः, शस शष्प, शॄ शूर्पः ।
पक्—कु-कूपः, नी नीपः, पू-पूपः, यु-यूपः, शिल-शिल्पं, सू-पूपः, स्तु-स्तूपः ।
पास—कृ कर्पासः ।

फ

फक्—गल-गुल्फ: ।

भ

भ—ऋ-ऋभं:, गृ-गर्भ:, दृ-दर्भ: ।

भक्—इ-इभ. ।

म

म—अव-ओम, वि-घेमं, ग्रस-ग्राम:, घृ-घर्म्म, हा-जिह्म:, धृ-धर्म्म:, नी-नेम:, पद-पद्मं, भा-भाम:, या-याम:, वा-वाम:, सू-सोम:, हु-होम: ।

मक्—इन्ध-इध्मं, ईर-ईर्म्मं, सु-सुमा, ग्रस-ग्रीष्म:, तिज-तिग्म:, धु-धुम:, भी-भीम:, भीष्म:, युज-युग्मं, रुच-रुक्मं, श्यै-श्याम. ।

मट्—अस-अश्मं, युष-त्वं, शुष-सुषं ।

मि—ऋ-ऊर्म्मि, नी-नेमि:, अश-रश्मि: ।

मिक्—भू-भूमि: ।

मुक—उष-उल्मुकं ।

य

य—कन-कन्या, छो-छाया, जन-जाया, जन्यं, पू-पुण्यं, मा-माया, सस-सस्यं ।

यु—जन-जन्यु:, दस-दस्यु:, मन-मन्यु: ।

र

र—अम-अम्र:, अस-अस्रं, अर्द्द-आर्द्र:, इन्द-इन्द्र:, तम-ताम्रं, दस-दस्रौ भी-भेल:, मद-मद्र:, मन्द-मन्द्र:, वज-वज्रं, वप-वप्र:, विप्र:, अज-वीरं, शक-शक्र:, स्फाय-स्फार: ।

रक्—अञ्च-अर्ग्य, इ-इरा, उष-उग्र:, उन्द-उद्र:, वस-उस्र:, कृत-कृच्छ्रं, क्रूर:, क्षिप-क्षिप्र:, क्षुद-क्षुद्र:, क्षुर-क्षुर:, खुर-खुर:, गृध गृध्र:, चन्द-चन्द्र:, चि-चीरं, छिद छिद्रं, तक-तक्रं, दम्भ-दभ्र:, दुर्-दूरं, नी-नीरं, भन्द भद्र:, मुद-मुद्रा, रुद-रुद्र:, वञ्क-वक्र:, वृत-वृत्र:, शुच-शुक्र:, शूद्र:, शुभ-शुभ्र:, श्वित-श्वित्रं, सि-सीर:, सु-सुर:, सू-सूर: ।

रि—अङ्घ-अङ्घ्रि:, अद-अद्रि:, भी-भेरि: ।

रु—अश-अश्रु, जन-जत्रु, मि-मेरु: ।

ल

लक्—शी शीलं, शुच-शुक्ल: ।

व

व—अश-अश्व:, खट-खट्वा, कण-कण्व:, ग-ग्रीवा, नी-निम्ब:, प्र-ह्वा प्रह्व:, वी-विम्बं, शी-शिव:, ऋस-ह्रस्व: ।

वल—इल-इल्वल:, पल-पल्वल: ।

वलञ्, वालञ्—शी-शैवलं, शैवालं ।

वालन्—चत-चत्वाल: ।

वि—दृ-दर्वि: ।

श

शुन्, शुन्—स्पृश-पर्शु:, पार्श्व: ।

ष

षिवन्—प्रथ-पृथिवी ।

ष्ट्रन्—उष-उष्ट्र:, वृध-वर्ष्ट्र, शस-शस्त्रं ।

ष्वरच्—गाह-गाह्वरं, चत-चत्वरं, चि-चीवरं, तृ-तीवर:, धा-धीवर:, प्ये-पीवर:, ह-वर्व्वर:, शृ-शर्व्वरी ।

स

स—उन्द-उत्स:, कम-कंस:, कष-कक्ष:, मन-मास, वद-वत्स:, हन-हंस: ।

सक्—ऋष-ऋक्ष:, वृश-वृक्ष:, सु-क्षुषा ।

सरक्—कृ-कृसर:, धृ-धूसर: ।

सरन्—मद-मत्सर:, वस-वत्सर: ।

स्मन्—सूच-सूक्ष्म: ।

स्नन्—मद-मत्स्न: ।

सूत्राङ्कः ।

इ

इगुड्मंढौस्थनिम् किद्गमस्तु वा ६५९
इङोऽरलेङ् णः ८
इणस्तन् लोप्यः ६४४
इतोऽस्य जाते ४९४
इत् क्रते ४
इदमोऽयमियं पुंस्त्रियोः सौ २०३
इन्वदिकः ६८५

ई

ईप् चामवस्यात् २५३
ईषत्-दुःसोः खल्भावे ढे ११६१

उ

उच्चरः सढात् ९०६
उञ् णपात्स्वचि व वा ४३
उतोऽयुङ् रज्ज्वादे नृप्राणि- २७७
उदः सः स्थास्तम्भोः २४७
उदोऽनूर्द्धे ५७०
उप-यमौ विवाहे ९०९
उपात् स्तुतौ ९७८
उस्येचीम्यणवराचि लोपः ६१०
उहस्युङ् २४०

ऊ

ऊर्ध्वंशौवं पदशौवं धिम्बनजुहो- २२४

ऋ

ऋकाक् ४५
ऋचः ३९०
ऋच्छौ णश्यां ७५२
ऋण प्र वसन वत्सर वत्सतर दश- ३०
ऋतो ङा ततपुत्रे सगोत्रविद्ये चे २२१
ऋतो ङी डुः १४१
ऋद्रिः शयक्-ढीपे ६२०
ऋद्रो ये ४३४

सूत्राङ्कः ।

ॠ

ॠतौ णः कित्-ध्या ६२६
ॠदिरणावुर्लोष्ठ्यात् ६२८

ए

एङोऽतः ३८
एङ् टाङ्यामि २१९
एचो युत् स्वं १७३
एचोऽशित्याः ६०८
एरौ ग्वे २३६
एवेऽनियोगे २७

ओ

ओं नमः शिवाय १
ओदौतोऽव्वत् तद्धय-क्यङ्याः ४२३
ओरौ घौ १४५
ओर्लोपोऽकद्रुपास्तोरिये ४२०

क

क × पौ$\varpi$ मूर्न्यौ २०
कखपफयोर्मूर्न्यौ ६८
कति यति तति यावत्तावदेतावत्- ५०८
कल्कवौ चाग्न्युषे ४१२
कत् क्वचिन्निरथवदे ४०८
कथमा खौ चं वा ९४१
कदाकर्हिभ्यां वा ९३६
कभावेऽमी ११३५
कम ऋतौ गुपूधूपपणपनो- ५९१
कम्याम्राधेङ्बुधयुधप्रद्रुस्रुजननशो- ८६१
कर्म्मक्रियाविशेषणाभिनिविशाधिशोङ्-१८१
कल्याणी सुभगा दुर्भगा बन्धकी- ४२१
कव्यायनेकाचोऽस्यादद्धन्- १२६
कांस्काम् नृः पि वा ५६
काचे ४०९
काप्यनाशीरकेऽदिदर्शनत्- २५४

सूत्राङ्कः।
कामुकमण्डार्थकेन १०६
कामांर्क्कऽकचिति ६५२
काम्यांयण्योः सम्प्रत्ययादी- ४६८
कालभाण्डे वा २८०
कालभावाधारं डं मौ ३०६
किकिलास्त्ययोभ्यां तौ ६४४
किंयत्तदेकान्यात् द्विबहुमामेक- ५१०
कित् ठौ ढौपं ५२२
कित्तिजगुपः सन्नम् मान भ्राव- ६३०
किमः क्वत्वात् चिचनौ ५२६
किमः चेपे ४०५
किमन्यपत्तदोर्हिर्थ ५१५
किमेव्याद्याद्रव्ये चतरां चतमां ४६५
किभिः खौत्यौ ६४२
किभिलिप्सायां ६३७
किर्दोऽन्त्यगेः ११४५
कौ खौ गौ घौ टौ ठौ डौ ढौ- ५२८
कौ-प-म-वत् ब्रतयाबौ ११००
कीर्त्तः कृतः ७७४
कौखेनातौते ६३४
कुः प्रच ११५१
कुत्स्यामोदरात् भुः खिः १०१३
कुञ्जादेर्णायन्यो ऽस्त्रीष्वे ऽपत्ये ४२७
कुटां ण्ञ्ञौ ञ्णिति ७५५
कुतः क कुह कुचेतो ऽतो ऽत्रेह- ५२४
कुण्डादेरीपि १४८
कुक्कलोपो त्र्ये ७६५
कुषि-रञ्जः श्यन्-पि वारि ६२८
कूलादुद्रुजुबहः १०२०
कृञो ऽर्थौ रे ६८६
कृञोः क-भावे ६६५
कृपः कृपो ऽकृपादो ६४६
कृविधिभ्योः कृधौ ग्नौ ७४८
कृ छप मन गुह दुह भ्रनस संस- ६८३
कृपमभ्रसम्मलपहपस्तपः सिघ्नां वा ६०२
कृगृञागुः किः ११११
कृगृ प्राप्रीणुवः कौ —दृषौ- ६६६
कृगृज्याम्याहालादेर्निः ११४८
कंऽकः खौ ह तु वा ४३७
कोकादिः पुंवत् यजातीय- ३५०
कोरीषदर्थे ४११
कोष्णवा ८२५
कौटग्रामात् तक्षः ३५६
क-क्तवत् भूवे ढभावे दौ १०५०
क्तादल्पे २६७
क्तिः स्त्रवे ११४७
क्नादेः ३१२
क्तेर्लक् त्ये च ३१६
क्यन्ताम्यौ दलो १४
क्राच् वा निषिधेऽलं-खलुना ११६५
क्यङ्ञ्चौ चानात्यपत्यणास्त्र २५६
क्योऽभव्याद्द यत्र ८४३
क्रमः पेऽपि घः ५६५
क्रम क्लम भ्रम भास भ्रास चम- ५६४
क्रम गम खम सम लबो विट् १०५०
क्रमो र्घा वा ११७२
क्रोञोडोऽञा चित्तुर- ७६३
क्रुकुको भियः १११७
क्रोऽपाठ्पर्य्यवासेच्छे- ८६७
क्रोष्टोस्तवस्त्रभो घो स्त्रियाञ्च ११६
क्लीबात् स्मोऽधिभ्योऽतः १६०
क्लीबाद यीः १६१
क्लीबाद्दा ३८३
क्लीबे नौ लुब्बा धौ २४२
क्लीबे ह्रः १६७
क्वचन्यान्येकद्विबहुष्वेकमः १२

सूत्राङ्क:।

क्लिलात् क्लीऽसात् स: षोऽदान्ते- १११
क्षिप वस ग्रथ धृष: क्त: ११०९
क्षुद्रागोधाभ्यो वैरारौ ४२२
क्षुध वस पूजार्थात्यागाद्यर्थे- १०६६
क्षुभ्न बाढ़ स्वान्त ध्वान्त फाण्ट- १०७५
क्षेत्रे शाकटशाकिनौ ४६३
क्षेम-प्रिय-मद्रात् कृत्वा १०२२
क्षेपोऽढे भावदैन्याक्रोशे तु वा १०५९
क्षौगुण्यचो मकथ: १०६३
क्ष्णरप् स्त्रीभ्रग्रगमस्त मथ ११२१

ख

खनसनजनां ङा भसे ये तु वा ६५५
खनादेरे ये ९६६
खनो ड-डरेकेकवका: ११३९
खपि वा ७४
खश्रेजि: १०१५
खार्य्या वा ३६५
खित्यव्यात्मघो मनस्खौ १०१४
खे: किति घं: ९८३
खे: सन्यहौ, घोर्हसादेर्घश्च- ६१९
खेराद्यचो लोप्योऽनुग्रस- ५६४
खेर्णु: ८२२
खेर्गोरियुवर्णे ५८५
खेर्हो घी अघिनि च ६०९
ख्यक्षेत् सनि ६४०
ख्या या युस्-यामामीयुस्रीयम् ५४६

ग

गच्छ मच्छ गि सनि मन्दिभ्योऽन्त:११२९
गत्यर्थमन्यढे चेष्टावशे ऽनध्वाकाक- २६८
गत्यर्थाद्योऽक्षाम वम नम- १०९१
गत्यर्थाद् गृ लुप सद चर जप- ८२१
गद-मद-यम-चराभ्यो ऽभे यं १०९

गमीनिङो: ८०६
गमोऽमे स दृम मार्द्रान्तु वा ६२४
गर्गयस्कविदादिभ्यश्चि- ४२८
गर्भेषोपक-पादहारकौ ढे ९९१
गवादि: सोऽस्मि गौणेऽनीयस: ३३०
गा ध्यां ६८२
गोक: क्त शुभ सौ सुवास्नान्त-सुस्नां- ५७१
गोकृष्ठ्यो र्व्वा ७१२
गी चेच्चार्थे: ६५३
गुणादिमन् भावे ४७५
गुणाद्धिसयसू ४६६
गुणाद्दीर्घोऽसंवस्योड: २६४
गुह दुह दिह लिह्रां टीमदन्ते- ६५७
गुहो णीरु: ६५६
गृह्य विनीय विपूय जित्या मृय्य- ९८४
गेरध्वन: ३९९
गेरुह: खो ये ऽणो ८७७
गेर्धोर्नेभिन एङ-ऋकौ: २४
गेर्व्वाश्रोहो ढे च ८७६
गैक्यादतो ऽपाचादेरोप् ३६९
गोपानटयकौ १००३
गो हण मेधा दन्त काष्ठ- ४४६
गोरताथे ३६३
गोर्व्वा ३९
ग्यचस्त वा १०८९
ग्यर्थाग्रसयो: ९३९
ग्रहनन्दिपचादे र्णिननान् चे ९९३
ग्रहस्यपप्रच्छां किः ८०८
ग्रहस्वपाद्यो: कड़ित-कितौ किं: ६६१
ग्रहेरिमो वो ऽस्यां ७०१
ग्रोरल: ८२४
ग्ला म्ला ध्या द्वि पच परिमृज: सु: ११०८

सूत्राङ्कः ।

## घ

घञलनटी ऽघे ११२४
घटादि जनी जृष क्नस रञ्जाम- ७९८
घटी-खारी वाताद विश्वबलिभा- १०१९
घनस्यर्गे ध्यौ नि: १०५५
घसखद: क्मर: १११४
घस्नामूर्त्तटात् ८९०
घसलद: सन्ध्यलघञि ९७३
घान्नुक्री सत्तोपश्च वा- ८४८
घावस्वसृतयो: १४३
घोटीघोषम् धीश्मा ५५०
घे चादिंडे त्त: १०९२
घे पं परानु-क्र—प्रत्यभ्यति-क्षिप- ८९०
घे ध्रप् रे ५४१
घोऽञी ञे: ग्रन्द्राग्रगतिग्राथोढ- २८४
घो ञेरय: ११७८
घौ त्रि: १२८
घ्यणी-रावश्यके ९७०
घ्यां ७१७
घ्यां दी त घ्र: ७०१
घ्यां ञ्रो र वा दघो: ९९०
घ्राघोर्ङौ ८१४
घ्रो वा ७८६

## ङ

ङस्येङो लोप: १२४
ङा ञौ वा २०१
ङाम् वा घ्यां ग्याग्नु क्रनु ९८७
ङितां यम् १५१
ङिद्दपिद्र: ५३२
ङिदिम् वोर्णो: ७२१
ङेघ्योर्म: २१६

सूत्राङ्कः ।

## च

चक्रतम् वारे ४८४
चच: कशाज् ख्याञ् ऽरे- ७०६
चगैक्यवं क्लीवं ३२१
चजो: कगौ घित्यसेमक्त- ९७२
चणम् वाभीक्ष्ण्ये पूर्व्वकाले ११८३
चतु:षड्-ड्ति-कतिपयात् थट् ४५५
चपोदिताकानिता र्ण: ७
चपौ ऽबे जक् ५८
चरट् भूतपूर्व्वे ४८०
चरफलोऽदु: १०८७
चरफलोरद्घोङी न णु: ८२९
चादिर्गिर्नि: १६
चाय: की ८३३
चिक्लिद चक्नस चराचर चलाचल- ९९४
चिवि त्ययदिना ९४७
चिहिकारे वा ७९७
चुर्घ्या जिघ्रा ७७३
चे: किर्व्वा सन्व्यो: ७४६
चे लषि वा ८८
चैकाद्युदयघो ऽ: ३२१
च्वुङ् कुङ् युङ् सग्- २११
च्वत सप्तम्ये ४४०
च्वि: क्रभ्वस्त्वभूततद्भावे- ४९५

## छ

छादिस्त्रमन्-त्रीस-वे ख: १०१५
छाघोर्व्वा १०८४
छिद-भिद-विद: कुर: १११६
छो ऽच: ९१
छ्वी: शूटावणौ जसत्रौ- ८१४

## ज

जघो ऽदी यपि च १०९१

सूत्राङ्क:।

जम-खलादि गो रथ-वातात्- ४४९
जमवध: सेमनो ऽकमवमाचमी- ७४४
जयल्पो: ख्योर्य्ये ८१६
जरस जराचि तु ११५
जरातोऽम् वा १६६
जराया जरस् च ३७९
जश्शसो: शि: १६२
जह्योधिश्राधि ह्न्यस्ति- ६७७
जागृ यङन्त-यजजपवददन्श- १११७
जाग्रो ऽषव्वीण्ङिति क्सुकाने- ६९९
जातमहद्वृद्धादुक्ष्ण: ३५७
जातेरतो ऽस्त्री-युङ्-सत्काण्ड- २९३
जातु-यद्-यदा-यदिभि: खी ९४५
जाल्वपिभ्यां सदा चेपे ९४०
जिं वान्त्य: किति ६९६
जिघ्रोऽन्त्य: १०३६
जिनं वा ८३९
जुश्वो नु जि: ११७४
जेर्गि: सन्ञ्यो: ६००
ज्ञपर्द्धापामीर्य्य: ८१२
ज्ञानयत्नप्रलोभे वद: ९००
ज्ञानार्थात्चेपोपनयन- ८८९
ज्ञाप्तीच्छार्थ जीच्छीलादे: सति १०४५
ज्ञोऽज्ञाने धे २०२
ज्योति र्जनपद रात्रि नाभि बन्धु- ४१३
ज्यो त्वर्थयस्त्रा: ४७२
ज्वल ह्वल ह्मल ग्ला स्ना वन रम- ७९९

झ

झप्झषो: स्सझषोषप्जवावन्ते च ६४
झपनदीपौर्णमास्याग्रहायणीगिरेर्वा ३८४
झभखघढधंकृणां जब्चप्- ५५९
झभान्तस्यादिजबां झभा: फे, धोस्तु- १७७
झसखात् झसीन ईमि से लोप: ५६२

सूत्राङ्क:।

ञ

ञपे ञम् नो: ५१
ञपांऽक् समोर्ण ञक् च ६
ञम ञप ञभ दह दनश भञ्ज- ८२७
ञमुञो झयणो चानिकि १०३८
ञमे ञम् वा ५९
ञि: कल्यादे: ८५८
ञि: प्रेरणे ७७७
ञिस् ञान्त-पिब-धे नृहद वस- ९१९
ञि भाज भू सह रुच चर वध- ११०६
ञि श्रि स्रु द्रु कमो ऽङ् घे ख्यां ६१३
ञिस्लो: ख: स: ष: षण्युश्वित्- ८१९
ञीमंश डिन्नैकाच: ४६७
ञी-षि श्रन्थि ग्रन्थि वेत्ति वन्दासी- ११५८
ञेढे ऽञौ घे ८९९
ञे लोपोऽनाल्विणाद्यान्ते- ६४१
ञ्णित्यन्त्यिजुङती: ५७७
ञ्ञ्युङ: स्वोऽनग्लोपि शास्वृदित: ६२८

ट

टादसश्चास्त्रियान्तु ना १२३
टाभिस् ङे ङसि ङसोसा- १०६
टी ठी ढी धी ढिच: सेमस्तु- ५५७
टेरासौ १९७
टे लोपो डिति विंशते-स्तिखडौ १२६
टोसीदसोऽनको ऽन: २०५
ट्या सि: ५५१
ट्वितोऽथुभावे ११४२

ठ

ठी-प-म-वत् क्सुकानो १०९६
ड्यां गा ञाङ्सनोस्तु वा ७१३
ड्यां च वे-प्रच्छां ६६२
ड्या वा ६७४, ७०७

सूत्राङ्कः ।

## ड

डतिसङ्ख्याणो नमष्टमोर्लुक् १३१
डमन्तो धौ वा १८६
डाज् लोहितादिः पञ्च ८५०
ड्वितस्त्रि त्रिमक् ११४३

## ढ

ढधि कात् णीककणणीनेया- ४२६
ढधि क्षत्यन्यकुकक्षत्रतुखलर्थ- ३०५
ढडोपमानादाचारे क्यः ८४७
ढभात् तथो र्धोऽधः ५७५
ढ भावे लं ६९०
ढवद् ढघौ ऽढे ६९७
ढाङ्डे ११४६
ढात् भज-वह-सहो विण् १०२८
ढात् षण् १००६
ढेनार्थात् ३११
ढेनाम्निषि वा २६६
ण्याम्निषि ६६०
ढ्रौढ्रि घंषानुः ७७

## ण

णचखसाद्यनो रडीप् वा तु हे २६१
णप्यर्ले वा ५७८
णवातो डौः ६०६
णमितोऽन्त्याचोऽल्लेऽन्त्यसादौ १७
णित्ते त्रिरादयः सुभग-सुपथालाद्यौल्लु-४१६
णुकसख्यां ६६८
णुर्धुङ्घाकङिति ५४१
णुर्ङिध्योः १४१
णुर्धिनमङ्क्तिस्तु १२२
णुधौ वा १७०
णुर्नानिमि ८०४
णूर्बन्निध्यां ७१८

सूत्राङ्कः ।

## त

त-तज-खादीयो ङ्गोभोः १३८
तदो दानीं वा ५१६
तद्योगे वा ६०१
तनृधः शुप् रे घे १८८
तन्वादेर्वा १७६
तपोढात् यक् च रे ८८२
तमान्वयाद्रङ्गः २६७
तमट् षष्ठ्यादेः ४५२
तरतमौ द्विबहूनामेकोत्कर्षे ४६२
त लोप्योऽनष्टिस्त्रितौ द्विस्वर्लो वा ५०२
तव्यानीयया ढ-भावे ६६७
तस ङ्गोः ५११
तादर्थ्ये चतुम् ११६४
तार्थे मानात् काष्ठात्खचेने ३७१
तिर्य्यगमुमुयगदमुयगुदचा तिरश्चा- २२५
ती-प-म-वत् स्वठ-समान्ते ११०५
तीय सम बीज सङ्ख्यादिगुणात्- ५०३
तीयो ङिति ६०
तुलिच्छारा तारा धारा कारा- ११५५
तुह्योस्तातङ् वाम्निषि ६५६
तृषको घे ६६०
तृनृणां न-लुक् वा म्न-णौ ७५४
तृन् लोप्यः ४६६
तृमार्थानां वा ३०४
तृष मृष कृष वञ्च लुञ्चृतो वा ११६६
तृह तृण पिङ्क्ते ७६०
तृ फल भज त्रप श्रथ ग्रथ दम्भाद्य- ५७६
तृ भ्र त्र दृ त्रि ध्व तप यम दम- १०२४
त ख्याः, अक्यार्थाप्रेष्यानुज्ञा- ६८६
तोऽन्त्यादेर्मोऽनेकतरात् १६५
त्यचाद्य चिर दक्षिणाद्यादेस्य- ५२५
त्यदां टेरः ङ्गौ १२२

